॥ श्रीः ॥

विद्याभवन संस्कृत ग्रन्थमाला
१४०



॥ श्रीः ॥

# प्रबन्धरत्नाकरः

रचयिता
डॉ० रमेशचन्द्रशुक्लः
एम० ए०, पी-एच० डी०
साहित्याचार्यः सांख्ययोगाचार्यश्च
राध्यापक : संस्कृत-विभाग, वारहसैनी कालेज, अलीगढ )



चौखम्बा विद्याभवन, वाराणसी-१
१९६७

THE

VIDYABHAWAN SANSKRIT GRANTHAMALA

140

# PRABANDHARATNĀKARA

By

**Dr. RAMES'ACHANDRA S'UKLA**

M A, Ph. D

Sahityacharya, Sankhyacharya

Professor, Barahseni College, Sanskrit Department, Aligarh.

THE

CHOWKHAMBA VIDYABHAWAN

VARANASI-1

1967

॥ श्रीः ॥

संस्कृतसाहित्यसंरक्षणार्थं नानाविधानि असह्यानि कष्टानि यैः
सहर्षं सोढानि तेषां संस्कृतपण्डितानां शुभस्मृतिचरणेषु
सादरं सविनयञ्च समर्प्यते प्रबन्धरत्नाकरः ।

वाराणसेयसंस्कृतविश्वविद्यालयोपकुलपति-

M A, D Phil, LL B F R A S (London)

इत्यादिविविधविरदावलिविभूषितानां

श्रीमतां तत्रभवतां

## डॉ० सुरेन्द्रनाथशास्त्रिमहोदयानां

## शुभाशंसा

सत्यपि सुविस्तृते संस्कृतसाहित्ये, सुमहत्यामपि सत्यां काव्यप्रणयनपरम्परायां नूनमस्त्येव विरलत्वं निबन्धानां, विशेषतश्चाधुनिकविषयावलम्बिनां समीक्षापराणाञ्च प्रबन्धानाम्। वस्तुतः निबन्धनिर्माणप्रणेतुः विचाराणां समासेनोपन्यासस्य, विषयविशेषमनुरुध्य तार्किकसरणिमनुसृत्योहापोहमुखेन प्रतिपाद्यस्य पर्यालोचने क्षमतरमपेक्षते, परञ्च तदध्येतुरपि तादृशं विचारनैर्मल्यमापादयति येन सूक्ष्ममपि विषयमाकलय्य स्वीयभावनानां सम्यगुन्मेषं विधातुं क्षममातनोति। इदानीन्तने युगे पल्लवमात्रग्राहिणि शिक्षाक्रमे प्रवर्त्तमाने प्रायशोऽध्येतारः तादृशीं विषयोन्मेषशक्तिं तथा नैवाधिगच्छन्ति यथा पुरा पठनपाठनपरिपाटी पटीयसी सती सुकुमारशेमुषीकान् तर्कोपस्करणैः सनाथीकुरुते स्म। संस्कृतभाषाया अपि तादृशं मौलिकं कोशव्याकरणमुखेनाध्ययनाध्यापनञ्चाद्यत्वे विरलतामेवापत्ते। प्रायशः समग्रग्रन्थानां पठनं पाठनञ्च न प्रचलति। एतादृशि व्यतिकरे विद्यालयेषु विविधान् पाठ्यक्रमाननुवर्त्तमानानां छात्राणां कृते सुरगिरा रचनाभ्यासस्तु प्रायेण दुस्साध्यतां गतः। परीक्षासु च सुरगिरा निबन्धस्तु विरचनीय एव भवति, तत्र चानभ्यासजन्यपाटवविरहाद् बहुधा छात्राः कान्दिशीकता-

मेवावगाहन्ते । तेषां हृते दुस्तरे परीक्षाविस्तरे सरलया सुरगिरा निबद्ध- रचनाया' विविधाना मार्गाणा परिचायक , प्रतिपाद्यस्य विषयस्य स्वरूप- प्रदर्शक' रुचिरः प्रबन्धसंग्रह' नितरामपेक्षित । इमा कालमहिम्ना समुपस्था- पितामपेक्षा पूरयितु नैके मनीषिण' स्वस्वरचनाभि' प्रायतन्त । तथापि प्रौढस्य कस्यापि बहुविषयव्यापकस्य प्रबन्धस्य कृतेऽवकाशं विलोक्य साख्ययो- गसाहित्याचार्योपाधिभाजा शुक्लोपाह्वेन डाक्टर-रमेशचन्द्रशुक्लमहाभागेन प्रशस्त' खलु प्रबन्धरत्नानामेक आकरः समुपस्थापितः यश्च वाराणसेय चौखम्बा विद्याभवनाध्यक्षैः समाह्याध्येतॄणां हिताय प्राकाश्यं नीत' । अयं प्रबन्धरत्नाकरो विविधान् परमोपयुक्तान् विषयानवलम्ब्य पिपठिषा सर्व- विद्यामपेक्षा मनसि निधाय सुगमया विषयावगाहिन्या सुरभारत्या सम्यगु- पनिबद्धोऽधुनातनाना छात्राणां हिताय सम्पत्स्यते । एतेषा रमेशचन्द्रशुक्ल- महोदयाना प्रयासोऽयं सर्वथाऽभिनन्दनमर्हति परञ्च प्रबन्धरत्नाकरोऽयं विश्वविद्यालयेषु पाठ्यक्रमे सर्वथा प्ररोचनार्ह' तत्र तत्र स्थाने स्थानमवा- प्याध्ययनशीलाना सुधियाञ्च लाभाय स्तात्, इत्याशंसते—

वाराणसी<br>वि० स० २०२३<br>पौषशुक्लाष्टमी

—सुरेन्द्रनाथशास्त्री

# सम्मतिः

## ( क )

**पं० ब्रह्मानन्दशुक्लः, एम० ए०**

साहित्याचार्यः व्याकरणालङ्कार-शास्त्री, काव्यतीर्थः, कविरत्नम्

( प्रधानाचार्य : श्री राधाकृष्ण संस्कृत महाविद्यालय खुर्जा, बुलन्दशहर )

श्रीमद्भिः डॉ० (दक्षतर) रमेशचन्द्रशुक्लमहोदयैः, एम० ए० साहित्याचार्य-सांख्ययोगाचार्यप्रभृत्युपाधिधारिभिः सुनिबद्धं प्रबन्धरत्नाकरं निरीक्ष्य परमाह्लादो मयानुभूतः। एतस्मिन् संस्कृतह्रासयुगेऽपि सात्त्विकभावनया मातरं सुरभारतीं सेवितुमेव महानुभावैरेभिर्महता परिश्रमेण ग्रन्थरत्नमिदं विद्वज्जनपरितोषाय संस्कृतस्निग्धमनसां विनेयानामुपकाराय च पुरस्कृत्य विरचितम्।

सर्वप्रकाराणां शास्त्रीयनिबन्धानाम्, आचार्य–एम० ए०-परीक्षार्थिनां कृते परमावश्यकप्रबन्धग्रन्थस्य, छात्रजनोपयुक्तस्य प्रायोऽनुपलब्धिरेवासीत्। मन्ये, ग्रन्थेनानेन तादृगभावस्य पूर्तिर्भविष्यतीति निःसन्दिग्धं वक्तुं शक्यते। गद्यपद्यादिरचनाचतुराणां विदुषां शेमुषीप्रसारः प्रायो निबन्ध-बन्धने कुण्ठितद्वारो भवतीति विदन्त्येव विज्ञाः। व्यर्थविशेषणानाम्, अनुपयुक्तदीर्घसमासानां, अलङ्काररहितवाक्यसन्ततीनां, प्रबन्धदोषाणामत्र सर्वथा अभाव एवेति। "प्रबन्धो दुरुदाहर" इत्याद्यभियुक्तोक्त्या सरस्वतीसुषमामये अस्मिन् ग्रन्थरत्ने पदानां स्फुटता, शब्दार्थसरलता, रसपरिप्लुतता च शास्त्रगम्भीरतया सह स्फुटं चकास्ति।

एवंविधस्य गुणगणपरिपूर्णस्य सुपरिष्कृतस्य रत्नाकरस्य दर्शनोद्भावने श्रीशुक्लमहाभागा भूयसां शुभाशीर्वचसां पात्रभूताः सन्तीति प्रेम्णा निवेद्यते। भगवान् आशुतोषश्च शुक्लमहाभागानामायुष्याभिवृद्ध्यर्थं जगदम्बाया भगवत्याः सरस्वत्याः परमपावनप्रसादप्राप्तये च विनम्रशिरसा भूयो भूयः सम्प्रार्थ्यते।

तथास्तु।

## डॉ० रामसुरेश त्रिपाठी

एम्०ए०, पी-एच्० डी०, डी०लिट्०, व्याकरण-साहित्याचार्य,

( अध्यक्ष : संस्कृत विभाग, अलीगढ़ विश्वविद्यालय )


प्रबन्धरत्नाकरे समुपनिबद्धेषु निबन्धेषु कतिपयानामध्ययनमहं कृतवानस्मि। अत्र भास-अश्वघोष-कालिदासादीना महाकवीनां वैशिष्ट्यम्, निसर्गसुकुमाराणां शकुन्तलादीना चरितम्, सामाजिकाना समस्यानाञ्च विवरण सर्वं सुपचित-मस्ति। ग्रन्थकर्तुं श्रीमत रमेशचन्द्रशुक्लस्य सुमनोहरा शैली सहृदयाना पाठकानां हृदयमावर्जयन्ति, अभिव्यनक्ति च तस्य गद्यकाव्यनिर्माणे क्षमताम्। अत्र शुक्लमहोदयस्य संस्कृतभाषायां श्रद्धातिशय स्वधर्मे विश्वासश्च पदे पदे विलोक्यते। मन्ये प्रबन्धरत्नाकर संस्कृतभाषासमुपासकाना सर्वेषामुपकाराय मपत्स्यत इति।

—

# निवेदना

साहित्यान्तरे विद्यमानाना निबन्धात्मकाना ग्रन्थाना दिशि यदास्मदीया दृष्टिनिपतति तदा तत्र ते प्रकृष्टतरतायां सङ्ख्यायाञ्च सस्कृतसाहित्ये शोभमानेभ्यो निबन्धग्रन्थेभ्यो ग्रन्थेभ्यो गरीयासो भूयासश्च पर्यवलोक्यन्ते। सस्कृतसाहित्ये तु ये केऽपि निबन्धनिष्ठा ग्रन्थाः सन्ते तेषु माध्यमिकविद्यालयीयच्छात्रोपयोगिना निबन्धग्रन्थानामेव तोपायत्व भूयस्कत्वञ्च दृग्गोचरीभवति न चोत्तमिकविद्यालयीयविद्यार्थ्युपकारिणा पुस्तकाना सन्तोषावहत्व प्रचुरत्वञ्च। तस्मादेव कारणादेष जन प्रबन्धरत्नाकरनामधेयस्यास्य निबन्धग्रन्थस्य प्रणयने आत्मान न्ययूयुजत्। अत्रेदमपि निःसङ्कोचभावेन स्वीक्रियते यद्यमुद्देश पुरो निधाय ग्रन्थोऽय विरचितस्तस्योद्देशस्य पूर्तिरिह वस्तुत एकदेशतोऽपि न सवृत्ता। अत कामनेय यदस्या दिशायामधिकारिणो मनीषिण प्रवर्तेरन् येन सस्कृतसाहित्यस्येदमङ्ग पूर्णतया सम्पुष्ट स्यात्। प्रतिभा-पाण्डित्यविहीनस्यापि प्रतिसस्कृतमातृभक्तस्य कर्तव्यमिद यदसौ, यत् किमपि सरस निरस वा पत्र पुष्प तत्सविधेऽस्ति तेनैव, स्वा सस्कृतमातरमुपासीत-इत्येतया भावनया प्रेरितो भूत्वैव जन एषोऽस्मिन् पूजाकर्मणि व्यापृतो जातो न चान्यया कयापि धिया। माता तु मदीया मामकीना धृष्टतामिमा क्षस्यत एव विद्वासोऽपि सादर प्रार्थ्यन्ते यत् तेऽपि क्षमेरन्।

अस्मिन् पुस्तके ये निबन्धा सन्निवेशितास्तेषु, केचन दर्शनादिविषयपरका केचन साहित्यिका केचन भावात्मका केचन च साम-

यिकाः सन्ति । सर्वेषामपि निबन्धानां निबन्धने सुबोधायाः प्रवाहशीलाया भाषाया आश्रयः कृतो वर्तते । उपायश्च सः स्वीकृतो येन निबन्धनिबन्धने व्युत्पत्तिश्छात्रेषु जागृयात् संस्कृतवाण्याममोघतया विशदतया प्रगुणतया च ते विदितेषु प्रचलितेषु बहुविधेषु विषयेषु स्वान् विचारान् प्रकटीकर्तुं प्रभवेयुः । चेदनेन प्रयासेन भवन्ति विद्यार्थिन उपकृतास्तदा लेखकोऽयं स्वं श्रमं सफलं मन्येत ।

श्रीमान्यान् संस्कृतसमृद्धिसंरक्षणपरान् प्रन्नाप्रन्नसंस्कृतग्रन्थप्रकाशनलब्धयशस्कान् चौखम्बा-संस्कृत-विद्याभवनाधीशान् श्री श्रेष्ठिमहाभागान् प्रति ससम्मानं कृतज्ञतामावहति च जनोऽयं यैः स्वमुद्रणालये मुद्राप्य ग्रन्थोऽयं प्राकाश्यं नीतः ।

अलिगढे
कार्तिकस्य पूर्णिमायाम्,
२०२३ वै० संवत्सरे

विदुषां विधेयः,
रमेशचन्द्रशुक्लः

# निबन्ध-सूची

पृष्ठसंख्या

त्रिविधान्यपि दुःखानि यदनुस्मरणान्नृणाम् ।
प्रयान्ति सद्यो विलयं तां नौमि जगदम्बिकाम् ॥

श्रुतिष्वद्यपर्यन्तमणुमात्रमपि दोषलेशः प्रविष्टो भवितुमशक्तः। प्रातिशाख्यग्रन्था अपि वेदपाठस्य रक्षणार्थं विरचिता अभूवन्।

**वेदेषु स्वराणां महत्त्वम्**—अनेकप्रयोजनसम्पादनहेतोः वेदेषु स्वराणां सुप्रयोगो विधीयते। प्रथमं प्रयोजनन्तु तेषां वेद-पाठपरिरक्षणमस्ति द्वितीयं प्रयोजनमिदं यत् तैस्तत्तत्पदगतोऽर्थो निर्धार्यते। यथा चाह गोवर्द्धनः— 'याज्ञिकाः पठन्ति—स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत' इत्यत्र सन्देहः, स्थूला चासौ पृषती च स्थूलपृषती इत्येष विग्रहोऽत्र ग्राह्यो वा स्थूलानि पृषन्ति यस्याः सा इति। पूर्वविधायाः शङ्काया निवृत्तिः स्वरेणैव भवितु शक्यास्ति। अत वेदार्थस्य निर्णयने स्वरा सहायका भवन्ति। वाक्य-निर्णयनार्थमपि स्वराणामपेक्षा भवति। यत्र कचिन्मन्त्रेषु मुद्रणादिदोषवशाद् विरामादिचिह्नानि नाङ्कितानि जायन्ते तत्र कुतो वाक्यमारब्धं कुत्र च तदवसन्नमिति न परिज्ञातुं शक्यते तत्र स्वरैरेव तत्समाधानं भवति।' यथा—'पत्नीवन्तं ग्रहं गृह्णान्यग्न' इत्यत्र 'पत्नीव' इह अन्तिमं पदद्वयं किं पूर्ववाक्यसम्बन्धि उत उत्तरवाक्यसम्बन्धि—इत्येतस्मिन् सन्देहे प्राप्ते, स्वरेणावधार्यते यदि आमन्त्रितत्वादनुदात्तत्वं ततः पूर्वान्वयि, आद्युदात्तत्वे तु उत्तरान्वयीति।

**वेदभाष्यकाराः**—वेद-भाष्यकृत्सु स्कन्दस्वामि-नारायण-उद्गीथ-माधव भट्ट-वेङ्कटमाधव-धानुष्कयज्व-आनन्दतीर्थ-आत्मानन्द-सायणप्रभृतयो भाष्यकाराः सुविदिताः सन्ति भुवने। स्कन्दस्वामी ऋग्वेदे नितरां विशदं भाष्यञ्चकार। स निरुक्तेऽपि टीकां कृतवान्। इतिहासकाराणां कथनं यत्सः ६२५ शततमेशवीयाब्दात्पूर्वं भारतं विभूषयामास। नारायण उद्गीथश्च स्कन्दस्वामिनः समय एव बभूवतुः। नारायणः ऋग्भाष्ये स्कन्दस्वामिनं प्रति साहाय्यञ्चकार इत्येतद् वेङ्कटमाधवो ब्रवीति। उद्गीथस्योल्लेखः सायणेन आत्मानन्देन च कृतः। तदीया भाष्यशैली स्कन्दस्वामिभाष्यशैलीव। 'माधव' नामधेयाश्चत्वारो भाष्यकारा उल्लिख्यन्ते इतिहासकारैः। तेष्वेकः सामवेदसंहितायां किञ्च इतरे त्रय ऋग्वेदे भाष्यं लिलिखुः। केषाञ्चन मतेन माधवो नाम न कोऽपि भाष्यकारः सायणः किं वा वेङ्कट एव 'माधव' इत्येतेन नाम्ना ख्यात आसीत्। अन्ये चाहुमाधवः सायणाद् वेङ्कटाच्च भिन्न आसीदतः 'माधव'स्य व्यक्तित्वं स्वतन्त्रमेव। माधव ऋग्वेदे परमविलक्षणं पाण्डित्यं निदधौ। सायणो वेङ्कटश्चोभौ माधवस्य भाष्यमनुसरतः। द्वादशशततमेशवीयाब्दे वेङ्कटमाधवोऽभूदिति पण्डितसम्म-

शिवशास्त्री मन्यते। वेङ्कटस्य भाष्यमतिसंक्षिप्तमस्ति। पर्यायवाचिपदान्युपस्थाप्य स मन्त्रार्थमाकलयितुं श्लाघ्यं यत्नं कृतवान्। धानुष्कयज्वा त्रिषु वेदेषु भाष्यं प्रणिनायेत्येष उल्लेखो वेदाचार्यस्य सुदर्शनमीमांसायां दृश्यते। परं न तदीयं भाष्यमाप्यते न च तस्यैव परिचयविशेषो लभ्यते। १३०० शततमाद् वैक्रमाब्दात् प्राक् स उद्बभूवेति कथ्यते। आनन्दतीर्थं एव 'मध्व' इत्येतेन नाम्ना ख्यातिं ययौ। अयं मध्वः स एव यो द्वैतवादं प्रवर्तयामास। एष बहून् ग्रन्थान् अजग्रन्थत्। कतिपयांश्च वैदिकान् मन्त्रान् अपि व्याचख्यौ। वैक्रमे चतुर्दश-शततमे संवत्सरे अयं प्रादुर्बभूव। आत्मानन्द ऋग्वेदस्य 'अस्य वामीयं सूक्तं व्याख्यातवान्। अयमपि चतुर्दशशततमं संवत्सरं जन्मना गौरवान्वितं विदधौ। आचार्यसायणो विजयनगर—संस्थापकमहाराजबुक्कस्य महाराजहरिहरस्य च अमात्यः सेनानीश्चासीत्। सायणो वैदिकसम्प्रदायस्य यथार्थतया वेत्तासीत्, तस्मात् तदीयं वेदभाष्यं वस्तुतस्तु वेदार्थोन्मीलनकारिषु भाष्येषु मूर्धन्यं भाष्यमस्ति। तद्वेद-दुर्गं दुर्गमे सरलतयैव प्रवेशयति वेदार्थजिज्ञासुम्। अन्ये च भरतस्वामि-गुणविष्णु-उव्वट-महीधरप्रभृतयो वेद-भाष्यकर्तारो जज्ञिरे। तेषु उव्वटः प्रौढवेदज्ञो बभूव। सोऽनेकग्रन्थेषु टीकां भाष्यं च कृतवान्। सुविदितनृपतिभोजशासनकाले स बभूव। महीधरस्य भाष्यं 'वेददीप' नाम्ना सुप्रख्यातमस्ति। महीधर आसीत् काशीनिवासी। स तन्त्रशास्त्रस्यापि मर्म-विदासीत्। स तन्त्रविषयकं मन्त्रमहोदधिं प्रणिनाय। आविर्भूत च सः षोडश-शततमे वैक्रमेऽब्दे। एतेषु सर्वेष्वपि भाष्यकारेषु सायणो भाष्यकारेषूत्तमो भाष्यकारः। सोऽनेकसंहितासु बहुषु च ब्राह्मणग्रन्थेषु भाष्याणि विधाय वैदिकं साहित्यं वर्धयामास। सायणात् प्राग्वर्तिषु वेदज्ञेषु विद्वत्सु ब्राह्मणसर्वस्वनामक-वेदभाष्यकर्तुर्हलायुधस्याप्युल्लेखयोग्यं नाम वर्तते। स वङ्गाधिपलक्ष्मणसेनस्य राजपण्डितोऽप्यासीत्।

देवतवादः—वेदेषु देवतानां स्थानं महत्त्वावहम्। मानवः प्रत्यहं प्रकृति-देव्या नानालीलाः पश्यति। वैदिककालस्य महर्षयस्तस्यास्तत्तल्लीलाः अवधार-यितुं विभिन्ना देवताः अकल्पयन्। महर्षीणां विश्वासोऽयं यदासां देवतानुकम्पयैव सर्वाणि कार्याणि सम्पद्यन्ते। जगति घटमानानां सर्वासामपि घटनानां कारण-भूता देवता एव।

यास्को वदति यद् देवतासु काश्चन पृथिवीस्थानीयाः काश्चन अन्तरिक्ष-

स्थानीयाः काश्च न द्युस्थानीयाः सन्ति । पृथिवीस्थानीयदेवतासु अग्निर्देवता, अन्तरिक्षस्थानीयासु इन्द्रदेवता, द्युस्थानीयासु सूर्यविष्णुप्रभृतिर्देवताः सन्ति महीयस्यः । ऋग्वेदे हि देवताः प्राणशक्तिशालित्वात् 'असुर' इति प्रोक्ताः । प्रतीच्यानां मनीषिणां देवताः उद्दिश्य विचारोऽयं यद् भौतिकघटनोपपत्त्यै प्राकृतिकानि दृश्यानि देवतात्वेन कल्पितानि । ऋग्वेदस्यादिमे युगे बहुदेवतानां सत्ता अभ्युपेता बभूव । गच्छता कालेन, सति मानसिके विकासे देवतानां सामान्येक एवाधिपतिः कल्पितोऽभूत् । पुरुषसूक्तं सर्वेश्वरवादं स्पष्टतः समुपस्थापयद् दृश्यते । परं पाश्चिमीयानामेष देवताविषयको विचारो नास्तितथ्यः । देवतावादो न भौतिक एतावान् ।

यास्केन निरुक्ते दैवतकाण्डे देवता-स्वरूपविवेचनं हि अतिशयविशदतयानुष्ठितम् । जगतो मूले एकैव महत्त्वशालिनी महाशक्तिः शोभते । सा निरतिशयैश्वर्यशालित्वात् 'ईश्वर' इति गीयते । सैव शक्तिर्बहुभिः प्रकारैः स्तुता—

महाभाग्यात् देवताया एक एव आत्मा बहुधा स्तूयते ।
एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति ॥ ७.४. ८-९.

ऐतरेयारण्यकञ्च 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः' इत्येतेन वचनेनोक्तमेव विचारं परिपोषयति ।

देवताः प्रायेण त्रीणि रूपाणि बिभ्रति—आधिभौतिकम्, आधिदैविकम्, आध्यात्मिकञ्च । इन्द्रियगम्यं रूपमाधिभौतिकं भवति, आधिदैविकमाध्यात्मिकञ्च तु इन्द्रियागम्यं । 'विष्णोर्नु कं वीर्याणि...' 'प्रविष्णवे शूषमेतु मन्मगिरिक्षित उरुगायाय वृष्णे...' इत्यादि मन्त्रैर्वेदो विष्णुदेवताया उक्तानि त्रीण्यपि रूपाणि प्रदर्शयति ।

मानवा देवतानां तां तां शक्तिं सम्यग्विज्ञाय तद्द्वारेणास्मानमुपकुर्युरित्येतदर्थं श्रुतिमात्रस्तासां रूपाण्यस्मत्पुरः समुपस्थापयन्ति ।

मन्त्रैर्हि यदा देवतानां न केवलमेकमपि तु एकस्मादधिकानि रूपाणि उद्भावितानि गीतानि वीक्ष्यन्ते तदा प्रतीच्यानां तस्मिन् वचसि कथं विश्वासो विहितो भवेत् यत्र देवताः भौतिकदृश्यानामधिष्ठातृत्वेन प्रतीकत्वेन वा कल्प्यन्ते ।

वेदवर्णितेषु प्रमुखेषु विषयेषु देवतास्तुतिरप्येकतमः प्रमुखो विषयः ।

वैदिकव्याख्यानम्—'वेद' इत्येतस्य पदस्य प्रयोगो मन्त्र-ब्राह्मणयोर्निमित्तेन

विधीयते। आपस्तम्बे प्रोक्तञ्च—'मन्त्रब्राह्मणयोर्वेदनामधेयम्'। येन हि यज्ञयागानामनुष्ठानं निष्पन्नतामुपैति देवतानाञ्च स्तुति-विधानं यत्रोल्लिखितमस्ति स 'मन्त्र' इति (मननात् मन्त्रः) प्रोच्यते। 'ब्राह्मणम्' इत्येतत्पदं ग्रन्थविशेषवाचकम्। यज्ञानां विविधक्रिया-कलापप्रतिपादकग्रन्थाः 'ब्राह्मणम्' इत्येतां संज्ञां भजन्ते। 'ब्राह्मणम्' इत्येतस्य पदस्यार्थोऽस्ति—वर्धनं, विस्तारो वा वितानो वा यज्ञ इति ब्राह्मणमपि भागत्रये विभक्तमस्ति प्रथमो भागः 'ब्राह्मण'मिति, द्वितीयो भागः 'आरण्यक'मिति, किञ्च तृतीयो भाग 'उपनिषदि'ति कथ्यते। वेदश्च स्वरूपभेदात् त्रिविधः ऋग्वेदः, यजुर्वेदः, सामवेदः। यत्रार्थवशेन पादव्यवस्थास्ति तेषां छन्दोबद्धानां मन्त्राणां नाम 'ऋक्' इति वेद्यम्। ऋचां समूह एव 'ऋग्वेद' इति पदेन व्यवह्रियते। 'यजुः' इत्येतत् पदं 'यज्' धातोः उसिप्रत्यये कृते निष्पद्यते। यस्मिन् वेदे यज्ञयागादिक्रियाकलापानुरोधेन मन्त्राणां सन्निवेशोऽस्ति स 'यजुर्वेद' इति निगद्यते। यत्र च गीतिरूपा मन्त्रा विद्यन्ते स उपासनाकाण्डपरो वेदः 'सामवेद' इति गीयते। मन्त्राणां त्रिविधत्वाद् वेदाः 'त्रयी' इति नाम्ना प्रसिद्धाः सन्ति। मन्त्राणां समूहः 'संहिता' इत्येतेन व्यपदेशेन व्यपदिश्यते। यज्ञानुष्ठानं दृष्टौ निधाय विभिन्नर्त्विजां कृते संहितानां सङ्कलनं वेद-व्यासश्चकार। मन्त्र-संहितानां सङ्कलनं चतुर्विधतया कृतं तस्मात् संहिताः सन्ति चतस्रः—ऋक्संहिता, यजुःसंहिता, सामसंहिता, अथर्वसंहिता च। अत एव वेदाश्चत्वारः स्मृताः।

ऋग्वेदो धार्मिकस्तोत्राणामेको महान् विशालो निधिः। तत्र बहुभिर्भिन्नभिन्नै ऋषिभिः सुललितैर्भावभव्यैः शब्दैर्विभिन्ना देवताः सादरं स्तुताः सन्ति। यद्यपि महाभाष्ये ऋग्वेदस्यैकविंशतिशाखा निर्दिष्टाः परं शाकल-वाष्कलाश्वलायन शांखायन-माण्डूकायननामधेयाः पञ्च शाखाः सन्ति मुख्याः।

यजुर्वेदे सर्वविधानामपि यज्ञयागादीनां वर्णनं विद्यते। कृष्णयजुः शुक्लयजुर्भेदेन स द्विविधः। मन्त्रब्राह्मणयोर्द्वयोरपि यत्र मिश्रीभावः कृतः स 'कृष्णयजुर्वेद' इति नाम्ना किञ्च यत्र मन्त्राणामेव विशुद्धतया प्रतिष्ठानं कृतं सः शुक्लयजुर्वेद इतिनाम्ना विश्रुतः। शुक्लयजुर्वेदस्य द्वे एव प्रधानशाखे स्तः, ते माध्यन्दिनकाण्वनाम्ना विदिते स्तः। कृष्णयजुर्वेदस्य सम्प्रति पञ्चाशीतिशाखासु केवलं चतस्रस्तैत्तिरीय-मैत्रायणी-कठ-कपिष्ठलकठाख्याः शाखा समुपलभ्यन्ते।

चतसृष्वपि संहितासु सामसंहिता परमगौरवशालिनी संहितास्ति। 'सामानि यो वेत्ति स वेद तत्त्वम्' इत्येतद् बृहद्देवतायाः कथनं सम्महिमान-

मुच्चैर्गायति । गीतायां भगवान् कृष्णश्चाह—'वेदानां सामवेदोऽस्मि' । वेदस्यास्योद्देश्यमस्ति—गानपूर्वकमुपासनम् । साम्प्रतमस्य गरीयसो वेदस्य तिस्र एव शाखाः प्राप्यन्ते । ताश्च इमाः—कौथुमीया, राणायनीया, जैमिनीया ।

वेदेषु अथर्ववेदो बहुलविशिष्टताः निदधाति । यदा हि ऋग्वेदादयस्त्रयो वेदा आमुष्मिकं फलं प्रददति तदा अयम् अथर्ववेद ऐहिकमपि फलं प्रयच्छति । जीवनं सुखसमन्वितं कर्तुं येषां साधनानामपेक्षा भवति तेषां-सिद्ध्यर्थमिह वेदे विविधानामनुष्ठानानां विधानं विहितमस्ति । पतञ्जलिर्यद्यप्यस्य वेदस्य नव शाखाः समुल्लिखति परमिदानीन्तु पैप्पलादशौनकसंज्ञके द्वे एव शाखे लभ्येते ।

ब्राह्मणसाहित्यं नितरामेव विशालं व्यापकं च वर्तते । इदं हि साहित्यं गद्यात्मकं विद्यते । यज्ञस्य विधानं कदा कृतं भवेत् ? केन प्रकारेण च कृतं स्यात् ? कानि च साधनानि तदर्थमपेक्ष्यन्ते ? के च तत्तद्यज्ञानामधिकारिणः ? इत्येतद्विषयाणामुपपादनं तत्र ( ब्राह्मणसाहित्ये ) कृतमस्ति । समवाप्तानां ब्राह्मणानां वेदानुसरन्ती संख्यानेन प्रकारेणास्ति—

( १ ) ऐतरेयब्राह्मणम्, ( २ ) शाङ्खायनब्राह्मणम्-ऋग्वेदीयम्; ( ३ ) शतपथब्राह्मणम्—शुक्लयजुर्वेदीयम्, ( ४ ) तैत्तिरीयब्राह्मणम्—कृष्णयजुर्वेदीयम्, ( ५ ) ताण्ड्यम्, ( ६ ) षड्विंशम्, ( ७ ) सामविधानम्, ( ८ ) आर्षेयम्, ( ९ ) दैवतम् , ( १० ) उपनिषद् ब्राह्मणम् , ( ११ ) संहितोपनिषद् ब्राह्मणम् , ( १२ ) वंशब्राह्मणम् , ( १३ ) जैमिनीयं ब्राह्मणम्—सामवेदीयम् , ( १४ ) गोपथब्राह्मणम्—अथर्ववेदीयम् ।

ब्राह्मणग्रन्थेषु शतपथब्राह्मणं गुरुतममहत्त्वं भजते । अस्ति च तद् विशालकायम् , यागानुष्ठानानां प्रतिपादनं सर्वोत्तमरीत्या तत्रैव कृतं दृश्यते । प्रस्तौति तद् यज्ञ-यागविषयकं विवरणं साङ्गोपाङ्गम् ।

वैदिकवाङ्मये हि आरण्यकं नाम साहित्यमपि महीयः । तत् आध्यात्मिकताना तथ्यानां मीमांसां कुरुते । अस्यैव तदीयः प्रमुखो विषय आत्मविचारणम् । प्राणविद्याया महिमा विशेषेण तत्र प्रतिपादितोवाप्यते । तदुक्ताध्यात्मिकतत्त्वानां विकास उपनिषत्सु दृष्टो भवति । आरण्यकानीमानि—ऐतरेयमारण्यकम्, शाङ्खायनमारण्यकम्, बृहदारण्यकम्, तैत्तिरीयमारण्यकम् ।

उपनिषदामन्तर्भाव आरण्यकेष्वेव । तास्तेषामङ्गविशेषत्वेन मताः । तासु

वेदानां सारभूताः सिद्धान्ताः सन्ति प्रतिपादिताः। अधोलिखितश्लोके निर्दिष्टा उपनिषदः प्राचीनतमाः प्रामाणिकाश्च मताः सन्ति—

ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः।
ऐतरेयं च छान्दोग्यं बृहदारण्यकं दश॥

शिक्षा-व्याकरण-निरुक्त-कल्प-छन्द-ज्यौतिषाभिधानि सन्ति षड् वेदाङ्गानि। अनुक्रमणीत्येतत्संज्ञा ये ग्रन्था वैदिकाः सन्ति प्रसिद्धास्तेषां ग्रंथानां प्रणयन-प्रयोजनं मुख्यतो वेदरक्षणमेव ज्ञेयम्।

वैदिकवाङ्मयाध्ययनेन वैदिकयुगस्य भौगोलिकी स्थितिः, आर्याणां निवास-स्थलानि, दस्यु-पणिप्रभृतीनां विवरणम्, सामाजिकमार्थिकं राजनीतिकं धार्मिकञ्च जीवनम्-इत्यादिकाः सर्वेऽपि विषयाः प्रकाशमायान्ति। अस्मदीयाः पूर्वजाः सम्यग् भानु-शशि-व्योम-भूमिप्रभृतितत्त्वानां ज्ञानं निदधतिस्म। ते समुद्र-नदी-पर्वत-वनादीनामुपादेयतां सर्वाङ्गीणतया विदन्ति स्म। ते दीर्घदीर्घतरां समुद्र-यात्रां कुर्वन्ति स्म। तेषां सविधे महान्ति महान्ति जलयानान्यासन्, तैस्ते सामुद्रिकं व्यापारञ्च चक्रुः।

"अनारम्भणे तदवीरयेथामनास्थाने अग्रभणे समुद्रे" इत्यादिर्वैदिकमन्त्रा अत्र प्रमाणम्। वैदिके काले का नदी केन नाम्ना को देशो जनपदो वा केन नाम्ना पर्वतो वा केन नामधेयेन व्यवहृतोऽभवदिति वैदिकेभ्यो ग्रन्थेभ्यो यथायथं ज्ञातुमर्हति। तस्मिन् युगेऽस्मद्देशे कुरु-पाञ्चाल-कीकट-मद्र-महावृष-काशि-कौशल विदेह-मगधाद्भनामका बहवो जनपदा अशोभन्त ब्राह्मणग्रन्थेषु कुरु-पञ्चालानां प्रकृष्टा प्रशंसा दृष्टा भवति। नदीनां वर्णनं वेदेषु बहुधा कृतमवलोकितं भवति। सिन्धुसरितो वर्णनं नितान्तमेव रुचिरायां भाषायां विहितमवाप्यते—'अभि त्वा सिन्धो शिशुमिन्नमातरो, वा श्रां अर्षन्ति पयसेव धेनव.' इत्यादिमन्त्रे पश्यन्तु प्रेक्षावन्तो यदभिरामोपमामाश्रित्य तस्याः (सिन्धोः) वर्णनं कुर्वन्ति ऋषयः। ऋग्वेदे सरस्वत्या माहात्म्यं भृशं वीक्षितं जायते। "युवं पेदवे पुरुवार-मश्विनास्पृधां श्वेतं तस्तारं दुवस्यथः", "सुमित्रिया न आप ओषधयः सन्तु", "ऊर्क् च मे तिलश्च मे…" इत्यादिकाः सन्ति बहवो मन्त्रा एवंविधा ये ज्ञापयन्ति यत् तदानीन्तना भारतीयाः साधु तासु तासु विद्यासु विज्ञानेषु कलासु च पूर्णामेवाभिज्ञतां निदिनवन्तः।

वैदिकेऽनेहसि सर्वेऽप्याश्रमाः समृद्धाः सुखिन आसन्। पुत्राः पुत्र्यश्च उच्च-

शिक्षा तदा प्रासवन्त । ललितकलानाञ्च तदा प्रसार आसीत्। विवाहस्तदा सुव्यवस्थितप्रथा वहन् दृग्गोचरो भवति । नारीणा सम्मानमासीत्, पुरुषा सदाचारवन्त पुरुषार्थप्रिया शक्तिशालिनो बभूवु । कृषिकर्मणि पशुपालने च जनता सदा तदा निरताऽप्यत । ग्रामेषु जनता निवास चक्रे । पुर दुर्गादीना वर्णन वैदिके साहित्ये पर्यवलोक्य विदित जायते यत् तदानीन्तना जना सभ्यताया प्रशसनीयामुन्नति गता आसन् । "शतभुजिभिस्तमभिह्रुतेरघात् पूर्भी रक्षता" प्रभृति मन्त्रा सन्दर्यस्मिन् विषये प्रमाणम् । 'कारुरह ततो भिषग्' इत्यादि मन्त्रा बोधयन्ति यत् तदानीन्तना जना जीवन यापनाय अर्थोपार्जनाय च बहूनि उद्यमनानि जगृहु । वैदिक काल शासनपद्धत्या परमकुशलो बभूव । शासन पद्धतिश्च तदा अनेकविधा प्रचलितासीत् । राजान प्रजाया मता आसन्, प्रजा राष्ट्रे राजनि च भक्तिभाव निदधौ—"प्रत्रोऽच्युत प्रभृगीहि शत्रून्", 'त्वा विशो वृणता राज्याय", 'इय ते राट्", "यां च रात्रिमजायेऽहम्" इत्यादिमन्त्रेषु तात्कालिकया राजनीतिकदशाया मनोज्ञ दर्शन जायते । "युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्यबृहतो विपश्चित" *प्रभृतिमन्त्रा सन्ति साक्षिणो यद् वैदिककालीन भारत धार्मिक पावन पवित्रचरित्र* जीवनमुवाह ।

रसालङ्कार-सौन्दर्यकल्पनादिदृष्ट्या च वैदिक साहित्यमतितरामुत्कृष्ट दृष्टिगोचर भवति । क्वचित् तत्र श्रृङ्गाररसस्य सुन्दरता क्वचित् अलङ्काराणा छटा, क्वचिद् भावनानामाभा चोत्यते ।

"इषुर्न श्रिय इषुधे रमना गोषा शतसा नरहि" इत्यत्र श्रृङ्गाररसम्, "अभ्रातेव पुस एति प्रतीची गर्तारुगिव सनये धनानाम्" इत्यत्र उपमालङ्कार मनोरम्, "कन्येव तन्वा शाशदाना एषि देवि देवमियक्षमाणम्" इत्यत्र मानवी याया अनवद्याया भावनाया विभाञ्च प्रेक्षन्ता प्रेक्षावन्त ।

"अक्षैर्मा दीव्य", "अहमनृतात्सत्यमुपैमि", "कुर्वन्नेवेह कर्माणि जिजी विषेत्, 'माता भूमि पुत्रोऽह पृथिव्या", "सर्वा आशा मम मित्र भवन्तु", "समानी प्रपा सह वो अन्नभागा", "सख्ये मा रिषाम वय तव', इत्यादिकैं असख्यै उपदेशपरै मन्त्रै सन्ति श्रुतयोऽलक्रियमाणा ।

उपेक्षते, हन्त, अद्यतन भारत तदेव विश्वशुभचिन्तक सर्वोपकारक श्रेय-प्रेयसम्पादक वैदिक वाङ्मय यत्, पुरातन भारत सन्निधान्यपि दुर्गान्यपि

सहमानमपि प्राणानपि हुत्वा ररच । वैदिकसाहित्योपेक्षाया एव कुफलमिदं यदद्य सर्वमपि निखिलमपि जगच्च परमशोचनीयां हीनां निन्दनीयाञ्च दशां गतमस्ति । प्रार्थ्यते हरिः—

"सर्गादौ स्फुरतां समग्रजगतां यः श्रेयसे जज्ञिवा-
नर्थानभ्युदयाय संप्रथितवांस्तांस्तु वैज्ञानिकान् ।
यश्चोच्चावचभाववान् विविधसद् विद्याभि स्द्योतवान्
विश्वस्मिन् भुवने स वेदभगवान् भूयो जरीजृम्भताम् ॥ ४



## वेदाङ्गानि किञ्च प्रतीच्यप्रधीनां वैदिकवाङ्मय-सेवा

आधुनिकानामितिहासकाराणां कथनमिदं यत् षण्णामपि वेदाङ्गानां निर्माणं वैदिकयुगस्य उत्तरार्द्धभागेऽभवत्। शिक्षा, व्याकरणम्, कल्पः, निरुक्तम्, छन्दः, ज्योतिषञ्च-इत्येतानि वेदाङ्गानां सन्ति नामानि। पाणिनीय-शिक्षा प्राह—

शिक्षा कल्पोऽथ व्याकरणं निरुक्तं छन्दसां चयः।
ज्योतिषामयनं चैव वेदाङ्गानि षडेव तु॥

षण्णामप्येतेषां वेदाङ्गानामुल्लेखो गोपथब्राह्मण-बौधायनधर्मसूत्र-गौतमधर्म-सूत्र-रामायणसमप्राचीनग्रन्थेषूपलभ्यते। एतेन तेषां पुरातनतरत्वं सिद्ध्यति। बुद्धावतारात्प्राग्वर्ती काल उत्तरवैदिककालत्वेन निर्धार्यते बुधैः।

अङ्गमित्येतस्य पदस्य व्युत्पत्तिः अङ्ग्यते ज्ञायतेऽनेनेति 'अङ्गम्' इत्येवास्ति। अनस्तस्य व्युत्पत्तिलभ्योऽर्थः 'उपकारकम्' इति ज्ञेयः। वेदानां भाषा भावश्च-उभावपि—दुरूहौ स्तस्तस्माद् वेदार्थावगमनाय वेदाङ्गानामपेक्षा भवति। वेदार्थबोधाय सहायकत्वात् तेषामुपकारकत्वं स्पष्टमेव।

**शिक्षा**—यथा वैदिकविधीनां सम्पादनार्थं ब्राह्मणग्रन्था उपयुज्यन्ते तथैवो-च्चारणप्रयोजनेन शिक्षाया उपयोगो ज्ञायते। वेदानां वैदिकसाहित्यस्य चाध्ययनाध्यापनविषयकविधीनां निर्देशः शिक्षाशास्त्रे कृतः। शिक्षा स्वरवर्णाद्यु-च्चारणानि केन प्रकारेण कर्त्तव्यानीत्येतस्मिन् विषये उपदिशति। सायणस्य ऋग्वेदभाष्यभूमिकायामुक्तम्—"स्वरवर्णाद्युच्चारणप्रकारो यत्र शिक्ष्यते उप-दिश्यते सा शिक्षेति"। वेदपाठावसरे शुद्धमुच्चारणं स्वरक्रिया च युक्त्या काम्यते अशुद्धोच्चारणयुक्तो भ्रष्टस्वरश्च वेदपाठो महद् दुष्फलं जनयति। स परमहानिकृद् भवति। यज्ञयागोपासनादिकं यत् कार्यमिष्टलाभाय क्रियते तस्मादिष्टलाभो न कदापि अशुद्धेन उच्चारणेन समवाप्तः सञ्जायते तद्विपरीतमशुद्धोच्चारणयुतं कार्यं तु विपदं महतीमुत्पादयति। श्रूयते यत्पुरा 'इन्द्र-शत्रुर्वर्धस्व' इत्येतन्मन्त्रस्याशुद्धो-च्चारणं कृतमभूत्, तेन यजमानस्यापि तदनिष्टकारकमसिद्धयत्। पाणिनीयशिक्षा-यामुक्तम्—

मन्त्रो हीनः स्वरतो वर्णतो वा, मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति, यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥

वेदोच्चारणस्य शुद्धतायै स्वरज्ञानमपेक्ष्यते समीचीनम् । स्वर उदात्तानुदात्तस्वरितभेदेन त्रिविधः । 'उच्चैरुदात्त.', 'नीचैरनुदात्तः', 'समाहारः स्वरित.' इत्येतानि पाणिनिना तेषां त्रयाणां लक्षणानि प्रोक्तानि । 'अनुदात्तपदमेकवर्जम्' इत्येतस्मिन् पाणिनीये सूत्रेऽभिहितं यद् वेदस्य प्रतिपदमवश्यमेव केनापि उदात्तेन स्वरेण संश्लिष्टं भवति; अवशिष्टाश्च स्वरा भवन्त्यनुदात्ताः । तेष्वेवानुदात्तेषु स्वरेषु अन्यतमः स्वरो हि परिस्थितिविशेषे स्वरितो जायते । स्वरप्रधानतायाः कारणं वेदेष्वस्ति तेषां ( स्वराणाम् ) अर्थनियन्त्रणत्वम् । केन प्रकारेण स्वराणामर्थनियन्त्रणकारित्वं भवतीत्युपरिष्टादुदाहरणं निधायाभिहितमेव । वेदेषु शुद्धोच्चारणं सर्वप्रथमवाञ्छितं भवति; तच्च शुद्धोच्चारणं शिक्षा समुपदिशति एतस्मादेव हेतोः षट्सु वेदाङ्गेषु शिक्षाङ्गस्य मूर्धन्यत्वमाम्नातम् । शिक्षायाः अभिमतो विषयः प्रातिशाख्येषु दृश्यते । प्रातिशाख्यग्रन्थाः शिक्षाशास्त्रस्य प्राचीनतमाः प्रतिनिधय इव सन्ति । संहितापाठसम्बन्धिनः सर्वेऽपि विषयास्तत्र साङ्गोपाङ्गतया प्रतिपादिताः ।

शिक्षाशास्त्रेतिहासः पुरातनतरः । परं न तद्विषयकाः प्राचीनतराः ग्रन्था उपलभ्यन्ते । श्रीवाचस्पतिगैरोला स्वकीये इतिहासे लिखति यत् सत्यकेतुविद्यालङ्कारस्य मतमिदं यद् 'जैगीषव्यस्य शिष्यो बाभ्रव्यः शिक्षाशास्त्रं प्रणिनाय । महाभारते शान्तिपर्वणि आचार्यगालवकृतस्य शिक्षाग्रन्थस्योल्लेखो लभ्यते । भण्डारकरशोध-संस्थानपूनातो भारद्वाजशिक्षायाः प्रकाशनं जातमस्ति । तत्र नागेश्वरभट्टस्य टीका च वर्तते । नागेश्वरमतेन स. ग्रन्थो भारद्वाजेन प्रणीत' । शिक्षासङ्ग्रहनामके ग्रन्थे द्वात्रिंशच्छिक्षापुस्तकानां सङ्ग्रहोऽवाप्यते । शिक्षा इमाश्चतुर्णामपि वेदानां भिन्न-भिन्नशाखास्वात्मानं सम्बध्नन्ति । बलदेव उपाध्यायः स्वकीये 'वैदिकसाहित्य और संस्कृति' इत्येतदभिधेये ग्रन्थे याज्ञवल्क्यशिक्षा-वासिष्ठीशिक्षादिसंज्ञकानां विंशतिग्रन्थानामुल्लेखं विदधानो दृश्यते । साम्प्रतं समवाप्ता पाणिनीयशिक्षा प्राचीनशिक्षासूत्राणां साहाय्येन प्रणीताभूदिति बुधानां विचारः । अद्यतने युगे पाणिनीयशिक्षां स्वामी दयानन्द उद्धार । इदमपि स्मरणीयमत्र यदिदानीं शुक्लयजुर्वेदे याज्ञवल्क्यशिक्षा, सामवेदे नारदशिक्षा, अथर्ववेदे माण्डूकी शिक्षा किञ्च ऋग्वेदे पाणिनीयशिक्षा प्राप्यन्ते न च अन्या कापि ।

कल्प —वेदाना द्वितीयमङ्गमस्ति कल्प । वेदविहिताना कर्मणा व्यवस्था पन क्रमपूर्वक कल्पशास्त्रे कल्पितम् । उक्तञ्च—'कल्पोवेदविहिताना कर्मणा मानुपूर्व्येण कल्पनाशास्त्रम्' । कल्पनासूत्राणि मन्तिचतुर्विधानि—( १ ) श्रौत सूत्रम्, ( २ ) गृह्यसूत्रम्, ( ३ ) धर्मसूत्रम्, ( ४ ) शुल्वसूत्रम् । श्रौतसूत्रे ब्राह्मणग्रन्थवर्णितनाा श्रौताग्नि यज्ञाना क्रमबद्ध वर्णन वर्तते । गृह्यसूत्रे गृह्या ग्निसम्बद्धयागानमुपनयनविवाहश्राद्धादिसंस्काराणा विस्तृत विवरण प्रस्तुत विद्यते । धर्मसूत्र चतुर्णां वर्णानामाश्रमाणाञ्च किञ्च राज्ञामपि कर्त्तव्यानि निर्दि ष्टानि सन्ति । इमान्येव त्रीणि वस्तुत प्रधानानि कल्पसूत्राणि मतानि । चतुर्थं शुल्वसूत्रन्तु वेदि निर्माणप्रकार विशेषत प्रतिपादयति । सूत्रस्या स्य वैज्ञानिक महत्त्वमस्ति ।

श्रौतसूत्रोपपादितो विषयो वस्तुतो दुरूह । न तत्र जनसामान्यस्य कृते आकर्षणम् । धार्मिकदृष्ट्या श्रौतसूत्रस्य विषयो महत्त्वशाली । आधुनिके युगे श्रौतयागाना विधान विरलतामुपेतम् । प्राचीनस्य युगस्य धार्मिकेषु विधानेषु याज्ञिकेषु कर्मसु च यदा रुचिरनुरागश्च तैरवश्यमेव श्रौतसूत्राणि अनुशील नीयानि । ऋग्वेदस्य आश्वलायन शाङ्खायनञ्च इमे द्वे श्रौतसूत्रे स्त । गृह्य सूत्रे च तदीय आश्वलायन शाङ्खायन च स्त । शुक्लयजुर्वेदस्य श्रौतसूत्रमेकमेव कात्यायनश्रौतसूत्रमस्ति । गृह्यसूत्रञ्चास्यैकमेव पारस्करगृह्यसूत्र विद्यते । कृष्ण यजुर्वेदसम्बद्धानि श्रौतसूत्राणि-बौधायन आपस्तम्ब हिरण्यकेशि वैखानस भार द्वाज मानवनामधेयानि सन्ति । एतस्मिन् वेदे बौधायन गृह्यसूत्रमपि सुलभ मस्ति । सामवेदीयकल्पसूत्रेषु आर्षेय कल्पसूत्र प्राचीनतमम् । इद लाट्यायनात् श्रौतसूत्रादपि प्राचीनतरमिति निगद्यते । वेदस्यास्य मुख्य गृह्यसूत्र कौथुम शाखाय गोभिलगृह्यसूत्र सुविदितम् । अथर्ववेदस्य श्रौतसूत्र वैताननामक किञ्च तदीय गृह्यसूत्र कौशिकनामक वेद्यम् । गृह्यसूत्रमिद प्राचीनभारतीययातुविद्या विषयिकामनुपमा च सामग्रीं प्रस्तौति । धर्मसूत्राणि कल्पस्य गौरवमयान्यङ्गानि सन्ति पर न साम्प्रत मनिकाम्नाया धर्मसूत्राणि लभ्यन्ते । मन्मानवधर्मसूत्रमा धृत्य मनुस्मृतेर्निर्माण सञ्जात तदपि नाद्यपयन्तमुपलब्ध भवति । सुतरा बौधा यनापस्तम्ब हिरण्यकेशिकल्पसूत्राणामुपलब्धि पूर्णतया भवति अत एव तदी यानि धर्मसूत्राण्यपि प्राप्यन्ते । धर्मसूत्रेषु चतुर्वर्णकर्त्तव्यानि कर्माणि, व्यवहारा राजधर्म आश्रमधर्म, विवाह, दायभाग प्रायश्चित्तम्, नित्यनैमित्तिक कर्म—

इत्येते अन्ये चानेके विषयाः सन्ति वर्णिताः। धर्मसूत्रेषु प्राचीनतमं गौतम-धर्मसूत्रं विद्यते। गौतमधर्मसूत्रं निर्दिशन्तो याज्ञवल्क्य-कुमारिल-शङ्कराचार्य-मेधातिथयः प्राप्यन्ते। बोधायनोऽपि धर्मसूत्रस्य प्राचीनतम आचार्यो मतः। वसिष्ठश्च प्रतिष्ठितेषु धर्मसूत्रकारेषु गण्यते। तदीयं धर्मशास्त्रं यद्यपि लघुकायं परं गुणविपुलत्वेन महनीयमस्ति। वसिष्ठस्य जीवनदर्शनमत्यन्तमुदात्तमाध्यात्मिकमस्ति। सः सदाचारमयं जीवनं यापयितुमुपदिशति। उपदिशति च दुर्बुद्धिप्रियां तृष्णां परिहर्तुम्। न वसिष्ठस्य श्लोकबद्धा स्मृतिः प्रकाशं गतास्ति। बहवो मनुस्मृतिश्लोकास्तत्र गद्यात्मकेषु सूत्रेषु दृष्टिगोचरा भवन्ति। विदुषां धारणेयं यद् वसिष्ठस्य धर्मशास्त्रमेव वर्तमानमनुस्मृतेः किंवा तदीयात् प्राचीन-विशुद्धमूलरूपात् तान् श्लोकान् उद्धृतांश्चकार।

**व्याकरणम्**—वेदानां रक्षकत्वात्, वेदार्थावबोधने सहायकत्वात् प्रकृति-प्रत्ययोपदेशपुरस्सरपदस्वरूपप्रतिष्ठापरत्वादर्थनिर्णयनकृत्साधनेष्वन्यतमसाधनत्वेन प्रयुक्तत्वात् व्याकरणं नाम अङ्गं नितान्तमेव महनीयं श्रेष्ठञ्च अङ्गमंगेषु स्मृतम्। व्याकरणस्य व्युत्पत्तिः (व्याक्रियन्ते शब्दा अनेनेति व्याकरणम्) लभ्योऽर्थोऽस्ति पदमीमांसाकरं शास्त्रम्। तद् वेदस्य मुखत्वेन स्मृतम्—'मुखं व्याकरणं स्मृतम्'। 'चत्वारि शृङ्गा त्रयो अस्य पादा' इत्यादिशब्दैः ऋग्वेदस्त-त्प्रशंसन्ब्रूयते। आचार्यवररुचिः व्याकरणशास्त्रमहनीयतां गायन् तदध्ययनप्रयो-जनानि चेत् पञ्च प्रतिपादयति तदा महर्षिः पतञ्जलिस्तदध्ययनप्रयोजनानि त्रयोदश ब्रूते। व्याकरणशास्त्रं नितरां प्राचीनं शास्त्रमस्ति। गोपथब्राह्मणे व्या-करणविषयाः सन्ति निर्दिष्टाः स्पष्टतः व्याकरणशास्त्रेतिहासावलोकनेन विदितं भवति यद् भारते पुरा अनेके व्याकरणकर्तार आचार्या बभूवुः। तत्र आपिशलि-शाकटायन-गालवेन्द्रादीनां व्याकरणकर्तॄणामुल्लेखः कृतोऽप्राप्यते। परं साम्प्रतं तु पाणिनीयं व्याकरणमेव प्राप्यते। तत्कृतो ग्रन्थः—'अष्टाध्यायी'-'सर्वाङ्गसुल-लितो भूत्वा विभाति। तत्र वैज्ञानिकया पद्धत्या व्याकरणं प्रतिपादितमस्ति। यादृशं हि सुललितं देवगण्याः शास्त्रीयं विवेचनं तत्र दृश्यते नान्यत्र तादृशं क्वापि विलोक्यते। तत्र लौकिकं वैदिकमुभयविधमपि व्याकरणमाम्नातम्।

**निरुक्तम्**—निरुच्यते निश्शेषेणोपदिश्यते तत् तदर्थावबोधनाय पदजातं यत्र तन्निरुक्तमिति कथ्यते। निरुक्तस्यास्ति विषयः—वैदिक-पदानां व्युत्पादनम्। तद् दुरूहपदानामर्थावबोधनाय वैदिकपदव्याख्यानाय विरचितमभूत्। तदध्य-

यनात् प्राग्व्याकरणशास्त्रस्याभिज्ञत्वं वांछ्यते। तन्महत्त्वमभिलक्ष्य दुर्गाचार्यः आह—'प्रधानं चेदमितरेभ्योऽङ्गेभ्यः सर्वशास्त्रेभ्यश्च अर्थपरिज्ञानाभिनिवेशात्। अर्थो हि प्रधानं तद्गुणः शब्दः स च इतरेषु व्याकरणादिषु चिन्त्यते। यथा शब्दलक्षणपरिज्ञानं सर्वशास्त्रेषु व्याकरणात् एवं शब्दार्थनिर्वचन-परिज्ञानं निरुक्तात्।' भाषाशास्त्रदृष्ट्या निरुक्तमनुपमं रत्नम्। निरुक्तस्य विद्वान् टीकाकारो दुर्गाचार्यः कथयति—यन्निरुक्तान्याम्नन् चतुर्दश। यास्कस्य निरुक्ते द्वादश निरुक्तकाराणां मतानि निर्दिष्टानि प्राप्यन्ते। साम्प्रतं तु इदं यास्कविरचितं निरुक्तमेव निरुक्ताख्यस्य वेदाङ्गस्य प्रतिनिधित्वं करोति। यास्कः पाणिनेरपि प्राचीनतरः। महाभारते शान्तिपर्वणि 'यास्को मामृषिरव्यग्रो नैकयज्ञेषु गीतवान्' इत्यादि श्लोके निर्दिष्टः संलक्ष्यते। निरुक्तं वस्तुतः स्वयमेव भाष्यं सूत्रं, परं नितान्तदुरूहत्वात् टीकाकाराः तदर्थावगमनाय कठोरतरं श्रमं कृतवन्तः। तद् वैदिकशब्दकोशनिघण्टुग्रन्थस्य भाष्यम्। निरुक्तप्रतिपादिता विषयाः अधःस्थितेन श्लोकेनोपस्थाप्यन्ते—

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्॥

छन्दः—वेदाः सन्ति छन्दोबद्धाः अतस्तेषामुच्चारणनिमित्ताय छन्दोज्ञानं नितरामपेक्षितम्। छन्दोऽभिधेनैतेनाङ्गेन छन्दसां सर्वेषामुच्चारणविधिस्तद्गतिप्रकारस्तद्गानरीतिश्च विदिता जायन्ते। तस्माद् वैदिकमन्त्रोच्चारणप्रयोजनेन तदध्ययनं पूर्वमुचितम्। विना छन्दोज्ञानं यो वेदाध्ययनयजनयाजनादिकार्याणि करोति तस्य तानि सर्वाणि कार्याणि न भवन्ति फलदानि। उक्तञ्च कात्यायनेन—

'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वा अध्यापयति वा स्थाणु वर्च्छति गर्तं वा पात्यते प्रमीयते वा पापीयान् भवति।'

संहिताब्राह्मणेषु छन्दोनाम्नामुपलभ्यमानत्वात् प्रतीयते यच्छन्दोऽङ्गस्याप्युत्पत्तिर्वैदिकयुग एव संवृत्ता। 'छन्दः' इत्येतस्य पदस्य व्युत्पत्तिरियम्—छन्दयति (पृणाति) इति छन्दो वा छन्दयति (आह्लादयति) इति छन्दोऽथवा छन्द्यतेऽनेनेति छन्दः। 'छन्दांसि छादनात्' इत्येतद्यास्कवचनात् वेदार्थच्छादकं छन्द इत्येतत्पदं छद (छादने) धातोर्निष्पन्नम्। वेदावरणकारित्वात् छन्द इति पदं युक्तमेव। दुर्गाचार्य आह—'यदेभिरात्मानमाच्छादयन् देवा मृत्योर्बिभ्यतः, तच्छन्दसां छन्दस्त्वम्।' श्रुतिषु छन्दसो महनीयता भृशं गीता। असुरहारित्व-

याधाम्यो रक्षकत्वात् तस्य, तच्छक्तिशाली सैनिक इव मतम्। उक्तञ्च— वृष्णिगतोऽसुरान् रक्षांसि स्वद्रान्यपहन्ति त्रिष्टुब्जगत्यौ वैरविन्दुद्।' वहिमानि छन्दास्यनेकभेदोपभेदवन्ति सन्ति। प्रधानेषु वैदिकेषु छन्दःसु इमानि गण्यन्ते— गायत्री, उष्णिक्, अनुष्टुप, बृहती, पङ्क्ति, त्रिष्टुप, जगती, अतिजगती, शक्वरी, अतिशक्वरी, कृति, प्रकृति, आकृति, विकृति, संस्कृति, अभिकृति, उत्कृतिश्च। वैदिकच्छन्दसां विशिष्टतैव यत् तानि अक्षरगणनया भवन्ति नियतानि। न तत्राचराणां गुरुलघुकर्मस्य कश्चिन्नियमविशेष। उक्तञ्च कात्यायनेन— 'यदक्षरपरिमाणं तच्छन्दः'। छन्दःशास्त्रसम्बन्धी प्राचीनतमो ग्रन्थः पिङ्गलकृत पिङ्गलसूत्रमस्ति। पिङ्गलाचार्यः कदा बभूवेति निश्चयपूर्वकं न वक्तुं शक्यते। अस्मच्छन्दःसूत्रस्य भट्टहलायुधकृता मृतसञ्जीवनी व्याख्या प्रसिद्धास्ति। लौकिकच्छन्दसां विकास एभ्य एव वैदिकच्छन्दोभ्यो जातः।

**ज्यौतिषम्**—यज्ञभागाः सन्ति बहुविधाः केचन यज्ञाः एवंविधा विधाने नीता ये सम्वत्सरसम्बन्धिनः सन्ति। केचन एतादृशाः सन्ति ये ऋतुसम्बन्धिनो वर्तन्ते। केचन च तिथि मास पक्ष नक्षत्रपरकाः सन्ति। भागोऽयं वदेषु यज्ञभागादीनां विधानं भिन्न भिन्नकालेषु कृतमवाप्यते। तैत्तिरीयब्राह्मणं वदति—'ब्राह्मणो वसन्तेऽग्निमादधीत क्षत्रियो ग्रीष्मे वैश्यः शरदि'। अष्टकायां फाल्गुन्यां पूर्णमासे च दीक्षाया विधानं विदधत् ताण्ड्यब्राह्मणं दीपितं भवति। एतद्विधाया वेदाज्ञाया पालनं ज्यौतिषशास्त्रज्ञाने सत्येव यथायथं भवितुमर्हति। तस्माज्ज्यौतिषं नाम वेदाङ्गमपि नैजं वैशिष्ट्यं निदधाति। यज्ञस्य यथार्थज्ञाता ज्योतिर्विदेव वेदाङ्गज्यौतिषे कथितञ्च—

> वेदा हि यज्ञार्थमभिप्रवृत्ताः
> कालानुपूर्वा विहिताश्च यज्ञाः।
> तस्मादिदं कालविधानशास्त्रं
> यो ज्यौतिषं वेद स वेद यज्ञम्॥

वेदाङ्गज्यौतिषग्रन्थो लगधप्रणीतः। ग्रन्थस्यास्य श्लोकानां रहस्यं किमिप्येतद् वस्तुतो विद्वद्धौरेयाणामपि दुर्गमम्। ग्रन्थस्यास्यावतीर्णस्य ३४०० वर्षाणि व्यतीतानीति शङ्करबालकृष्णदीक्षितस्य विचारः। लोकमान्यतिलक-सुधाकरद्विवेदि-डॉ० थीबी प्रभृतयो विद्वांसो ग्रन्थस्यास्य श्लोकान् व्याख्यातुं प्रायतन्त। भारतीयस्य ज्यौतिःशास्त्रस्य ग्रन्थः एष आद्यः। मन्ये, न ततः प्राक् ज्योतिषि क्वापि काचिन् कृतिर्लिखिताभूत्।

रुदपादि । ततश्च रॉथमहोदय एकमेतादृशं ग्रन्थं महनीयमजग्रन्थत् । नत्र वेदस्य लौकिकसंस्कृतग्रन्थानाञ्च पदानि ( शब्दा ) तेषामर्थविकासक्रमेण सन्निहितान्यक्रियन्त । अद्भुते तस्मिन् कोशे वैदिकशब्दार्थ सङ्कलनं रॉथश्चकार लौकिकसंस्कृतशब्दार्थनिर्णयनञ्च बोठलिंग कृतवान् । कोषोऽयं वस्तुतोऽद्वितीयः । संस्कृतशब्दानामैतिहासिकार्थविकासक्रमबोधकत्वान्नूनमतितरामुपादेयोऽसौ ग्रन्थः ।

रॉथमहाशयस्य मित्राणां शिष्याणाञ्चास्ति विशाला संख्या । सा वेदानुशीलनकर्मणि उल्लेखनीयं भागं जग्राह । एतेषु केचन वैदिकग्रन्थानां वैज्ञानिकानि संस्करणानि, इतरे वैदिकग्रन्थानाम् अनुवादम्, अपरे वेदार्थावगाहनपरकग्रन्थान्, अन्ये च वैदिकसंस्कृतिस्वरूपोद्घाटनकारीणि व्याख्यात्मकानि पुस्तकानि प्राणैषुः ।

ये विद्वांसो वेदमधिकृत्य ग्रन्थान् अकार्षुस्तेषु मैक्समूलरः प्रतीच्यपण्डितकुलललामः । स वेदविषयकान् बहून् ग्रन्थान् विरचय्य वैदिकं सिद्धान्तं धर्मञ्च लोकप्रियतां निनाय । तदीयमतिमहत्त्वपूर्णं कार्यमस्ति सायणकृतस्य ऋग्वेदभाष्यस्य विवेचनपूर्णं सम्पादनम् । ततश्च स 'प्राचीनवैदिकसंस्कृतसाहित्ये' वैदिकसाहित्यस्य वैदुष्यपूर्णां मीमांसां चकार, 'पवित्रप्राच्यग्रन्थमालायां' स्वयं वैदिकग्रन्थान् अनूदितवान् किञ्चान्येषां विदुषामपि अनुवादांस्तत्र प्रकाशयामास । डॉ० वेबरोऽपि प्रख्यातः प्रतीच्येषु प्रधीषु । स वैजसाण्डिसंहितायाः ... विस्मापयामास । स यजुर्वेदसंहितां तैत्तिरीयसंहिताञ्च सम्पादितवान् अथ च इण्डिशेस्तुदियनाख्यजर्मनीयशोधपत्रिकया वैदिकमनुसन्धानं च प्रवर्धयामास । आउफ्रेक्ट नामा विद्वान् ऋग्वेदं रोमनलिप्या प्रकाशयामास । जर्मनीयो विपश्चित् श्रोदरो मैत्रायणीसंहिताया वैज्ञानिकं संस्करणं सम्पाद्य काठकसंहितायाञ्च नैपुण्येन कार्यं कृतवान् । स्टेवेन्सनो राणायनीशाखायाः सामसंहितामाङ्गलभाषाया बेन्फीमहोदयश्च कौथुमशाखायाः सामसंहितां जर्मनीभाषायामनुवादयताम् । रॉथोह्विट्नी च अथर्ववेदस्य संस्करणं ललिततया रीत्या प्रकाशं निन्यतुः । पिप्पलादशाखाया अथर्ववेदसंहिता काश्मीरप्रदेशात् केवलमेका लब्धाऽभवत् । सा च अतिजीर्णां दशां गतासीत् परं प्रो० ब्लूमफील्डो डॉ० गार्बे च तां छायाचित्ररूपेण परिणमय्य विदुषां दीर्घकायेषु खण्डेषु प्रकाशयाञ्चक्रतुः । तयोरेव प्रयत्नो महान् प्रतीच्यानां विद्यानुरागिणां विदुषां संस्कृतभाषायां रक्षणे महतीं प्रीतिं दृढ्यानुरागमतुलञ्च स्नेहमभिव्यनक्ति । तत्रत्या अनेके च विद्वांसः समये समये ब्राह्मणानां श्रौतसू-

पश्चिमीयाः संख्यावन्तः कार्यं कृतवन्त—ह्निटनी-मैक्डानल-वाकरनागेलमहाशयानां वैदिकानि व्याकरणानि शिक्षा-संसारे परमप्रियतां गतानि सन्ति। वैदिकच्छन्दःस्वपि कार्यं कुर्वाणाः प्रतीच्या सुधियो दरीदृश्यन्ते—ई० वी० आर्नाल्डऋग्वेदीयानि छन्दांस्यधीत्य वैदिकमीटरं नाम ग्रन्थं गुम्फितम्। स मन्त्राणां कालनिर्णयनस्य च प्रशंसनीये कार्ये आत्मानं नियोजयामास।

वस्तुतो वैदिकवाङ्मयस्य सर्वेष्वपि क्षेत्रेषु स्तुत्यानि कार्याणि कुर्वाणा विपश्चितस्तेऽवलोक्यन्ते। वैदिकधर्मस्य धर्मान्तरेण तुलनां विधाय ते तुलनाप्रधानवैदिकधर्मविषयकान् ग्रन्थान् बहून् लिखितवन्तः। अस्मिन् क्षेत्रे मैक्समूलर-मैक्डानल-हिलेब्राण्टमहाभागानां नामानि सन्त्युल्लेखनीयानि। हिलेब्राण्टस्य 'वेदिशेमाथोलोजी' मैक्डानलस्य च, वैदिक्माथोलोजी व्यापकत्वात् प्रामाणिकत्वाचोपादेये स्तः। फ्रेञ्चविदुषाञ्च श्रौतसम्बन्धिनोऽनेके ग्रन्था दृष्टा भवन्ति।

वैदिकसाहित्यस्येतिहासेऽपि सुविदितास्त्रिचतुरा ग्रन्था प्राप्यन्ते। डॉ० वेबर एतस्मिन् विषयेऽपि स्वां लेखनीं प्रयुयोज। एतद्विषयकं यं ग्रन्थं सः अजग्रन्थदरित विद्वज्जगति मान्यः। 'हिस्ट्री ऑफ एनशेण्ट संस्कृत लिट्रेचर' ग्रन्थो मैक्समूलरस्य श्रौतग्रन्थानां गभीरमनुशीलनं प्रकटीकरोति। मैक्डानलस्य विण्टरनिरसस्य च एतद्विषयका ग्रन्थाः सर्वविदिता सन्त्येव।

प्राचीनकाले भारते तु 'अनुक्रमणी' इत्येतत्संज्ञका ग्रन्था प्रणीता अजायन्त एव परमस्मिन् वर्तमानानेहस्यपि प्रतीच्या विचक्षणा एतस्मिन् क्षेत्रेऽपि कार्यं कृतवन्तः। तत्र डॉ० ब्लूमफील्डस्य 'वैदिककान्कार्डेन्स.' सुप्रसिद्धो ग्रन्थो विराजते। वेदे वैदिके च विषये लिखितानां ग्रन्थानां लेखानाञ्च पूर्णतया परिचयकारी ग्रन्थो फ्रेञ्चभाषायां 'बिब्लिओग्राफीवेदीक' नामधेयो ह्ि विदुषा लुईरेनोमहाभागेनालेखि। ग्रन्थश्चायमुपादेयः। इत्थं पाश्चात्यानां पण्डितानां वेदे वेदाङ्गे अन्येषु च वैदिकेषु विषयेषु वन्दनीयानि कार्याणि वीक्ष्यन्ते। आशास्यते भारतीया विद्वांसोऽपि इतः कार्याणि कृत्वा ऋषिऋणादात्मानमुद्धर्तुं यतिष्यन्ते।

—:०:—

## उपनिषज्ज्योतिः

उपनिषद् पराविद्येतिपदेन व्यपदिश्यन्ते । 'ब्रह्मविद्या' इत्यतया अपरया च सञ्ज्ञया सुविदितास्ता विदुषां समाजे । तासु महर्षय आध्यात्मिक्या विद्याया गूढतमानां रहस्यानां विशदतया विचारं कुर्वाणा प्राप्यन्ते । भारतीयदर्शनसाहित्ये सन्ति त्रयः प्रस्थानग्रन्थाः । ते वदान् अवलम्बमाना मानवजीवनस्य चरमं लक्ष्यं तत्प्राप्तिसाधनञ्चोपदिशन्ति । भारतीयविचारशास्त्रस्य श्रेष्ठोपजीव्यग्रन्थत्वात् उपनिषद् प्रस्थानत्रय्यां प्रथमप्रस्थानत्वेन गृह्यन्ते । श्रीमद्भगवद्गीता द्वितीयप्रस्थानमिति कथ्यते । गीताया द्वितीयप्रस्थानत्वमथ स्थितेन श्लोकेन स्पष्टमेव प्रकटीक्रियते—

> सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
> पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत् ॥

बादरायणव्यासप्रणीतं ब्रह्मसूत्रं तृतीयप्रस्थानमस्ति । तत्र आपाततो विरोधिभूतानामुपनिषद्वाक्यानां समन्वयस्तथा कृतो यत ज्ञातं स्यात् तेषां सत्यपामपि वाक्यानां ब्रह्मनिष्ठत्वमथ च तत्र तार्किकाणां युक्तयोऽपि प्राबल्येन निराकृता सन्ति । भारतीया वैदिकधर्मग्रन्था दर्शनानि च इमामेव प्रस्थानत्रयीमवलम्बन्ते । उपनिषदः गीताब्रह्मसूत्रयोराश्रयप्रदायिनीत्वात् ता सन्ति महनीयतमाः ।

उप नि पूर्वकस्य विशरणगत्यवसादनार्थकस्य षद्लृधातो क्विप तस्य रूपमिदमुपनिषदिति । उपनिषदामध्ययनेन दृष्टानुश्रविकविषयवितृष्णमुमुक्षूणां संसारस्य बीजभूताविद्या नश्यति ब्रह्म प्राप्तं भवति दुःखानि च क्षीणानि भवन्ति । ब्रह्मणः स्वरूपस्य तदवाप्त्युपायस्य जीवस्य जगतश्च सिद्धान्तादिविषयाणां सविस्तरं वर्णनपरत्वात् 'उपनिषद्' इत्येषा सञ्ज्ञा युक्तैव सार्थकैव ।

"सर्वोपनिषदां मध्ये सारमष्टोत्तरं शतम्" इत्येतन्मुक्तिकोपनिषद्वाक्येन ज्ञायते यद् उपनिषदष्टोत्तरशततोऽप्यधिका आसन् । प्राप्तासु अष्टोत्तरशतसंख्या-

तासूपनिषत्सु प्रायेण द्वादशोपनिषद प्राचीनत्वात् विशदतया च विषयस्य प्रतिपादकत्वादनितरा प्रामाणिका मता भवन्ति।

ऋग्वेदीयोपनिषत्सु ऐतरेयकौषीतकी, सामपरकोपनिषत्सु छान्दोग्यकेनोपनिषदौ, कृष्णयजुर्विषयिकासूपनिषत्सु तैत्तिरीय महानारायण कठ-श्वेताश्वतर मैत्रायण्युपनिषद, शुक्लयजुरधिकृत्य लिखितेशावास्योपनिषद् बृहदारण्यक किञ्चाथर्वनिष्ठासु मुण्डक माण्डूक्य प्रश्नोपनिषदश्च नितरा प्रथिता प्राचीना प्रमाणप्राप्ता सन्ति। *आचार्य शङ्कर उपनिषत्सु यासु भाष्य लिलेख ता सन्ति इमा—*

ईश केन कठ प्रश्न–मुण्डक–माण्डूक्य–तैत्तिरीयैतरेयच्छान्दोग्य–बृहदारण्यक–नृसिंहपूर्वतापन्युपनिषद ।

शङ्कराचार्य भाष्यविभूषितत्वादिमा उपर्युक्ता उपनिषदोऽतिमहत्त्व भजन्ते। लोकप्रियत्वाच्चासा पठन पाठनञ्चाधिक्येन साम्प्रत भवति। उपनिषत्सु काश्चनोपनिषद पद्यात्मिका काश्चन गद्यात्मिका काश्चन गद्यपद्यात्मिका वर्तन्ते। कोपनिषत् कदा कृतामवदित्यत्रालोचकेषु मतभेदो विद्यते। *इमा उपनिषद* नैकस्मिन् काले प्रणीता अजायन्त अपि तु काले काले ता रचिता अभूवन्। प्रधानोपनिषदो बुद्धात्प्रागेवावतेरुरिति संस्कृत-साहित्येतिहासलेखका वदन्ति।

उपनिषत्सु अद्वैतविशिष्टाद्वैतद्वैतश्रुतीना सद्भावो भाति। आचार्यै स्वसिद्धान्तप्रतिष्ठापिका श्रुतय प्रधानत्वेन स्वीकृता, अन्यासा श्रुतीना गौणत्वञ्च तैरुपपादितम्। शङ्कर स्वभाष्येण अद्वैत श्रीरामानुजाचार्योनुगा विशिष्टाद्वैत मध्वाचार्यो द्वैत तत्र प्रतिपादयति। वस्तुत उपनिषत्सु दर्शनाना सर्वेषामपि बीजानि निहितानि सन्ति। न केवलमास्तिकदर्शनानामपि तु नास्तिकदर्शनानामपि मूलसिद्धान्ता समुपलभ्यन्ते। सत्य हि इद यदुपनिषद ऋषीणामाध्यात्मिकविचाराणा मनोज्ञो बहुमूल्यशाली च महान् कोष।

उपनिषदा प्रधानत्वेन *प्रतिपाद्यो विषयोऽध्यात्मा।* संहितात आरण्यक यावत् तद् *ब्रह्म आत्मनोऽभिन्नमित्येतेन* रूपेण प्रतिपादितमस्ति तदुपनिषत्सु ततो न भिन्नमित्येतेन *प्रकारेण व्याख्यातमस्ति। द्वयोरप्यभिन्नत्वात् द्वैताध्यात्मिकतत्त्व*योरेकत्वाचार्यैर्वैत सर्वत्र न च त विहाय कोऽप्यन्य पदार्थ इति ह्युपनिषद्भिर्युक्तिभि साधु निरणायि। तथात्मात्मस्य सत्त्व पूर्णमस्ति। तदेव तत्त्व द्रष्टृ तदेव च दृश्यम्। न द्रष्टृदृश्य भिन्नतो वस्तुत ध्यत। आत्मैव सर्वव्यापी वर्तते विश्वस्य

सर्वेष्वपि पदार्थेषु स एव व्याप्तोऽस्ति । तस्मिन्नेव समग्रस्यापि प्रपञ्चस्य लयो भवति । ततो व्यतिरिक्तं न किमपि । अत एव बृहदारण्यकोपनिषदाह—

*'स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमय प्राणमयश्चक्षुर्मय श्रोत्रमय पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमय काममयोऽकाममय क्रोधमयोऽक्रोधमयो धर्ममयोऽधर्ममय सर्वमय '*

अनेन भवतीति स्फुटं यत् संसारस्य यावन्तोऽपि सन्ति स्थूला वा सूक्ष्मा पदार्था सर्वेऽपि नात्मनो भिन्ना । ते सर्वे आत्मत्वेनैव वेदितव्या आत्मन पर किमपि प्रियतरम् । ऋषिभिर्बहुधा स आत्मा वर्णित । कथयन्ति ते यत् आत्मैव प्राणापानव्यानोदानवायुरूपेणास्मच्छरीरमवति । आत्मैव क्षुत्-पिपासाशोकमोह जरामरणेभ्योऽस्मानुद्धरति । आत्मनो ज्ञानानन्तरमेव मानव सुतसम्पत्सुन्दरी स्वर्गादिमिमवाप्तीच्छानो विरतो भूत्वा परिव्राजो जीवन वहति । पूर्णत्वादखण्ड त्वाच्चात्मा सदसल्लघुगुरुस्थूलादूरान्तर्बहिरादिसकलविरुद्धधर्माणामेकाधार । सर्वेऽपि दर्शनकारा अत एवेद परमतत्त्वमात्माभिधय विभिन्नरूपेण स्व स्वमूलतत्त्व मत्वा भिन्नभिन्नया दृष्टिसरण्या भिन्नभिन्नानि दर्शनानि व्यरचयन् ।

ब्रह्मतत्त्व य कोऽपि जिज्ञासति, ज्ञातु शक्नुते, य कोऽपि मानवस्तत् लिप्सति लब्धु प्रभवति । तदर्थं तपस्या काम्यते अभिलष्यते सत्यानुरागो चरित्रनिष्ठा विमलञ्च ज्ञानम् । नायमात्मा वेदाध्ययनेन लब्धु शक्यो न च सद्धारणाशक्त्यैव । साधको हि यमात्मान वृणुते तेनैव स तमवाप्तुमीष्टे । तत्प्रति हि स्वयमेवात्मा स्वकीय रूपमभिव्यनक्ति । उपनिषद आहु —

'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुधा श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनू स्वाम् ॥'

ब्रह्मणो मूर्तामूर्तभेदेन रूपद्वयम् । तदस्ति मर्त्यममर्त्यञ्च स्थिरमस्थिरञ्च । स्वलक्षण लक्षणातीतञ्च । तत् 'परमात्मेत्येतदुच्यते । अयमेव परमात्मा अविद्याहेतोर्बन्धने निपत्य जीवात्मेत्यसदपि निगद्यते । गतजनुकर्मवशात् सुखानि दु खानि च भोक्तु जगति जन्म गृह्णाति । पुन पुन जायते म्रियते च । संसारागमनानेहसि भोगानुकूल स्थूल वपुर्बिभर्ति । स लोके परलोके च भ्रमति, स्वप्नावस्थायां लोकद्वयस्यापि ज्ञानमाप्नुते । स्वप्ने च सुख दुखञ्च विन्दति । स्वप्ने स्वप्नगतविषयदर्शनार्हशरीर धारयति । भवति च तच्छरीर स्थूलाद् भिन्नम् ।

उपनिषदो वदन्ति यज्जीवो भोगनिमित्तेन स्वप्ने स्वयं नवनवविषयाणां सृष्टिं कुरुते। परं वस्तुतः स्वप्नस्यापि सृष्टिरस्ति ब्रह्मण एव। जीवात्मब्रह्मणोरैक्यात्।

यथा जाग्रदवस्थातो जीवः स्वप्नावस्थायां प्रविशति तथैव स नैजं स्थूलं शरीरं हित्वा अविद्याप्रभावात् शरीरान्तरं धारयति। शरीरत्याग एव मरणमिति कथ्यते। जीवमरणसमयावस्थां वर्णयन्त्य उपनिषदः शंसन्ति यज्जीवस्तदा दुर्बलतां संज्ञाशून्यताञ्च प्रयाति हृदयञ्चाधितिष्ठति। प्रथमं तस्य रूपज्ञानं नश्यति, इन्द्रियैः सार्धमन्तः करणमपि क्षयतामुपैति। तदानीं हृदयवाह्यभागः प्रकाशितो जायते। तत्प्रकाशमेवाश्रित्य जीवः स्वकर्मप्रभावात् शरीरस्य भिन्नभिन्नच्छिद्रमार्गेण निर्गच्छति। तस्मिन्नपि समये जीवे वासना स्फुटतयैव विभासते। अस्या वासनाया एव सामर्थ्यात् जीवस्य भाविनो जीवनस्य स्वरूपं निर्णीयते।

उपनिषदां कथनमेतत्—वर्तमानसमये जीवाः स्वकीये जीवने यादृशं कर्म आचरन्ति ते भाविनि काले तादृशमेव जीवनमपि लभन्ते। सन्ति कर्माण्येव जीवनघटकानि। जीवनं सुखमं सर्वविधतया समुन्नतञ्च कर्तुं सततं शुभान्येव कर्माणि कर्त्तव्यानि। ज्ञानादृते न मुक्तिस्तस्मात्। ज्ञानमर्जनीयम्। ज्ञानाधिगमनं योगाभ्यासेन सम्भवम्। सत्कर्मकर्ता जीव उपरते सति सत्स्वरूपं सद्देशं सच्छरीरमश्नुते। एतेनैव स्फुटं जीवस्यास्मात् लोकात् परलोकगमनं तत् सद् भोगाधिगमनञ्च। तपश्चरणात् पुण्यानां ह्यभ्युदयाच्च ज्ञानबलेन वासना विनश्यति, क्रियमाणानि कर्माणि विलीयन्ते सञ्चितानि च कर्माणि हतशक्तिकानि जायन्ते। एवं विधादशां प्रपन्ना एव जना जीवन्मुक्ता उच्यन्ते। जीवनमुक्तानां प्रारब्धकर्मानुरूपं जीवस्य स्थूलं शरीरं सन्तिष्ठते, नष्टे च सति प्रारब्धकर्मणि शरीरमपि निपतति। ततश्च जीवः स्वकीयस्य रूपस्य प्रत्यक्षभावेनानुभूतिं कुरुते।

सृष्टिवर्णनमप्युपनिषत्सु कृतमस्ति। तत्रोक्तम् आदौ सृष्टेर्नासीत् किमपि। केवलं मृत्युरवर्तत। ततश्च मन सलिलानलभुवः समुद्भूताः। प्रजापतेरनन्तरं सुरासुराश्चोद्बभूवुः। क्वचिदिदमप्यभिहितं प्रथमं पुरुषस्य ततश्च स्त्रिया उत्पत्तिरभवत्। ताभ्याञ्च विश्वस्य सृष्टिरभूत्। एतद्द्विधताया वर्णनं छान्दोग्योपनिषदि बृहदारण्यके च दृष्टं भवति। उपनिषदामध्ययनेन ज्ञायते यत् सर्वतः प्रथममेवमव्यक्तं रूपमासीत्। तस्मादेव व्यक्तमिदं जगत् दृष्टमभूत्। इदमव्यक्तं रूपं हि

'परब्रह्म' अस्ति। समस्तमपि जगत् तस्मादेव प्रादुर्भूतं। अन्ततश्च तत् तस्मिन्नेव लीयते—

यतो वा इमानि भूतानि जायन्ते।
तेन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति।
तद् ब्रह्म एव जगतो निमित्तकारणमुपादानकारणञ्चास्ति।

उपनिषत्सु कर्मगतिरपि सविस्तरं वर्णितास्ति। तत्र देवयानपितृयानयोः निरूपणमालोक्यते। पुण्यकर्मभ्य पुरुषं सुयोनिमध्ये पापेभ्यश्च कर्मभ्य कुत्सितायां योन्यां जननमुपाददाति।

आत्मानं द्रष्टुं किं वा ब्रह्म ज्ञातुं जीवस्य कर्त्तव्यमिदं यत् स कायं वाचं मानसञ्च संयच्छेत्। किञ्च ब्रह्मणं साक्षात्काराय सत्यस्य आचरणं, न कस्यापि वस्तुनोऽपहरणं, ब्रह्मचर्यस्य रक्षणम्, इन्द्रियाणां निग्रहणं, हिंसायां परित्यजनं, मातृ पितृदेवातिथिगुरुजनानामभ्यर्चनं, निन्दनीयकर्मपरिवर्जनं, सांसारिकेषु विषयेषु विरागम्, अन्तःकरणस्य परिचालनमतितरामपेक्ष्यन्ते।

परिशुद्धेन कायेन वचनेन हृदयेन अहम्भावरूपस्थितं प्रत्यक्चेतनमवबोद्धुं प्रयतेत जीवः। तदर्थं निदिध्यासनमपेक्षितमस्ति। योगशास्त्रोक्तसाधनानि साधनीयानि। एतस्मिन् अध्यवसाये तदैव सफलता भवति यदा श्रद्धां भवति गुरुम्प्रति स्वसमर्पणं कृतं जायते। अहम्भावविनाशनाय सर्वाण्यप्येतानि कार्याणि कर्त्तव्यानि सन्ति। गुरुस्तस्मै प्रहीणदोषायैव प्रददाति। उक्तञ्च—

प्रशान्तचित्ताय जितेन्द्रियाय च
प्रहीणदोषाय यथोक्तकारिणे।
गुणान्वितायानुगताय सर्वदा
प्रदेयमेतत् सततं मुमुक्षवे॥

गुरुर्जिज्ञासवे 'तत् त्वमसि' इत्येनदुपदिशति। शान्तो दान्तः शुद्धान्तःकरणः साधकः 'अहं ब्रह्म अस्मि' इत्येनं गुरूपदेशं निशम्य स्वयमेव आत्मनि ब्रह्मणोऽनुभूतिं कर्तुमारभते। साधकोऽभ्यासवशात् शनैः शनैः 'तत्', 'त्वम्', 'अहम्', 'अयम्'—इत्यादिसमग्रभावनास्तथाभावयत्यात्मनि यत् स 'तत् त्वम्' इत्येतयोर्वा 'अहम्', 'अयम्' इत्यनयोर्मध्ये ऐक्यमेवानुभवति। स न स्वकीयरूपमात्मनो भिन्नत्वेन जानाति। 'एकेन विज्ञानेन सर्वं विज्ञातं भवति' इत्येन-

ह्युपनिषद्वचसोऽनुसारेण स साधकः सर्वपदार्थविबोधानन्तरं 'सर्वं खल्विदं ब्रह्म' इत्येतत् साक्षाद् भावेनानुभवति । ततश्चासौ संसार-बन्धनान्मुक्तिमवाप्य अनामयं सच्चिदानन्द-पदं प्रपद्यते । न पुनः संसारेऽस्मिन् स निवर्तते । उक्तञ्च गीतायाम्—

> अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्
> यं प्राप्य न निवर्तन्ते तद् धाम परमं मम ॥
> न तद् भासयते सूर्यो न शशाङ्को न पावकः ।
> यद् गत्वा न निवर्तन्ते तद् धाम परमं मम ।

इत्थं ह्युपनिषदुपदेशनिष्कर्षोऽयं यदेकमेव तत्त्वमस्ति । तस्मादेव समग्रोऽपि संसारः समुत्पद्यते पुनश्चान्ततस्तत्रैव लीयते । श्रुतिश्चामनति—

'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' । निर्गुण-सगुणभेदेन ब्रह्म द्विविधम् । तत्र निर्गुणं ब्रह्म न वक्तुं शक्यम् । तदस्ति सर्वथैव वागगोचरम् । न तत् केनापि प्रकारेण ज्ञातुं शक्यं यत् तत् एतद्विधम् । निर्विकल्पत्वान्नि-रुपाधित्वाच्च तदस्त्यनिर्देश्यम् । अत एव तु वाष्कलिना ब्रह्मणि पृष्टो वाभ्वो मौनमालम्ब्यैव तत्कृतप्रश्नमुत्ततार । निषेधमुखेनैव तद् वर्ण्यते यत् तदिदं न । अत एव श्रुतयो नेतिनेतीत्युक्त्वा तद् गायन्ति । कठोपनिषदमाह—

> अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ।
> अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते

बृहदारण्यकोपनिषदि याज्ञवल्क्यः तदधिकृत्य गार्गीमित्थमुपदिशति—गार्गि ! न तदक्षरं ब्रह्म स्थूलं नाणु न ह्रस्वं न दीर्घम् । तद् असङ्गं रस-गन्ध-रहितम् । न तच्चक्षुश्श्रोत्रमनोवागीगम्यम्' । केनोपनिषत् तच्चिन्मयत्वं ब्रह्म-वर्णयत्येवम्—

> "यद् वाचाऽनभ्युदितं येन वागभ्युद्यते ।
> तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥

देश-काल-निमित्तातीतत्वात् तद् भवति सर्वथैव विचित्रम् । प्रमाणातीत-त्वात् तदप्रमेयमस्ति स्वित्र चैतन्यात्मत्वात् स्वयमेव विषयि । कठोपनिषत् तन्महीयस्तायामाह—

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति॥

मुण्डकोपनिषदेवमुद्रायति तत्—

"यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति।
यथासतः पुरुषात् केशलोमानि तथाक्षरात् सम्भवतीह विश्वम्॥"

कस्यचन वस्तुनो बोधाय तल्लक्षणमपेक्ष्यते। लक्षणञ्च तटस्थ-स्वरूपभेदेन द्विविधं भवति। तटस्थलक्षणेन वस्तुनोऽस्थायिपरिवर्तनशीलगुणा वर्ण्यन्ते। स्वरूपलक्षणेन च वस्तुनः शुद्धं रूपं तात्त्विकञ्च रूपमुपलभ्यते। सगुणब्रह्मण उभयविधं लक्षणं ह्युपनिषत्सु प्राप्यते। स्वरूपलक्षणेन ब्रह्म सत्यं ज्ञानमथ चानन्तरूपमस्ति। उक्तञ्च तैत्तिरीयोपनिषदा—

"सत्यं ज्ञानमनन्तं ब्रह्म"। तच्च ब्रह्म विज्ञानमानन्दश्चास्ति। बृहदारण्यकोपनिषदाह—"विज्ञानमानन्दं ब्रह्म"। उपनिषत्सु ब्रह्मण स्विस्वाभाविक्शक्तीनामुल्लेखः कृतोऽस्ति। श्वेताश्वतरोपनिषदाह—

"परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"।

सगुणब्रह्मणस्तटस्थलक्षणं छान्दोग्योपनिषदेवं प्रस्तौति—

"तज्जलानीति शान्त उपासीत"।

उक्तं हि सिद्धान्तं तैत्तिरीयोपनिषल्ललितशब्दावलिना व्याख्याति—"यतो वा इमानि भूतानि जायन्ते, यतो जातानि जीवन्ति, यत् प्रयन्त्यभिविशन्ति तद् विजिज्ञासस्व तद् ब्रह्म"। "जन्माद्यस्य यतः" इत्येतस्मिन् ब्रह्मसूत्रेऽपि ब्रह्मणस्तटस्थलक्षणं दर्शितम्। माण्डूक्योपनिषदपि तत् ताटस्थ्येन वर्णयति—

"एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवोप्ययौ हि भूतानाम्।"

सगुणं ब्रह्म संसारस्यास्य शास्तृ निखिलस्यापि जगतो हि जीवानां भाग्यस्य विधातृ वर्तते। शुभकार्यकर्तॄणां जीवानां तत् कल्याणसम्पादयितृ, मुक्ति-भुक्ति-प्रदातृ, अशुभकर्मकारिप्राणिनिग्रहीतृ च। तदेव सगुणं ब्रह्म ईश्वर-विराट्-हिरण्यगर्भ-संज्ञया व्यपदिश्यते। अस्य विश्वस्य सर्वेऽपि प्राणिनस्तस्यैव शरीरमिति कथ्यन्ते। सगुणत्वात् तत् पादाभ्यां चलति, हस्ताभ्यां कार्यं करोति नेत्राभ्यां पश्यति, कर्णाभ्याञ्च शृणोति।

ब्रह्मणः शक्त्यैव देवतासु शक्तिः सञ्चरते। तस्यैव शक्तिभूतत्वेन जगत पदार्था जायन्ते शक्तिमन्तः। तस्मात् न केनापि पदार्थेन स्वशक्तौ गर्वः कार्य इत्येतदुपदेष्टुकामा केनोपनिषद्भुमाहैमवतीनामकमुपाख्यानं प्रस्तवीति।

उपनिषदां व्यवहारविषयकः पक्षो नितरां मनोऽभिरामः। दार्शनिकानि तत्त्वानि व्यवहारे प्रयुज्योपनिषद् विद्या मानवीयजीवनमतितरां रसयति इत्यतद्धि तदीय ललितं वैशिष्ट्यम्। उन्नतं सम्बुद्धमाध्यात्मिकपथमारोढुं बहवः सद्गुणाः समपेक्षिताः। अतः उपनिषदो मनोरमाख्यायिकाः निधाय जनसमुदायं तान् सद्गुणान् वरीतुमुपदिशन्ति। आत्मसंयम तपोदानार्जवाहिंसासत्यादिसद्गुणाः जीवनं नि सन्दिग्धतया समुन्नमयन्ति तस्मात् ते उत्तमा गुणा उपनिषद्भिरतथा आलेखिता यत् अवलोक्य तान्, जन-मानसं झटिति तान् स्वीकर्तुमुपक्रमते। तैत्तिरीयोपनिषत् 'सत्य वद, धर्मं चर' इत्यादिना, छान्दोग्योपनिषत् सत्यकाम जाबालकथादिभिः, प्रश्नोपनिषद् अनृतनिन्दादिना, मुण्डकोपनिषत् सत्यश्लाघादिना ममार सन्मार्गं दर्शयन्त्यो हि केन न प्राप्यन्ते ?

ज्ञानस्य सिद्धिर्विवेकवैराग्याधीना। ब्रह्मावाप्त्यर्थं तावज्जीवो न प्रवर्तते यावत् तत्र विवेक वैराग्ययोरुदयो न सञ्जायते। मुण्डकोपनिषदेतद्गुणद्वितय प्रति जनानां चेतः आवर्जयितुं पूर्णबलेन प्रयतमानास्ते। कर्मभिः प्राप्ता लोकाः सन्ति विनश्वरा इत्येतद् विज्ञायैव ब्राह्मणस्य मानसं निर्विण्णतामुपैति। विवेको बोधयतीद यत् कृतेन ( कर्मणा ) अकृतस्य ( नित्यब्रह्मण ) समुपलब्धिर्न भवितुं शक्यास्ति।

कर्मानुष्ठाने प्राणी सर्वथा स्वतन्त्रोऽस्ति। उपनिषदामभिधानमिदं यज्जीव कर्माचरणेऽस्ति स्वाधीनः। पुरुषः काममयोऽस्ति यादृशी तदीयेच्छा भवति तादृश एव तस्य सकल्पो भवति। बृहदारण्यके प्रोक्तम्—"अथो खल्वाहुः काममय एवायं पुरुष इति। स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते तदभिसम्पद्यते।" आत्मज्ञानलाभानन्तरमेव मानवः सर्वेष्वपि लोकेषु पर्यटितु प्रभवति। स यत् कामयते तत् सङ्कल्पमात्रेण लभते उपनिषदः पुरुषार्थोपदेशिका सन्ति। मुक्तिकोपनिषद् वक्ति—

शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासना सरित्।
पौरुषेण प्रयत्नेन योजनीया शुभे पथि।
अशुभेषु समाविष्टं शुभेष्वेवावतारयेत्॥

मानवस्य कर्तव्यमस्ति यदसौ स्वमुद्धर्तुं शुभभावनाभिः स्वकीयं मनो विभू-षयेत् न स अशुभभावनासु निपतेत्। ताभिर्मनो भवत्यपवित्रं दूषितञ्च। "ओ३म् यज्जाग्रतो दूरमुदैति" इत्यादिभिर्मन्त्रैः श्रुतयो मानवं शिवसङ्कल्पशीलं स्वान्तं विधातुं प्रेरयन्ति। मनुष्यमात्रस्य धर्मोऽयं यदसावुच्चोद्देश्यवान् भवेत्। स स्वकीयं बहुमूल्यं जीवनं साधारणवस्तूपलब्धौ न योजयित्वाऽऽत्मप्राप्त्या योजयेत्। श्वेताश्वतरोपनिषदुपदिशति सस्नेहम्—

"तमेव विदित्वाऽतिमृत्युमेति। नान्यः पन्था विद्यतेऽयनाय"।

उपनिषदन्त्यलक्ष्यं नास्त्यात्मतत्त्वविषयकं ज्ञानम्। तच्चरमलक्ष्यन्त्वस्त्या-त्मनोऽपरोक्षानुभूतिः। परोक्षानुभूत्या न सिद्ध्यति स्वार्थः। स्वतात्त्विकरूपावग-मनं स्वकीयस्य रूपस्य साक्षादनुभवनमेवापेक्ष्यते। अत एव मानवस्य यत् कर्तव्यं मुख्यमस्ति तदिदमेव यत् स स्वरूपेऽवतिष्ठेत।

आत्मनो दर्शनेन, आत्मन्यवस्थानेन आत्माधिगमनेन हि स्वाराज्यं भवत्यु-पलब्धम्। जन आत्मनि रमते, आत्मनि क्रीडति, आत्मनि, विहरति आत्मनि नन्दति च। आत्मनो ह्यानन्दमयत्वादसौ जीवो निरतिशयानन्दमास्वदते। न लौकिकेन दृष्टान्तेन न तदानन्दस्य लवोऽपि प्राप्यो भवति। बृहदारण्यकोपनि-षल्लौकिकोदाहरणद्वारेण तदानन्दस्य तुच्छतराभासमात्रं प्रस्तुतीकरोति। सा प्राह—

'तद् यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेद, नान्तरम्, एवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्। तद् वा अस्य एतदाप्तकामम् आत्मकामम् अकामं रूपम्'।

आत्मवेत्ता जन एव तं लोकोत्तरं निरतिशयमानन्दमनुभवति। परं तमानन्दमभ्यास्वाद्यो हि पुरुषो भवत्यवरुद्धवाग्व्यापारः। वस्तुतः स आनन्दो न वाग्गम्यो नान्येनापि केनापि साधनेन लभ्यः। स तु स्वानुभूत्यैव गम्यो वेद्यो ज्ञेयश्च जायते। एतस्या एवापरोक्षानुभूतेः प्रतिपादनमेवोपनिषदामभीष्टमन्त्यम्। अन्येषां सिद्धान्तानां प्रतिपादनन्तु एतस्मात् प्रयोजनात् विहितं यत् तत्सहायतया सा लब्धा स्यात्।

उपनिषदो वस्तुतो भारतीयाध्यात्मवादस्य परमभास्वराणि रत्नानि सन्ति। तेषां ह्युपनिषद्रत्नानां दिव्यया हि आभया को न भुवि मतिमान् आव-र्जितो नु जातः। शाहजहाँसुतस्य दाराशिकोहस्योपनिषत्प्रेम जगति विदितमेव।

वैदेशिकानां विपश्चितां समक्षे यदैवायमलौकिको विश्वाभिरामः प्रकाशः समागतस्तदा तत्क्षणमेव ते विद्वांसोऽमुह्यन्। एक्वेटिल डुपेरनो लैटिनभाषायामनूदितवानुपनिषदः। ओथमर फ्रांक महाभाग उपनिषद्ग्रन्थान् अधीत्य तान् संक्षेपेण प्रकाशमानिनाय। तत्प्रकाशितग्रन्थान् इमान् पठित्वा उपनिषद् ज्ञानम्प्रति प्रतीच्यानां पण्डितानामुत्सुकता वृद्धिं ययौ। औपनिषत्के साहित्ये श्री जे० डी० लंजुईनाग्रो यत्कार्यं श्रमञ्च चकार तत्स्तुत्यम्। वेबरमहोदयस्योद्योगेन तु उपनिषद्ज्ञानस्य प्रचारः समग्रेऽपि संसारे पश्चिमीयेऽभवत्। उपनिषदामनुवादस्तेन जर्मनभाषायां कृतः। 'इंण्डिस्केन स्टडियन' इत्येतेन नाम्ना स उपनिषद्विषयकं ग्रन्थमजग्रन्थत्। महापण्डितो मैक्समूलर उपनिषदोऽंग्रेजीभाषायामनुववाद। अन्ये च पालड्यूसन–आर० ई० ह्यमप्रभृति विद्वांसोऽतितरामुपनिषत्सु भक्तिं प्रकटीचक्रुः। धन्या भारतभूर्यौपनिषत्कज्ञानप्रदीपं प्रज्वालयामास।



तात्पर्यं स्वदृष्ट्या प्रकाशयितुं प्रयत्नः कृतोऽस्ति। भारताद् बहिरपि गीतायाः प्रचारः पर्याप्तो वर्तते। प्रायेण सर्वास्वपि सभ्य-भाषासु तदनुवादो दृश्यते। सन्ति च तत्र बहवः पाण्डित्यपूर्णा विमर्शनकारिणो ग्रन्थाः। सा सर्वजनहिताय भुवि स्वकीयमस्तित्वं वहति। नैवंविधः कोऽपि कालो देशो वा यदर्थं सा नोपादेया सिद्ध्येत्। गीतायाः प्रधानो विषयोऽस्ति ब्रह्मविद्याधारकस्याचारस्य प्रतिपादनम्। आचारस्य सुन्दरतया प्रतिष्ठा तदैव जायते यदा स आध्यात्मिकतया संश्लिष्टो भवेत्। तस्माद् गीतार्थ-विवेचनार्थमुक्तोभयपक्षयोर्निरूपणमपेक्षितमस्ति।

अध्यात्मतत्त्वस्य विमर्शनं गीतायामतिशयपरिस्कृतोज्ज्वलभाषायां कृतं प्राप्यते। यद्यपि ब्रह्मतत्त्वस्य विमर्शो बहुत्र विहितः परमष्टमे त्रयोदशे चाध्याये तद्वर्णनं सविस्तरं विद्यते। ब्रह्मणः सगुण-निर्गुणयो रूपयोर्बोधं कारयन्ती गीता तयोरभिन्नत्वं प्रतिपादयति—

> सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्।
> असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च॥

ब्रह्म न सत् न चासत् इति वक्तुं शक्यम्। तत् ताभ्यामपि परम्। तद्भूतेभ्यो ह्यपृथक् तत्, तदभ्यन्तरेऽप्यस्ति तद् बहिरप्यस्ति। तद्दूरे दूरस्थमन्तिकस्थमचरं चरञ्च—

> ज्ञेयं यत् तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते।
> अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते॥
> बहिरन्तश्च भूतानामचरं चरमेव च।
> सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत्॥

परमतत्त्वस्य देशकालनिमित्तादुपाधिविरहितत्वात् समस्तानामपि विरोधानां पर्यवसानस्थानं तत् तस्माद्याभिहितेषु वर्णनेषु विरोधस्य लवोऽपि। भगवतो जगदुद्भवति विलीयते च तत्रैव, सर्वेषामपि प्राणिनां वासोऽपि तस्मिन्नेव; सूत्रे मणय इव तस्मिन् सर्वमपि जगदिदं प्रोतमास्ते। तदीयं हस्तपादं सर्वतो, नेत्र-श्रोत्र-मुख-शिरांसि च सन्ति सर्वदिगुन्मुखानि; समग्रमपि विश्वमावृत्य तद् विजृम्भमाणमस्ति—

> एतद्योनीनि भूतानि सर्वाणीत्युपधारय।
> अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा॥

मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥
सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥

गीता भगवतो द्विविधयोर्भावयोः सत्तां प्रतिपादयति। तौ च भावाविमौ—अपरभावः परभावश्च। स भावोऽपरभावोऽभिधीयते येनेश्वरो योगमायावान् भवन् जगत्यभिव्यक्तिं गच्छति, स तेन हि भावेन जगदभिव्याप्य सन्तिष्ठमानो भवति—

अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥

परमेश्वरो न जगन्मात्रमपि तु सं तदप्यतिक्रम्य विराजते। इदमेव तदीयं परमार्थरूपम्। एतस्यैवाव्ययस्य रूपस्य नामास्ति 'परभाव' इति।

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥

गीताया चेदं

"पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" ।

इत्येतद्वेदमनु-संवादि।

नास्त्येवंविधः कोऽपि पदार्थो यत्र भगवतोंऽशो न विद्येत। तथाप्येवं विभूतिमत्सु श्रीमदूर्जितेषु पदार्थेषु तस्य दार्केन्मीलनमतिशयतया दृश्यते—

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ॥

इदं चराचरात्मकं जगद् भगवान एव स्वरूपम्। अत एव गीता भगवतः प्रकृतेर्द्विविधं वर्णयति। एतस्मिन् विषये सांख्य—गीताभिमततत्त्वविवेचने यथार्थ्यं तद् द्रष्टव्यमस्ति। "सृष्टेर्मूलेऽव्यक्तप्रकृतिः पुरुषश्च वर्तेते" इत्येतदुक्त्वा सांख्यदर्शनं समस्तानामपि पदार्थानामुत्पत्तिरेतस्मात् तत्त्वद्वयाद् भवतीति स्वीकुरुते। न तत् तत्र कारणं विभिन्नस्वरूपं तृतीयं तत्त्वं मन्यते। परं गीता सांख्यस्येमं सिद्धान्तं नाङ्गीकुरुते। सा तु तत् तत्त्वद्वयं व्यतिरिच्य ताभ्यां परमपि तत्त्वमन्यदप्युपपादयति। तद्धि तत्त्वं सा सर्वव्यापकमव्ययमक्षरं मन्यते। तस्मादेव परा-

चरसृष्टेरभ्युदयो भवतीति सा प्रतिपादयति। वदति च सा यत् प्रकृतिः पुरुषश्च हि तस्य व्यापकस्य तत्त्वस्य-ब्रह्मणः--विभूतिमात्रम्। सा वक्ति परमेश्वरस्य प्रकृतिर्द्विविधा अपरा परा च। अपरा 'क्षरपुरुष' इति परा 'अक्षरपुरुष' इति प्रोच्यते। किञ्च अपराया नामान्तरं 'क्षेत्रम्' किञ्च पराया नामान्तरं क्षेत्रज्ञमिति च प्रथितम्—

> भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
> अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा॥
> अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
> जीवभूतां महाबाहो ययेदं धार्यते जगत्॥

परा उत्कृष्टा प्रकृतिरस्ति। तत्र जीवस्य ग्रहणमस्ति। अपरास्ति निकृष्टप्रकृतिः। जीवेतरसमस्तपदार्थाः 'अपरे'त्येतेन पदेन व्यवह्रियन्ते—

> अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
> जीवभूतां महाबाहो ययेदं धार्यते जगत्॥

सर्वेऽपि भौतिकाः पदार्थाः 'क्षरपुरुष' इत्येतेन व्यपदेशेन व्यपदिष्टा भवन्ति—

> द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
> क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥

अष्टविधा प्रकृतिः किञ्च चतुर्विंशतिविधं (पञ्च महाभूतानि, अहङ्कारो बुद्धिरव्यक्तप्रकृतिः, पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि मनः शब्दस्पर्शादिकाः पञ्च इन्द्रियविषयाः) क्षेत्रं तस्यैव विकारः प्रपञ्चो वा विज्ञेयः—

> महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च।
> इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः॥

तदेवं सांख्याभिमतानि चतुर्विंशतितत्त्वानि गीताधिया क्षेत्रेऽपराख्यायां प्रकृत्यां किंवा क्षरे पुरुषेऽन्तर्भूतानि भवन्ति। अत्रेदमपि ध्यातव्यमस्ति यद् इच्छा-द्वेष-सुख-दुःख-संघाताश्चेतना धृतिश्च क्षेत्रस्य विकाराः सन्तीति गीता मन्यते—

> इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः।
> एतत्क्षेत्रं समासेन सविकारमुदाहृतम्॥

वैशेषिकं दर्शनमिच्छाद्वेषादिकमात्मनः (क्षेत्रज्ञस्य) गुणा इति मन्यते। परं गीतादृष्ट्या एषां सम्बन्धः क्षेत्रज्ञेन सह नास्त्यपि तु क्षेत्रेण सह वर्तते।

चैतन्यात्मकत्वात् जीवः परमेश्वरस्य परा प्रकृतिः ( उत्कृष्टविभूतिः ) विद्यते । 'क्षेत्रज्ञ' इति च स उच्यते । कृतकर्मफलधारित्वाद् वा भोगायतनत्वात् शरीरमेव क्षेत्रमिति कथ्यते । आत्मा 'क्षेत्रज्ञ' इत्यभिधीयते ।

न जायते म्रियते वा कदाचिन्-
नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे

इत्यादिना गीता आत्मानं गायति ।

जीवोऽयमेक एव । न तस्य बहुत्वम् ।

"यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत" इत्येतेन गीताश्लोकेन विदितं भवति यद् गीतायामेकत्वस्यैव भावनानुमोदिता । जीवः परमेश्वरस्य सनातनोऽंश इत्यप्याह—"ममैवांशो जीवलोके जीवभूतः सनातनः" ।

जगदुत्पत्तिस्थितिलयकारणमीश्वरः । सर्वेषामपि भूतानां भगवान् सनातनं बीजम्— 'बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम्' । यथा बीजाद् वृक्ष उत्पद्यते लीयते च तत्, तत्रान्तस्तथैव जगदपीदं भगवत उत्पद्य लीयते च तत्रैव । जगतोऽवान्तरं आविर्भावकालः पौराणिकभाषाया 'ब्रह्मणो दिनम्' किञ्चावान्तरतिरोभावकालो ब्रह्मणो निशेति कथ्यते । उक्तञ्च गीतायाम्—

अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥
भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥

गीता सांख्यमतां प्रकृतिं स्वीकुरुते । तत्र प्रकृतिः क्वापि 'अव्यक्तम्' क्वापि च 'महद् ब्रह्म' इत्येतेन नाम्नाहूतास्ति—

मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ॥

सांख्य प्रकृत्या एव जगदुत्पत्तिर्मन्यते परं गीता तथा न मन्यते । तन्मतेन प्रकृतेरध्यक्ष ईश्वरोऽस्ति । तस्याध्यक्षतायामेव प्रकृतिः संसारं प्रसूते । अचेतनप्रकृत्या तथाकरणसामर्थ्याभावात्—

> मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
> हेतुनानेन कौन्तेय जगद् विपरिवर्तते ॥

गीतादृष्ट्या जगन्नासत्यं परं सत्यमस्ति—

> "नासतो विद्यते भावो नाभावो विद्यते सतः ।"

पुरुषोत्तमतत्त्वं गीतायां परमरहस्यं किञ्च महनीयमाध्यात्मिकं तत्त्वं मतम् । सांख्यमतेन जगतः कारणभूताऽप्रकृतिरेव सर्वतोऽव्यक्ता । अतः प्रकृतिरेव 'अव्यक्तमि'ति निगदिता । परं गीता तु 'अव्यक्तमि'त्येतत्पदं प्रकृतिपुरुषाभ्यामपि परमक्षरब्रह्म प्रति प्रयुनक्ति । प्रकृतिस्तस्य निकृष्टविभूतिर्वर्तते । गीता अचलां प्रकृतिं क्षरनाम्ना कूटस्थमविकारिपुरुषञ्च अक्षरनाम्ना व्याहरति । परं परमतत्त्वं यदस्ति तत्क्षरादप्युत्तममथ च प्रकृत्यतिगं, 'पुरुषोत्तम' इत्येतेन नामधेयेनाभणति सा—

> यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
> अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥

अक्षरब्रह्मपुरुषोत्तमयोः पार्थक्यमत्रावगमनमतितरामपेक्ष्यते । अक्षर-ब्रह्म-चेतनतत्त्वमस्ति । तत् अव्यक्त-प्रकृतेरपि परस्तात् वर्तते । अस्ति तत् जगतो भिन्नं सर्वथा । गीतात्राह—

> "परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ।
> यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥
> अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
> यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥

परं 'पुरुषोत्तम'स्तु स कथ्यते यो विश्वं व्याप्नुवन् अपि तस्मात् परस्तात् विद्यते, समस्तेष्वपि सांसारिकेषु पदार्थेषु विद्यमानोऽपि तेभ्यः पृथगपि विराजते, अस्त्यसौ विश्वानुगो विश्वातीतश्च । गीतोपदेशोऽयं सर्वाण्यपि कर्माणि समर्पणीयान्यस्मा एव पुरुषोत्तमाय ।

तदेवं हि गीतायाः औपनिषदब्रह्मवादं सांख्याभिमतं प्रकृति-पुरुषवादं भागवतधर्माभिमतपरमेश्वरवादञ्च एकतया समन्वितं विधाय प्रदर्शयति ।

गीतायाः अध्यात्मपक्षो यावान् सुविपुलः समन्वयात्मकश्च वर्तते तावान् एव तस्या व्यवहारपक्षोऽपि मनोऽभिरामः आदरणीयश्च विद्यते । गीतायाः जनुः सामयिकीनां परिस्थितीनामध्ययनाद् विदितं भवति यत् तस्याः प्रसूतेरस्यं

व्यावहारिकशिक्षाप्रदानमस्ति। परमस्मिन् विषये विदुषां महान् मतभेदो लक्ष्यते। आचार्यश्रीशङ्करस्य मतमिदं यद् निवृत्ति-मार्ग-प्रतिपादनं गीतायाः मुख्यं लक्ष्यमस्ति। सा च निवृत्तिर्ज्ञानेनैव प्राप्यास्ति। आचार्यश्रीरामानुजस्य कथनमिदं यद् गीता प्रधानतया भक्तिमेव प्रतिपादयति। तयैव भगवत्प्राप्तिर्भवितुं शक्यास्ति। स मन्यते यद् गीता ज्ञानदृष्ट्या विशिष्टाद्वैतमथ च आचारदृष्ट्या भक्तिं प्रतिपादयति। लोकमान्यबालगङ्गाधरतिलकस्तन्यदेवाह। स कथयति यद् गीताया लक्ष्यमस्ति कर्मयोग-प्रतिपादनम्। तद्‌द्वारेण भागवतं धर्ममनुतिष्ठन् मानवः परकल्याणास्पदभूतं भगवन्तमधिगन्तुमर्हति।

गीताया उपदेशस्य व्यापकता समग्रताञ्च प्रति चेद् गम्भीरभावेन विचारो विधीयते तदा स्वैतत् प्रतिभाति यत् तदुद्देश्यं तु किमप्यन्यदेव। न सा कर्ममार्ग एव वा न ज्ञानमार्ग एव न वा भक्तिमार्ग एव किंवा न ध्यानमार्ग एव रमते।

वस्तुतस्तस्या धीः तत्र तत्र रममाणा अपि न केनाप्येकतरेण मार्गेण निबद्धा भवन्ती विलसति। सा तु तस्मिन् मार्गे स्वकीयां मतिं निबध्नाति यस्मिन् कर्म-ज्ञान-भक्तिध्यानाख्यानां सर्वेषामपि मार्गाणां सन्निवेशो विद्यते। सा मानवं तं मार्गमनुसर्तुमुपदिशति यस्य मार्गस्य शरीरं कर्मज्ञान-भक्तिध्यानतत्त्वैः सृष्टमस्ति। न केवलं जीवन-लक्ष्याधिगमनाय कर्म एव अलं भवति अपि तु तदर्थं कर्म यथा अपेक्ष्यते तथैव ज्ञान-भक्त्यादिकमपि काम्यते। सामान्यजनस्य कृते तु सर्वाण्यपि तानि साधनान्यपेक्ष्यन्ते। व्यक्तिविशेषो जनः कामं परमार्थलाभाय स्वरुच्यनुरूपं किमपि साधनं—कमपि मार्गम्—अवलम्बेत। समन्वयता हि गीतायाः स्वकीया विशिष्टता वर्तते।

मीमांसा कर्माणि रज्यति। तद्विचारेण वेदस्य कर्मकाण्ड एव सार्थको ज्ञानकाण्डो निरर्थकः। सा आह—"आम्नायस्य क्रियार्थत्वात् आनर्थक्यमतदर्थानाम्"। कर्मपदं यज्ञपरकम्। देवतोद्देश्येन द्रव्यार्पणं यज्ञ इति कथ्यते। गीता कर्मकाण्डं नावजानाति परं 'यज्ञ' इत्येतत् पदं सा तावत्येवार्थे न प्रयुनक्ति यावति मीमांसा। तन्मतेन तानि सर्वाणि कर्माणि 'यज्ञ' इति नाम्ना व्यपदिश्यन्ते यानि निष्कामभावेन क्रियमाणानि परमात्मानं प्रापयन्ति। फलाकाङ्क्षापूर्वकं कर्माचरणं 'कर्मयोग' पदस्यार्थ इति गीता मनीते।

गीता ज्ञानमार्गं सभाजयति। परं गीताभिमतो ज्ञानमार्गः स न योऽसावस्मात् साङ्ख्यशास्त्राभिज्ञैर्निगदितः। साङ्ख्यस्तु प्रकृति-पुरुषयोः स्वरूपावबोधमेव

ज्ञानं मन्यते। परं गीता न तद् 'ज्ञानम्' इति ब्रूते। सा तु आत्मैकत्वस्य कात्स्न्येनानुभवनं ज्ञानमिति मन्यते। तदभिमतं ज्ञानं तदीयेनाधःस्थितेन श्लोकेन वर्ण्यते—

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः॥

गीताध्यानयोगमभिनन्दति। सा षष्ठेऽध्याये ध्यानयोगं विशदतया उपश्लोकयति। तन्मतेन ध्यानयोगस्यायमेवोपादेयभावो यदासन-प्राणायाम-प्रत्याहारादिभिः परिष्कृतस्य पावनीभूतस्य चित्तस्य सर्वत्र शोभमानस्य घट-घटव्यापकस्य भगवतः सेवायां समर्पणम्। सुखातिशयाधिगमनमेवमेव भवितुमर्हति। गीता प्राह—

'युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते॥'

भगवान् कृष्णो 'योगी तपस्विभ्यो ज्ञानिभ्यः कर्मिभ्यश्च श्रेष्ठ' इति वदति—

'तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।
कर्मिभ्यश्चाधिको योगी तस्माद् योगी भवार्जुन॥'

यत्र ध्यानयोगे भगवान् श्रद्धापूर्वकं किन्त्वान्तर्निविष्टेन मानसेन न भज्यते स ध्यानयोगस्तु गीतामतेनायास एव शुष्क एव शरीर-क्लेशद एव। गीता तदेव ध्यातृं ध्यानं मन्यते यदस्ति भक्तिललितम्। अतः सा उभयोः सामञ्जस्यमाकाङ्क्षति।

भक्ति-योगो योगेषूत्तमो योगः। स योगानां राजा। स रहस्यानामपि रहस्यम्। गीताप्राह—

'राजविद्या राजगुह्यं पवित्रमिदमुत्तमम्।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम्॥'

वस्तुतो भक्तिर्हि गीतायाः हृदयम्। भक्तिमन्तरेण सर्वमपि साधनजातं व्यर्थम्। अनन्यया भक्त्यैव भगवत्प्राप्तिः सम्भवा। अत एव तु गीतायां भगवान् आह—

नाहं वेदैर्न तपसा न दानेन न चेज्यया।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा॥

यदि जीव इच्छति यत् स भगवन्तं पश्येत्, तत्तत्त्वतज्ज्ञानं लभेत परमानन्द-सागरे तदीयः प्रवेशो जायेत तदा सर्वमपि विहाय तेन भगवति भक्तिः कार्या। आह च गीता—

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥

गीताया सकाम–निष्कामभेदेनोपासना द्विविधा वर्णिता । उभयोरप्युपासनयोर्निष्कामोपासना ज्यायसी तत्र मता । सा हि निराकारोपासनामतितरां क्लेशकारिणीं मन्यते—

'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥'

अतः सा सगुणोपासना कर्तुं जीवमुपदिशति—

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात् पार्थ मय्यावेशितचेतसाम् ॥
मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥

न गीताप्रतिपादितस्य भक्तियोगस्य केनाप्यन्येन सह विरोध. साधनेन । इत्थं गीता विभिन्नेषु मार्गेषु समन्वयं प्रदर्शयन्ती कुर्वन्ती च, साधनाध्वानं सुखेन गन्तुं योग्यं विदधाति । ज्ञानं कर्म ध्यानं किञ्च भक्तिर्न वस्तुतः पृथक् पृथक् मार्गाः । एकस्यैव पथस्तानि ज्ञानकर्मादीनि आवासा इव सन्ति । तेषां सर्वेषामप्युत्तरणं हि आध्यात्मिकस्य पथिकस्य कृतेऽपेक्ष्यते । अष्टादशस्वप्यध्यायेष्वेषां मार्गाणां समक्रमस्तं समासेन प्रदर्शितमस्ति । गीतोक्तसाधनमार्गस्यारम्भो निष्कामकर्मतोऽथ च तस्य पर्यवसानं शरणागतितो ज्ञेयम् । गीताया. सर्वगुह्यतमं ज्ञानञ्चेदमेव यद् हृदयस्थमन्तर्यामिनं स्वामिनं शरणं गत्वा सर्वेषामपि धर्माणां परित्यागः । अत्रेदमपि वेद्यं यत्र तेषां स्वरूपत· परित्याग. कार्योऽपि तु ईश्वरसमर्पणधिया ते खलु निष्पादनीया· । उक्तञ्च गीताया भगवता—

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥

गीतायाः सारभूतः श्लोकोऽयम्—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥

साधनमार्गः को यद्येतद् जिज्ञासति कश्चित् तदा स श्लोकमिमं प्रति स्वकीयं स्वान्तमावर्जयेत्। श्लोकस्य तात्पर्यमिदम्—मनो योजयेद् भगवति; भक्तिः कार्या भगवति; यज्ञः कार्यो भगवन्निमित्तेन; आश्रयणीयश्च भगवान् एव। एतेन श्लोकेन एकतो ज्ञानयोग-भक्तियोग-कर्मयोगाः प्रतिपादिताः शरणागतिश्च प्रतिलक्षिता तत्र समन्वयस्यापेक्षा च विभाविता अपरतश्चेदमप्युपदिष्टं यद् भगवन्निष्ठतयैव विविधमार्गाणां मध्येऽविरोधो भवितुं शक्यः।

एतेषां साधनानां फलान्यपि गीता सविस्तरं वर्णयति। आत्मज्ञमात्मस्वरूपस्थितं ज्ञानिनं सा स्थितप्रज्ञभक्तत्रिगुणातीतब्रह्मभूतादिनामभिराह्वयति। साधनानां चरमलक्ष्यमस्ति चरमतत्त्वस्यापरोक्षज्ञानम्। तत् प्राप्यं भवति ज्ञानमार्गादिना। गीता भिन्नभिन्नसंज्ञाभिः सिद्धान् आकारयति। तत्त्वतस्तत्र न भिन्नत्वं मनागपि। सिद्धो भवति अद्वेष्टा दयालुरहङ्कारशून्यः सुख-दुःखसमः शान्तचेताः क्षमावांश्च। न तत्रैकापि भवति कामना। आत्मनात्मन्येव भवति सः सन्तुष्टः। न दुःखेषु स उद्विजते सुखेषु च न स्पृहयति सर्वत्रैवात्मस्वरूपदर्शित्वादसौ भवति रागभयक्रोधभावविहीनः। गीताया मतमिदं यद् यदा भवति मानव एवंविधस्तदैव ज्ञेयमिदं यदसौ स्वकीयं चरमं पदं लब्धं वा लब्धवान्।

गीतायाः शिक्षेयं यन्मानवो भगवन्तं स्मरन् समस्तान्यपि धार्मिकाणि सामाजिकानि कर्माणि च कुर्वन् यथावत् संसार-समरे युध्येत।

शास्त्राणि सर्वाणि यत् निष्पुपदिशन्ति तदेव गीता सरलं सरसं सारभूतञ्च विधाय प्रस्तौति। अत एव तु गीतामुद्दिश्योक्तमिदम्—

> गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः।
> या स्वयं पद्मनाभस्य मुखपद्माद् विनिःसृता।

गीताम्भसि स्नानेन संसारमलनाशो भवति—

> मलनिर्मोचनं पुंसां जलस्नानं दिने दिने।
> सकृद् गीताम्भसि स्नानं संसारमलनाशनम्॥

ईश्वरः प्रार्थ्यते—

> गीता कल्पतरोश्छाया शीतला शुभदा सुखा।
> आश्रित्य तां जनाः सर्वे भूयासुः सफलोद्यमाः॥

## धर्मसूत्राणां वेदमूलत्वं धर्मस्य च महनीयत्वम्

साम्प्रतिका भारतीया यान् मनुस्मृति याज्ञवल्क्यस्मृतिप्रभृतीन् ग्रन्थान् स्वकीयसमुदाचारविषये धर्मशास्त्रत्वेन गृह्णन्ति तानि पुरातनतराणि कल्प सूत्राणि उपजीवन्तीति सर्वेषामेव विपश्चिद्वराणां साधु विदितमेव ।

श्रौतसूत्र धर्मसूत्र गृह्यसूत्र-शुल्वसूत्रभेदेन कल्पसूत्राणि सन्ति चतुर्विधानि । तत्र धर्मसूत्राणि संस्कृतवाङ्मये विशिष्ट सम्मानमादरञ्च अधितिष्ठन्ति । महाभारते भगवान् वेदव्यासः शङ्खलिखित गौतमापस्तम्बादीनां धर्मसूत्रकाराणां नामानि सादरं संस्मरन् समवाप्यते । स कस्यचन धर्मसूत्रकारस्य मतमुद्धरन् ब्रवीति—

"अनृता स्त्रिय इत्येव सूत्रकारो व्यवस्यति ।

यदानृता स्त्रियस्तात सहधर्म कुत स्मृत ॥" ( महाभारते )

यद्यपि सम्प्रति धर्मसूत्र प्रतिपादितेषु धर्मेषु केचन धर्मा न जनैः प्रयुज्यन्ते परं जगती धर्मसूत्रेषु स्वकीयां बलवतीमास्थां निदधाति । सदाचारसम्बन्धिनो धर्मास्तु समये समये परिवृत्तिं यान्त्येव । परं सन्त्येवंविधा बहवो धर्मा पुरातना येषां प्रचारो भारतीयेषु गृहेषु विलोक्यमानो भवति । यथा भारतीया पुरातन तरे समये तेषां पालनं कृतवन्तस्तथैव अद्यत्वेऽपि अद्यतना भारतीयास्तेषु व्यव हरन्ति । धर्मसूत्रप्रतिपादिता एते सर्वे धर्मा सूत्रकारैर्न स्वयं प्रकल्पिता अपि तु तै प्राक्तनेभ्य स्रोतोभ्य संगृह्य यथासमय व्याख्याता । यथा च आह बौधायन —'उपदिष्टो धर्म प्रतिवेदम् । तस्यानुव्याख्यास्याम" । पुनरेव मतमनुसरन् आपस्तम्बो सूते—"अथात सामयाचारिकान् धर्मान् व्याख्या स्याम" । इत्थं धर्मसूत्राणि प्राक्तनानामेव धर्माणां व्याख्यानरूपाणि सन्ति । सर्वे सूत्रकारा स्मृतिकाराश्च यदमेव धर्मस्यादिमं मूलं मन्यन्ते । परं ये धर्मा प्रत्यक्षरूपेण वदे न प्राप्यन्ते तेषां मूलं वदविदां स्मृतौ शीलं च मार्ग्यन्ते । अस्मिन् विषये सविस्तरं विवेचनमपक्ष्यते तस्मात् तदत्रैवमुपस्थियते ।

धर्मसूत्रकारैर्मन्त्रब्राह्मणात्मको वेद प्रमाणत्वेन स्वीकृत । तस्मादेव कारणात् बहुधा ते मन्त्रै सह ब्राह्मणवाक्यान्यपि श्रुतिवचनत्वेन उद्धरन्ति ।

इदं हि तथ्यमुदाहरणानि निधाय चेत् स्पष्टीकृतं स्यात् तदा समुचितमेव स्यात्। शतपथब्राह्मणे ब्रह्मचारिणो ये धर्माः प्रोक्ताः सन्ति तान् धर्मान् उद्धरन्तोऽनुसरन्तश्चानेके सूत्रकारा आसाद्यन्ते। आपस्तम्बप्रणीतधर्मसूत्रे उद्धृतेभ्यो ब्राह्मणवाक्येभ्यो विदितं सञ्जायते यद् ब्रह्मचारिधर्माः न केवलं शतपथब्राह्मणे निरूपिताः परं तेषां निरूपणन्तु तद्भिन्नेष्वपि ब्राह्मणेषु समुपलब्धं भवति। वर्तमानानेहसि न तानि ब्राह्मणानि समवाप्तानि सञ्जायन्ते। यथा च आपस्तम्बोद्धृते वक्ष्यमाणे एते ब्राह्मणवचसी न साम्प्रतं कस्मिन्नपि ब्राह्मणे समवाप्येते—

"यदि स्मयेतापि गृह्य स्मयेतेति ब्राह्मणम्।
रजस्वलो रक्तदन्सत्यवादी स्यादिति हि ब्राह्मणम्॥"

शतपथब्राह्मणस्य ब्रह्मचारिधर्मविषयकं वाक्यं बौधायनधर्मसूत्रे उद्धृतं सद् वीक्ष्यते। आपस्तम्बे च उपनयनविधानविषयके ये द्वे वाक्ये समुपलभ्येते ते अपि वस्तुतः कस्यापि ब्राह्मणान्तरस्यैव स्तः सम्प्रति न तद् ब्राह्मणमधिगतं भवति। ते वाक्ये एते—

"सर्वेभ्यो वेदेभ्यः सावित्र्यनूच्यत इति हि ब्राह्मणम्।

तमसो वा एष तमः प्रविशति यमविद्वानुपनयते यश्चाविद्वानिति हि ब्राह्मणम्"।

इत्थं ब्रह्मचारिधर्मा बहुभिः सूत्रकारैरुद्धृताः। ते च ब्राह्मणेषु सम्यक् प्रतिपादिताः।

स्नातकधर्मसम्बन्धीनि च श्रुतिवाक्यानि धर्मसूत्रेषु उद्धृतानि सन्ति। तथा हि शतपथब्राह्मणस्य मतमुपस्थापयन् वसिष्ठः प्राह—

"भार्यया सह नाश्नीयादवीर्यवदपत्यं भवतीति वाजसनेयके विज्ञायते"।

(वा० ध० सू०)

अपरत्र स्नातकधर्ममधिकृत्य वसिष्ठः काठकश्रुतिं संस्मारयन् तं धर्मं विवृणोति। स्नातकः सम्रादन्यत्र शिरो न वापयेदिति धर्मं व्याख्यातुमापस्तम्बः श्रुतिमुद्धरति—

"अथापि ब्राह्मणम्। रिक्तो वा एषोऽनपिहितो यन्मुण्डस्तस्यैतदपिधानं यच्छिखेति। सत्रेषु तु वचनाद् वपनं शिखायाः"।

वर्णाश्रमचार इत्येतदधिकृत्य ऋग्वेदोऽभिदधाति—

"ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।
उरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत॥"

अत्र वर्णशब्दो न जातिवाचकत्वेन गृहीतः। वर्णस्योल्लेखो न केवलं श्रुतावन्यत्रापि दृश्यते। काठकसंहितायां 'वर्ण' इत्येतत् पदं जात्यर्थे च प्रयुक्तम्—"आर्यवर्णमुज्ञापयति"। ब्राह्मणेषु तु वर्णशब्दो वर्णार्थे एव प्रयुक्तः प्राप्यते। शतपथब्राह्मणं हि वर्णान् एवं वर्णयति—

"चत्वारो वै वर्णाः। ब्राह्मणो राजन्यो वैश्यः शूद्रः"।

ऐतरेयब्राह्मणेऽपि "शूद्रो वर्णः" इति प्रयोगोऽधिगम्यते। तैत्तिरीयब्राह्मणम् एतस्मिन् विषये निगदति—

"दैव्यो वै वर्णो ब्राह्मणः"। "आर्यं वर्णमुज्ञापयन्ति" इत्येष प्रयोगः पञ्चविंशब्राह्मणे विलोक्यते।

एवंविधानि वेदवाक्यानि आलम्ब्य धर्मसूत्रकारा वर्णधर्मान् व्याचक्षाणाः आम्नायन्ते। वसिष्ठः साक्षादेव वर्णविषयकं मन्त्रमुद्धरन् दृश्यते—

"प्रकृतिविशिष्टं चातुर्वर्ण्यं संस्कारविशेषाच्च। ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः। उरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत-इत्यपि निगमो भवति"। (वा० ध० सू० ४, १-२) अन्ये सूत्रकाराः शतपथब्राह्मणमनुसृत्य वर्णान् परिगणयन्ति। यथा धर्मसूत्रेषु वर्णानां कर्मणां वर्णनं विधीयते तथा श्रुतावेषां कर्मणां स्पष्टं विधानं न दृष्टं जायते। परं चतुर्णां वर्णानां कर्मणां पृथक्त्वं वेदेऽनेकविधतया वीक्षितं भवति। केषुचित् कर्मसु वर्णविशेषस्यैव अधिकारो दृश्यते। यथा च ब्राह्मणवर्णस्य याजनाधिकारं प्रतिपादयच्छतपथब्राह्मणं ब्रवीति—

"य उ वैश्य यजते ब्राह्मणीभूयैव यजते।"

ब्राह्मणानां याजनाधिकारो मैत्रायणीसंहितायामेवं वर्णितम्—

"द्वया वै देवा यजमानस्य गृहमागच्छन्ति सोपमा अन्येऽसोपमा अन्ये, एते वै देवा आहुतादो यद् ब्राह्मणाः"। ब्राह्मणेष्वपीदृशं वचनं विलोक्यते—

एता वै प्रजा हुतादो यद् ब्राह्मणाः (ऐतरेयब्राह्मणम्)
एते वै देवा अहुतादो यद् ब्राह्मणाः (गो० ब्राह्मणम्)

दानप्रतिग्रहे सोमपाने च ब्राह्मणानामधिकारं विदधानम् ऐतरेयब्राह्मणमाचष्टे—

"स यदि सोमं ब्राह्मणानां स भक्षो ब्राह्मणांस्तेन भक्षेण जिन्विष्यसि ब्राह्मणकल्पस्ते प्रजायां मा जनिष्यत आदाय्यापाय्यावसायी यथा कामप्रयाप्यो यदा वै क्षत्रियाय पापं भवति ब्राह्मणकल्पोऽस्य प्रजायामजायत ईश्वरो हास्माद् द्वितीयो वा तृतीयो वा ब्राह्मणतामभ्युपैतोः स ब्रह्मबन्धवेन जिज्यूषितः।"

ऋत्विक्त्वेन ब्राह्मणवर्ण एव श्रुतौ प्रतिपादितः। तं विहाय न वर्णान्तरं हि ऋत्विक्त्वं परिग्रहीतुं प्रभवति। ब्राह्मणस्याधिकाराः कर्तव्यानि च शतपथेन विधीयन्त एवम्—"प्रज्ञा वर्धमाना चतुरो धर्मान् ब्राह्मणमभिनिष्पादयति—ब्राह्मण्यं प्रतिरूपचर्यां यशोलोकपक्तिम्; लोकः पच्यमानश्चतुर्भिर्धर्मैर्ब्राह्मणं भुनक्ति—अर्चया च दानेन चाज्येयतया चावध्यतया च"। शतपथब्राह्मणस्यापरं वचनमपि बोधयति यत् तस्मिन् काले अध्यापने ब्राह्मणस्यैवाधिकार आसीत्—

"स होवाचाजातशत्रुः प्रतिलोमं वै तद् यद् ब्राह्मणः क्षत्रियमुपेयाद् ब्रह्म मे वक्ष्यतीति।"

ईदृशानि वेदवचनान्यालम्ब्य धर्मसूत्रकारा ब्राह्मणधर्मान् एवं व्याचक्षते—

"द्विजातीनामध्ययनमिज्या दानम्। ब्राह्मणस्याधिकाः प्रवचन-याजन-प्रतिग्रहाः" । ( गौ० ध० सू० )

"ब्रह्म वै स्वं महिमानं ब्राह्मणेष्वदधादध्ययनाध्यापनयजनयाजनदानप्रतिग्रहसंयुक्तं वेदानां गुप्त्यै" । ( बौ० ध० सू० )

"स्वकर्म ब्राह्मणस्याध्ययनमध्यापनं यज्ञो याजनं दानं प्रतिग्रहणं दायाद्यं शिलोञ्छः" । ( आप० ध० सू० )

"षट् कर्माणि ब्राह्मणस्य स्वाध्यायाध्ययनमध्यापनं यज्ञो यजनं दानं प्रतिग्रहश्चेति" । ( वा० ध० सू० )

श्रुतिविधानमनुसृत्यैव धर्मसूत्रकारैर्ब्राह्मणस्य अवध्यत्वमाम्नातम्।

बौधायनः प्राह—

"अवध्यो वै ब्राह्मणः सर्वापराधेषु" ।

गौतमः प्राह—

"अवध्यश्चाबन्ध्यश्चादण्ड्यश्चाबहिष्कार्यश्चापरिहार्यश्चेति" ।

मनुः प्राह—

"न जातु ब्राह्मणं हन्यात् सर्वपापेष्वपि स्थितम्"।

यद्यपि कतिपयेषु यज्ञेषु वर्णविशेषस्याधिकारः श्रुतिभिर्विधीयते परं प्रायेण सर्वेषां द्विजानां—ब्राह्मणक्षत्रियवैश्यानाम्—अध्ययने यज्ञे च समानोऽधिकारः प्रतिपादितः। द्विजेषु 'आर्य' इति शब्दोऽपि श्रुतिषु प्रयुक्तः। सूत्रकारा अपि तेषु ते 'आर्य' इति शब्दं प्रयुञ्जाना दृश्यन्ते। ते इज्यायां दाने अध्ययने च तेषामधिकारं स्वीकुर्वन्ति।

क्षत्रियस्य मुख्यो धर्मः प्रजानां पालनमेव प्रोच्यते धर्मविद्भिः।

वसिष्ठ प्रब्रवीति—

"शस्त्रेण च प्रजापालनं स्वधर्मस्तेन जीवेत्"।

गौतमश्च अभिदधाति—

"राज्ञोऽधिकं रक्षणं सर्वभूतानाम्"।

क्षत्रियधर्ममधिकृत्य ऐतरेयब्राह्मणं यद् वदति तद् इदम्—

"क्षत्रियोऽजनि विश्वस्य भूतस्याधिपतिरजनि विशामत्ताऽजन्यमित्राणां हन्ताजनि ब्राह्मणानां गोप्ताऽजनीति"।

शतपथब्राह्मणमपि क्षत्रियस्य प्रमुखो धर्मः क इत्यत्र निगदति—

"एष वै प्रजापतेः प्रत्यक्षतमां यद् राजन्यस्तस्मादेकः।

सन् बहूनामीष्टे यद्वेव चतुरक्षरः प्रजापतिश्चतुरक्षरो राजन्यः"॥

शतपथब्राह्मणोक्तमिदं मतं काठकश्रुतिरनुमन्यते—

'राजन्यो वै प्रजानामधिपतिः।"

राजसम्मानमुद्दिश्य गौतम आचष्टे—

"तमुपर्यासीनमधस्तादुपासीरन्नन्ये ब्राह्मणेभ्य. तेऽप्येनं मन्येरन्"।

इदं हि सर्वं श्रुतिमाधृत्यैव प्रोक्तम्—

"तस्मादुपर्यासीनं क्षत्रियमधस्तादिमाः प्रजा उपासते"।

पशवो वैश्यस्य धनत्वेन श्रुतौ मतम्। अस्मिन् विषये पञ्चविंशब्राह्मणे प्रोक्तमिदम्—

(क) "एतद् वै वैश्यस्य समृद्धं यत् पशव."

(ख) "तस्माद् बहुपशुर्वैश्वदेवो हि जागतो वर्षा ह्यस्य वैश्यस्य ऋतुस्तस्माद् ब्राह्मणस्य च राजन्यस्य चाद्योऽधरो हि सृष्ट"।

पशुशब्दः कृषेरपि उपलक्षणमस्ति । अत एव सूत्रकाराः पशुपालनं कृषिञ्च वैश्यस्य प्रधानो धर्म इति कथयन्ति । तस्मादेव सम्बन्धाद् वाणिज्यमपि वैश्यस्य धर्मत्वेन स्वीकृतम् ।

ऋग्वेदे 'शूद्र' इति पदं सकृत् प्रयुक्तम् । न तत्र शूद्रस्य धर्ममुद्दिश्य किमपि प्रोक्तम् । तस्य जन्म पद्भ्यां जातमित्येव निर्दिष्टम् । ऋग्वेदाद् व्यतिरिच्य अन्येषु वेदेषु ब्राह्मणेषु च शूद्रशब्दस्य प्रयोगोऽसकृत् कृतः । तेषु तस्य कर्म किमित्येतदपि निरूपितम् । पञ्चविंशब्राह्मणे कथितं यत् पादप्रक्षालनं शूद्रस्य कर्म विद्यते यज्ञे च तस्याधिकारो नास्ति—

'स यत्त एव प्रतिष्ठाया एकविंशमसृजत तमनुष्टुप्छन्दोऽन्वसृज्यत न काचन देवता शूद्रो मनुष्यस्तस्माच्छूद्र उत बहु पशुरयज्ञियो विदेवो हि, न हि तं काचन देवताऽन्वसृज्यत तस्मात् पादावनेज्यन्नातिवर्द्धते पत्तो हि सृष्ट ।'

यदुपरिष्टात् पञ्चविंशब्राह्मणे प्रोक्तं तदनुमन्यमानम् ऐतरेयब्राह्मणमपि दृष्ट भवति—

'अथ यद्यपः शूद्राणां स भक्षः शूद्रास्तेन भक्षेण जिन्विष्यसि शूद्रकल्पस्ते प्रजायामाजनिष्यतेऽन्यस्य प्रेष्यः कामोत्थाप्यो यथाकामवध्यः' ।

इमानि वचनान्यवलम्ब्य धर्मसूत्राणि च सेवामेव शूद्रस्य प्रधानं धर्मं मन्यन्ते । तथाहि—'शूद्रेषु पूर्वेषां परिचर्या' । ( बौधायन ध० सू० )

'परिचर्या चोत्तरेषाम्' ( गौतम-धर्म सू० )

यथा वर्णधर्ममधिकृत्य यद् श्रुतावुक्तं तथैवाश्रमधर्ममुद्दिश्यापि तत्र स्पष्टमभिहितम् । ब्रह्मचारिणां के धर्मा इत्यत्र शतपथब्राह्मणे विशदतयाऽऽम्नातम् । उद्वाहविषये च तत्र प्रचुरं प्रोक्तम् । ऋग्वेदस्य दशममण्डलस्थं पञ्चाशीतितमं सूक्तं—

'रैभ्यासीदनुदेयी नाराशंसी न्योचनी ।
सूर्याया भद्रमिद् वासो गाथयैति परिष्कृतम्·······' ॥

सूर्याविवाहवर्णनच्छलेन समयुगस्य विवाहविषयक वर्णनं गर्भाधानस्यापि विधानं विलोक्यते । अथर्ववेदे च विषय एष प्रतिपादितः । गृह्यसूत्राणां विवाहवर्णने एतेषां मन्त्राणां विनियोगः क्रियते । उद्वाहसम्बन्धिनो वेदमन्त्रा एव आचार्यैर्गृह्यधर्मविषये प्रमाणत्वेन गृहीताः सन्ति ।

श्रुतिषु ऋणत्रयविधानं यदुक्तं तद् ब्रह्मचर्यं गार्हस्थ्यञ्च लक्ष्यीकृत्य कृतमिति सूत्रकाराणां स्मृतिकाराणाञ्च मतमस्ति। सूते चात्र बौधायनः—

'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य' इति। एवम् ऋणसंयोगादीन्यसंख्येयानि भवन्ति। श्रुतिवचांस्याश्रित्यैव धर्मसूत्रकारैर्गार्हस्थ्यं प्रतिपादितं तद्धर्माश्च निरूपिताः। तैत्तिरीयसंहितायां हि ऋतुमतीधर्मा ये विहितास्ते च सूत्रकारैः स्वसूत्रग्रन्थेषु व्याख्याताः।

वानप्रस्थस्य संन्यासस्य च वर्णनं धर्मसूत्रेषु प्राप्यते। परं सूत्रकाराः केचन तत्र विप्रतिपत्तिमुपस्थापयन्तोऽपि दृश्यन्ते। केचन आचार्या नैष्ठिकं ब्रह्मचर्यं वानप्रस्थं संन्यासञ्च नानुमन्यन्ते। बौधायनोऽत आह—"ऐकाश्रम्यं त्वाचार्या अप्रजनत्वादितरेषाम्"। प्राह्लादिर्ह वै कपिलो नामाऽसुर आस। स एतान् भेदांश्चकार देवैस्सह स्पर्धमानस्तान् मनीषी नाऽऽद्रियेत।" केचन आचार्याः पुनरपि आश्रमद्वयमनुमन्यमानाः प्राप्यन्ते। तैत्तिरीयसंहितायामिह विषये "ये चत्वारः" इति वचोऽप्याप्यते यत् तद् धर्मस्य चतुर्विधत्वं करोतीति तेषां मतम्। परं मतमिदं प्रतिवदन् बौधायन आचष्टे यद् 'ये चत्वारः' इत्येव कर्मवाद एवास्ति—ऐष्टिक-पाशुक-सौमिक दार्विहोमाणाम्। ज्ञानमेवमुक्ते कारणमिति मत्वा केचन आचार्याः संन्यासं परिपुष्णन्ति किञ्च ज्ञानप्रशंसात्मकानि श्रुतिवचनानि प्रमाणत्वेन प्रस्तुवन्ति। शतपथब्राह्मणस्य अध स्थितं वचनं संन्यासपरिपोषकाणां मतं दृढयति—

"तमेतं वेदानुवचनेन विविदिषन्ति। ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन चैतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्ति। एतद्ध स्म वै तत्पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजान्न कामयन्ते किम्प्रजया करिष्यामो येषान्नोऽयमात्मा यँल्लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः"। आपस्तम्बधर्मसूत्रन्तु पक्षद्वयमपि उपन्यस्यति।

यद्यपि सूत्रकाराः स्मृतिकाराश्च काल-धर्मगवेषमाणाः संन्यासं न सर्वथा प्रत्याचक्षते संन्यासधर्मांश्चापि प्रतिपादयन्ति तथापि ते वेदविरुद्धतां न कदापि सहन्ते। तेषां वेदाज्ञा सर्वथा माननीयास्ति। तेभ्यः परं न किमपि तेषां दृष्टौ। अत एव आपस्तम्बधर्मसूत्रे प्रोक्तम्—

शीलं वा आचरन्ति ता शाखास्तदा प्रावर्तन्त परं ता गच्छता कालेन व्यनश्यन् । गोविन्दस्वामी वक्ति च यद् बौधायनेन प्रोक्तं शिष्टागमं प्रलीनशाखामूलो वर्तते ।

धर्मसूत्रग्रन्थालोचनेन विदितं सञ्जायते यद् धर्मसूत्रकाराणामभिमतमिदं यत् कस्मिन् अपि विषये 'धर्मोऽयम्' इत्येतत्कथनं न तावत् सम्भवं यावत् श्रुतिर्न अनुसन्धीयते । धर्मसूत्रकारास्तत् सर्वमपि प्रतिवदन्ति यदस्ति श्रुतिविरुद्धम् ।

धर्मविदो धर्मं चतुर्षु भागेषु विभजन्ते—१ साधारणधर्मं, २ विशेषधर्मं, ३. असाधारणधर्मं, ४ आपद्धर्मं ।

साधारणधर्मो दानतपोयज्ञभेदेन त्रिविधः स्मृतः । अर्थदान-प्राणदान-अभयदानभेदेन दानमपि तत्र त्रिविधम् । तपोऽपि शारीरतपो-मानसतपो-वाक्तपोभेदेन त्रिधा स्थितम् । यज्ञस्य सन्ति अष्टादश भेदाः । तत्र नित्यनैमित्तिककाम्याध्यात्माधिदैवाधिभूतभेदैः कर्मयज्ञः षड्विधः प्रोक्तः । उपासनायज्ञश्च नवविध उक्तः—१ निर्गुणोपासना, २ सगुणोपासना, ३ अवतारोपासना, ४ ऋषिपितृदेवतोपासना, ५ भूतप्रेतासुराद्युपासना, ६ मन्त्रयोग, ७ हठयोग, ८ लययोग, ९ राजयोग ।

श्रवणमनननिदिध्यासनभेदेन ज्ञानयज्ञस्त्रिप्रकारः प्रतिपादितः । इत्थं हि अष्टादशविधा यज्ञा भवन्ति । दानतपोयज्ञानां सङ्ख्यायाः सङ्कलनेन चतुर्विंशतिभेदाः सञ्जायन्ते । एते हि स्वस्य सात्त्विकादिगुणत्रयवत्त्वात् त्रिगुणीकरणेन द्विसप्ततिरूपं यान्ति । द्विसप्ततिभेदं धर्ममिमं पुरा निधाय यदा तत्र दृक्पातः क्रियते तदा जगति न कोऽप्येतादृक् धर्मः समवाप्तो जायते यो नास्मिन् सनातनधर्मेऽन्तर्भूतः स्यात् । सनातनधर्मस्यैव साधारणं स्वरूपं सर्वलोककल्याणकरं मत्वा निरधारि ।

विशेषधर्मो भवति अधिकारिविशेषाणां कृते । यथाहि—पुरुषस्य कृते पुरुषधर्मो नार्याः कृते नारीधर्मं । गार्हस्थ्यस्य कृते प्रवृत्तिधर्मं संन्यासिनां कृते च निवृत्तिधर्मं । एवमेव ब्राह्मण-क्षत्रिय-वैश्यादीनां कृते पृथक् पृथक् धर्मा य उक्ता स विशेषधर्मं इत्युच्यते ।

असाधारणधर्मस्य विषयास्तु अपि सन्ति । असाधारणधर्मे दिव्ययोगशक्तिसम्पन्नस्य अवस्थेते । स साधारणमनुष्याणामधिकारक्षेत्रमतिक्रामति । विभिन्नदेशीयधर्मप्रवर्तका हि विशेषजनाधिकारिणः पुरा अजनिषत ।

आपद्धर्मस्यापि चमत्कारोऽस्य एव। स धर्मो भावप्रधानः। विपद्वि निपत्य जीव स्वं मुख्यमुद्देश्यं पातुं चेत् पापमापद्धर्मत्वेन समाऽऽचरति तदा न स पापभाक्। श्रूयते यत् पुरा द्वादशवर्षव्यापिनि सति दुर्भिक्षे विश्वामित्रः सारमेयपिशितं जग्राह तेन च बलिवैश्वदेवयज्ञं विधाय भोक्तुं तदुपचक्रमे। आत्मरक्षायै एव आपद्धर्मो धर्मनिष्णैर्विहितः।

धर्मस्य लक्षणं मनुरेवमाचार—

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥

यद्यपि धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिस्तथापि महाभाग्तमेवमप्याह—

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्॥

श्रुतिमूलो हि धर्मो न कस्मिन्नपि द्वेषि। अत एव धर्माचार्याः प्राहुः—

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्।
आत्मनः प्रतिकूलानि परेषां न समाचरेत्॥

धर्मस्योपादेयत्वं महनीयत्वञ्चेत्थं गीतं धर्मज्ञैः—

धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति।
धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितं तस्माद् धर्मं परमं वदन्ति॥

व्यासो धर्मस्य अहेयत्वे प्राह—

न जातु कामान्न भयान्न लोभाद् धर्मं त्यजेज्जीवितस्यापि हेतोः।
नित्यो धर्मः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्य त्वनित्यः॥

धर्मस्य निषेवणीयत्वं कियदुपकारकमित्यत्र व्यास एवम् अभिदधाति—

ऊर्ध्वबाहुर्विरौम्येष न कश्चिदपि हि शृणोति माम्।
धर्मादर्थश्च कामश्च स धर्मः किन्न सेव्यते॥

धर्मं संरक्षय न कोऽपि कदाप्यवसीदति तस्मादेव कारणात् वेदमनूद्य आचार्योऽन्तेवासिनमनुशास्ति—

"धर्मं चर" "धर्मान्न प्रमदितव्यम्"।

धर्मस्वरूपस्तत्र धर्मस्य यद्रूपमिदमनुसन्दधुमन्द् यस्तुतः श्रेयः प्रेयश्च विश्वमपि निदधाति। आत्मकल्याणकाङ्क्षिणा न स्वजीवने सततं सेवनीयः।

—०—

## पुराणानां महत्त्वम्

श्रीव्यासप्रणीतेषु पुराणेषु सहस्रशः कथाः गीताः सन्ति । ताभ्यो भारतीय-संस्कृति-सदाचारादिविषयाणां ज्ञानमधिगम्यते । भारतीयसाहित्यं प्रति पुराणानां यद् दानमस्ति तद् वस्तुतो नितरामेवोपादेयं महत्त्वयुक्तञ्च विद्यते । अत एव भारतीये वाङ्मये पुराणानां विशेषसम्मानमस्ति । भारतीयसभ्यताचार-विचाराणां जनतायां येन साहित्येन प्रचारणं कृतं तत् पौराणिकं साहित्यमस्ति । अस्मिन्नपि युगे भारतीयधर्मस्य मूलाधार इदमेव पुराणसाहित्यं वर्तते । साम्प्रतं प्रतीच्यशिक्षा-प्रभावात् अनन्या विद्वांसोऽपि पुराणानि परमोपेक्षामयदृष्ट्या प्रेक्षन्ते । ते तानि कपोलकल्पनाकल्पितानि मन्यन्ते । न तेषां पुराणवर्णितासु कथासु स्वल्पापि श्रद्धा । प्रतीच्या विद्वांसो हि पुराणान्यधिकृत्य नितान्तमेव भ्रान्तधारणाः जनतायां प्रचारयन्ति स्म ते तथा प्रयतन्तेस्म यथा भारतीया जनाः स्वसाहित्ये द्वेषबुद्धिमिव निबध्नीरन् । हर्षोऽयं परं महान् साम्प्रतं भारतीया जनाः पुराणानां महत्त्वं विज्ञाय तद्दिशि स्वकीयं ध्यानमाकर्षयन्तः प्रतिलक्ष्यन्ते । किञ्च 'पुराणानि भारतीयेतिहासस्य महानिधिभूताः सन्ति' इति कथयन्तस्ते श्रूयन्ते ।

पुरातनत्वादत्यन्तपुरातनाख्यानयुक्तत्वाच्च सम्भवतः पुराणमित्येतेन नाम्ना इमानि सन्ति सुप्रथितानि । पुराणानां गणना क्वापि क्वापीतिहासेऽपि क्रियते परं वस्तुतः पुराणानि न सन्तीतिहासान्तर्गतानि । इतिहासः अतीतघटनावर्णन-परत्वात् न पुराणम् । पुराणमितिहासमङ्गीकृत्य विषयं सीमितपरिधेराकृष्य तं विस्तृततरं व्यापकतरं च कुरुते । तस्मादितिहासपुराणे स्व-स्ववैशिष्ट्यवशात् पृथक् पृथगेव । पुराण-लक्षणमिदं प्रोक्तम्—

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥

परमेतस्मिन् लक्षणे येषां विषयाणां निर्देशः कृतस्तेभ्योऽप्यधिका विषया वर्णिताः प्राप्यन्ते । पुष्कलविविधविषयसन्निधानाद् अग्निपुराणन्तु भारतीयज्ञानकोष इति नाम्ना सुविदितमेव । अनेकानि पुराणानि तु एतादृशान्यपि दृश्यन्ते येषु पूर्वोक्तलक्षणनिर्दिष्टाः पञ्चापि विषया न प्राप्यन्ते । अस्तु ।

पुराणान्येव परमार्थत आदर्शेतिहासा इव सन्ति। कस्यापि मानवसमाजस्येतिहासस्तदैव पूर्णो हीतिहासो मतः स्यात् यदा तस्य ( मानवसमाजस्य ) कथायां वर्णनं सृष्टिप्रारम्भकालात् कृतं स्यात् किञ्च तद्वर्णनं वर्तमानं कालमभिव्याप्य समुपस्थितं भवेत्। सा कथा तु अपूर्णैव मता स्यात् या आसृष्टिकालात् न गीतास्ति। पुराणेषु एषा विशिष्टता दृश्यतेऽनस्तानि वस्तुत आदर्शेतिहासाः सन्ति। आधुनिका विद्वांस इतिहासलेखनविधायामिमां पुराणानुसृतां पद्धतिं नाद्रियन्ते स्म ते तामुपेक्षन्ते स्म। परं सहर्षमिदं निवेद्यते यदेषा पद्धतिः इङ्गलेण्डस्य सुविदितेन विचक्षणेन एच० जी० वेल्समहाभागेन स्वेतिहासस्य रूपरेखायामङ्गीकृतास्ति।

पुराणानां वर्णनविधिर्निज एव। तस्य रहस्यं न विदन्ति जनाः अतस्तत्रानादरधियं दर्शयन्ति। 'पुराणोक्ता वार्ताः सन्ति न सत्यास्ताः सन्ति अलीका—इत्युक्त्वा ते पुराणानि अवमन्यन्ते च। परमिदं न विस्मरणीयं यच्छास्त्रेष्वस्मदीयेषु वस्तु-कथनस्य प्रकारास्त्रयो निगदिताः। प्रथमः प्रकार'स्तथ्यकथनमि'ति द्वितीयो 'रूपककथनमि'ति तृतीयश्च 'अतिशयोक्तिकथनमि'ति प्रोच्यते। वस्तुनो याथातथ्येन कथनं वस्तुकथनमिति कथ्यते। वैज्ञानिकानां कथनं तथ्यकथनं भवति। यत्र रूपकालङ्कारमाश्रित्य किमप्युच्यते तत् 'रूपककथनमि'ति व्याह्रियते। एषा कथन-पद्धतिर्वेदाभिमतास्ति। अतिशयोक्त्या यत्र कथनं क्रियते तत् 'अतिशयोक्तिकथन मि'त्युदीर्यते। पुराणानि इमामेव पद्धतिमनुसरन्ति। अतिशयोक्तिरत्र प्राधान्येनाश्रीयते। कथनमालङ्कारिकभाषायां तु तत्र भवत्येव परं तन्मूलेऽवश्यमेवातिशयोक्तिः सन्तिष्ठते। पुराणेषु भगवान् विष्णुः संसारस्य पालक उक्तः। संसार-शिशुपालनार्थं क्षीरमपेक्ष्यते। क्षीरमन्तरेण न शिशूनां पालनं वर्द्धनञ्च सम्भवमतस्तत्र विष्णुः क्षीरसागरशायीति निगदितः। चतुर्वर्गफलप्रदातृत्वेन विष्णोः, स चतुर्भुज इत्युक्तस्तत्र। इत्थं तत्र यत् किमपि वर्णितं तद् गूढभाषायामस्ति। अस्ति च तदलङ्कारपूर्णमतिशयोक्तिमूलञ्च। तस्मात् पौराणिक-कथाः उद्दिश्य यदा विचारः क्रियेत तदा तत्कथनप्रणाल्युपरि दृष्टिरवश्यमेव निधातव्या।

पुराणेषु मौर्यवंशस्य वर्णनमाप्यते तत्र आन्ध्रनृपतीनाञ्च इतिहासो विद्यते, गुप्तकुलोद्भूतानां महीपानाञ्चोल्लेखोऽत्र दृश्यते, कौटिल्यस्य अर्थशास्त्रं पुराणानभिज्ञं न; गौतम आपस्तम्बश्च पुराणान्युद्धरन्तु समवाप्यते, छान्दोग्योपनिषदपि पुराणानि स्मरन् समवाप्यते। अथर्ववेदस्य—

"ऋचः सामानि छन्दांसि पुराणं यजुषा सह।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रितः॥"

इत्येतस्मिन् मन्त्रे 'पुराणम्' इत्येतदभिहितमित्येवमादिना सिद्ध्यति यत् पुराणानामस्तित्वं वैदिकेऽपि काले ह्यासीत्। तेषां निर्माणं तदा पूर्तिं गतमभूत् यदात्र गुप्तवंश्यानां साम्राज्यं शुशुभे। न तानि कस्मिन्नपि कालविशेषे प्रणीतान्यभूवन् अपि तु समये समये तेषु नवनवाध्यायानां समावेशो व्यधीयत। अतस्तेषां रचना वैदिके काले प्रारब्धाभूत् सा च ईशवीये पञ्चमे शतके समाप्तिमगादित्येतत् तथ्यं पुराणसाहित्यानुशीलनेन प्रतीतं जायते।

पुराणसंख्यामधिकृत्य नास्ति मतभेदः। तानि सन्त्यष्टादश। तेषां हि अष्टादशानां सङ्केतोऽधः स्थिते श्लोके कृतः—

"मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम्।
अनापलिङ्गकूस्कानि पुराणानि प्रचक्षते॥"

मत्स्य-मार्कण्डेय-भविष्य-भागवत-ब्रह्माण्ड-ब्रह्मवैवर्त-ब्राह्म-वामन-वराह-विष्णु-वायु (शिव)ग्नि-नारद-पद्म-लिङ्ग-गरुड-कूर्म-स्कन्दपुराणानीमानि सन्ति तन्नामानि।

एतेषु पुराणेषु विभिन्नदेवतानामुपास्यं महत्त्वञ्च प्रतिपादितमस्ति। पद्मपुराणे पुराणान्येतानि सत्त्वरजस्तमोभिधत्रिगुणेषु विभक्तानि। विष्णुपुराणं सात्त्विकं किञ्च ब्रह्मविषयकं पुराणं राजसमथ च शिवविषयकं पुराणं तामसमिति समाम्नातम्।

एतानि महापुराणानि तु सन्त्येवाष्टादशोपपुराणान्यपि अष्टादश वर्तन्ते। गरुडपुराणे तेषां नामानीत्थमुक्तानि सनत्कुमार-नारसिंह-स्कान्द-शिवधर्म-आश्चर्य-नारदीय-कपिल-वामन-औशनस-ब्रह्माण्ड-वारुण-कालिका-माहेश्वर-साम्ब-सौर-पाराशर-मारीच-भार्गवाणि।

क्वचित्तु नामानि अन्येन प्रकारेण मैतानि सन्ति। देवीभागवते स्कान्द-वामन-ब्रह्माण्ड-मारीच-भार्गवाख्यपुराणानि न कीर्तितानि तत्र तु तत्स्थाने क्रमशः शिव-मानव-आदित्य-भागवत-वसिष्ठानीत्युक्तानि। कानि सन्ति महापुराणानि कानि चोपपुराणानीत्यत्रापि नैकमत्यम्।

पुराणेषु प्रदत्तानां कथानां यदि कालक्रमानुसारेण पुनर्व्यवस्था विहिता भवेत्, तदा न केवलं भुवोऽपि तु समस्तस्यापि संसारस्योत्पत्तिरपि विदिता भवितुमर्हेत्।

अथ च विविधानां प्रचुराणां घटनानां सम्बन्धोऽपि ज्ञायेत। सर्वेषामपि पदार्थानां मुख्यत्वेरितिहासः शृङ्खलाबद्धो भूत्वा पुरः उपतिष्ठेत्। विश्वं ब्रह्मणः कथमुत्पन्नं, सूर्यः कथं प्रकटीभूतः, सूर्यात् पृथिवी कथमुद्भूता, पृथिवी वायुमयीं स्थितिं विहाय द्रवतां कथमुपेता ततो घनत्वं ततश्च जलताम्। एवमेव जले के वनस्पतयः के च प्राणिनः उत्पन्नाः। तत्प्राणिनां समुद्भवे सन्ति कानि कारणानि? अथ च जलस्याधस्तात् भूः पुनः पुनः कस्माद् गच्छति? समुद्रमन्थनमित्यस्य किं रहस्यम्? तस्मात् किं वस्तुतश्चतुर्दशरत्नानि समुत्पन्नानि? किं वा कविकल्पनैव? कानि सन्ति चतुर्दश भुवनानि? कस्माद् ब्रह्मा, विष्णुः, शङ्करश्च मुख्यदेवत्वेन मताः? इत्यादीनामनेकेषां प्रश्नानामुत्तराणि पुराणेषु समाधीयन्ते। परं तदर्थं पुराणानामनुशीलनमपेक्षितम्। पद्मपुराणे प्रोक्तम्—

"पुरा परम्परां वक्ति पुराणं तेन वै स्मृतम्"

'परम्परा' इत्येतस्य पदस्यार्थाः सन्ति—क्रमः, पद्धतिः, कुलम्, जातिश्च। क्रमेण अनुक्रमो वेद्यः। 'पद्धतिः' इति पदं रीतिं रूढिं नियमम्। पुरा आचारविचाराणां, राजप्रजानां, मानवमानवानां, जातिजातीनां, गुरुशिष्याणां, पतिपत्नीनां, पितृपुत्राणां क्रियान्येषां व्यवहाराणां मानवसम्बन्धिनां मानवेतराणां नाम्रां रीतिः 'पद्धतिः'रित्येतस्य पदस्यार्थो वेद्यः। कुलं नाम वंशः। न नृपाणां वंश एव पशुपक्षिवृक्षादीनामपि। किं बहुना निखिलसृष्टिवर्णनं कुलशब्दाद् गृहीतं भवति। जातिरित्येतत् पदं सकलविविधजात्युल्लेखपरम्।

वस्तुतः पुराणानि सन्ति महत्त्वपूर्णग्रन्थाः। तेषां महत्तामुद्दिश्य भागवतं भणति—

"इतिहासपुराणं च पञ्चमो वेद उच्यते।"

वायुपुराणमते—

यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः।
न चेत् पुराणं स विद्यान्नैव स स्याद् विचक्षणः॥

श्रीमद्भागवते प्रथमस्कन्धे चतुर्थेऽध्याये व्यासमहर्षिणा भारतवर्णनं लिखितं सद्धर्मतत्त्वतोऽपि पुराणानां निबन्धनार्थं स आत्मानं न्ययोजयत्। तथाहि—

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा।
कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह॥
इति भारतमाख्यानं मुनिना कृपया कृतम्॥

चारप्रभृति विषयेषु रुचिरया पद्धत्या मनोऽभिरामया भाषयोपदेशान् कृत्वा जनसमुदायचेतांस्यावर्जयन्तिस्म। इत्थमिह सततं ज्ञान-ज्योतिः स्वकीयेन दिव्येनालोकेनाज्ञानध्वान्तं दलत् अवालोकि। पुराणानि अज्ञेषु जनेष्वपि ज्ञानधारां सञ्चारयन्ति, लोके धर्मस्य स्थितिं परिपोषयन्ति, व्यक्तिषु निर्मलं जीवनं समावेशयन्ति, नीतेः सदाचारस्य च प्रतिष्ठां कुर्वन्ति सततमनाप्यन्त।

पुराणेषु ब्रह्म सकलस्यापि संसारस्य मूलकारणं प्रतिपादितम्। तत्रापि तन्निर्गुणं, निराकारम्, अव्यक्तम्, अखिलशक्तिमच्च गीतम्। ब्रह्मा विष्णुर्महेशश्च तस्या एव अव्यक्तायाः शक्तेः गुणपराः कार्यपराश्च विभिन्ना अंशाः सन्तीति तान्यभिदधति। एतस्मिन् विषये मत्स्यपुराणस्योक्तिरुद्ध्रियते—

"गुणेभ्यः क्षोभमाणेभ्यस्त्रयो देवा विजज्ञिरे।
एका मूर्तिस्त्रयो भागा ब्रह्मविष्णुमहेश्वरा.॥"

इन्द्र-वरुण-वायु-सोम-वह्नि-पृथिवी-सूर्य-शेष-यम-विश्वकर्मादयोऽन्ये च बहवो देवाः पुराणैर्गीयन्ते। तत्रोक्तं यत् ते इमे देवाः स्वस्वनियतकार्याणि कुर्वन्त ईश्वराज्ञां पालयन्तः परस्परं सहकारितया सन्तिष्ठन्ते।

परमेश्वरस्य रूपं तत्र—

"पश्यन्त्यदो रूपमदभ्रचक्षुषा सहस्रपादोरुभुजाननाद्भुतम्।
सहस्रमूर्धश्रवणाक्षिनासिकं सहस्रमौल्यम्बरकुण्डलोल्लसत्॥"

इत्येवंविधिना गीतम्। नानावताराणां निधानमव्ययं बीजं ब्रह्मैवेति तत्राम्नातम्। अवताराणां विमर्शेन ज्ञायते यत् परमेश्वरस्योद्दिष्टमस्त्यन्तिमं मानवानां निर्माणम्। तेषाञ्च रक्षणार्थं तद्विरोधिनां विशसनम्। पुराणप्रदर्शितः परमेश्वरो बाल इव प्रतिभासते। अस्ति स विनोदप्रियः। यथा बालः स्वमनो विनोदयितुं गोतुरङ्गमादिमृन्मयक्रीडनकचिकीर्षया मृत्तिकामुपयुनक्ति जलेन तां क्लेदयति; क्लेदिताञ्च तां पिण्डीकृत्य तत्र मुखनासाद्यवयवान् घटयति तथैवेश्वरोऽपि प्राणिनः सृजति। तत्सृष्टेषु प्रथमे प्राणिनः सन्ति—एकपेशीमयाः; ततश्च सन्ति बहुपेशीयुताः, ततश्च सन्ति मुखनासाद्यङ्गशालिनः। ततश्च सन्ति हस्तपादपुच्छयुताः अन्ततश्च सन्ति बुद्ध्यादीन्द्रियपरिपूर्णाः मानवाः। विशालमिदं विश्वं परमेश्वरस्य स्वयंसिद्धा विराडमयोगशालास्ति। दृश्यन्ते च तत्रानन्ताः पदार्थाः परमाणु-ग्रह-नक्षत्रविद्युदादिरूपाणि वस्तूनि निखिलानि परमेश्वरस्य संकेतेन स्वस्वव्यापारे सन्ति व्यापृतानि। निरन्तरं हि अनन्तशक्तिमतः

परमेश्वरस्य व्यापारा गतिशीला एव दृश्यन्ते। न क्षणमपि ते विरमन्ति। पुराणानि परमेश्वरस्य कार्याणि प्रतिपाद्य यथाशक्ति, मन्ये, जगदुपदिशन्ति सदैव सत्कर्माण्याचरितुम्।

पुराणेषु बहूनि कठिनकठिनान्याध्यात्मिकाधिभौतिकतत्त्वानि रूपकाण्याश्रित्य वर्णितानि सन्ति। तत्त्वानामज्ञजनागम्यत्वात् पुराणे रूपकाश्रयणमुचितं मतम्। रूपकपद्धतिः शैक्षणिकशास्त्रदृष्ट्या शुद्धा मान्या च पद्धतिर्विद्यते। एषा पद्धतिः सामान्यमानवमपि ज्ञाताद्ज्ञातं नयति। जीवं जीवं स्थितिं च प्रबोधयितुं पुराणेषु पुरञ्जनरूपकथा गीतास्ति। अहह, कीदृशेन ललितेन प्रकारेण मनोज्ञया रीत्या सरसेनोपाख्यानेन च जीवस्य चर्चा तत्र निबद्धास्ति। वस्तुतो नास्ति तद्विधविषयज्ञापनाय ततः परमन्यदुत्तमं साधनम्। चन्द्रः प्रतिमासं सप्तविंशतिनक्षत्राणिमुपभुनक्ति—इत्येतदवबोधयितुं दक्षप्रजापतिकन्या-कथावतारिता तत्र। भावोऽस्य कथनस्य गूढतत्त्वानि वर्णयितुं पुराणे सुन्दरसुन्दरतराणि रूपकाणि गृहीतानि सन्ति। इदानींतना पुराणपण्डितास्तत्तत्कथाप्रकथनावसरे तत्तद्रूपकाणि नोद्भेदयन्तो दृष्टा भवन्त्यतः "पुराणेषु सन्ति निरर्गलप्रलापाः" इत्याद्यभिधाय जनाः पुराणानि निन्दन्ति।

आधुनिकानि शास्त्रीयतत्त्वानि पुराणेषु स्थाने स्थाने विकीर्णानि सन्ति। तत्र भूस्तरशास्त्र (जिओलॉजी) वनस्पतिशास्त्र (बॉटॅनी) जीवशास्त्र (बायोलॉजी) गर्भशास्त्र (एम्ब्रियॉलोजी) विकासशास्त्र (ऐवोल्यूशन) प्रजननशास्त्र (जेनेटीज) ध्ययनकारिणी जिज्ञासवः उपादेयां सामग्रीं लब्धुमर्हन्ति। पुराणानुशीलनकारिणा प्रतीच्यानां प्रधीनां कथनमस्ति यत् तत्तद्विषयकशास्त्रबीजानां समवाप्तत्वात् पुराणानि सन्ति मानव-जातिहिताधायकानि। अधःस्थितपङ्क्तिषु प्रोक्तविषयान् उद्दिश्य सङ्केतः लक्ष्यते—

१ अन्नं चराणामचरा ह्यपदः पादचारिणाम्।
  अहस्ताश्च सहस्तानां जीवो जीवस्य जीवनम्॥ (श्रीमद्भाग०)
२ रजसा चोदिता मेघा वर्षन्त्यम्बूनि सर्वशः। ,,
३ कर्मणश्च फलमेतन्नानारूपसमुद्भवम्॥ (मत्स्यपु०)
४ कर्मणैव हि जायन्ते विविधा भूतजातयः। ,,
५ आयुषोऽन्ते प्रजायन्ते मिथुनान्येव ते सकृत्॥ ,,

६. तासां विशुद्धसङ्कल्पाज्जायन्ते मिथुनाः प्रजाः। 　　( वायुपु० )
ताः प्रजाः कामचारिण्यः ताः प्रजाः स्थितयौवनाः॥ 　　,,

साम्प्रतमस्मद्देशे न जनताया अभिरुचिः स्वकीये प्राचीने वाङ्मये वर्तते। अत्र विद्यानामर्जनं नोद्देश्यमस्ति जीवनस्य, अपि तु धनार्जनमेवोद्देश्यं वर्तते। तस्मादद्यत्वानां जनानां प्रवृत्तिः केवलमर्थकरीषु विद्यास्वेव समवाप्यते। विद्याविषयिण्या अनुरक्तेरभावात् तानि तत्त्वानि भारतीयमेधा मार्गयन्ती न दृश्यते यानि पुराणेषु सन्निहितानि सन्ति। अत्र पुराणानां शोधनस्य महती वर्तते अपेक्षा। वैज्ञानिके क्षेत्रे ब्रह्मणो विश्वमुत्पन्नमिति पुराणैरुच्चैरुद्घुष्यते। भारतीयानां पौराणिकपण्डितानां कर्तव्यं यत् ते पुराणानामुक्तं वचनं तथा प्रमाणयेयुर्यथा साम्प्रतिकं वैज्ञानिकं जगत् परितुष्येत्।

आंग्लानां शिक्षापद्धत्या वयं परप्रत्ययनेयधियः संवृत्ताः। आंग्ला स्वार्थबुद्ध्या अस्मदीयानि वेदोपनिषत्स्मृतिपुराणानि तिरस्कृतवन्तः अस्माभिरपि तानि अवधीरितानि। जेतारः स्वार्थधिया अन्धाः सञ्जाताः परं वयन्तु अज्ञानात् परप्रत्ययनेयबुद्धित्वाच्चान्धाः पुरा अस्मद्देशस्य राजानो विपश्चित्सज्जनान् स्वाश्रये निहितवन्तः; संस्कृताध्ययनाध्यापनार्थं युक्तामुचितां च वृत्तिं प्रदत्तवन्तः परं सम्प्रति तद्विधा व्यवस्था न क्वापि जीवन्ती प्राप्यते तस्मात् पुराणादिग्रन्थानामध्ययनमध्यापनं च समाप्तिमगमत्।

साम्प्रतं विद्यालयेषु शास्त्रीयाणां विषयाणामध्ययनं संस्कृतद्वारेण न जायते। तदध्ययनमांग्लभाषाद्वारेण कृतं भवति। इमे हि आंग्लभाषाद्वारेण संस्कृतग्रन्थानामवलोकयितारः संस्कृतज्ञा न सन्ति किन्तु ये संस्कृतज्ञा विद्यन्ते ते आंग्लज्ञा न प्रायेण सन्ति अतः पुराणेषु प्रतिपादितानामाधुनिकशास्त्रैरभिमततत्त्वानामनुशोधने मन्त्युभय एवाक्षमाः अथ च संस्कृत-पण्डिता यस्यां स्वाध्यायपद्धत्यां रुचिं निवघ्नति सा पद्धतिर्नाहित अन्वेषणपरा। सा तु केवलं शब्दार्थयो रमते। न तया सा सिद्धिः सम्भवा यस्या अत्र प्रचण्डतया अपेक्षा वरीवर्ति।

स्वातन्त्र्ये लब्धेऽपि पाठ्यक्रमः प्रायेण यथाविध एव लक्ष्यते यथाविधः पारतन्त्र्ये आसीत्। एतस्मात् पाठ्यक्रमाज्जायमाना वृत्तिः समयान्तमपि स्वातन्त्र्यं पारतन्त्र्य एव परिणमयति। अद्यापि भारतीया युवानोऽर्थार्जनप्रयोजनेनाधीयते न तत्तद्विषयज्ञाने पण्डितीभवितुम्। अद्यापि भारतीयं पाठ्यं, भारतीयं

साहित्यमुपेक्ष्यमाणमस्ति तद्यापि उच्चैः क्रन्दन् श्रुतं जायते । न शिक्षाविभागाधिकारिणां सविधे भारतीय-साहित्योपरि दृष्टि-पातनार्थं मनागपि कालः । भारतीयाया संस्कृतेः सभ्यतायाः किञ्च भारतीयानां विद्यानामुद्धारो यदि भवितुं सम्भवस्तदा स आंग्लभाषाया अध्ययनेन विज्ञानस्य पठनेनैव च । तस्मात् कारणात् तदर्थमेव भवति प्रयास । एतत् कुप्रवृत्तिवशात् अधुनापि न भारते पुराणानामध्ययनं तत्तत्त्वान्वेषणदृष्ट्या प्रवर्तमानमवाप्यते । एतत् कुप्रवृत्तिवशादेव सम्प्रत्यपि वैज्ञानिकतत्त्वोद्घाटनकारिणीजननयपि संस्कृतभाषा संस्कृतभाषाया ग्रन्थाश्च आधुनिकेभ्यः शिक्षणालयेभ्य आधुनिकेभ्यश्छात्रेभ्यो दूर एवावतिष्ठन्ते । हा वयं स्वकीये स्वतन्त्रे देशेऽपि समुचितव्यवस्थाया अभावात् तानि रत्नानि लब्धुं प्रभवामो यानि संस्कृतवाङ्मयस्य पुराणादिषु निगूढतया स्थितानि सन्ति । न तावत्कालं जनता पुराणादिकस्याध्ययने प्रवृत्ता स्यात् यावत् तस्यै पूर्णतया जीविकावृत्तिश्च न प्रदत्ता स्यादतः शासनस्य कर्त्तव्यं यत् तत् तं प्रयत्नं स्वीकुर्वीत येन भारतीया जनता विद्यां 'विद्यार्जनमस्मत्कर्त्तव्यम्' इत्येतया धिया गृह्णीयात् न चार्थावाप्तिप्रयोजनेन ताम् आदातुं सा प्रवर्तेत । पुराणादिसाहित्यस्य रक्षा तदैव सम्भवा तदैव च पुराणादिसाहित्यशोधने जनतायाः परमार्थतो हि प्रगाढाभिरुचिरपि जागृयात् ।

# वेदान्तदर्शनम्

अस्ति वेदान्तदर्शनं सर्वदर्शनमूर्धन्यम्। शारीरकमीमांसेत्येतयापि समाख्ययेदं शास्त्रं सर्वविदितम्। सन्दर्भस्योपजीव्या उपनिषद् एव। वेदस्यान्तिमसिद्धान्तस्य निरूपकत्वादुपनिषदामिवास्यापि 'वेदान्त' इत्येषा संज्ञान्वर्था। औपनिषदानां वचनानां मिथो विरोधेनावभासमानानां सिद्धान्तानां विरोधपरिहाराय भगवान् बादरायणो व्यासो 'ब्रह्मसूत्र' पर्यसंज्ञकं दर्शनमिदं प्राणैषीत्। एतत् ब्रह्मसूत्रनामकं दर्शनमखिलवेदान्तसिद्धान्तानामाकरग्रन्थः। भिक्षूणामादरणीयत्वादुपादेयत्वाच्च दर्शनमिदं 'भिक्षुसूत्रम्' इत्येतामपि संज्ञां भजते। "पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः" इत्येतस्मिन् पाणिनीये सूत्रे पाराशर्यपदं पराशरसुतं व्यासमेवाभिदधाति किञ्च तत्प्रणीतं भिक्षुसूत्रमित्येतत्पदं ब्रह्मसूत्रपरकमेव। "ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः" इत्येषा हि श्रीमद्भगवद्गीताया गिरापि ब्रह्मसूत्राण्येव निर्दिशतीति श्रीधरस्वामिनो मन्यन्ते।

बादरायणव्यासप्रणीतत्वाद् दर्शनस्यास्य रचना महाभारतात् प्रागेव बभूवेति निश्चीयते। अस्मिन् दर्शने सर्वास्तिवाद-विज्ञानवादयोरपि विद्यमानत्वात् केचन उपर्युक्त एतदीये रचनाकाले संशेरते परं नेदं विस्मरणीयं यत् तादृशाः सिद्धान्तास्तु बुद्धोदयात् प्रागेव जनुर्जगृहुः।

ब्रह्मसूत्रस्य भाष्यकर्तृषु सुविदिता भाष्यकाराः सन्तीमे—

| सं० | नाम | भाष्यनाम | मतम् | समयः |
|---|---|---|---|---|
| १ | शङ्करः | शारीरकभाष्यम् | अद्वैतम् | (७८८-८२०) |
| २ | भास्करः | भास्करभाष्यम् | भेदाभेदम् | (१०००) |
| ३ | रामानुजः | श्रीभाष्यम् | विशिष्टाद्वैतम् | (११४०) |
| ४ | मध्वः | पूर्णप्रज्ञभाष्यम् | द्वैतम् | (१२३८) |
| ५ | निम्बार्कः | वेदान्तपारिजातभा० | द्वैताद्वैतम् | (१२५०) |
| ६ | श्रीकण्ठः | शैवभाष्यम् | शैवविशिष्टाद्वैतम् | (१२७०) |
| ७ | श्रीपतिः | श्रीकरभाष्यम् | वीरशैवविशिष्टाद्वैतम् | (१४००) |

| सं० | नाम | भाष्यनाम | मतम् | समयः |
|---|---|---|---|---|
| ८ | वल्लभः | अणुभाष्यम् | शुद्धाद्वैतम् | (१४७९-१५४४) |
| ९ | विज्ञानभिक्षुः | विज्ञानामृतम् | अविभागाद्वैतम् | (१६००) |
| १० | बलदेवः | गोविन्दभाष्यम् | अचिन्त्यभेदाभेदम् | (१७२५) |

भाष्येष्वेतेषु शाङ्करं भाष्यमाद्यं प्राचीनतमञ्च भाष्यम् अस्ति । आचार्यः शङ्करोऽद्वैतवादी अस्ति । ज्ञानमार्गस्य चरमं लक्ष्यम् अद्वैतमिति स मेने । तस्यानुयायिनस्तदीयं सिद्धान्तमद्वैतमनुययुः तच्छिष्येषु सुरेश्वराचार्यपद्मपादाचार्यप्रभृतयश्चत्वारः शिष्याः सन्ति प्रसिद्धाः । सुरेश्वराचार्यो नैष्कर्म्यसिद्धिपञ्चीकरणवार्तिकादीन् कतिपयान् ग्रन्थान् लिलेख । पद्मपादाचार्यश्च पञ्चपादिकाविज्ञानदीपिकादिग्रन्थान् अलिखत् । वृद्धवाचस्पतिमिश्रस्य 'शाङ्करभाष्ये भामती परमप्रसिद्धास्ति । सा विद्वज्जगति परं सम्मानं लभते । चित्सुखाचार्यस्य तत्त्वदीपिका ( चित्सुखी ) अपि जगद्विदिता वर्तते । षोडशे शतके मधुसूदनसरस्वती परमविश्रुतो वेदान्तिशिरोमणिः संन्यासी समजनि । सः अद्वैतरत्नरक्षणादिकान् बहून् ग्रन्थान् अजग्रन्थत् । तत्र तदीया 'अद्वैतसिद्धि'र्नाम रचनातु अमररचनास्ति ।

वेदान्तसाहित्यं वस्तुतो विपुलतममस्ति । तत्रोत्तमोत्तमा ग्रन्थाः प्राप्यन्ते । अद्वैतवादपरकमेव साहित्यं स्वयं नितरां विशालं वर्तते । रामानुज-मध्व-निम्बार्क-वल्लभप्रभृत्याचार्याणां किञ्च तत्तदाचार्यानुयायिनाञ्च साहित्यं यदा वेदान्तेऽन्तर्भूतं क्रियते तदा तु वेदान्तदर्शनस्य भाण्डागारो दर्शनान्तरस्य किञ्चान्येषामपि विश्वपाणां भाण्डागारमनायासेनैवाधरीकरोति ।

ब्रह्मसूत्राध्ययनेन विदितं भवति यद् बादरायणादपि प्राक् बहव आचार्या वेदान्ततत्त्वं विचारयामासुः । परं हन्त, न साम्प्रतं तेषामाचार्याणां कृतय उपलभ्यते । महर्षिर्व्यासः स्वकीयेषु सूत्रेषु येषु तान् सादरं स्मरति तानि सूत्राणीमानि—

१. स्वामिनः फलश्रुतेरित्यात्रेयः, २. अभिव्यक्तेरित्याश्मरथ्यः, ३. सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति, ४. उत्क्रमिष्यत एवं भावादित्यौडुलोमिः, ५. चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः, ६. अवस्थितेरिति काशकृत्स्नः, ७. अनुस्मृतेर्बादरिः ।

उपरिनिर्दिष्टेष्वाचार्येषु कतिपये तु महर्षिणा असकृत् स्मृताः ।

आत्मा ज्ञानं ज्ञाता चास्ति । न वस्तुतो ज्ञाता ज्ञानात् पृथक् । ज्ञातृज्ञानयोर्मध्ये न विद्यते भिन्नता । ज्ञेयपदार्थे सति आविर्भूते ज्ञानमेव ज्ञातृरूपमादायोत्तिष्ठति । परं ज्ञेयाभावे ज्ञातृताविषयक प्रश्न एव नोदेति ? ज्ञातृता तु ज्ञेयतामपेक्षते । ज्ञेयताभावेनैव सह ज्ञातृतापि निरोधत्ते । यदा जगत् ज्ञेयरूपेणोपस्थितं जायते तदैवात्मनोऽपि ज्ञातृत्वेनोदय सञ्जायते । तदभावे तु आत्मतत्त्वं सततं ज्ञानं भवदेव स्थितं भवति । एकमेव ज्ञानं कर्तृत्वेन कर्मत्वेन च संयुतं भूत्वा भिन्नमिव प्रतिभासते । वस्तुतस्तदभिन्नमेकमेव । 'आत्मा आत्मानं जानाती'त्यत्र य आत्मा कर्ता स एव कर्माप्यस्ति । न कर्ता कर्मणो भिन्नो न च कर्मैव कर्तुर्भिन्नम् । वस्त्वेकमेव वर्तते । अवस्थाविशेषे तत् क्वापि 'कर्ता' क्वापि च 'कर्म' इति व्यपदिश्यते । तेन स्पष्टं भवति यद् आत्मा ज्ञानात् पृथक् न । ज्ञानमेव 'आत्मा' इत्युच्यते । ज्ञानमपि नित्यानित्यभेदेन द्विविध मतम् । अनित्य ज्ञानमन्त करणावच्छिन्नं वृत्तिमात्रमस्ति । विषयसान्निध्ये सति तदुत्पद्यते । तदभावे च विलीयते । नित्यं ज्ञान ततो नितान्त भिन्नम् । तत् सर्वथैव सर्वदैव स्वसत्तां निदधाति । आत्मन इद वैशिष्ट्य बोधयितुमाचार्यशङ्कर आह दृष्टिर्द्विविधा भवति । नेत्रदृष्टिरात्मदृष्टिश्च । नेत्रदृष्टिर्भवति न नित्या । आत्मदृष्टिरस्ति नित्या । अत श्रुतिरात्मदृष्टि 'दृष्टू', इति किंवा आत्मान 'द्रष्टा' इति गायति । लोकेऽपि आत्मदृष्टेर्नित्यत्व प्रमाणगम्यम् । अन्धोऽपि "मया स्वप्ने भ्राता दृष्ट' इति कथयन् श्रुतो भवति । एवमेव बधिरोऽपि 'मया स्वप्ने वेद-मन्त्र श्रुत.' इति वदन् प्राप्तो भवति । अतं आत्मनो ज्ञानस्वरूपताया न संशयावकाश ।

जीवो जगच्चेत्येतौ द्वौ पदार्थौ स्थूलदृष्ट्यैव दृश्येते । सूक्ष्मदृष्ट्या चेद् विमृश्यते तदा 'आत्मा' इत्येष एक एव पदार्थ । तस्यैव सत्तास्ति । न कस्य चनान्यस्य । जगत्सत्ता तु व्यावहारिकी । व्यवहारार्थं जगत्-सत्ता स्वीक्रियते । जगतो व्यावहारिकता प्रदर्शयन् आचार्यशङ्कर आह—"आत्मास्ति ज्ञप्तिस्वरूपो नित्यश्च । विषयाकारेण परिणामिन्या बुद्धेर्यशब्दाद्याकारावभासा त आत्मविज्ञानस्य विषयभूता उत्पद्यमाना एव आत्मविज्ञानेन व्याप्ता उत्पद्यन्ते ।" नामरूपाभ्या विक्रियमाणा पदार्था स्वाभ्यन्तरभागविनिविष्टकारणशक्त्या सह परिवर्तन्ते । न कदापि विकृतय आत्मस्वरूपं परित्यज्य सन्तिष्ठन्ते । भावोऽयं कार्यसत्तायां कारणसत्ता सर्वथा सर्वदा च सन्निविशते । न घटः स्वकारणभूतमृत्तिकां त्यक्त्वा क्षणमपि स्थितो भवति । न च पटः स्वकारणभूततन्तून् विहाय क्षणमपि कदापि

स्वसत्तां निधातुमर्हति । न जगतः कोऽपि पदार्थः सन्मूलंकः सः स्वस्थितिमम-येऽपि सद् ब्रह्माधितिष्ठति । जगतः सर्वा अपि वस्तुः सर्ग स्थिति-प्रलयव्यवहारदशासु सततं चैतन्यमवलम्बमानाः राजन्ते । न ततः क्वापि पृथग् भवन्ति । चैतन्यं ब्रह्म एव । पदार्थाः, अत, स्वजीवनकाले ब्रह्मानुस्यूता एव भूत्वा स्थातुं शक्नुवन्ति । न त्रिकालेऽपि किमपि वस्तु हि आत्मनः पृथग् भूत्वा सन्तिष्ठते । तस्मात् एवं अद्वैतमत्रैव सर्वत्र संलक्ष्यते । विषयिविषययोः पार्थक्यं न पार-मार्थिकं व्यवहार मूलकमेवैतन्ततः । सा हि आत्मसत्ता सर्वमप्यभिव्याप्य वर्तते । सैवैका नामरूपदेश-कालाद्युपाधिना भिन्नभिन्नेव भूत्वावभासते । अत एव कठो-पनिषदाह—

यदेवेह तदमुत्र यदमुत्र तदन्विह ।
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ।

ब्रह्म—एषैव निर्विकल्पा निरुपाधिका निर्विकारा च सत्ता वेदान्तदर्शने 'ब्रह्म' इत्युच्यते । तच्च ब्रह्म निर्गुणसगुणभेदेन द्विविधम् । निर्गुण-ब्रह्मण एव पारमा-र्थिकत्वात् निखि तद्व्याख्यायामेव-श्रुतेः पर्यवसानत्वात्, आचार्यशङ्करमतेनोपनि-षदां प्रतिपाद्यो विषयो निर्गुणब्रह्म एव । सगुणं ब्रह्म तु जगदिव मायाविशिष्टम् । तद् धत्ते मायिकसत्ताम् । ब्रह्मणः परमार्थतत्त्वं निर्णेतुं द्विविधं लक्षणं स्वीक्रियते—स्वरूपलक्षणं, तटस्थलक्षणञ्च । स्वरूपलक्षणं पदार्थस्य सत्यं पारमार्थिकं रूपं बोधयति तटस्थलक्षणं कतिपयकालावस्थायिन आगन्तुकान् गुणान् एव निर्दि-शति । निर्विकल्प-निरुपाधिक-निर्विकारं ब्रह्म स्वरूपलक्षणेन लक्ष्यते । सविकल्पकं सोपाधिकं सविकारं च तत् तटस्थलक्षणेन विपर्यास्यते । भावोऽयं ब्रह्मणो यत् पारमार्थिकं रूपमस्ति तत् तस्य स्वरूपलक्षणमस्ति । यच्च ब्रह्मण उत्पत्तिस्थि-तिलयविधायकं हि अपारमार्थिकं रूपमस्ति तत् तस्य तटस्थलक्षणमस्ति । लौकिकोदाहरणेनेदं स्पष्टीकर्तुं शक्यम्—चेत् कश्चिद् देवदत्त-नामधेयो ब्राह्मणो नाटके रामरूपं परिगृह्य मञ्चे समागत्य अनुकार्यं राममनुकरोति तदा स अनुकर्ता यदि 'रामोऽयम्' इत्यनेन प्रकारेण अवबोध्यते तदा तद्विचारबोधनं तस्य तटस्थलक्ष-णमस्ति यदि च नायं रामः अपि तु 'ब्राह्मणो देवदत्त' इत्यनेन प्रकारेणाभिज्ञाप्यते

सदा तद्विधायकत्वात् स्वरूपलक्षणमिति कथितं भवति। एतेन स्फुटं भवति यद् निर्गुणब्रह्म एव पारमार्थिकं सत्। तदेव सर्वदावशिष्यते। तस्मिन्नेव तत् सर्वं भाति यत् तत्तद्रूपेणावभासते।

सत्यं ज्ञानम् अनन्तमित्येतानि पदानि हि एकविभक्तिकत्वाद् ब्रह्मणो विशेषणत्वेन प्रतीयन्ते। परं न तानि तथाविधानि; तानि तु ब्रह्मणः स्वरूपं लक्षयन्ति तस्मात् तानि लक्षणभूतानि सन्ति न च विशेषणभूतानि। ब्रह्मण एकत्वाद् अद्वितीयत्वाच्च तस्मिन् तेषां लक्षणत्वमेव घटते न च विशेषणत्वम्। ब्रह्म कदापि स्वकीयादविच्छिन्नाद् रूपान्न व्यभिचरितं भवति तस्मात् तत् 'सत्य'मिति, चिद्रूपत्वात् तद् 'ज्ञान'मिति, न कस्मादपि प्रविभक्तं भवति तदतः 'अनन्तम्', इत्युक्तम्। यदि ब्रह्म ज्ञानस्य कर्तृत्वेन मतं स्यात् तदा ज्ञेय-ज्ञानाभ्यां तस्य विभजनमपेक्षेत। परं ज्ञानप्रक्रियायां ज्ञातृ-ज्ञान-ज्ञेयतास्ति अन्तर्भूतैव। ज्ञानमेवावस्थाविशेषवशाद् ज्ञातृतां ज्ञेयतां च वहति। तस्मादनन्तत्वाद् ब्रह्मज्ञानमेव न च ज्ञानस्य कर्तृ तत्। तथाविधत्वादेव ब्रह्म जगतः कारणत्वात् ज्ञानस्वरूपत्वात् पदार्थान्तरत्वाच्च नाविभक्तम्। अस्ति सत् हि सत् चित् आनन्दरूपञ्च। एतदेव ब्रह्मणः स्वरूपलक्षणं ज्ञेयम्। मायावच्छिन्नत्वादिदमेव ब्रह्म सगुणमिति किं वा ईश्वर इति कथ्यते। इदं हि सगुणत्वं तदीयं तटस्थलक्षणमिति वेद्यम्। शाङ्करमतेन ब्रह्म सजातीय-विजातीय-स्वगतभेदशून्यम्। परं रामानुजमतेन सजातीयविजातीयभेदरहितं तु तदस्ति न च स्वगतभेदशून्यम्। चिदचिद्विशिष्टमपि चिदंशस्याचिदंशात् नितान्तमेव भिन्नत्वात्। एतयोर्विरोधिनोरंशयोः सद्भावात् तत्र ( रामानुजदर्शने ) ब्रह्मणः स्वगतभेदस्यावश्यमङ्गीकृतम्।

माया—वेदान्तदर्शने मायायास्तदेवं तत्त्वं वर्णितमस्ति। निर्विशेषनिर्गुणब्रह्मणः सविशेषं सगुणं जगत् कथमुत्पन्नं कथञ्च तस्मादेकस्माद् ब्रह्मणो नानाविधं जगदिदं समुद्भूतमित्येतद्विषयः प्रश्नो सामान्यतया बोधगम्यतया न समाहितो भवितुमर्हति। अतस्तद्बोधनमपेक्ष्यते। आचार्यशङ्करो मूले यत् मायाशक्तिः ब्रह्मणोऽव्यक्तशक्तिरस्ति। सास्ति त्रिगुणा अनिर्वाच्या च। न तदीय आदिर्ज्ञायते। सैव जगदिदमुत्पादयति—

> अव्यक्तनाम्नी परमेशशक्तिरनाद्यविद्या त्रिगुणात्मिका परा।
> कार्यानुमेया सुधियैव माया यया जगत् सर्वमिदं प्रसूयते॥

तस्या अनिर्वचनीयत्वमित्थमाचार्य आह—

सन्नाप्यसन्नाप्युभयात्मिका नो भिन्नाप्यभिन्नाप्युभयात्मिका नो ।
साङ्गाप्यनङ्गाप्युभयात्मिका नो महाद्भुताऽनिर्वचनीयरूपा ॥

मायाया आवरणविक्षेपसंज्ञिके द्वे शक्ती स्तः । ते किं कुरुतः ? कीदृश्यौ च ते ? इत्यस्मिन् विषये दृग्दृश्यविवेके प्रोक्तमिदम्—

शक्तिद्वयं हि मायाया विक्षेपावृत्तिरूपकम् ।
विक्षेपशक्तिर्लिङ्गादि ब्रह्माण्डान्तं जगत् सृजेत् ॥
अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः ।
आवृणोत्यपरा शक्तिः सा संसारस्य कारणम् ॥

वेदान्तदर्शनं केवलमेकं 'ब्रह्म' इत्येतन्नामकं तत्त्वं सत्यं नित्यञ्च मन्यते । तत् तस्यैव सत्तां पारमार्थिकीमवगच्छति । तद्दृष्ट्या अन्यत् सर्वमप्यवभासमानं जगत् तदीयं विकृतं रूपमेव । तच्च विकृतं रूपं न सत् । तद् भङ्गुरं विनश्वरञ्च वर्तते । अज्ञानात् किंवा अविद्याहेतोः यद् वा मायावशात् विकृतं तत् सर्वं प्रकृतमिव सत्यमिव परमार्थमिव संलक्ष्यते । ज्ञानवद् दृष्ट्या तु तत् सर्वं किमपि न, केवलमज्ञानस्य विजृम्भणमेव । यो हि वर्तते अज्ञानी स एव असत्यमपि सत्यमनित्यमपि नित्यं मन्यते । यद्धि सत्यं वर्तते न तदविद्यावरणात् स द्रष्टुं शक्नोति । अविद्या ( माया ) सत्यमावृणोति, असत्यञ्च वितनोति । यदैव ज्ञान-ज्योतिः प्रादुर्भवति तदैव तद् अज्ञानं ( अविद्या = माया ) तिरोहितं जायते । ज्ञानाविर्भावात् यथार्थस्थितिः पुरोऽवतिष्ठते । इदं ज्ञानमेव वेदान्तदर्शनस्य भाषया 'ब्रह्म' इत्युक्तं किञ्च इदमज्ञानमेव तद्भाषायां 'माया' इति निगदित-मस्ति । वस्तुत उच्चतमां धरामधिष्ठाय यदा विचार्यते तदा भवतीदमेव ज्ञातं यदेकमेव तत्त्वमेतद्विधं भवितुमर्हति यतः परं न किमपि भवितुं शक्नोति । तस्यैव सत्ताधीनतायां सर्वमपि वर्तते । तदेव सर्वं शास्ति । तदेव सर्वं व्यवस्थायां नियमे च निदधाति । वेदान्तदर्शनं ब्रह्म किञ्च माया इत्येतत् तत्त्वद्वयं सर्वोत्कर्षं इदमेवोपरिष्टाल्लिखितं वर्णयतीति प्रतिभाति । अथ च 'आवरणविक्षेपशक्ती मायाया द्वे' इत्युक्त्वा तद् दर्शनमिदमेवोपदिशति यद् अज्ञानं हि महानर्थक-रम्, मनुं कल्याणाद् दूरीकृत्य विपदां मध्ये निपातयति तस्मात् तथा प्रयतितव्यं येन स तद् स्वप्रभुतां स्थापयितुं प्रभवेत ।

यच्चैतन्यन्तु आत्मनः कादाचित्को गुण इति । परब्रह्मणो विभुत्वात् वेदान्त आत्मानमपि विभुत्वेनैवाङ्गीकुरुते । तस्य कथनं यत् अत्यन्तसूक्ष्मत्वादेव सः अणुरिति मतः । जीवस्य सन्ति त्रीणि शरीराणि—१. स्थूलशरीरम्, २. सूक्ष्म-शरीरम्, ३. कारणशरीरम् । स्थूलशरीरं पञ्चभूतकृतमस्ति । सूक्ष्मशरीरं प्राणमनोबुद्धीन्द्रियात्मकं वर्तते । कारणशरीरं हि अविद्यानिर्मितावरणमस्ति । जाग्रदव-स्थायां जीवो बाह्यविषयान् इन्द्रियैर्जानाति, स्वप्ने मनसा सूक्ष्मवृत्तिभिश्च वेत्ति, सुषुप्त्यामविद्यायाः सूक्ष्मवृत्तिभिरावृतोऽसौ भवति आनन्दैकरसः । शुद्ध आत्मा नास्त्येतदवस्थात्रयागतः; स साक्ष्यः परः । अतस्तुरीयचैतन्यनाम्नोच्यते सः । सोऽस्ति निरुपाधिर्निर्विशेष एकरसः । गुण-क्रियारहितश्च । एष आत्मा एव यदा मलिनसत्त्वोपाधियुक्तो भवति जीवः ( प्राज्ञः ) इति कथ्यते । परं शरीरमस्य कारणशरीरं भवति, सुषुप्त्यवस्थां भजमानोऽसौ आनन्दमयकोषे स्थितो भवति । अयमेवात्मा तदा 'तैजस' इत्येतां संज्ञां भजते यदा स्वप्नावस्थानुभविता विज्ञानमनःप्राणमयकोषाच्छन्नो भवन् सूक्ष्मशरीरभाग् भवति । त्रिधायमेवात्मा तदा 'विश्व' इति प्रोच्यते यदा स्थूलशरीरवान् अन्नमयकोषावृतो जाग्रदवस्थागतो भवति । एक एव आत्मा अवस्थाभेदेन तां तां संज्ञां भजते ।

इदं हि सर्वत्र दृश्यते यद् व्यष्ट्या वस्तु यन्नाम्ना व्यवह्रियते न तन्नाम्ना समष्ट्या; यथा व्यष्ट्या वृक्षो नाम वस्तु वृक्ष इति निगद्यते परं समष्ट्या स एव वनमिति कथ्यते । एवमेव आत्मापि व्यष्ट्यां यन्नाम भजते न तन्नाम सः समष्ट्याम् । व्यष्ट्यां य आत्मा 'जीव' इति कथ्यते स एव समष्ट्यां हि 'ईश्वर' इति कथ्यते । अवस्था-शरीरकोषास्त्वीश्वरस्य त एव भवन्ति ये जीवस्य । अथ च व्यष्ट्यां य आत्मा तैजस इति कथ्यते स एव समष्ट्यां सूत्रात्मा ( हिरण्यगर्भः ) इति । अत्रापि शरीरादिकं तदेव भवति यत् तैजसस्याभिहितम्, स एव आत्मा व्यष्ट्यां यदि 'विश्व' इत्येतेन नाम्ना स्मार्यते ज्ञायते तदा समष्ट्यां स वैश्वानरः ( विराट् ) इति प्रोच्यते, अत्रापि वैश्वानर-विश्वयोः शरीरादिकं न भिन्नं भवति । एतावान् एव विशेषोऽत्र भवति यदीश्वरहिरण्यगर्भ-वैश्वानराः अज्ञानस्य समष्टिमवभासयन्ति जीव-तैजसविश्वास्तु अज्ञान-व्यष्टिम् । परमार्थतो इमे तत्तन्नामानो भिन्नाः । ऐक्यमेव तेषु विद्यते । न खलु ईश्वरः पृथक् न च जीवादीश्वरः । एवमेव सदात्मायं समष्टिव्यष्ट्युपाधिवशात् भिन्नभिन्ननामानि गृह्णाति ।

जीवस्य हि वृत्तय उभयमुख्यो भवन्ति। बहिर्मुख्यस्ता विषयान् प्रकाशयन्ति, अन्तर्मुख्यश्च ता 'अहम्' इत्येतद् भासमभिव्यञ्जन्ति। यथा रङ्गस्थले स्थितो दीप' सूत्रधरं, सभ्यान्, नर्तकीञ्च समभावेन प्रकाशयति तदभावे च स्वत' प्रकाशते तथैव आत्मा अहंकारविषयबुद्धिमवभासयति तदभावे च स्वयमेव प्रद्योतते। चाञ्चल्यं बुद्ध्या भवति। बुद्धियुक्तत्वात् जीवश्चञ्चलः प्रतीयते वस्तुतोऽस्ति स शान्त।

सृष्टि'—तम प्रधानविक्षेपशक्तिमदज्ञानोपहितचैतन्यादाकाश आकाशाद् वायुर्वायोरग्निरग्नेरापोऽद्भ्य. पृथिवी चोत्पद्यते। सूक्ष्मभूतेभ्यश्चैतेभ्यः सप्तदशावयवात्मकानि सूक्ष्मभूतानि स्थूलभूतानि चोत्पद्यन्ते। स्थूलभूतानि पञ्चीकृतानि भवन्ति। प्रतिस्थूलभूतं पञ्चभूतात्मकं भवति। एतदुपर्युक्तं विवरणं वेदान्ते सृष्टिमधिकृत्योपलभ्यते। जगतो ब्रह्मोपादानकारण निमित्तकारणञ्च। अतः जगदुत्पत्तिश्चेतनादेवास्तीति वेदान्तो मन्यते। कार्यकारणभावे सति विचारिते जगदनिर्वचनीयमिति मतं भवति। 'जगन्मिथ्या' इत्यत्र मिथ्येतिपदमनिर्वचनीयवाचकं बोध्यम्। जगतोऽस्य कर्त्तुरविनाशित्वात् तद (जगत्)पि अनिर्वचनीयमेव प्रमाणितं भवति।

वेदान्तदर्शने सत्तायास्त्रिविधत्वं मतं तदित्थम्—प्रातिभासिकी सत्ता, व्यावहारिकी सत्ता, पारमार्थिकी सत्ता। या प्रतीतिकाले सत्यतया प्रतिभासते परमुत्तरकाले बाधिता भवति सा प्रातिभासिकी सत्ता भवति। रज्जौ सर्पस्वभाव. प्रातिभासिकीसत्तावत्त्वेन मत। व्यवहारतस्तु सत्या परं परमार्थतो न सा सत्ता जगत सकलेषु व्यवहारगोचरेषु पदार्थेष्ववतिष्ठते। त्रिकालाबाधिता ऐकान्तिकसत्या सत्ता पारमार्थिकी सत्तेति कथ्यते।' ब्रह्म' पारमार्थिकी सत्तास्ति। इदं जगन्मायाया परिणामस्वरूपमस्ति परं ब्रह्मणो विवर्तोऽस्ति। विवर्तमुद्दिश्योक्तम्—"अतत्त्वतोऽन्यथा प्रथा विवर्त" इत्युदीरित।

आत्मा स्वभावतस्तु नित्यमुक्त आनन्दमयोऽस्ति परमज्ञानात्तत्त्वदशायां स आत्मानं विस्मरति स आत्मानमात्मनो भिन्नमन्यत् किमपि अवधारयति। आत्मन्येव स' अनात्मबुद्धि भारोपयति, आत्मानमेव स शरीरादिकं मन्यते तस्मात् कारणात् दु खानि सहते दु खेषु चात्मानं निपातयति। एषा हि अन्यथाबुद्धिर्वेदान्ते 'अध्यास' किं वा 'अध्यारोप' इत्युच्यते। उक्तञ्च—

अध्यासो नाम अतस्मिंस्तद्बुद्धिरिति।

मोक्षः—मानवजीवनस्योत्कृष्टतमः पुरुषार्थो मोक्षो मतः। मनुष्यजीवनमवाप्यापि मोक्षार्थं यो न यतते स आत्महा—

य. स्वात्ममुक्तौ न यतेत मूढधीः
स ह्यात्महा स्वं विनिहन्त्यसद्ग्रहात्।

मोक्षो हि 'ज्ञानेनोपलभ्यते न च कर्मणा। कर्म फलोत्पादकत्वाद्धेयमस्ति। अविद्या कामस्य कारणम्। कामश्चास्मिन्द्वेषयोः। फलोत्पादकत्वादेषा सर्वेषां त्याग इष्टः। कर्माणि कामं शुभानि स्युर्वा अशुभानि मर्त्याण्यपि फलानि प्रसुवते। यदा विद्ययैव कर्मबीजानि दह्यन्ते तदा मोक्षोऽधिगम्यते। शङ्कराचार्यो ब्रवीति 'ज्ञानं विना न मोक्षः'। ज्ञानमेव परब्रह्म। उक्तञ्च—

ज्ञानं नैवात्मनो धर्मो न गुणो वा कथञ्चन।
ज्ञानस्वरूप एवात्मा नित्यः सर्वगतः शिवः॥

वेदान्तस्य सुदृढं मतमिदं यन्मुक्तिर्ब्रह्मतत्त्वस्य ज्ञानादेव भवितुमर्हति पञ्चदशी वक्ति—

मुक्तिस्तु ब्रह्मतत्त्वस्य ज्ञानादेव न चान्यथा।
स्वप्नबोधं विना नैव स्वस्वप्नो हीयते यथा॥

## आत्मब्रह्मणोरैक्यम्—

'तत्त्वमसि' इत्येतन्महावाक्यं यद्यपि आत्मब्रह्मणोरैक्यं प्रतिपादयदवलोक्यते परं क्लेशकर्मादिवद्वोपाधिविशिष्टजीवस्य निरुपाधिशुद्धबुद्धमुक्तस्वभावब्रह्मणा सहैक्यं केन विधिना सम्भवमित्येतां शङ्कां समाधातुं वेदान्तविदो वदन्ति यद् अभिधयास्य वाक्यस्य यथार्थबोधासम्भवाल्लक्षणाङ्गीक्रियते। अत्र हि जहदजहल्लक्षणया यथार्थोऽवगम्यते। 'तत्–त्वम्' इत्येतयोर्मध्ये विद्यमान-परोक्षत्वापरोक्षत्वविशिष्टांशौ परस्परविरुद्धौ परिहरन्तीयं लक्षणा अखण्डचैतन्यांशञ्च परिगृह्णन्ती तयोरैक्यमुपपादयति।

सामानाधिकरण्यं च विशेषणविशेष्यता।
लक्ष्यलक्षणसम्बन्धः पदार्थप्रत्यगात्मनाम्॥

इति कथयन्ती नैष्कर्म्यसिद्धिरप्यत्र सम्बन्धत्रयमाहात्म्येन महावाक्यमखण्डार्थमवबोधयति। पञ्चदशीकारश्च मते—नास्य महावाक्यस्य अर्थः संसर्गो न च विशेषोऽपितु अखण्डैकरसचैतन्यमेवास्ति—

संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र सम्मत ।
अखण्डैकरसत्वेन वाक्यार्थो विदुषां मत ॥

वेदान्तो हि मानवीयमेधाकृतचिन्तनस्य परा काष्ठा । तदीय एकत्ववादो वस्तुत सर्वानपि वादान् अध्यात्मविषयकान् जयति । इदं हि दर्शनं नि सन्देह भावेन तस्य कृते एव निर्मितं यो ह्यस्ति—

विधिवदधीतवेदवेदाङ्गत्वेनापाततोऽधिगताखिलवेदार्थोऽस्मिन् जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्जनपुरस्सरं नित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निर्गतनिखिलकल्मषतया नितान्तनिर्मलस्वान्त साधनचतुष्टयसम्पन्न प्रमाता ।

विलियमजेम्स आह "यत्र च चिरस्थायिनी शान्ति सुरक्षात्मको भावो विभाति । वयं सर्वेऽपि इमामद्वैतवादिनीं मधुरां गीतिं श्रोतुं शक्नुम । अस्तीयं गीतिरजस्रशान्तिवर्षिणी । अत्र समुद्धरणकारिणी शक्ति शोभते" ।

—•—

# सांख्यदर्शनम्—नास्ति सांख्यसमं ज्ञानम्

सांख्यम् अतितरां प्राचीनं दर्शनमस्ति। तदीया माननीया सिद्धान्ताः प्राचीनोपनिषत्स्वपि बीजरूपेण सन्निहिता दृश्यन्ते। छान्दोग्योपनिषत् त्रिगुणविषयकं सिद्धान्तं वर्णयन्ती प्राप्यते। इन्द्रियमनोबुद्ध्यादिकानामुत्तरोत्तरोत्कृष्टताविषयकं क्रमं कठोपनिषदपि तथैव निरूपयन्ती संलक्ष्यते यथा सांख्यदर्शनं निरूपयति। श्वेताश्वतरोपनिषदोऽवलोकनेन तु तस्याः सांख्यसिद्धान्तानां निधित्वमेव सिद्ध्यति। श्रीमद्भागवते भगवद्गीतायाञ्च सांख्यसिद्धान्ताः साधु प्रतिपादिताः समवाप्यन्ते। प्रायेण सकलेऽपि प्राचीनतमे वाङ्मये सांख्याभिमततत्त्वानां विद्यमानता यस्य सांख्यदर्शनस्य गरीयस्त्वां पुराणतमतां ख्यापयति तस्य दर्शनस्य रचयितासीत् कपिलो मुनिरितीतिहासो वदति। एष मुनिरुपनिषद्गतान् हि सांख्य-सिद्धान्तान् असंकेतयन् तान् शास्त्रीये रूपे परिणनाम। तत्त्वसमासं सांख्यसूत्रञ्च प्रणिनाय सः। एतद् ग्रन्थद्वयमप्यधिकृत्य विद्वत्सु पर्याप्तो मतभेदो दृश्यते। विदुषां बहुलता यद्यपि तत्त्वसमासस्य प्राचीनतमतां कपिलकर्तृताञ्चाभ्युपगच्छति परं न सा सांख्यसूत्रस्य प्राचीनतमतामङ्गीकरोति न च तस्य कपिलकर्तृतामेव। कपिलस्य शिष्य आसुरिर्बभूव। न तत्कृता कृतिः साम्प्रतमुपलभ्यते सिद्धान्तास्तु तदीयाः प्राचीनेषु ग्रन्थेषूपलभ्यन्ते। स्याद्वादमञ्जरीकारस्तत्कृतं श्लोकमेकमुद्धरन् पर्यवलोक्यते। आचार्यः पञ्चशिख आसुरेः शिष्य आसीत्। नास्याप्याचार्यस्य रचनाधुनाप्यते। तत्कृतानि कानिचन सूत्राणि व्यासकृते योगभाष्ये किञ्च भामतीप्रभृतिग्रन्थेष्ववश्यं दृष्टानि भवन्ति। विपश्चितो मतमिदं यत् पञ्चशिखः षष्टितन्त्रं नाम ग्रन्थं रचयामास। साम्प्रतं हि दर्शनेऽस्मिन् यः प्रामाणिको ग्रन्थोऽधिगम्यते प्राचीनतरः सोऽस्ति सांख्यकारिकाभिधानो ग्रन्थः। सांख्यकारिकायाः कर्तास्तीश्वरकृष्णः। ईश्वरकृष्णस्य कृतिरियं सांख्यकारिका सांख्यदर्शनस्य लोकप्रियो ग्रन्थोऽस्ति। आचार्यः शङ्करोऽपि अस्याः सांख्यकारिकायाः कारिकाः स्वकीये शारीरकभाष्ये निर्दधौ सांख्यमतोपन्यासप्रयोजनेन। वाचस्पतिमिश्रः सांख्यकारिका व्याख्यातुं सांख्यतत्त्वकौमुदीं, माठर आचार्यो माठरवृत्तिं, गौडपादः गौडपादभाष्यं शङ्कराचार्यो

जयमङ्गला, नारायणतीर्थश्चन्द्रिकाञ्च लिलिखु । एतेन ग्रन्थस्यास्य पुरातनतरता-मात्र न सिद्धयत्यपि तु अस्य गरीयस्त्वमपि प्रमाणित भवति ।

सांख्यशास्त्रे प्रथिता आचार्याः सन्तीमे—

( १ ) कपिल, ( २ ) आसुरि, ( ३ ) पञ्चशिख, ( ४ ) पतञ्जलि ( ५ ) जैगीषव्य, ( ६ ) वार्षगण्य, ( ७ ) विन्ध्यवासी, ( ८ ) जनक, ( ९ ) पराशर, ( १० ) व्यास, ( ११ ) ईश्वर, ( १२ ) कृष्ण । एतस्मिन् विषये इतिहासस्य कथनमिदमपि यत् पञ्चशिखादर्वाक् ईश्वरकृष्णाच्च प्राक् भार्गवोलूक-हारीतदेवलप्रभृतय कतिपयेऽन्ये चाचार्या अजनिषत ।

सांख्यसिद्धान्तप्रतिपादनपरा 'युक्तिदीपिका' सञ्ज्ञिका कृतिरेका अद्यत्वे एवोपलब्धा । एष ग्रन्थ प्राचीनसांख्याचार्यसिद्धान्तैः समुल्लसितोऽस्ति । अत्र वसुबन्धुदिङ्नागसदृशपुरातनबौद्धाचार्याणामपि मतान्युल्लिखितानि सन्ति स्थाने स्थाने । ग्रन्थोऽयमद्भुत पर क कर्तास्येति न विदितम् ।

षोडशे शतके विज्ञानभिक्षुर्नाम आचार्य सांख्यशास्त्रस्य महान् विद्वान् व्याख्याता प्रादुर्बभूव । वस्तुतस्त्वाचार्य एष पुनरपि दर्शनमिदमुज्जीवयाञ्चकार । अयं सांख्यसूत्रे सांख्यप्रवचनभाष्यं नाम प्रकाण्डपाण्डित्यपूर्णं ग्रन्थञ्चकार व्यास भाष्ये च योगवार्तिकं नाम विपश्चिल्लज्जाश्चर्यकरवैदुष्यविलसितं ग्रन्थं लिलेख । सांख्यसारे सांख्यस्य किञ्च योगसारे योगस्य सिद्धान्ताश्च समासेन विद्वन्मूर्धन्योऽयं प्रणिबबन्ध ।

सांख्यदर्शने 'प्रकृतिपुरुषान्यताख्याति' इत्येष सिद्धान्तो निरूपितस्तस्मात् 'सांख्यम्' इत्यतां ख्यातिं भजते दर्शनमिदम् । प्रकृतिपुरुषान्यताख्यातिरेव 'संख्या' इति प्रोच्यते । संख्यापदस्यार्थोऽस्ति—'सम्यग् ज्ञानम्' । उक्तञ्च शाङ्करविष्णुसहस्रनामभाष्ये—"शुद्धात्मतत्त्वविज्ञानं सांख्यमित्यभिधीयते" । तत्त्वानां संख्यया निर्धारणीकृतत्वादस्य दर्शनस्य नाम 'सांख्यमि'ति प्रथितेरम् इति च विद्वन्मतम् । महाभारते प्रोक्तम्—

> "संख्यां प्रकुर्वते चैव प्रकृतिञ्च प्रचक्षते ।
> तत्त्वानि च चतुर्विंशत् तेन सांख्या प्रकीर्तिता ॥"

**सांख्यतत्त्वविमर्श**—सांख्यदर्शने पञ्चविंशतितत्त्वानि मन्यन्ते । तानि सन्तीमानि—( १ ) पुरुष, ( २ ) प्रकृति, ( ३ ) महत्, ( ४ ) अहङ्कार,

( ५-९ ) पञ्चतन्मात्रा, ( १०-१४ ) पञ्चभूतानि, (१५-१९) पञ्चकर्मेन्द्रियाणि, ( २०-२४ ) पञ्चज्ञानेन्द्रियाणि, ( २५ ) मनः।

आह च सांख्यकारिका—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः॥

एतेषां तत्त्वानां ज्ञानेन मानव, कामं स संन्यासी स्याद् वा ब्रह्मचारी वा गृहस्थः, दुःखेभ्यो मुक्तो भवति। उक्तञ्च सांख्यसंग्रहे—

पञ्चविंशतितत्त्वज्ञो यत्र कुत्राश्रमे रतः।
मुण्डी जटी शिखी चापि मुच्यते नात्र संशयः॥

एषां तत्त्वानां मध्ये प्रकृतिः सर्वेषामपि कारणमस्ति न सा कस्यापि कार्यमतः सा 'प्रकृति' किंवा 'अव्यक्तम्' यद्वा 'प्रधान'मित्युच्यते। कानिचन च तत्त्वानि तु न कस्यापि कारणभूतानि, तानि कार्याण्येव सन्ति। तानि 'विकृति' इत्येतेन व्यपदेशेन व्यपदिश्यन्ते। विकृतिभूततत्त्वानि सन्ति षोडश—श्रोत्रघ्राण-रसनत्वगाख्यानि पञ्च ज्ञानेन्द्रियाणि, वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि, आकाशपृथिवीतेजोवायुजलाख्यानि पञ्च महाभूतानि मनश्च। कानिचित्तु सत्त्वेदंविधानि यानि कानिचित्तु तत्त्वान्युत्पादयन्त्यत कारणभूतानि भवन्ति कानिचन च प्रति तानि कार्यभूतानि सन्ति—उत्पद्यन्ते हि येषाञ्चन तत्त्वानां सकाशात्; ईदृशानि तत्त्वानि प्रकृति-विकृतिभूतानीति प्रोच्यन्ते। तानि सन्ति सप्त—महत्तत्त्वम्, अहङ्कारः पञ्चतन्मात्राणि ( शब्दतन्मात्रम्, स्पर्शतन्मात्रम्, रूपतन्मात्रम्, रसतन्मात्रम्, गन्धतन्मात्रम् ) पुरुषाख्यं तत्त्वं न कस्मादपि समुत्पद्यते न चोत्पादयति किमपि। तत् तत्त्वं हि न प्रकृतिर्न च विकृतिः। इदमेव सर्वमुपरिस्थिता कारिका प्रतिपादयति सांख्यकारिकायाः।

सांख्यदर्शनस्य परमव्यापकत्वात् तत्तत्त्वानां विवेचनमनेकधा कृतं भवति दृग्गोचरम्। क्वचिन्मूलप्रकृतिरेकपुरुषः,[1] क्वचिद् आत्मानमात्मानं प्रति प्रकृति-रित्याम्नानम्,[2] क्वचिद् बुद्धिमंहत्त्व पृथक् पृथगिति निगदितम्;[3] क्वचिदविदितं तन्महापदं बुद्धेः पर्यायवाचिपदं, क्वचित् प्रकृतिः स्वतन्त्रसत्ताकतया पुरुषात् सा भिन्नैव कथिता;[4] क्वचित् सा पुरुषस्य ( ईश्वरस्य ) शक्तिरिति कथिता।

---

[1] षड्दर्शनसमुच्चयः। [2] कठोपनिषद्।
[3] सांख्यकारिका। [4] श्वेताश्वतरोपनिषद्।

महाभारते शान्तिपर्वणि क्वचित् चतुर्विंशतिः क्वचित् पञ्चविंशतिः क्वचिच्च षड्विंशतिस्तत्त्वानि वर्णितानि । गीतायां पराऽपराभेदेन प्रकृतेर्द्वैविध्यं दर्शितं, तत्रैव च प्रकृतिर्मायेत्युक्तं यदि क्वचित्; तर्हि अन्यत्र सा प्रकृतेर्भिन्नेत्यप्युक्तम् । एतदवलोकनेन स्पष्टमेव साधुतया ज्ञातं जायते इदं यद् विद्वांसः सांख्य-तत्त्व-विवेचनेऽतितरां रुचिमग्रहिषुः ।

## कार्य-कारणसिद्धान्तः—

सांख्यस्य कार्य-कारणविषयकः सिद्धान्तोऽद्भुतः । सांख्यं वदति उत्पत्तेः प्रागपि कार्यं कारणेऽव्यक्ततत्त्वेन निषीदति । न वस्तुतस्तु कार्यकारणयोर्मध्ये भिन्नता । कार्यस्याव्यक्तावस्थैव कारणमित्युच्यते । किञ्च कारणस्य व्यक्तावस्थैव 'कार्य'मित्येतां संज्ञामश्नुते । न तत्र तात्त्विको भेदो व्यवहारवशादेव 'इदं कार्यम्', 'इदं कारणम्', इत्यनेन प्रकारेणाभिधीयते । सांख्यस्यैष सिद्धान्तः 'सत्कार्यवादो' वा 'परिणामवाद' इति कथ्यते । स्वकीयमेतं सिद्धान्तं पोषयितुं युक्तियुक्तामिमां कारिकां सांख्यकारिका निदधाति—

असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात् ।
शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम् ॥

साख्यवृद्धाश्च सत्कार्यवादपक्षे प्राहुः—

"सदेव कार्यमुत्पत्तेः पूर्वं कारकरूपकम् ।
आविर्भावतिरोभावौ जन्मनाशावुदीरितौ ॥"

ते हि दुग्धं सदेव दधिरूपेण परिणमते, तद् दधिकार्यान्तरं दुग्धाद् भिन्नं च न भवतीत्यादिदृष्टान्तोपस्थापनपुरस्सरं नैजं मतमिदं सुदृढतया परिपुष्णन्तः 'स्वोत्पत्तेः पूर्वं कार्यं नासीदेव, पश्चात् कारणसामग्रीवशादुत्पद्यत इति कार्यकारणयोरन्यत्वं परमार्थतः सत्यम्' इत्येतमसत्कार्यवादं नैयायिकानाम् 'असतः कार्यस्य कारणव्यापारसहस्रैरपि कर्तुमशक्यत्वात् । न हि नीलं शिल्पिसहस्रेणापि पीतं कर्तुं पार्यते । कारणेऽसतः कार्यस्य कार्यसत्तया सह सम्बन्धासम्भवाच्च । न हि अविद्यमानं शशशृङ्गं कदापि क्वापि शृङ्गरूपकार्यसत्तां भजते । तथा च कापिलसूत्रम्—"नासदुत्पादो नृशृङ्गवत्" इति कथयित्वा, "सर्वे कार्यरूपा भावा अभावकारणकाः कार्यत्वात्, बीजनाशोत्तरोत्पन्नाङ्कुरादिवत्" इत्येवं हि सौगतानां शून्यकारणवादं "बीजादयस्त एव कुतश्चित् निमित्तात् प्रादुर्भूतक्रियाः पूर्वव्यूहं जहति व्यूहान्तरं चापद्यन्ते तस्माद् व्यूहान्तराच्च

अङ्कुर उत्पद्यते इति बीजावयवस्यैव कारणत्वं नाभावस्येति भणित्वा; "कारणमेव कार्यस्वरूपेण भासते' इति कारणस्यैव सत्यत्वं न तु कार्यस्य सत्यत्वम्" इत्येतं वेदान्तिनां विवर्तवादञ्च "असति बाधे प्रत्यक्षसिद्धपदार्थस्य मिथ्यात्वासम्भवात् कार्यं नासत्यम्" इत्युक्त्वा निरस्यन्ति ।

सांख्यदर्शनं हि द्वैतवादि । तद्दृष्ट्या प्रकृतिः पुरुषश्च नित्यः पदार्थः । उभयमपि तन्मूलतत्त्वत्वेन विद्यते । तयोः पारस्परिकेण सम्बन्धेन जगत आविर्भावो भवति । तत्र प्रकृतिरचेतना पुरुषश्च चेतनः स च प्रतिशरीरं भिन्न-भिन्न एवेति निगद्य तद्द्वैतवादित्वं स्वस्य, समुपस्थापयति । न तन्न्यायदर्शन-मिव जगदुत्पत्त्यर्थं बहून् स्वतन्त्रान् नित्यांश्च पदार्थान् स्वीकुरुते । "सर्वेऽपि स्थूलाः किञ्च बुद्धिमनइन्द्रियशरीरप्रभृतयः सूक्ष्माः पदार्थाः प्रकृतेरेव उत्पन्नाः सन्ति न च परमाणुभ्यः । परमाणुषु सूक्ष्मपदार्थोत्पादनशक्तेः सत्ता कदापि न भवितुमर्हति कामं तत्र स्थूलपदार्थोत्पादनक्षमता स्यात्" इत्येतदभिधाय तद् बौद्ध-जैन-नैयायिक-वैशेषिक-मीमांसकानां सर्वाणि तानि मतानि प्रख्यात्यानि यानि प्रकृतिपुरुषाभ्यां भिन्नान्यन्यानि तत्त्वानि जगदुत्पत्तौ कारणत्वेन स्वीकुर्वन्ति ।

प्रकृतेः सिद्ध्यर्थं सांख्यकारिका प्राह युक्तिप्रणिधानपूर्वकम्—

भेदानां परिमाणात् समन्वयात् शक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद् वैश्वरूप्यस्य ॥
कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतः समुदयाच्च ।

सांख्यसूत्रं च "कार्यदर्शनात् तदुपलब्धेः", "अव्यक्तं त्रिगुणाल्लिङ्गादि"त्यादि-सूत्राणि समुपस्थाप्य तस्याः प्रतिपादनं कुरुते । '"अविद्यादिद्वारेण परम्परया पुरुषस्य जगन्मूलकारणत्वेऽपि अविद्यादौ यत्र कुत्रचिदिष्टे द्वारे परम्परायाः पर्यवसानं भविष्यति, पुरुषस्य अपरिणामित्वात्, यतो यत्र पर्यवसानं सैव नित्या प्रकृतिः,प्रकृतिरिह मूलकारणस्य संज्ञामात्रमि"त्याद्यभिधाय विज्ञानभिक्षुः सांख्यप्रवचनभाष्ये प्रकृतिं साधयन्ति ।

गुणाः—सत्त्वरजस्तमोभेदाद् गुणाः सन्ति त्रयः । उक्तञ्च—

"सत्त्वं रजस्तमश्चैव गुणत्रयमुदाहृतम्"

सत्त्वं सुखरूपं रजो दुःखरूपं तमश्च मोहरूपमस्ति । यस्मिन् सति न पुन-

श्चिद् भयमुत्पद्यते न कस्यामप्यवस्थायां विषादः समुपजायते तत् सत्त्वम्। रजो दुःखस्य कारणं रागद्वेषात्मकत्वात्। तमो मोहस्य हेतुर्मोहात्मकत्वात्। सत्त्वस्य प्रकाशकरणं, रजसः प्रवृत्तिकरणं, तमसश्च नियमनं प्रयोजनमस्ति। उक्तञ्च—

"सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः।
गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः॥"

गुणाः वस्तुतो द्रव्याण्येव सन्ति। न च ते गुणास्तेषां संयोगविभागवत्त्वात्, लघुत्वचलत्वगुरुत्वादिधर्मकत्वाच्च। परार्थत्वादेव हि सत्त्वादयो "गुणा" इति प्रोच्यन्ते। न पुरुषस्वरूपाज्ञो भोगापवर्गरूपमर्थं साधयन्ति। ते सन्तीन्द्रियातीताः। न तद्रूपं कदापीन्द्रियगोचरं जायते। किन्त्वादिरविकृतिरेव दृग्गोचरीभवति। विकृतिस्त्वस्ति नितान्ततुच्छा। उक्तञ्च षष्टितन्त्रे—

"गुणानां परमं रूपं न दृष्टिपथमृच्छति।
यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छकम्॥"

गुणानां साम्यावस्था 'प्रकृतिः' इति नाम्ना गीयते। बौद्धा इव सांख्यशास्त्रिणोऽपि परिणामनित्यतामुररीकुर्वन्ति। प्रकृतिरस्ति नित्यपरिणामशालिनी। जगतः सर्वेऽपि पदार्थाः प्रतिक्षणं परिवर्तन्ते। परं नैव परिणाम ऐकान्तिकः। परिणतायामप्यवस्थायां गुणानां तत्रानुस्यूतत्वात्। प्रकृतिर्यदा गुणानां साम्यादव्यक्तामवस्थां गाहते तदा भवति प्रलयः। यदा च सा गुणानां वैषम्याद् व्यक्तामवस्थां गृह्णाति तदा सृष्टिर्जायते। प्रलयावस्थायामपि प्रकृतिः परिणामवती भवति। भेद इयान्, एष यत् प्रलयावस्थाकालिकपरिणामो न स्वभिन्नवस्त्वनुत्पादात्मानमेवाभिव्यनक्ति। एष परिणामः स्वरूपपरिणाम इति कथ्यते। जगदधिकृत्य सांख्यस्य मतमिदं यच्चितिशक्तिं विहाय समस्तपदार्थाः क्षणे क्षणे परिवर्तन्ते। तत्त्वकौमुदी प्राह—"प्रतिक्षणपरिणामिनो हि सर्वं एव भावाः ऋते चितिशक्तेः।"

पुरुषः—निर्विकारचेतनपुरुषस्य सद्भावे किं मानमित्यत्र ईश्वरकृष्ण आह—
"संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्।
पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च॥"

अस्ति स पुरुषः त्रिगुणातीतः, विवेकी, विषयी, विशेषः, चेतनः, अप्रसवधर्मी च। चैतन्यं न तस्य गुणोऽपि तु स्वरूपमेव। अस्ति च सः शरीरेन्द्रियमनोबुद्धि-

भिन्नः। स ज्ञातृरूपेणावतिष्ठते। न भवति स ज्ञानगोचरः। न स आनन्दस्वरूपः; आनन्दचैतन्ययोर्भिन्नत्वात्। तस्मात् न तयोरभिन्नत्वं क्वापि। स च पुरुषो द्रष्टास्ति। तदीयज्ञानप्रकाशः शश्वत् सन्तिष्ठते। तस्य ( ज्ञानस्य ) विषया एव परिवृत्तिमुपयन्ति। न तस्मिन् ( पुरुषे ) कापि क्रिया प्रवर्तमाना भवति। अस्ति स निष्क्रियः। सर्वविषयागोचरो रागद्वेषरहितश्च सः। यावन्त्यपि कर्माणि सन्ति सुख-दुःखानि वा तानि सर्वाणि प्रकृतेस्तदीयविकाराणां ( शरीरमनोबुद्ध्यादीनाम् ) धर्माः सन्ति। शरीरेन्द्रियमनोबुद्धिषु हि आत्मत्वधीः अज्ञानमात्रम्। अस्मादज्ञानादेव पुरुषः कर्म-प्रवाहे निपतति नानाविधानि च दुःखानि भुनक्ति।

आत्मनः ( पुरुषस्य ) एकत्वे, 'कश्चित् पुरुषो बद्धः कश्चिन्मुक्तः इति बन्धमोक्षव्यवस्था न सम्भवतीति प्रतिशरीरमात्मा भिन्नभिन्न एवास्ति। कणाद आह "व्यवस्थातो नानेति". सांख्यसूत्रमपि ब्रूते—"जन्मादिव्यवस्थातः पुरुषबहुत्वम्" सांख्यकारिकापि आमनति—

> "जननमरणकरणानां प्रतिनियमाद् अयुगपत्प्रवृत्तेश्च।
> पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैव॥"

पुरुषोऽयं चेतन उत्पत्तिविनाशरहितो न कस्यापि कारणम्। स सर्वथा पद्मपत्रवन्निर्लेप एव। अतः सः अकर्तैव यश्च कर्ता भवति स एव भोक्ता भवतीति नियमात् भोक्तृत्वमपि न पुरुषस्य धर्मः। अतः न स भोक्तापि। यत्तु क्वचित् सांख्ये पुरुषस्य भोक्तृत्वमुक्तं तदपि पुरुषे ( आत्मनि ) बुद्धिनिष्ठभोक्तृत्वमारोप्यैव, सांख्यनये तस्या एव भोक्त्रीत्वात् पुरुषस्य च परमार्थतोऽभोक्तृत्वात्। पुरुषोऽपरिणामी अत एव स कूटस्थो नित्य. सर्वव्यापकश्चास्ति। स तु निरीहः साक्षी एव। स्वभावतः सः कैवल्यसम्पन्नः। अत एव 'मध्यस्थ' इति कथ्यते। उक्तञ्च "कैवल्यं माध्यस्थ्यं द्रष्टृत्वमकर्तृभावश्च।' तस्मिन् ( पुरुषे ) बद्धमुक्तव्यवहार औपचारिक एव दुःखसम्बन्धतद्ध्वंसरूपबन्धमोक्षयोर्बुद्धावेव सत्वात्। उक्तञ्च—

"बध्यते मुच्यते च नानाश्रया प्रकृति." इति। स च पुरुषः स्वभावतोऽसङ्गः परं बुद्धि-प्रतिबिम्बितत्वात् स भोक्ता ज्ञाता चेति प्रोच्यते।

सृष्टिः—प्रकृति-पुरुषसंयोगात् सृष्टिर्भवति; प्रकृतेर्जडत्वात् न तस्या एव सकाशात् संसारो जायते न च पुरुषस्य निष्क्रियत्वात् तस्मादेव। सृष्टिहेतु

अतः प्रकृतिकृतरचनास्वरूपमित्थम्—




**प्रमाणविचारः**—सांख्यशास्त्रं त्रीणि प्रमाणानि मन्यते। तानीमानि—प्रत्यक्षम्, अनुमानम्, शब्दः। अन्यानि प्रमाणानि उपमानादीनि तत् तेष्वेव त्रिषु अन्तर्भावयति।

**प्रतिबिम्बवादः**—यदा कोऽपि घटपटादिपदार्थो दृष्टिपथमायाति तदा तस्येन्द्रियेण सह संयोगो भवति। तद् विषयात् इन्द्रिये प्रभावः पतति सम्परस्परनिश्लेषणं वा संश्लेषणं विदधाति। इन्द्रियमनसोर्व्यापारेण बुद्धिर्भवति प्रभाववती, सा च विषयस्याकारं गृह्णाति। जडत्वात् तस्याः (बुद्धेः) न सा विषयज्ञानं कर्तुं पारयति। परं तत्र (बुद्धौ) सत्त्वगुणस्याधिक्यं भवति तस्मात् तत्र चैतन्यं पौरुषं प्रतिबिम्बितं जायते। प्रतिबिम्बितत्वात् पुरुषस्य चेतनस्य, बुद्धेरचेतनवृत्तिः (घटपटाद्यात्मिका) उद्भासिता भवति। उद्भासं गच्छन्ती सा ज्ञानरूपे परिणमते। यथा निर्मले दर्पणे दीपस्यप्रकाशस्य प्रतिबिम्बं निपतति तेन वस्तून्यन्यान्यपि भवन्त्यालोकितानि तथैव सात्त्विकबुद्धौ चैतन्यस्य प्रतिबिम्बं संक्रमते तेन च विषयाणां बोधो भवति वा विषयाः प्रकाशमुपयन्ति। एष एव प्रतिबिम्बवादः।

सांख्यदर्शनमतेन ज्ञानस्य प्रामाण्यमप्रामाण्यञ्च—उभयमपि—स्वतः। उक्तञ्च "प्रमाणत्वाप्रमाणत्वे स्वतः सांख्याः समाश्रिताः"। सत्कार्यवादरीत्या असत् पदार्थोत्पत्तिरेव न भवति। अतः ज्ञानानन्तरं समुदितयोः प्रामाण्याप्रामाण्ययोस्तु ज्ञानं निसर्गतो वसतिं विदधाति।

**सदसत्ख्यातिः**—सांख्यदर्शनं मन्यते यद् बुद्धिरूपा बाह्यं जगदनुभूयते। बाह्यार्थसत्तापि तत्रैव।, बुद्ध्यारोपितपदार्थस्य स्वरूपं चेत् बाह्य

जगति विद्यमानस्य पदार्थस्य स्वरूपं संवदति (तदाकार इव तस्याकारोपि यदस्ति) तदा सांख्यं तद् ज्ञानं सत्यं मन्यते। तस्माद् स एव अनुभवः सत्यः यो हि भौतिकवाह्यरूपे बुद्ध्यारोपितपदार्थरूपे च उभयत्राभिन्नमेवाकारं परिगृह्णाति। सांख्यस्य भ्रान्तिविषयिणी कल्पना मनोरमा। शुक्तौ यदा रजतज्ञानं भवति (इदं रजतम् इत्येवंविधम्) तदा 'इदम्' इत्येतदात्मके ज्ञाने सत्,-'रजतम्' इत्येतदात्मकञ्च ज्ञानमसद् भवति। 'इदम्' इत्येतदात्मकस्य ज्ञानस्याश्रयश्चाक्षुषप्रत्यक्षमस्ति अतस्तदस्तित्वम्। 'रजतम्' इत्येतदात्मकस्य ज्ञानस्याश्रयोऽस्मदिन्द्रियागोचरः, किञ्च तद् ('रजतम्' इत्येतदात्मकं ज्ञानम्) 'नेदं रजतम्' इत्येतदात्मकेन ज्ञानेनोत्तरकाले बाधितमपि भवति। अतस्तद् 'असत्' अस्ति। इत्थं हि भ्रान्ति ज्ञानं सदसदुभयविधपदार्थाश्रितम्। एषवादः सांख्यदर्शने सदसत्ख्यातिवाद इत्येतेन नाम्ना विश्रुतः। सांख्यसूत्रं सद-सत्ख्यातिर्बाधाबाधात्' इत्यनेन सूत्रेण इमं वादं समुपन्यस्यति।

सांख्यकर्तव्यमीमांसा—

"दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्॥"

इत्येतेन वचनेन सिद्धयतीदं यत् सांख्याचार्याः अहिंसायां रुचिश्रद्धाञ्च निदधति। तेषां कर्तव्यशास्त्रस्याधारशिला 'अहिंसा' एवास्ति। तेषां मतेन यम-नियमेषु 'अहिंसा' एव मुख्यः सार्वभौमो धर्मः। अहिंसावादित्वात् सांख्यदर्शनं हि भागवतदर्शनमनुगच्छति। तदेव कर्त्तव्यमस्ति यदाचरणेन न कस्यापि मन उद्विजते व्यथते वा यदाचरणेन न कस्यापि कापि पारमार्थिकी हानिः, यदाचरणेन च सर्वेषामपि सर्वविध उदयो भवति सर्वकल्याणकृत् तदेव कर्त्तव्यं वस्तुतः कर्त्तव्यमिति कथ्यते। एतादृशं कर्तव्यं तदेव भवितुमर्हति यद् अहिंसा-मवलम्ब्य सन्तिष्ठमानमस्ति। सांख्यस्य कर्त्तव्यमहिंसापरकमतस्तदभिमतं कर्त्तव्य-मेवाभिनन्दनीयम्।

अपवर्गः—अज्ञानाद् दुःखमुत्पद्यते। तद् दुःखमाध्यात्मिकाधिभौति-काधिदैविकभेदेन त्रिविधम्। एभ्यस्त्रिविधेभ्योऽपि दुःखेभ्यो मुक्तिर्व्यक्ताव्यक्तज्ञ-विज्ञानाद् भवति दुःखानामियमात्यन्तिकी निवृत्तिरेव'अपवर्गः' किंवा'मुक्ति'-रित्युच्यते। पुरुषो यद्यपि स्वभावतोऽसंगो मुक्तश्च परम् अविवेकात् तस्य संयोगः प्रकृत्या सार्द्धं भवति अनेन संयोगेन प्रकृतिजन्यस्य दुःखस्य पुरुषे यत्

प्रतिबिम्बं निपतति तदैव हि पुरुषस्य पुरः दुःखभोगरूपेणोपतिष्ठते । अतः संसारस्य मूलकारणमविवेकोऽस्ति । विवेकश्च दुःखनिवृत्तेः साधनं विद्यते । सांख्यसूत्रं वदति "द्वयोरेकतरस्य वौदासीन्यमपवर्गः" इति । प्रधानपुरुषयोः परस्परवियोग एव अपवर्ग इति भावः । सांख्यं ब्रवीति यत् पुरुषस्यापवर्गमभिप्रेत्य योऽपवर्ग उक्तः स प्रतिबिम्बरूपस्य मिथ्या दुःखस्य वियोग एव । पुरुषस्तु वस्तुतो बन्धन-मोक्षरहितः । तद्—(बन्धनमोक्षौ) उभयं तु करोति प्रकृतिरेव । विवेकिनि पुरुषे न प्रकृतेः कोऽपि मनागपि प्रभावः पतति । तत्समक्षे तु सा उपस्थितैव न भवति । सा लज्जावती नारीव ततो निवर्तते—"या दृष्टास्मीति पुनर्न दर्शन-मुपैति पुरुषस्य" । तत्त्वाभ्यासात् पुरुषे कैवल्यमुदेति । तस्यामवस्थायां सः स्वकीये रूपे स्थितो भवति । सः स्वकीयमेव रूपं यथार्थं द्रष्टुमारभते—

"एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।
अविपर्ययाद् विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥"

( ६ )

## नास्ति योगसमं बलम्

प्रायेण सर्वेऽपि भारतीयदर्शनकारा आत्मोन्नतेः साधनतमं करणं 'योगविद्येति मुक्तकण्ठतयोररीकुर्वन्ति। वेदोपनिषत्स्मृतिपुराणानि चाखिलानि योगोल्लेखेन विद्यन्ति ग्रन्थानि भवन्ति। योगेनैव मानवस्य चित्तं निर्मलं शुद्धं स्थिरञ्च भवितुमर्हति। यन्मनः शान्तं शुद्धञ्चास्ति तदेव गूढानि तत्त्वान्यवबोद्धुं प्रभवति। सत्यमेवाभिहितं—'नास्ति योगसमं बलम्'। योगः सार्वभौमधर्मोऽस्ति। न तस्य कस्मिन् अपि मते सम्प्रदाये वा पक्षपातः। स सर्वथा वादविवादविरहितः। स आत्मानं दर्शयति मनः शरीरञ्च संस्करोति।

आम्नायशास्त्रपारदर्शिना कृतं पातञ्जलं योगदर्शनममूल्यनिधिरस्ति। व्यासस्तत्र भाष्यं प्रचकार तद् योगभाष्यमिति नाम्ना सर्वत्राद्य सुविदितम्। व्यासकृतभाष्यस्य टीकां वाचस्पतिमिश्रः कृतवान् सा टीका तत्त्ववैशारदीनाम्ना प्रसिद्धास्ति। विज्ञानभिक्षोर्योगवार्तिकं किञ्च भोजराजस्य भोजवृत्तिरपि योगदर्शनस्योत्तमौ व्याख्यानग्रन्थौ स्तः। पातञ्जलं योगदर्शनं चतुर्षु पादेषु विभक्तमस्ति। समाधिपादः प्रथमः पादोऽस्ति तत्र योगस्य स्वरूपमुद्देश्यं लक्षणं, चित्तवृत्तिनिरोधस्योपाया विभिन्नयोगानाञ्च विवेचनं कृतमस्ति। द्वितीयः पादः साधनपादः कथ्यते। तत्र क्रियायोगः क्लेशः कर्मफलं दुःखं स्वभावः हेयं हेयहेतुहानहानोपायादिकाश्च विषया वर्णिताः सन्ति। तृतीयः पादो विभूतिपाद इति नाम्ना विश्रुतः। तत्र योगस्यान्तरङ्गावस्था योगाभ्यासजनितसिद्धयश्चोल्लिखिताः सन्ति। कैवल्यपादाभिधे चतुर्थे पादे मुक्तिस्वरूपं गीतमस्ति।

सांख्ययोगौ न पृथक् पृथक्। सांख्ये ये सिद्धान्ता वर्णिताः सन्ति तेषां प्रयोगः पुनः योगे कृतो वर्तते। योगदर्शनं सांख्यप्रतिपादितान् सिद्धान्तान् क्रियायां परिणमयति। तत् तथा यतते येन सांख्यस्य सिद्धान्ता जीवने व्यवहरणीयाः स्युः। ज्ञानमुद्दिश्य सांख्यस्य यो विचारो वर्तते स पुनः योगस्यापि विद्यते। सांख्याभिमतानि प्रत्यक्षानुमानशब्दप्रमाणानि योगदर्शनमप्यङ्गीकरोति। तत् सांख्यस्य पञ्चविंशतितत्त्वानि च स्वीकरोति। सांख्य मन्यते यद् विवेकज्ञा

नमेव मुक्ति-साधनमस्तीत्येतन्मतं योगदर्शनमपि मन्यमानमामनति यद् योगाभ्यास एव विवेकज्ञानस्य साधनं विद्यते। सांख्य-योगयोर्मध्ये इयान् एव भेदः समुल्लसति यद् योगदर्शनमीश्वरवादि च वर्तते।

सांख्य-योगमतेन जीवोऽस्ति स्वतन्त्रः पुरुषः। सामान्यतः सः स्थूलं शरीरं विशेषतश्च सूक्ष्मं शरीरमधितिष्ठति। अस्ति सः स्वभावेन शुद्धश्चेतनश्च। शारीरिकेभ्यो बन्धनेभ्यो मानसिकेभ्यश्च विकारेभ्यो मुक्तः सन् स मन्तिष्ठते। अज्ञानात् सः आत्मानं चित्तमवगच्छति। चित्तन्तु प्रकृतेः प्रथमो विकारः। तत्र विजितरजस्तमस्कस्य सत्त्वगुणस्य प्राबल्यं परिस्पन्दते। तन्निसर्गतोऽस्ति जडम्। आत्मनो निकटतमसन्निकर्षात् तत् तेन (आत्मना) प्रकाश्यमानं भवति। शुद्धसत्त्वात् तन्निर्मलमस्ति निर्मलत्वात् तस्य, तत्रात्मनः प्रतिबिम्बं पतति। तेन तत् चेतनमिवाभासते। यदा चित्तस्य केनापि विषयेण सह सान्निध्यं भवति तदा तत् तस्यैव विषयस्याकारं बिभर्ति। एभिरेव विषयानुरूपैश्चित्तविकारैरात्मा विषयाभिज्ञो भवति। यद्यप्यात्माऽस्ति सर्वथैवाविकारी अपरिणामी च परं परिवर्तनशीलासु चित्तवृत्तिषु प्रतिबिम्बितत्वात् तत्र परिवर्तनशीलस्ता आभासत इव। यथा सरितः कल्लोलेषु प्रतिबिम्बितः शशी चलन् प्रतीयते तथैव परिवर्तिनीषु चित्तवृत्तिषु ह्यात्मापि परिवृत्तिं गृह्णन् आभासते।

प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतय इत्येताः सन्ति वृत्तयः पञ्च चित्तस्य। सत्यज्ञानं प्रमाणमित्येतेन किञ्च मिथ्याज्ञानं विपर्यय इत्येतेन पदेन व्यपदिष्टं भवति। विकल्प इत्येतेन पदेन कल्पितं वस्तु समुपस्थाप्यते वस्तुतस्तद् वस्तुनः स्थितिर्न कालत्रयेऽपि दृश्यते। निद्राख्या चित्तवृत्तिः तमोगुणप्रधाना भवति। तत्कारणात् जाग्रत्स्वप्नावस्थयोरनुभवो लीयते। निद्रायां (सुषुप्त्याम्) मनः क्रियारतमेव भवति। विषयज्ञानस्य त्वभावो जायते। अत इयं वृत्तिः अभावप्रत्ययालम्बनेति कथ्यते। अतीतानामनुभवानां यथातथ्यमानसिकी प्रतीतिः 'स्मृति'रिति प्रोच्यते।

यदा चित्तं कस्याञ्चन वृत्तौ परिणमते तदा तत्रात्मनः प्रकाशः पतति। प्रकाश-पातेन तदात्मेव प्रतीयते। अज्ञानात्सीयस्तामवस्थां स्वकीयामवस्थामवगच्छति। ततश्च आत्मा इत्थं मन्यमानेव (पुरुष) विचारयति, करोति, उत्पद्यते, म्रियते, वर्धते, हीयते, स्वपिति, जागर्ति, स्मरति, विस्मरति च। परमिदं सर्वं नात्मनो धर्मः। जननमरणादिका धर्माः शरीरस्यैव सन्ति। शयन-जागरणादि-

क्रिया मनसः सन्ति। ध्यानं स्वप्नाः स्मृतयो मनसो वृत्तयः। आत्मा सर्वेभ्य एभ्यो विकारेभ्यः परः। अस्मात् जीवः स्व पञ्चक्लेशानामास्पदं मन्यते। अविद्या-अस्मिता-राग-द्वेषाभिनिवेशाः सन्ति पञ्च क्लेशाः। अनित्यं नित्यत्वेन, अनात्मानमात्मत्वेन, दुःखं सुखत्वेन, अशुद्धं शुद्धत्वेनावगमनमविद्येति कथ्यते। अविद्यावशात् आत्मानं बुद्धित्वेनावधारणम् अस्मितेति निगद्यते। सुखस्य सुखसाधनानाञ्चावाप्तेरिच्छा राग इति भाष्यते। दुःखे वैरधीर्द्वेष इति प्रोच्यते। मृत्योर्भयमभिनिवेश इत्यभिधीयते।

यावच्चित्ते विकारा जायन्ते तावत् तस्मिन् आत्मनः प्रकाशोऽवतरति, विवेकाभावात् पुरुषस्ते तेषु (विकारेषु) स्वसत्ताया अनुभूतिं कर्तुमारभते। सामारिकेषु च विषयेषु सुखदुःखरागद्वेषादिषु निबध्नाति। आत्मनः (पुरुषस्य) एव विधैव बन्धनमिति कथ्यते। एतस्मात् बन्धनान्मुक्त्यवाप्तिनिमित्तेन शरीरेन्द्रियमनश्चित्तवृत्तीनां निरोधोऽपेक्ष्यते। यदा हि कार्यभूतचित्तस्य धारा प्रवाहश्छिद्यते भवति च तत् कारणभूतचित्ते (शान्तावस्थायाम्) अवस्थितिः तदात्मा स्वकीयस्य यथार्थस्य स्वरूपस्य ज्ञानमश्नुते। अवगच्छति च तत् आत्मानं शरीरमन आदितो भिन्नम् अवैति च स्वं नित्यं मुक्तं शुद्धं चैतन्यरूपञ्च। चित्तवृत्तिनिरोधेनात्मनः स्वरूपेऽवस्थापनमेव योगस्य महोद्देश्यम्।

क्षिप्त-मूढ-विक्षिप्त-एकाग्र-निरुद्धाख्यानि सन्ति चित्तभूमेः पञ्च रूपाणि वा अवस्थाः। एतासु अवस्थासु क्षिप्त-मूढ-विक्षिप्तावस्थाः न योगानुकूला भवन्ति। रजोगुणप्रधानत्वात् क्षिप्तावस्था तमोगुणप्रधानत्वान्मूढावस्था नेमे द्वेऽप्यवस्थे योगाय समुचिते। एवमेव विक्षिप्तावस्थायां मनो न एकस्मिन् विषये चिरं सन्तिष्ठते तत् त्वरया विषयान्तरं धावति तस्मात् साप्यवस्था न योगार्थमनुगुणा। एकाग्रावस्था निरुद्धावस्था च अवश्यमेव योगानुकूले। तयोः सत्त्वगुणप्रधानत्वात्। एकाग्रावस्थायां चित्तं चिरमेकस्मिन् विषये आरूढं भवति। तदस्यामवस्थायां कमपि विषयं चिरं ध्यातुं शक्नोति तस्मादेषावस्था योगाय कल्पते। योगस्यैषावस्था प्रथमसोपानत्वेन मता। अन्तिमावस्था निरुद्धाख्यास्ति। एतस्यामवस्थायां चित्तस्य सर्वा अपि वृत्तयो लुप्ता भवन्ति तस्मात् तत् (चित्तम्) स्वकीयां स्वाभाविकीं स्थिरां शान्तामवस्थामधिगच्छति।

एकाग्रावस्थाया नामान्तरं सम्प्रज्ञातसमाधिर्वा सम्प्रज्ञातयोग इति वर्तते।

निरुद्धावस्थायाश्चापरं नामधेयं हि असम्प्रज्ञातसमाधिर्वा असम्प्रज्ञातयोग इत्येतदस्ति।

सम्प्रज्ञातसमाधौ चित्तं ध्येये लीनं भूत्वा तन्मयीभवति। असम्प्रज्ञातसमाधौ सर्वासामपि चित्तवृत्तीनां विषयाणाञ्च तिरोभावः सञ्जायते।

वितर्क—विचारानन्दास्मितानुगमात् सम्प्रज्ञातसमाधेः, स चतुर्विधो भवति— १. सवितर्कसम्प्रज्ञातसमाधिः, २. सविचारसम्प्रज्ञातसमाधिः, ३. सानन्दसम्प्रज्ञातसमाधिः, ४. सास्मितासम्प्रज्ञातसमाधिः।

यदा कस्मिंश्चित् स्थूले भौतिकपदार्थे चित्तमविचलभावेन समवस्थाप्यते तदा स समाधिः सवितर्क इत्युच्यते। स्थूलात् (मूर्त्यादेः) चित्तमाकृष्य यदा तत् सूक्ष्मे विषये प्रतिष्ठाप्यते तदा स समाधिः सविचारसमाधिरित्यभिधीयते। यदा सूक्ष्मादपि (तन्मात्रात्) चित्तमादाय कस्मिंश्चित् सूक्ष्मतरे विषये तद् ध्यानार्थमारोप्यते तदा स समाधिः सानन्दसमाधिरिति भण्यते। यदा च ध्यानमहङ्कारगोचरं क्रियते तदा स समाधिः सास्मितासमाधिरिति कीर्त्यते। एतस्य समाधेः फलमस्ति आत्मसाक्षात्कारः।

यदा चित्तं सर्वेभ्योऽपि बाह्येभ्य आभ्यन्तरेभ्यश्च विषयेभ्यो दूरीभवति तदा सा स्थितिः असम्प्रज्ञातसमाधिनाम्ना गीयते। असम्प्रज्ञातसमाधिरेव परमयोगः। इमं सम्प्रज्ञातसमाधिं प्रपद्य योगी मुक्तो भवति। न संसारस्तदर्थं बन्धनं भवति। एतस्यामवस्थायां हि आत्मा मुक्तावस्थायामिव प्रकाशमनुभवति। आनन्दमयो जायते सः। अस्यान्तिमस्य लक्ष्यस्याधिगतिश्चिरसाधनाया घटितस्य च योगाभ्यासस्यानन्तरं भगवदनुग्रहेण भवति।

योगस्य सन्ति प्रधानाः मार्गास्त्रयः—१ ज्ञानयोगमार्गः २ भक्तियोगमार्गः, ३ कर्मयोगमार्गः। मानवः स्वकीयमहत्त्वानुरूपं स्वयं स्वमनोऽनुकूलं स्वरुचिमनुगुणं चैकमेकं मार्गमनुगच्छेत्। ज्ञाने यो रमते स ज्ञानमार्गमवलम्बेत। स सांसारिकान् विषयान् साधु परिशील्य आत्मानं शरीरान्मनसश्च पृथगवगच्छेत्। भावुकप्रकृतिर्जनो भक्तिमार्गमाश्रयेत। स श्रद्धया भक्त्या च ईश्वरमाराधयेत्। यो जनः कठोरसाधनायां वा सामाजिकहितेषु कर्मसु पौरुषमात्मानं प्रभवेत् स कर्मयोगमार्गं गृह्णीयात्। मनसः शुद्धता सर्वापेक्षिताऽस्ति।

यावन्मानवस्य मानसं विकाररहितं भवेत् स नात्मानमनुभवितुमर्हतीत्यत्र भवत्येव न। आत्मज्ञानलाभाय हृदयस्य पवित्रता बुद्धेः सात्त्विकगुणशालित्वमभि-

३. कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः, ४. स्वाध्यायादिष्टदेवतासम्प्रयोगः, ५. समाधिसिद्धिरीश्वरप्रणिधानात् ।

साधनार्थं यत् सुखदमनुकूलं तदासनमिति गीतम् । आसनं स्वस्तिकासन-सिद्धासनपद्मासनादिभेदैर्बहुविधम् । श्वास-प्रश्वासगतिनिरोध' प्राणायाम इति प्रोच्यते । प्राणायामात् को लाभ इत्यत्र पञ्चशिखाचार्य आह—

"तपो न परं प्राणायामात् ततो विशुद्धिर्मलानां दीप्तिश्च ज्ञानस्य" ।

मनुश्चाह—

दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥

पतञ्जलिः प्राह प्राणायामात् अज्ञानावरणं क्षीयते मनश्च स्थिरं भवति । येनेन्द्रियाणि विषयेभ्यो विमुखानि भूत्वान्तर्मुखानि भवन्ति स'प्रत्याहार' इति गद्यते । यम—नियमासनप्राणायामप्रत्याहारा बहिरङ्गानि साधनानि मतानि । धारणा—ध्यान—समाधयश्चान्तरङ्गानि ।

चित्तस्याभीष्टविषये सन्निवेशनं धारणेति कथ्यते । परं वृत्तिमात्रसहितचित्तस्य नाभि—नासिकाग्रभागचन्द्रादिर्ध्येये निबन्धनमपेक्ष्यतेऽत्र ।

ध्येयस्यानारतं चिन्तनं ध्यानमिति आम्नातम् ।

योगसाधनस्यान्तिमसोपानः समाधिरस्ति । अस्यामवस्थायां मनो ध्येय एवंविधतया लीयते यत् तद् ध्येयस्तोभयमपि भवत्येकमेव । उभयोस्तादात्म्यं भवति । समाधेर्लक्षणमेवमाह योगसूत्रम्—"तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" । धारणा-ध्यान-समाधय-इत्येषां त्रिकं 'संयम' इत्येतया संज्ञया प्रसिद्धम् ।

मुक्तिलाभोऽस्ति तस्मात् तत्रैतारमान प्रवर्तयंत स इति योगसूत्रस्य कठोर आदेशो विद्यते ।

समाधिर्योगस्यान्तिम सोपान, स चेश्वरप्रणिधानात् सिद्धयति । तस्मादीश्वरो हि मननीय स्थानमधितिष्ठति । ईश्वरप्रणिधानान्वितयोगाङ्गानामनुष्ठानेन निष्प्रत्यूहमाशेव समाधे सिद्धत्वादीश्वरस्य महत्ता नितरामेव स्फुटभावेन योगस्समुद्घोषयति—"तत प्रत्यक्चेतनाऽधिगमोऽप्यन्तरायाभावश्चेति" । महर्षि पतञ्जलिर्मानव–जीवनस्याग्रे ईश्वरस्योपस्थानं मानवीयजीवनम्प्रति सौभाग्य महन्मन्यमानस्तस्य प्रणिधानं चित्तवृत्तिनिरोधनकारिणां साधनाना मध्य परमोत्कृष्टतमीय साधन यामन् ईश्वरस्य स्वरूपश्च "क्लेशकर्मविपाकाशयैरपरामृष्ट पुरुषविशेष ईश्वर" इत्यनेन सूत्रेण वर्णयन् "तत्र निरतिशयं सर्वज्ञबीजम्" "पूर्वेषामपि गुरु कालेनानवच्छेदात्" इत्येतत्सूत्रद्वितयेन तमुपश्लोकयन् साधकश्रेयसे तदीय शुभ नाम तस्य वाचक प्रणव इत्यनेन सूत्रेण कीर्तयन् स मानव प्रेरयति यदसौ तदीयस्वभाव–गुण–धर्म–वैशिष्ट्यानि विभावयन् तन्नाम जपदिति ।

योगसूत्रमतेन ईश्वर परमपुरुषोऽस्ति । स सर्वेभ्योऽपि दोषेभ्यो रहितोऽस्ति जीवानाञ्च शास्ता स गुरु । अस्ति स नित्य सर्वव्यापी सर्वज्ञ सर्वशक्तिमान् पूर्णश्च । जगति सर्वेऽपि जीवा अविद्याहङ्कारवासनारागद्वेषाभिनिवेशादिहेतो दुःखानि भुञ्जन्ति । ते विविधकर्माचरणात् सुखानि दुःखानि च विन्दन्ति । प्राक्तनजनुष संस्काराणा प्रभावम् तान् स्ववशे करोति । परमीश्वरस्तु सर्वथैव जीवेभ्यो विलक्षण । अस्ति स नित्यमुक्त क्लेश–कर्मविपाकाशयैश्च अपरामृष्ट । अस्ति स पुरुषो निर्विकारश्च । न तत्सम कोऽपि । पूर्णज्ञान स । इच्छामात्रेण सकलमपि जगत्प्रपञ्च वितनोति परिचालयति नियच्छति च । तदीया इमा अनन्ता विशिष्टतास्त जीवात् पृथक् कुर्वन्ति ।

ईश्वरस्य सिद्धयर्थोल्लिखिता युक्तयो दीयन्ते—

( अ ) वेदोपनिषदादीनामीश्वरगुणगानविधानात् सिद्धयति यद् ईश्वरोऽस्ति ।

( आ ) पदार्थेषु दृश्यमाना लघुता महत्ता च सूचयति यत् कोऽपि पदार्थो ऽवश्यमेवैतादृक् योऽणोरण्यणीयान् महतोऽपि महीयान् अस्ति स ईदृश स एव ईश्वर ।

( इ ) पुरुष-प्रकृत्योः संश्लेषेण संसारस्य सृष्टिर्भवति । द्वयोश्च तयोर्विश्लेषेण प्रलयः । तद्द्वितयं नैक्यमपि तु परस्परं भिन्नम् । न तयोः संयोगो वियोगश्च स्वाभाव्येन सम्भवः । अवश्यमेवास्ति किमपि एवंविधं निमित्तकारणं यत् तद् द्वितयं शास्ति योजयति वियोजयति च । अदृष्टानुसारेण किमपि तत्त्वं नूनं यत् जीवं ( पुरुषम् ) संसारयति मोचयति च प्रकृत्याः, प्रकृत्या सह निबध्नाति च । इदं तत्त्वमेव ईश्वरः इति नाम्ना शास्त्राण्यामनन्ति । विना तमीश्वरेणया प्रकृतिर्जगत् न तेन प्रकारेण व्यवस्थापयितुमर्हति यो भवति आत्मोत्थानार्थं मुक्त्यर्थञ्च जीवं ( पुरुषम् ) प्रति हितावहः ।

विद्वद्वराणामीश्वरमभिकृत्य मतमिदमप्यस्ति यदीश्वरो न केवलं ध्यानार्थं मपेक्ष्यते अपि तु महाप्रभुत्वात् सर्वशक्तिमत्त्वात् करुणावरुणालयत्वात् शरणागतवत्सलत्वाच्च तस्य, जीवस्य ( पुरुषस्य ) कर्त्तव्यमाद्यं यत् स तं शरणं प्रपद्येत तमनिशं भजेत् । तदनुकम्पया पुरुषस्य पापानि नश्यन्ति तस्य योगमार्गो भवति सुगमः । स उद्धृतो भवति । सर्वेषामपि जीवानामेकगतित्वात् प्रकृतेः सद्धात्मकत्वात् सर्वेषामपि ईश्वरत्वात् तं परमेश्वरमष्टादशपुराणमहाभारत–श्रीमद्भागवतकर्ता वेदव्यास एवं गृणाति—

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत् सूरयः ।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥

यः स्वात्मनीदं निजमाययार्पितं
क्वचिद् विभातं क्व च तत् तिरोहितम् ।
अविद्धदृक् साक्ष्युभयं तदीक्षते
स आत्ममूलोऽवतु मां परात्परः ॥

कामम् आलोचना योगं दार्शनिकसिद्धान्तत्वेन पूर्णतया न मया तं रहस्यवादत्वेन किं वेन्द्रजालत्वेन मन्यन्ताम् परं वस्तुतो योगस्यात्मसम्बन्धी सिद्धान्तो लोकमतात् साधारणात् मनोविज्ञानाधिकतरमेव दर्शयति । योगो यां साधनां सिद्धाति सा निस्सन्दिग्धतया विषममविचारणमपि सम्यगुदात्ततापरिकल्पन्यासतत्प्रतिपादिता साधना यकरतामाप्रमयत्यद्गित । ये जना सांसारिकाणो

विषयाणां दासाः सन्ति येन प्रकारेण ते योगनिर्दिष्टां साधनां साधयितुं क्षमाः ।
ते यदि तां साधनां कल्पनां मन्यन्ते तदाश्चर्यं न किमपि ।

योगविद्या परमपदप्रदायिनी । सा मातेव सर्वजीवान् सुखिनोऽवलोकयितु-
मभिलषते । तदीया सिद्धयोऽपि सन्त्यलौकिकाः । भौतिकं विज्ञानं वा मनो-
विज्ञानं यानपि नियमान् प्रतिपादयति न ते सम नाम्ना भवति सगति ।
अतस्ता शाम्भरी बलेन प्रतिभान्ति ।

सर्वमिदं यद् यौगिकं आत्म–साक्षात्कारः सांख्यदर्शनं नाम संसारं
सुदृढमाधारमवलम्बते । तद्वादोऽयं यद् आत्मास्ति नित्यः शुद्धः चेतनश्च ।
चेदेतादृग् विषयागोचर आत्मास्ति तदेदमपि स्वीकरणीयमस्त्येव यद् विषयानु-
भूतिधरान् उपरिष्टादपि वर्तते काप्युत्तुङ्गतरा धरा किञ्च एतादृश्य शक्त्योऽपि
शोभन्ते यो भौतिकेन्द्रियगम्या ‐ शक्तीरपि अतिशेरते । एतस्यात्मिकस्य तत्त्वस्य
ज्योतिः ससारे ऋषि–महर्षयस्तु विलोकितवन्त एव परं तज्ज्योतिः—सद्भाव
प्लेटो–अरस्तु–स्पिनोजा–लाइब्नीज–कॉण्ट–हेगेलप्रभृतयो गुरुगुरुतरा दार्शनिका
अपि स्वीकुर्वन्ति । अद्यत्वे अध्यात्मतत्त्वानुसन्धानममिति किञ्च आधुनिकं
मनस्तत्त्वविश्लेषणमस्या दिशाया जनान् प्रति पर्याप्तज्ञान–प्रदाने स्वीयमुत्साहं
दर्शयत । यद् ज्ञेयं मानस–गह्वरध्वान्ते निहितमासीत् तत्र साम्प्रतं प्रकाशं
पातयन्तो विज्ञप्रण्यो वीचिता भवन्ति । योगदर्शनमस्यामेवाशायामुपसरत्
मानवम्प्रति स्वकीयं यथार्थस्वरूपं दर्शयितुमात्मसयमविषयकान् व्यावहारिकान्
उपायान् प्रस्तवीति । सिद्धान्ततो व्यवहारतश्च योगदर्शनं सांख्यदर्शनाज्ज्यायो
गरीयश्च । तस्मिन् येयं ज्यायस्कता गरीयस्कता च प्राप्यते तत्र कारणमस्ति
तस्येश्वरनिष्ठत्वं यथार्थानुभूतिशीलत्वञ्च । आभ्यां गुणाभ्यां तत् साधकस्य मानसं
नितरामेवावर्जयति किञ्च तन्मनसि स्वविषयं श्रद्धाञ्च सञ्चारयति । योगतत्त्वाव
गमनाय श्रद्धया भक्त्या च तदध्ययनं तदभ्यासश्च पुनः पुनः अपेक्ष्यते ।

कुमारी कॉस्टर आह—

अहं निश्चिनोमि यद् जनाः जीवनस्यास्य, यत् पदमन्त्यं एव
मन्यन्ते ततः परस्तादपि किमपि पदं परिस्फुरति, दृढसङ्कल्पमादाय ये तद्दिशि
उपसरिष्यन्ति ते तदासाद्य तत्स्वरूपमपि वक्तुं शक्ष्यन्ति ।

तत्परमपुरुषार्थमधिगन्तुं श्रुतय —

'आत्मा वा रे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च' इत्यभिधायोच्चैः

( इ ) पुरुष-प्रकृत्योः संश्लेषेण संसारस्य सृष्टिर्भवति । द्वयोश्च तयोर्विश्लेषेण प्रलयः । तद्द्वितयं नैकमपि तु परस्परं भिन्नम् । न तयोः संयोगो वियोगश्च स्वसामान्येन सम्भवः । अवश्यमेवास्ति किमपि एवंविधं निमित्तकारणं यत् तद् द्वितयं शास्ति योजयति वियोजयति च । अदृष्टानुसारेण किमपि तावं नूनं यत् जीवं ( पुरुषम् ) संसारयति मोचयति च प्रकृत्या', प्रकृत्या सह भिन्नमानि च । इदं तत्त्वमेव ईश्वर' इति नाम्ना शास्त्राण्यामनन्ति । विना तत्प्रेरणया प्रकृतिर्जगत् न तेन प्रकारेण व्यवस्थापयितुमर्हति यो भवति आत्मोत्थानार्थं मुक्तपर्यन्तं जीवं ( पुरुषम् ) प्रति हितावहः ।

' विद्वद्वराणान्त्वीश्वरमधिकृत्य मतमिदमप्यस्ति यदीश्वरो न केवलं ध्यानार्थमपेक्ष्यते अपि तु महाप्रभुत्वात् सर्वशक्तिमत्त्वात् करुणालुत्वात् शरणागतवत्सलत्वाच्च तस्य, जीवस्य ( पुरुषस्य ) कर्त्तव्यमार्गं यत् स तं शरणं प्रपद्येत तमनितं भजेत् । तदनुकम्पया पुरुषस्य पापानि नश्यन्ति तस्य योगमार्गो भवति सुगमः । स उद्धृतो भवति । सर्वेषामपि जीवानामेकगतित्वात् प्रकृतेः सद्याश्रयत्वात् सर्वेषामपि ईश्वरत्वात् तं परमेश्वरमष्टादशपुराणमहाभारत-श्रीमद्भागवतकर्ता वेदव्यास एवं गृणाति—

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत् सूरयः ।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥

यः स्वात्मनीदं निजमाययार्पितं
क्वचिद् विभातं क्व च तत् तिरोहितम् ।
अविद्धदृक् साक्ष्युभयं तदीक्षते
स आत्ममूलोऽवतु मां परात्परः ॥

कामम् आलोचना योगं दार्शनिकसिद्धान्तत्वेन पूर्णतया न मन्ता तं रहस्यवादत्वेन किं वैन्द्रजालत्वेन मन्यन्ताम् परं वस्तुतो योगस्यात्मसम्बन्धी सिद्धान्तो लोकमतात् साधारणात् मनोविज्ञानादितरामेव दर्शयात् । योगो यां साधनां निर्दधाति सा निरवच्छिन्नतया विषमसन्धिधारायमतमहित तस्मादनन्तपण्डितम्मन्यास्तत्प्रतिपादिता साधना कल्पनामात्रमवगच्छन्ति । ये जना सांसारिकार्णं

विषयाणा दासा सन्ति येन प्रकारेण ते योगनिर्दिष्टा साधना साधयितु क्षमा । ते यदि ता साधना कल्पना मन्यन्ते तदाश्चर्यं न किमपि ।

योगविद्या परमपदप्रदायिनी । सा मातेव सर्वजीवान् सुखिनोऽवलोकयितुमभिलषते । तदीया सिद्धयोऽपि सन्त्यलौकिका । भौतिक विज्ञान वा मनोविज्ञान यानपि नियमान् प्रतिपादयति न तै सम तासा भवति संगति । अतस्ता शाम्बरी कलेव प्रतिभान्ति ।

सत्यन्विषद् यद् यौगिक आत्म-साक्षात्कार साख्यदर्शन नाम समार्ं सुदृढमाधारमवलम्बते । तद्वादोऽयं यद् आत्मास्ति नित्य शुद्ध चेतनश्च । चेदेतादृग् विषयागोचर आत्मास्ति तदेदमपि स्वीकरणीयमस्त्येव यद् विषयानुभूतिधरात उपरिष्टादपि वर्तते काप्युत्तुङ्गतरा धरा किञ्च एतादृश्य शक्तयोऽपि शोभन्ते या भौतिकेन्द्रियगम्या शक्तीरपि अतिशेरते । एतस्यात्मिकस्य तत्वस्य ज्योति संसारे ऋषि-महर्षयस्तु विलोकितवन्त एव पर तज्ज्योति —सद्भाव प्लेटो–अरस्तु–स्पिनोजा–लाइब्नीज–कॉट–हेगेलप्रभृतयो गुरुगुरुतरा दार्शनिका अपि स्वीकुर्वन्ति । अद्यत्वे अध्यात्मतत्वानुसन्धानसमिति किञ्च आधुनिकं मनस्तत्त्वनिक्षेपणमस्या दिशाया जनान् प्रति पर्याप्तज्ञान–प्रदाने स्वीयमुत्साहं दर्शयत । यद् ज्ञेय मानस–गह्वरस्थान्ते निहितमासीत् तत्र साम्प्रत प्रकाश पातयन्तो विज्ञाग्रण्यो वीक्षिता भवन्ति । योगदर्शनमस्यामेवाशायामुपसरत् मानवम्प्रति स्वकीय यथार्थस्वरूप दर्शयितुमात्मस्वयमविषयकान् व्यावहारिकान् उपायान् प्रस्तवीति । सिद्धान्ततो व्यवहारतश्च योगदर्शन साख्यदर्शनाज्ज्यायो गरीयश्च । तस्मिन् येय ज्यायस्कता गरीयस्त्ता च प्राप्यते तत्र कारणमस्ति तस्येश्वरनिष्ठत्व यथार्थानुभूतिशीलत्वञ्च । आभ्या गुणाभ्या तत् साधकस्य मानस नितरामेवावर्जयति किञ्च तन्मनसि स्वविषये श्रद्धाञ्च सञ्चारयति । योगतत्त्वावगमनाय श्रद्धया भक्त्या च तदध्ययन तदभ्यासश्च पुन पुन अपेक्ष्यते ।

कुमारी कॉस्टर आह—

अहं विश्वसिमि, यद् जना जीवनस्यास्य, यत् पदमन्त्य एव मन्यन्ते तत परस्तादपि किमपि पद परिस्फुरति, दृढसङ्कल्पमादाय ये तद्दिशि उपसरिष्यन्ति ते तदासाद्य तत्त्वरूपमपि वेत्तु शक्ष्यन्ति ।

यत्परमपुरुषार्थमधिगन्तु श्रुतय —

'आत्मा वा रे द्रष्टव्य श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च' इत्यभिधायोचै-

मानवमाह्वयन्ति तदेतत्प्राप्तुमिदं योगदर्शनमपि मदयहृदय भवद् विश्व समग्रमाकारयति।

मानवजीवनस्य चरम लक्ष्यमस्ति हि आत्म-साक्षात्कार। आत्मनो दर्शनं न तावत् सम्भव यावन्मानवो योगी न जायते। अत एव तु भगवान् कृष्णोऽर्जुनमुपदिशति—

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः।
कर्मिभ्यश्चाधिको योगी तस्माद् योगी भवार्जुन॥

योगी एव परां गतिं लभते इत्यत्र च भगवान् प्राह—

प्रयत्नाद् यतमानस्तु योगी संशुद्धकिल्बिषः।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम्॥

अनन्यचेता भवन् मनसा यो नित्ययुक्तो भूत्वा स्मरति परमेश्वरं तस्यैव योगिनो भगवान् भवति सुलभः—

अनन्यचेताः सततं यो मां स्मरति नित्यशः।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः॥

प्रतिपदं भगवान् कृष्णो योगयुक्त जीवनं स्थापयन् दृग्गोचरो भवति। स आह—

वेदेषु यज्ञेषु तपःसु चैव दानेषु यत् पुण्यफलं प्रदिष्टम्।
अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम्॥

नात्र सन्देहो यदि साम्प्रतिकोऽयं संसारो योगदर्शनप्रदर्शितं पन्थानमनुयायात् तदा स भौतिकानि सुखान्यपि भुञ्जानः परामेव शान्तिं प्रीतिञ्च समवाप्नुयात्। इत्थं यतोऽभयमपि मोक्षस्य भवति यत्र च स्वास्थ्यं लभ्यते आत्मनो रुचिरं मनश्च शुध्यति स योगः कस्मात् भजते मानवः।

यो मुनिप्रवरः पतञ्जलिः संसारोपकाराय योगदर्शनं नाम प्रकाशं ख्यातोऽद् समर्थोऽस्मितेन श्रोडेनास्म-मनोऽपि नमति पुनः पुनः—

योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन।
योऽपाकरोत् तं प्रवरं मुनीनां 'पतञ्जलिं' प्राञ्जलिरानतोऽस्मि॥

—:o:—

( १० )

## न्यायदर्शनम्

**महनीयता**—अस्ति भारतीयदर्शनसाहित्यस्य हि न्यायदर्शनं प्रवेशद्वारमिव । तस्य ज्ञानमन्तरेण संस्कृतसाहित्यस्योच्चतराणां ग्रन्थानां यथार्थतयावबोधो न भवितुमर्हति । यद्यपि व्याकरणायुर्वेदालङ्कार-काव्यधर्मशास्त्रादिविषयाः सन्त्ये-वंविधा यैः सह न वर्तते दर्शनस्य साक्षात् सम्बन्धः परमेतद्-बोधं विना तु तत्रापि निर्बाधगत्या न प्रसरितुं शक्नोति जिज्ञासमानो मानवः । दुर्ज्ञेयपाण्डि-त्याधिगमनाय न्यायशास्त्रीया निष्णाततातितरामपेक्ष्यते । न्यायशास्त्रे पारावारीणत्वं यावदेव स्यात् वैदग्ध्यमपि तावदेव परिष्कृतमुत्कृष्टं मनोज्ञञ्च भवेत् । यथा हि निकषोपल-घर्षणेन निम्मतरतामुपेतं शस्त्रं द्रुततया किमपि च्छेत्तुं शक्नुते तथैव न्यायशास्त्रेण तीक्ष्णतरतां नीयमाना धिषणापि सर्वाण्यपि शास्त्राणि प्रवेष्टुमनाया-सेनैवेष्टे । शास्त्रमिदं बोधयति यत् केन विधिना प्रतिवादी जय्यो जायते, केन प्रकारेण स निग्राह्यो भवति, केन च मार्गेण प्रतिपक्षिण उक्तयो भवन्ति खण्ड-नीयाः । नात्र संशयो मनागपि यत् न्यायदर्शनं विचारशीलस्य मानव-समाजस्य कृते नितान्तमुपादेयमस्ति न तद् विना सिद्धान्तान् विद्वांसो द्रढीकर्तुं पारयन्ति न च विरोद्धुः सकाशादेव ते आत्मानं त्रातुमपि क्षमन्ते । अस्य शास्त्रस्याद्भु-तमेव वैलक्षण्यमुपादेयत्वञ्च वीक्ष्यैकस्वरेण, विपश्चितां जगतीदमेवमभिनन्दति—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता ॥

**नाम**—न्यायदर्शनं न्यायं प्रतिपादयति । न्यायस्यास्त्यर्थो विभिन्नप्रमाणानां साहाय्येन वस्तुतत्त्वस्य परीक्षणम् । उक्तञ्च वात्स्यायनेन—

'प्रमाणैरर्थपरीक्षणं न्यायः' । इदं हि शास्त्रम् 'आन्वीक्षिकी' इत्येतदाख्ययापि प्रथते । या विद्या अन्वीक्षया प्रवर्तते सान्वीक्षिकीति कथ्यते । 'अन्वीक्षा' पदस्यार्थोऽस्ति प्रत्यक्षागमाश्रितमनुमानमाहोस्वित् प्रत्यक्षस्य सहायतयावगतीभू-तस्य विषयस्य पर्यालोचना । उक्तञ्च न्यायभाष्ये—

"प्रत्यक्षागमाश्रितम् अनुमानं सा अन्वीक्षा अथवा प्रत्यक्षागमाभ्यामीक्षि-तस्य अन्वीक्षणम्" ।

अनुमानप्रक्रियायां हेतोर्महत्त्वं परमाधिकम्। अतः शास्त्रमिदं 'हेतुविद्या' इत्येतन्नाम्नापि ख्यातम्। गूढविषयको विचारो 'वाद' इति गीयते। शास्त्रार्थसमये वादस्यात्युपादेयत्वादेतच्छास्त्रं वादविद्यां वा 'तर्कविद्या'पि समुदीर्यते। अत्र हि प्रमाणानां भवति मीमांसा तेन शास्त्रमेतत्प्रमाणशास्त्रमित्येतन्नामापि बिभर्ति।

उद्देश्यम्—प्रमाणान्याश्रित्य प्रमेयाणां विचारणं प्रमाणानाञ्च सविस्तरमुपपादनं न्यायदर्शनस्य प्रधानमुद्देश्यमस्ति। अन्यच्च नदीयं ध्येयं तदेव, यदस्ति दर्शनान्तराणाम्। तानीवेदमपि दुःखनिवर्तनोपायप्रदर्शनपुरस्सरं मोक्षमार्गं निर्दिशति। अत्र तु न संशीतिर्यदस्मिन् दर्शने तर्क-प्रमाणविज्ञानं तथा निविडतया सान्द्रतया च सर्वत्र वितर्तं वर्तते यत् दुःख-निराकरण-मोक्षादिविषया गौण्ता गमिता. सन्ति तेन।

न्यायोत्पत्तिः—तर्कमवलम्ब्य सत्यस्यान्वेषणं प्राचीनतमेऽपि काले दृष्टं जायते। श्रुतय आत्मदर्शनस्य यानुपायान् दर्शयन्ति तेषूपपत्तिपूर्वकं तर्कानुकूलं मननमप्यन्यतमोपायत्वेन प्रतिपादितमस्ति। उपनिषत्साहित्यानुशीलनेनापि ज्ञायते यदुपनिषदां युगे एव वादस्य साफल्याय तर्कप्रधाना, प्रचुरा नियमा सुधीभिः साधु स्वज्ञानपथमानीता। राज्ञो जनकस्य सभायां याज्ञवल्क्यमैत्रेय्यादीनां तत्त्वसम्बन्धिन्याश्चर्चायास्तर्कोल्लसितत्वं स्फुटतयैव परिलक्ष्यते। श्रौतानुष्ठानगतविरोधं समाधातुं मीमांसा तर्कमवलम्बमाना विलोक्यत एव। इत्थं विदितं भवति यन्न्यायस्योत्पत्तिस्तस्मिन्नेवावसरे सञ्जाता यो हि काल-'श्रौतकाल' इत्येतेन नाम्ना सुविदितः। आचार्यो बलदेव उपाध्याय स्वकीये दर्शनेतिहासे लिखति यत् संहिता-समये द्वे दृष्टी प्राप्येते—प्रातिभदृष्टिः, तर्कप्रधाना च दृष्टिः।

न्यायदर्शनस्याद्यो ग्रन्थः—न्यायदर्शनस्याद्यो ग्रन्थो गौतमस्य न्यायसूत्रमस्ति। अस्मिन् ग्रन्थे षोडशपदार्थानां प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां निरूपणं कृतमास्ते। डॉ० याकोबी ग्रन्थस्यास्य रचनाकालं तृतीयं शतकं मन्यते। गोपीनाथकविराजस्य न्यायभाष्यं नाम ग्रन्थमवलोक्य ज्ञातमिदं जायते यदेष ग्रन्थो विक्रमाब्दप्रवर्तनात् प्राक् षष्ठे शतके प्रणीतोऽभूत्। पण्डितहरप्रसादशास्त्रिणस्तु

तन्निर्माणकालं द्वितीयं शतकं मन्यन्ते। नूनं ग्रन्थ एष नितान्तप्राचीनः। एतदीये चतुर्थेऽध्याये उल्लिखितो वादस्तु बुद्धोदयादपि प्राचीनतरः। तस्माद् गोतमस्याविर्भावश्चेद् विक्रमात् प्राग्वर्तिचतुर्थे शतके मतो भवेत् तदानीमुचितः स्यात्।

**प्राचीनन्यायो नव्यन्यायश्च**—न्यायसूत्रस्यानन्तरं तत्र बहवो भाष्यग्रन्था विद्वद्भिरलेखिषत। वात्स्यायनो न्यायभाष्यम्, उद्योतकरो न्यायवार्तिकं, वाचस्पतिमिश्रो न्यायवार्तिकतात्पर्यटीकाम्, उदयनो न्यायवार्तिकतात्पर्यपरिशुद्धिं किञ्च जयन्तो न्यायमञ्जरीं प्राणैषीत्। एते ग्रन्था न्यायसूत्रगतान् विचारान् सविशदं व्याचक्षते किञ्च न्यायसूत्रे विहितान् आक्षेपान् निरस्यन्ति। गोतमस्य न्यायसूत्रं, वात्स्यायनादीनां भाष्यग्रन्था प्राचीनन्याये गण्यन्ते।

नव्यन्यायस्य प्रारम्भः गङ्गेशाद् भवति। गङ्गेशस्तत्त्वचिन्तामणिमजग्रन्थत्। नव्यन्याये हि न्यायदर्शनस्य तर्कविज्ञानविषयका विचारा एव सविशदं गृहीताः सन्ति। अत्र कथनमिदमुचितं स्याद् यत् प्राचीनन्यायो यदा साध्यप्रधानं युगं प्रवर्तयामास तदा नव्यो न्यायः साधनप्रधानं युगमवतारयामास। नव्यन्यायो नवीनामेव तर्कशैलीं नूतनामेवावच्छेदकतावच्छिन्नत्वविशिष्टां भाषां न्यायदर्शने सञ्चारयामास। एषा हि नव्यन्यायधारा प्राचीनन्यायधारां मन्दीचकार। वैशेषिकदर्शनमुपितेऽस्मिन् नव्यन्याये सौहृदं दर्शयाम्बभूव यदा, दर्शनमिदन्तदा न्यायवैशेषिकदर्शनमित्येनसाञ्ज्ञा ख्यातिं भेजे।

आचार्यगङ्गेशानन्तरं शास्त्रेऽस्मिन् सञ्जातानामाचार्याणां मध्ये विश्वविदितपाण्डित्या इमे विपश्चित्तमा अभूवन्—

१. वर्धमान उपाध्यायः, २. पक्षधरमिश्रः (जयदेवः), ३. वासुदेवसार्वभौमः, ४. रघुनाथशिरोमणिः, ५. मथुरानाथः, ६. जगदीशभट्टाचार्यः, ७. गदाधरभट्टाचार्यः।

**न्यायस्य तर्कप्रधानवस्तुवादिता**—अस्ति न्यायदर्शनं तर्कप्रधानो वस्तुवादः। वस्तुवादो बाह्यवस्तूनां सत्तां ज्ञानाश्रितां न मन्यते। तन्मतमिदं यद् वस्तूनां सत्ता न मनोऽधीना न च ज्ञानवशंगता। सास्ति स्वतन्त्रा। मानसिका भावा मन आश्रित्य सन्तिष्ठन्ते। यावन्मनसा न तेऽनुभूयन्ते न तावत् तेषां सद्भावोऽपि परिलक्ष्यते। घट-पट-विटप-पशुप्रभृतयो बाह्याः पदार्थास्तु न मनोऽभिहिताः। चेत् कश्चिज्जन एषां घट-पटादीनां ज्ञानं न निदधाति तर्हि

तस्यार्थोऽयं न यत् ते पदार्थाः मन्त्येव न। वस्तुवादो मन्यते यत् प्रतिपदार्थस्य सत्ता आत्मनो ज्ञानस्यापेक्षां न कुरुते। विज्ञानवादस्य तु मतमिदम्—वस्तुनः सत्ता ज्ञानाश्रितास्ति। न तन्मतेन ज्ञानात् पृथक् क्वापि तेषां सत्त्वमस्ति। यथा भावनानां वा विचाराणां सत्ता मनोऽपेक्षते तथैव सांसारिकाणि वस्तूनि अस्मन्मनो वा ईश्वरमपेक्षन्ते। न्यायदर्शनं सर्वाणि वस्तूनि ज्ञानाधीनानि वा मनोनिष्ठानीति न मन्यते। तस्वरित वस्तुवादि। न्यायस्य वस्तुवादोऽनुभवं किञ्च तर्कमवलम्बते। तत्कथनमस्ति यत् मोक्षाधिगतिस्तत्त्वज्ञानमवाप्यैव भवितुं शक्यास्तीति सत्यं परं तत्त्वज्ञानावाप्तेः प्राक् ज्ञानं किमित्येतस्यावगमनमपेक्ष्यते। ज्ञानस्य, ज्ञानाधिगमोपायानां यथार्थायथार्थज्ञानगतभिन्नतायाश्च यावदवबोधो न जायते तावत्र तत्त्वज्ञानलाभो भवितुमर्हति। तदीयैषा मान्यता ज्ञापयति यत् तस्य वस्तुवादो हि पूर्णतया ज्ञानविषयकेषु विचारेषु आत्मानं प्रतिष्ठापयति। दर्शनस्य प्रमाणविचाराश्रितत्वात् न्यायदर्शनमुद्दिश्य 'न्यायदर्शनं हि तर्कप्रधानवस्तुवाद' इत्येतत्कथनं नितरां युक्तमेव।

**प्रमाण-विचारः**—न्यायस्य तत्त्वविचारो हि प्रमाणविचारमधितिष्ठति। येषां साहाय्येन यथार्थज्ञानं लब्धं भवति ते सन्त्युपायाश्चत्वारः। न्यायदर्शनं तानुपायान् 'प्रमाणानि' इति कथयति। प्रमाणानि सन्तीमानि चत्वारि–प्रत्यक्षम्, अनुमानम्, उपमानम्, शब्दः। यज्ज्ञानं लभ्यते एतानि प्रमाणान्यवलम्ब्य तज्ज्ञानं प्रथमं ज्ञेयं वर्तते किञ्च तदीया भेदाश्च ज्ञातव्याः सन्ति, यथार्थज्ञानं किञ्च अयथार्थं ज्ञानमित्येतदपि वेदितव्यं विद्यते।

वस्त्वभिव्यक्तिर्हि ज्ञानं किंवा बुद्धिरित्युच्यते। यथा दीपकस्य प्रकाशः स्वसन्निधौ स्थितं पदार्थं प्रकाशयति तथैव ज्ञानं (बुद्धिः) सर्वान् अपि अर्थान् अभिव्यनक्ति। ज्ञानाधिष्ठानम् आत्मा भवति अत एव सः प्रकाशः (ज्ञानम्) आत्माश्रय इत्युक्तः। उक्तञ्च—"अज्ञानान्धकारतिरस्कारकः सकलपदार्थसार्थप्रकाशकः प्रदीप इव देदीप्यमानः, आत्माश्रयो यः प्रकाशः सा बुद्धिः।" ज्ञानं भवति बहुविधम्। प्रथमं हि प्रमाऽप्रमाभेदेन तद् द्विविधम्। यथार्थज्ञानं 'प्रमा' इत्युच्यते। प्रमापि भवति चतुर्विधा प्रत्यक्षानुमानोपमानशब्दभेदेन। अयथार्थज्ञानम् 'अप्रमा' इत्युच्यते। अप्रमापि चतुर्धा–स्मृति–संशय–विपर्यय–तर्कविधया। तत्र हि—

'ज्ञानविषयं ज्ञानं स्मृतिः'

'अनिश्चयात्मकत्वं संशयः'

'विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्'

'अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः' इति कथ्यते ।

यथार्थज्ञानप्राप्तेर्यानि साधनानि सन्ति चत्वारि प्रत्यक्षानुमानोपमानशब्द-संज्ञकानि तेषु प्रत्यक्षं साधनं ( प्रमाणम् ) इन्द्रिय–सन्निकर्षेण वस्त्वभिव्यनक्ति । एतल्लक्षणमधिकृत्य तर्कभाषा प्राह—'साक्षात्कारिप्रमाकरणं प्रत्यक्षम्' अन्यत्र चापि 'इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्' इत्युक्तम् ।

केषाञ्चन विदुषां कथनमिदम्—इन्द्रिय–साहाय्यमन्तरेणापि प्रत्यक्षं भवितुं शक्नोति । ईश्वर इन्द्रियरहितोऽपि सर्वेषां विषयाणां ज्ञानं प्रत्यक्षतया करोति । सुखदुःखादिभावानां प्रत्यक्षमिन्द्रिय–स्पर्शं विनैव सम्भवति तस्मात् प्रत्यक्ष-ज्ञानार्थं सर्वत्रेन्द्रिय–स्पर्शो न भवत्यपेक्षितः । तेन 'साक्षात् प्रतीतिः' इत्येतदेव प्रत्यक्षस्य सामान्यं लक्षणं वक्तुं शक्यम् । कस्यापि वस्तुनः प्रत्यक्षं ज्ञानं तदा सम्भवति यदा तस्य साक्षात्कारो भवति । अतः इदमपि कथयितुं शक्यं, यद् , यदा, तद् वस्तुनो ज्ञानं पुरातनानुभवमनुमानं वा विना भवति तदा प्रत्यक्षं ज्ञानं भवति ।

प्रत्यक्षं साधारण्येन द्विविधं निर्विकल्पकं सविकल्पकञ्च । येन कस्यापि वस्तुनो ज्ञानमात्रं जायते न च तन्नाम जात्यादेर्ज्ञानं भवति तदस्ति निर्विकल्पकं ज्ञानम् । येन च वस्तुनो नाम जात्यादेरपि ज्ञानं भवति तदस्ति सविकल्पकं ज्ञानम् । विशेषणविशेष्यभावरहितज्ञानस्यास्वीकरणीयत्वाद् वैयाकरणा निर्विकल्पकं ज्ञानं न स्वीकुर्वन्ति । जातेरस्वीकरणीयत्वाच्च बौद्धा निर्विकल्पकमेवाङ्गीकुर्वन्ति । मीमांसकः कुमारिलस्तु उभयमपि उररीकरोति ।

न्यायदर्शने प्रत्यक्षं बहुधा विचारितम् । तत्रेदमप्युक्तम्—प्रत्यक्षं लौकिका-लौकिकभेदेन द्विविधम् । लौकिकञ्च बाह्यमानसभेदेन द्विविधम् । बाह्यं पञ्च ज्ञानेन्द्रियैः किञ्च मानसं मनसा जायते अतः लौकिकं षड्विधं भवति । अलौकिकञ्च त्रिविधम्—१. सामान्यलक्षणम्, २. ज्ञानलक्षणम्, ३. योगजम् । येऽन्विताभिधानवादिनो विद्वांसः सामान्यलक्षणं ज्ञानलक्षणञ्च निराकुर्वन्ति ते योगजमेव मन्व-यन्ति । सामान्यलक्षणमलौकिकं प्रत्यक्षमिन्द्रियस्पर्शं विना केवलं सामान्यज्ञानेन जायते । यत्र त्वेकमिन्द्रियमिन्द्रियान्तरग्राह्यं विषयं ग्राहयति तदा ज्ञानलक्षण-

लौकिकं प्रत्यक्षं भवति । योगजन्तु 'योगिन एव कुर्वन्ति अतस्तद्योगजमिति कथ्यते । विचारवन्त प्रत्यभिज्ञामपि ज्ञानस्य भेदविशेषं मन्यन्ते । तत्तेदन्तावगाहिनी प्रतीति 'प्रत्यभिज्ञे'ति कथ्यते ।

प्रत्यक्षज्ञानप्रयोजनेनापेक्षित इन्द्रियार्थयो सन्निकर्षं षड्विध उक्त—
१ संयोग, २ संयुक्तसमवाय ३ संयुक्तसमवेतसमवाय, ४ समवाय, ५ समवेतसमवाय, ६ विशेषणविशेष्यभाव ।

कस्यचन वस्तुनोऽभवन तद्वस्तुनोऽभाव इति कथ्यते । येनेन्द्रियेण यद्वस्तुन प्रत्यक्ष भवति तेनैवेन्द्रियेण तद्वस्तुनोऽभावस्यापि प्रत्यक्ष भवति । घटस्य प्रत्यक्षञ्चेच्चक्षुषा भवति तदा घटाभावस्यापि प्रत्यक्ष चक्षुषैव सम्पद्येत । पुस्तक-पुस्तकाभावयो पुस्तक भावद्रव्यमस्ति पुस्तकाभावश्चाभावरूपपदार्थो ऽस्ति । अत्रोभयत्र पञ्चविधा सन्निकर्षा न भवितु शक्नुवन्ति, अतएव तर्कशास्त्रे 'अभावस्य' प्रत्यक्षज्ञानाय विशेषणविशेष्यभावो नाम षष्ठ सन्निकर्षसम्बन्ध स्वीकृत ।

अत्र मीमांसकाना कथनमेतत्—"सम्बन्धो भवत्येक, उभयाश्रित, सम्बन्धिभ्यो भिन्नश्च । नैतद् वैशिष्ट्य विशेषणविशेष्यभावे सम्पद्यते अतो न विशेषणविशेष्यभाव सम्बन्ध । तस्मादभावस्य हेतो 'अनुपलब्धि' र्वा 'अभाव' इत्येतत् पञ्चम प्रमाण स्वीकर्तव्यम्" ।

तर्कशास्त्रे व्यावहारिकताया प्राधान्यमङ्गीकृत्य प्रत्यक्षप्रमाणेनैवाभावस्यापि प्रत्यक्ष ज्ञान स्वीकृतम् । न च अभावाख्यस्य पञ्चमस्य प्रमाणस्याङ्गीकरणमपेक्षितम् ।

अनुमानम्—प्रत्यक्षप्रमाणेन ज्ञातीकृतेन केन चन लिङ्गेन अर्थस्यावगमनानन्तर बोद्धा यद् ज्ञानमर्जुते तदेव 'अनुमानम्' इति कथ्यते । उक्तञ्च धारस्यायनेन 'मितेन लिङ्गेन अर्थस्य अनु पश्चान्मानमनुमानम्' । अनुमानशब्दस्योपयुक्तया व्युत्पत्त्या वस्तुतोऽनुमानप्रमाणस्य फलम्—अनुमिति ज्ञायते । अनुमानप्रमाणस्य तु लक्षणमेतत्—'लिङ्गपरामर्शोऽनुमानम्' । लिङ्ग तद् भवति यद् व्याप्तिबलेनार्थं गमयति । उक्तञ्च 'व्याप्तिबलेन अर्थगमक लिङ्गम्' । 'यत्र यत्र धूमस्तत्र तत्राग्नि, रित्यनविधं साहचर्यनियमो 'व्याप्ति' रित्युच्यते । उक्तञ्च 'साहचर्यनियमो व्याप्ति' । अस्मिन्नत्र पर्वते वह्निना व्याप्तो धूम इत्याकारक तृतीय लिङ्गस्य ज्ञान 'परामर्श' इत्युच्यते । किंवा व्याप्तिविशिष्टपक्ष

धर्मताज्ञानं 'परामर्शः' इत्यभिधीयते । एतेन विवेचनेन निष्पन्नमिदं—"परोक्षं वस्तु येन हि ज्ञातेन लिङ्गेन ज्ञानपथेऽवतार्यते तद् 'अनुमानम्' नाम प्रमाणमिति बोध्यम् ।

अनुमानं त्रिविधं—१. पूर्ववत्, २. शेषवत्, ३. सामान्यतोदृष्टम् । पूर्ववत्—कारणात् कार्यस्य अनुमानम् । यथा—वृष्टिर्भवेन्मेघस्य सजलत्वात् । शेषवत्—कार्यं दृष्ट्वा कारणस्यानुमानम् । यथा—वृष्टिर्जाता नद्या वर्धितजलवतीत्वात् । सामान्यतो दृष्टम्—येन परोक्षवस्तुनो हि सामान्यतया ज्ञानं भवति । यथा—आम्रवृक्षा मञ्जरीवन्तोऽस्याम्रवृक्षस्योद्गतमञ्जरीत्वात् ।

प्रयोजनाधारेणानुमानस्य स्वार्थानुमानपरार्थानुमानभेदेन द्विविधत्वमालोक्यते । स्वसंशय-निरासाय क्रियमाणमनुमानं स्वार्थानुमानं किञ्च परशङ्कासमाधानाय विधीयमानमनुमानं परार्थानुमानमिति कथ्यते । किंवा स्वान्तःप्रतिपत्तये स्वार्थानुमानं परप्रतिपत्तये च परार्थानुमानं प्रयुज्यत इत्यपि वक्तुं शक्यम् । स्वार्थानुमानस्थले हेतुं लिङ्गञ्च दृष्ट्वा साध्यं निश्चीयते । परार्थानुमाने तु प्रतिज्ञाहेतूदाहरणोपनयनिगमनाख्यपञ्चावयवानां प्रयोगो विधीयते ।

नवीना नैयायिका अनुमानस्य प्रभेदान् एवं मन्यन्ते—

१. केवलान्वयि, २. केवलव्यतिरेकि, ३. अन्वयव्यतिरेकि ।

अन्वयस्यार्थो भवति—'साहचर्य'मिति । व्यतिरेकस्य च 'अविनाभाव' इति 'यत्र धूमस्तत्राग्नि'रित्यन्वयस्य स्वरूपं किञ्च 'यत्राग्निर्न तत्र धूमोऽपि न' (इदं न तर्हि इदमपि न) इत्येतद् व्यतिरेकस्य स्वरूपं भवति ।

अनुमानं हेतुमूलकं भवति । यदि हेतुः शुद्धो भवति तदानुमानमपि भवति शुद्धम् । अन्यथा तद् भवति दूषितम् । अशुद्धो हेतु'र्हेत्वाभास' इत्युच्यते । हेतोः शुद्धत्वं तस्य पक्षवृत्तित्वे सपक्षवृत्तित्वे विपक्षव्यावृत्तित्वेऽबाधितविषयत्वेऽथ च असत्प्रतिपक्षत्वेऽवतिष्ठते । यो हेतुर्नास्ति पक्षवृत्तित्वादिवैशिष्ट्यवान् स एव 'हेत्वाभास' इत्येतेन नाम्ना व्यपदिश्यते ।

असिद्ध-विरुद्धानैकान्तिकबाधितविषयसत्प्रतिपक्षभेदेन हेत्वाभासस्य पञ्चविधत्वं न्यायदर्शनमामनति ।

उपमानम्—न्यायदर्शने उपमानं तृतीयप्रमाणत्वेन मतम् । हरिभद्रसूरिः उपमानमेवं परिभाषते—

"प्रसिद्धवस्तुसाधर्म्यादप्रसिद्धस्य साधनम् ।
उपमानं समाख्यातं यथा गौर्गवयस्तथा ॥"

गवादिप्रसिद्धवस्तुनः साधर्म्यात् गवयाद्यप्रसिद्धवस्तुविषयकं यद् ज्ञानं भवति तदेव तदु'पमिति'रिति कथ्यते । उपमितेः साधनं यत् तदेव उपमानम् । उपमानमधिकृत्य दार्शनिकेषु घोरो विवादः । दिङ्नागाचार्य उपमानं प्रत्यक्षान्न भिन्नं मन्यते। वैशेषिकास्तदन्तर्भावमनुमाने विदधति । सांख्यं यदि यदुपमानमागमान्तर्भावान्न प्रमाणान्तरम् । सिद्धान्तमुक्तावलीकारो विश्वनाथः प्राह—उपमाने प्रत्यक्षानुमानशब्दानामंशो भवति । प्रथमं शब्देन गोगवययोर्मध्ये विद्यमानं सादृश्यं ज्ञायते ततः प्रत्यक्षेण गोसदृशपिण्डस्य साक्षात्कारो जायते ततश्चानुमानेन तस्य गवयत्वं सूच्यते । नैयायिकास्तु उपमानं पृथगेव प्रमाणं स्वीकुर्वन्ति । ते वदन्ति—प्रत्यक्षेण गोसदृशपिण्डस्य प्रतीतिर्भवति गवयस्य न, नात्रानुमानमपि अनुमानं प्रत्यक्षमूलकं भवति । गवयस्तु न पुरा कदापि प्रत्यक्षतां गतः । गो-गवययोर्मध्ये व्याप्तिसम्बन्धस्य चादृष्टत्वादत्र नानुमानं प्रवर्तते । शब्दस्याप्युपमितेः कारणत्वं न सिद्ध्यति तस्य सादृश्यमात्रज्ञान-( गो-गवयादिस्थले )-कारित्वान्न च पिण्डविशेषवाचकत्वात् । अत उपमानं स्वतन्त्रं प्रमाणम् । उपमानस्य महत्त्वमुपपादयन् भाष्यकारो 'वात्स्यायनः' प्राह—"यथा मुद्गस्तथा मुद्गपर्णी यथा माषस्तथा माषपर्णी-इत्युपमाने प्रयुक्त उपमानात् संज्ञासंज्ञिसम्बन्धं प्रतिपाद्यमानस्तामोषधीं भैषज्याय हरति" ।

शब्दः—न्यायदर्शनाभिमतेषु प्रमाणेषु शब्दो ह्यन्त्यं प्रमाणम् । न्यायसूत्रेऽभिहितम्—'आप्तोपदेशः शब्दः' । वस्तुनो यथार्थरूपवेत्ता 'आप्त' इति कथ्यते । लौकिकवैदिकत्वेन शब्दो द्विविधः । लौकिकानामाप्तपुरुषाणां वाक्यं 'लौकिकशब्द' किञ्च श्रौतं वाक्यं 'वैदिकशब्द' इति कथ्यते । वाक्यं पदसमूहो भवति । पदं स्वार्थबोधाय शक्यपेक्षि । न्यायविदः शक्तिं द्विविधां मन्यन्ते । ते च स्तः अभिधा लक्षणा च । सङ्केतग्रहमधिकृत्य दार्शनिकेषु मतभेदो दृश्यते । प्राञ्चो नैयायिका ईश्वरेच्छाम्—इदं पदमिममर्थं बोधयेत् सङ्केतत्वेनाभ्युपगच्छन्ति । नव्या पुरुषस्यापीच्छां सङ्केतत्वेनाङ्गीकुर्वन्ति । वस्तुतस्तु न्यायो जाति-व्यक्त्याकृतीस्तिस्रोऽप्येता सङ्केतत्वेन स्वीकुर्वाणो वाक्यार्थबोधाय आकाङ्क्षा योग्यतासत्तीरपेक्षते ।

वेदमुद्दिश्य नैयायिका मीमांसकाश्च सविस्तरं विचारान् प्रकटीकुर्वाणा प्राप्यन्ते । परं द्वयोरपि दार्शनिकयोर्विचारा न सन्त्यभिन्नाः । नैयायिका वेदस्य

पौरुषेयत्वं मन्यन्ते । ते सन्तीश्वरवादिनः । मीमांसका वेदस्यापौरुषेयत्वं प्रतिपादयन्ति । ते नेश्वरसत्तायां श्रद्दधते । जयन्तभट्टो वेदस्य पौरुषेयत्वसाधनायातितरां सकला युक्तीरुपन्यस्यन् दृश्यते । मीमांसा यदा वेदं नित्यं मन्यते तदा न्यायस्तमनित्यं वेदं । स आह वेदस्य कार्यत्वात् तस्य नित्यत्वं नोपपद्यते परं तस्यानित्यत्वं जगत्पदार्थानामनित्यत्वमिव न । बौद्धा जैनाश्च दार्शनिका वेदेष्वनेकदोषानुद्भावयन्त आयान्ते । न्यायो मीमांसा च तन्मतं कुशलतया निराकुरुतः । यद्यपि बौद्धा जैनाश्च वेद-प्रामाण्यं न मन्यन्ते परं ते शब्दमवश्यं प्रमाणत्वेनाभ्युपगच्छन्ति ।

**कार्य-कारणसिद्धान्तः**—'अनन्यथासिद्धनियतपूर्वभावित्वं कारणत्वं' किञ्च 'अनन्यथासिद्धनियतपश्चाद्भावित्वं कार्यत्वमि'त्येतच्च कारणकार्ययोर्लक्षणमाम्नातं न्यायशास्त्रे । कार्य-कारणसम्बन्धविमर्शनं दर्शनशास्त्रस्य महनीयं कार्यं मतम् । सिद्धान्तराणां संगतिर्हि एतेन कार्यकारणसम्बन्धेन निष्पद्यते तस्मात् कार्य-कारणसम्बन्धो हि महनीयो मतः । कार्यकारणसम्बन्धो भवति चतुर्विधः—'असतः सत उत्पत्तिः' इति बौद्धाः, 'सतः सदुत्पत्तिः' इति सांख्यशास्त्रिणः सत्कार्यवादिनः, 'सतः असत्कार्यस्योत्पत्ति' रिति विवर्तवादिनो वेदान्तिनोऽथच 'सत उत्पत्तेः प्राक् असत्कार्यस्योत्पत्ति'र्भवतीति न्यायशास्त्रिण आरम्भवादिन आचक्षते । न्यायदर्शनदृष्ट्या कारणे कार्यस्य सत्तोत्पत्तितः प्राग् न विद्यते । अत्र तत्कथनमिदम्—"कारणसामग्र्या उपयोगात् मृत्तिकायां घटनामकाभूतपूर्वस्य नवस्य पदार्थस्योत्पत्तिर्भवति" । नैयायिकमतेन कार्यमुपादानकारणादैकान्ततो भिन्नम् । यस्मात् सूत्रसमुदायात् पटो जायते तत्सूत्रमेव न पटोऽस्ति । पटः सूत्राद्भिन्नः पदार्थः । कार्यं कारणव्यापारात् प्राक् कारणे न सन्निष्ठते । एष सिद्धान्त 'आरम्भवादो' वा 'असत्कार्यवाद' इति कथ्यते ।

कारणं समवायि-असमवायि-निमित्तभेदात् त्रिविधम् । यत् समवेतं कार्यमुत्पद्यते तत्समवायिकारणम् । यथा पटं प्रति तन्तुः । यत्समवायिकारणप्रत्यासन्नमवधृतसामर्थ्यं तद् असमवायिकारणम् । यथा पटं प्रति तन्तुसंयोगः । यत्र समवायिकारणं न च असमवायिकारणं परमस्ति कारणं तन्निमित्तकारणं भवति । यथा पटं प्रति वेमादिकम् । असमवायिकारणे नैयायिकानां स्वरस्योद्भावनास्ति । अत्रेदं ज्ञेयं यद् द्रव्यं समवायिकारणं किन्तु गुणः क्रिया च 'असमवायिकारणं' भवति । निमित्तकारणं कार्यमुत्पाद्य पृथग् भवति ।

न्यायतत्त्वविचारः—न्यायसूत्रे प्रमेयस्य द्वादशविधत्वं दर्शितम्। तदित्थम्—१. आत्मा, २. शरीरम्, ३. इन्द्रियाणि, ४. अर्थः, ५. बुद्धिः, ६. मनः, ७. प्रवृत्तिः, ८. दोषः, ९. पुनर्जन्म, १०. फलम्, ११. दुःखम्, १२. अपवर्गः।

मुक्त्यर्थमेतेषां ज्ञानमपेक्षितमत एते 'प्रमेयाः' इति कथ्यन्ते। संशय-प्रयोजन-दृष्टान्त-सिद्धान्ता-वयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहा इत्येतानि मन्यन्यानि तत्त्वानि। द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायाभावाश्च सह प्रमेयेष्वन्तर्भवन्ति। इमेऽपि प्रमेया मता इति भावः। सर्वे प्रमेया न जडजगति वसन्ति। भौतिकानि द्रव्याणि तत्सम्बन्धिनो विषयाश्च तत्र वसन्ति। आत्मा, ज्ञानं, मन इत्येतानि न सन्ति भौतिकानि। न च कालो दिक् च। आकाशमस्त्येकापरिणामि भूतम्। जडजगदिदं भूत-(पृथिव्यप्तेजोवायु)-निर्मितम्। इमानि चत्वार्यपि तत्त्वानि परमाणुरूपाणि। परमाणवः सन्ति नित्या अपरिणामिनश्च। आकाश-दिक्कालानां नित्यत्वमनन्तत्वं च मतम्। परं तत्र न परमाणुजन्यता। विभुत्वं तेषां स्वरूपम्। परमाणुसंयोगेन निर्मितसर्ववस्तुजातम्, तद्गतगुणाः, तदीय-पारस्परिकसम्बन्धः, जीवः, शरीरम्, इन्द्रियाणि, तद्-द्वारेण ज्ञेयवस्तूनाञ्च गुणाः—इत्येतानि सर्वाण्यपि जडजगदन्तर्गतानि सन्ति। आकाशकालदिशश्च तथा तदीयविभिन्नरूपान्तराण्यपि जडजगद्गतानि मतानि।

जीवात्मा मोक्षश्च—न्यायवैशेषिकमतेन आत्मा ईदृशः पदार्थोऽस्ति यत्र बुद्धिः, ज्ञानं, सुखं, दुःखं, रागः, द्वेषः, इच्छा, कृतिः, प्रयत्नश्च वर्तन्ते। न सन्तीमे गुणाः जडजगति। प्रतिशरीरम् अस्ति भिन्नभिन्न आत्मा। तद्गतानुभवानां सर्वथैव पार्थक्यात्। आत्मा विभुरविनाशी नित्यश्चास्ति। अस्ति च जीवात्मा-रूपः। अत्र दर्शनान्तराणां वैमत्यं दृश्यते। चार्वाकदर्शनं चैतन्यविशिष्टं शरीरमात्मेति मन्यते; बौद्धदर्शनं मानसिकानुभवानां विभिन्नप्रवृत्तीनाञ्च संघाताद् भिन्नो न कश्चिदात्मेति ब्रवीति। अद्वैतवेदान्तस्याभिधानमेतद् यदात्मास्त्येक एव। स नित्यः स्वप्रकाशचैतन्यम्। न स ज्ञाता न च ज्ञेयः। न च अहमेव। विशिष्टाद्वैतमतेनात्मा न केवलं चैतन्यमस्ति च स ज्ञाता। अतः सः 'अहम्' इति वक्तुं शक्यः।

न न्यायवैशेषिकमतेन शरीरम्, इन्द्रियाणि वा, मनोविज्ञानप्रवाहो वा आत्मा। तन्मतेन तु शुद्धं चैतन्यं नाम न किमपि वस्तवेतादृशं यन्न स्यात् केनापि ज्ञात्रा केनापि च ज्ञेयेन सार्धं सम्बद्धम्। चैतन्यं हि आश्रयद्रव्यापेक्षि।

तस्मान्नास्त्यात्मा शुद्धं चैतन्यम्। आत्मास्त्येकं द्रव्यम्। तस्य च द्रव्यस्यास्ति गुणश्चैतन्यम्। नास्त्यात्मा ज्ञानम् अपि तु सोऽस्ति ज्ञाता। अस्ति सः अहङ्काराश्रयः किञ्च भोक्ता। यद्यपि ज्ञानं वा चैतन्यमात्मनो गुणत्वेन वर्तते परं न तौ गुणावात्मनः स्वरूपलक्षणत्वेन मतौ स्तः। आत्मनि चैतन्यस्य सञ्चारस्तदैव सञ्जायते यदा तस्य मनसा सह, मनस इन्द्रियैः सह, इन्द्रियाणां बाह्यवस्तुभिश्च सह भवति संयोगः। एवंविधसंयोगाभावे नात्मनि चैतन्यस्योदयः सम्भवः।

**मोक्षः**—नैयायिका दुःखस्यात्यन्तिकीं निवृत्तिं मोक्षं मन्यन्ते। 'दुःखानि हि एकविंशतिसंख्याकानि' इति वदन्ति ते तथाहि—शरीरम्, षडिन्द्रियाणि, षड्विषयाः, षड्बुद्धयः, सुखं दुःखञ्च गौणमुख्यभेदात्। एतेभ्यः पूर्णतया मुक्त्यां प्राप्तायां सत्यां मोक्षः (अपवर्गः) लभ्यते। तदा आत्मनो दुःखानामेव न सुखानामपि समाप्तिर्भवति। न ततः कीदृश्यप्यनुभूतिरवशिष्यते। मुक्त आत्मा सुख दुःखेभ्यः परस्ताद् भवन् ऐकान्ततोऽचेतनः सञ्जायते। एष च मोक्षः श्रवण-मनन-निदिध्यासनोपायावलम्बनेन प्राप्यो जायते। नैयायिकानामपवर्गो यदि सुखरहितस्तदा वेदान्तिनां स सुखपूर्णः।

**ईश्वरः**—न्यायदर्शनमीश्वरवादि अस्ति। न्यायसूत्रकर्ता गौतमो ब्रूते यद् ईश्वरो जीवकर्मानुरूपं जगत् सृजति। जीवो यादृशं कर्माचरति स तत्कर्मानुकूलमेव फलमपि प्रददाति। सृष्टिः प्रलयश्च तदिच्छाधीनः। सः शून्येन संसारं न करोत्यपि तु नित्यपरमाणु-दिक्-कालाकाशमनआत्मभिस्तं रचयति। स च संसारस्य निमित्तकारणं न चोपादानकारणमपि। तस्य सन्ति षड्गुणाः—आधिपत्यं, वीर्यं, यशः, श्रीः, ज्ञानम्, वैराग्यम्। सः सर्वज्ञोऽस्ति। सर्वज्ञ एव परमाणुसदृशसूक्ष्मतमसत्तानामपरोक्षज्ञानं लब्धुमर्हति।

प्रतीच्याः शंसन्ति केचन ईश्वरो जगत उपादानानां केवलं संयोजक एव न, उपादानानां स्रष्टापि वर्तते। नैयायिका भारतीया वदन्ति न स उपादानस्रष्टा केवलं संयोजकोऽस्ति।

**उपसंहृतिः**—न्यायदर्शनस्य शास्त्रीया विवेचनात्मकपद्धतिर्नितरां प्रशंसनीयास्ति। भारतीयदर्शनसाहित्यमेतदर्थं न्यायदर्शनस्यास्ति ऋणि। प्रमाणनिरूपिणी व्याख्यां मीमांसाञ्च विधाय तथाऽनि तत्त्वानि उद्भावयामास येषां प्रयोगं तु दर्शनान्तराण्यपि कुर्वाणानि लक्ष्यन्ते। हेत्वाभासानां सूक्ष्मं विवरणं समुपस्थाप्य तद् अनुमानं सर्वथैव दोषनिर्मुक्तं कुर्वत् प्राप्यते। गौतमस्त्रुटिनिर्णयादिकं कर्म

यित्वा परमर्मभेदने स्वममयमयापयदिति यद् आचार्यहेमचन्द्र आह तत्र न्याय-मञ्जरी उत्तरति—

दुःशिक्षितकुतर्कांशलेशवाचालिताननाः ।
शक्याः किमन्यथा जेतुं वितण्डाटोपपण्डिताः ।
गतानुगतिको लोकः कुमार्गं तत्प्रतारितः ।
मागादितिच्छलादीनि प्राह कारुणिको मुनिः ॥

न्यायदर्शनस्य बहुतत्त्ववादित्वाद् विद्वांसस्तदीयं तत्त्वज्ञानं नाधिकं सन्तोष-जनकं मन्यन्ते । त इदमपि वदन्ति यन्न्यायदर्शनमीश्वरं जगतो निमित्तकारणं स्वीकृत्य वस्तुतस्तस्मिन् मानवीयभावगतदौर्बल्यानि सन्निवेशयति । य ईश्वर उपादानापेक्षी सः केन प्रकारेण सर्वशक्तिमान् परमस्वतन्त्र इति वक्तुं शक्योऽस्ति । आत्मा न स्वभावतश्चेतन इत्येतदपि कथनं तदीयं न युक्तिसहम् । एवमेव मुक्त्यामात्मनश्चेतनाहीनत्वं किञ्च मुक्तिः सुखशून्यास्तीति यस्तदीयः सिद्धान्तः सोऽपि नादरास्पदम् । अस्तु तावत् ।

मानव-जीवनम्प्रति न्यायदर्शनस्य तद्विध ईश्वरवादो वस्तुतः शिक्षाप्रदः शान्त्याधायकश्च । तस्य सर्वथैव व्यावहारिकत्वात् मानवजीवनं यथा तदुपकरोति न तथा दर्शनान्तराण्युपकर्तुं प्रभवन्ति ।



( ११ )

## मीमांसा

'मीमांसा' इत्येतन्नामकं दर्शनं वैदिकविधि-निषेधात्मकवाक्यानामर्थावबोधन-प्रयोजनेन विरोधिवाक्ययोर्मध्ये संगतिप्रदर्शननिमित्तेन च व्याख्याप्रणालीं निर्धारयत् कर्मकाण्डविषयकसिद्धान्तान् विविधाभिर्युक्तिभिः प्रतिपादयत् कर्मकाण्डं परिपुष्णाति।

'मीमांसा' इत्येतत्पदं जिज्ञासार्थकमानधातोः 'मानेर्जिज्ञासायाम्' इत्येतेन वार्तिकेन निष्पद्यते। पदमिदं सामान्यतस्तु तदेव दर्शनं बोधयति यत्र यज्ञादि-कर्मसम्बन्धिनो विचारा विराजन्ते परं संस्कृतवाङ्मये कर्मकाण्डपरकं दर्शनं 'पूर्व-मीमांसा' किञ्च ज्ञानकाण्डपरकं दर्शनम्, 'उत्तरमीमांसा' इति प्रोच्यते। दर्शनस्यास्य प्राचीनतरं नाम 'न्याय' इत्येतदस्ति। न्यायकणिका-न्यायमाला-विस्तरादिग्रन्थानामेतद्दर्शनविषयकाणां नामान्येतत् तथ्यमेव प्रकटीकुर्वन्ति यत् पुरातनः कालो दर्शनमिदं न्याय इत्येतेन नामधेयेन व्यपदिशति स्म।

महर्षिर्जैमिनिर्दर्शनमिदं प्रणिनाय। परम् इतिहासकाराणां मतमिदं यज्जैमिनिर्नास्य दर्शनस्य प्रवर्तकः। ततः प्रागपि आत्रेय—आश्मरथ्य—कार्ष्णाजिनिप्रभृतयः कतिपय आचार्या अजनिषत। किन्त्वेषामाचार्याणां सूत्राणि न प्राप्यन्ते। आचार्यजैमिनिकृते मीमांसादर्शने आचार्य उपवर्षः वृत्तीर्लिलेख। अयमेव मीमांसायाः प्राचीनो वृत्तिकार इत्येतद् विदुषां कथनमस्ति। शबर-स्वामिनो मीमांसादर्शने हि परमविस्तृतं प्रामाणिकञ्च भाष्यं वर्तते। तद्भाष्यं-विपुलपाण्डित्यपेशलं भाष्यं विद्यते। दर्शनस्यास्य प्रकाण्डपण्डित आचार्यकुमारिलभट्टः शाबरभाष्ये श्लोकवार्तिक-तन्त्रवार्तिक-टुप्टीकेत्येतन्नामकान् त्रीन् वृत्ति-ग्रन्थान् अजग्रन्थत्। यद्यप्यस्मिन् दर्शने बहवष्टीकाकारा अभूवन् परं तेषु कुमारिलभट्टः प्रभाकरगुरुश्च मुख्यौ स्तः। इमौ तावाचार्यौ बभूवतुः याभ्याम-स्य मीमांसकानां जगति भाट्टसम्प्रदायः प्राभाकरसम्प्रदायश्च प्रावर्तताम्। मीमांसाक्षेत्रे मुरारिमिश्रस्यापि नाम तृतीयसम्प्रदायप्रवर्तकत्वेन प्रथितमस्ति। मुरारिमिश्रस्य ग्रन्थो न साम्प्रतमवाप्यते। गङ्गेश उपाध्यायो वर्धमानोपाध्यायश्च स्वग्रन्थेषु तन्मतमुल्लिखन्तौ प्राप्येते।

यद्यपि न्यायदर्शनमिव मीमांसापि उपमानं प्रमाणमङ्गीकरोति परं सा तद्-ग्रहणमन्यस्मिन् एव अर्थे करोति । तन्मतेन उपमानजन्यं ज्ञानं तदोत्पद्यते यदा दृष्टपूर्ववस्तुसदृशं किमपि वस्त्वन्तरं विलोक्यावधार्यते इदं यत् स्मृतं वस्तु प्रत्यक्षवस्तुसममेव । यथा गोसदृशं गवयं दृष्ट्वा दृष्टपूर्वगौः स्मृतिमुपैति निश्चीयते च यदेष दृग्गोचरो गवयो गौरिवैव । नेदमुपमानजन्यं ज्ञानं प्रत्यक्षज्ञानेऽन्तर्भवितुमर्हति सदृशवस्तुनो गवादिकस्य तदानीं प्रत्यक्षज्ञानाभावात् । नेदं स्मृतिजन्यं ज्ञानमपि । यद्यपि तद्विषयस्य ( गवादिकस्य ) ज्ञानं प्राग् जातं परं वर्तमानविषयेण ( गवयादिना ) सादृश्यं तदानवगतमेवासीत् । नेदं ज्ञानमनुमानजन्यमपि । एव गवयो गौरिव तस्माद् गौश्चैव गवय इव इत्येवंविधमनुमानं कर्तुं सर्वेऽपि पदार्थाः स्वसदृशपदार्थं इव भवन्तीत्येतादृशव्याप्तिसूचकं वाक्यमपेक्ष्यते परं तद्विधव्याप्तिसम्बन्धस्य व्यवहार एव न अतो नेदं ज्ञानं ( गौर्गवय इव भवतीति ) अनुमानजन्यमपि ? नेदं ज्ञानं शब्दप्रमाणादपि समुपलभ्यमतः प्रमाणमिदं पृथगेव ।

उपरि यदप्युपमानप्रमाणमुद्दिश्य प्रोक्तं तन्नवीनमीमांसकानामेव मतम् । शबरस्वामिपादानां विचारस्त्वस्मिन् विषये भिन्नः । उपमानस्वरूपं तदीयं प्रायेण तदेव पाश्चात्यतर्कशास्त्रिग्रामभिमतम् । ते भणन्ति-यथा "अहमनुभवामि माम्" तथैव "अन्येऽपि स्वसद्भावमनुभवन्ति" इत्येवंविधं ज्ञानं यदाऽस्य भवति तदेव 'उपमान' मिति कथ्यते ।

मीमांसायां वस्तुतः 'सादृश्यं' स्वतन्त्रपदार्थत्वेन मतम् । न तद् गुणगतं तत्र । तत्रोक्तमिदं यद् द्वयोर्गुणयोर्मध्ये सादृश्यं तु स्यातुं शक्नोति परं गुणो न गुणान्तरे तिष्ठति । सादृश्यं न सामान्यवत् । अतो न तत् सामान्येऽप्यन्तर्भवति । सादृश्यस्य ऐक्यार्थावाचकत्वात् ।

मीमांसायाः कार्यमस्ति वेदस्य प्रामाण्य-स्थापनम् । तस्मात् तत्र शब्दप्रमाणमतितरां महत्त्वमश्नुते । अनाप्तजनाकथितं सार्थकं वाक्यं ज्ञानकारकं भवति । इदमेव शब्दप्रमाणमित्युच्यते । तद् भवति पौरुषेयापौरुषेयभेदेन द्विविधम् । आप्तजनोक्तं वाक्यं पौरुषेयं वेदोक्तञ्च वाक्यमपौरुषेयमिति कथ्यते । अपौरुषेयं वेदवाक्यमपि द्विविधम्—सिद्धार्थं विधायकञ्च । सिद्धार्थवाक्येन कस्यापि विषयस्य सत्ता ज्ञायते । विधायकवाक्येन कस्याश्चन क्रियायाः कृते विधिराज्ञा वा सूच्यते । यज्ञादिकर्मसम्पादनार्थं कर्तव्यस्य निर्देशकं विधा-

यद् वैदिकं वाक्यं मीमांसाया विचारेण अपौरुषेयं स्वतः प्रामाण्यञ्च वर्तते। तस्या अत्राभिधानमिदं यद् वेदानां विधिवाक्यत्वादेव, तेषां नितरां विशिष्टं महत्त्वम्। अत्र तु सा एतावदेवाभिधाय न तुष्यति सा कथयतीदमपि यत् क्रियाहेतोरेव वेदवाक्यस्योपादेयताऽस्ति। चेत् सिद्धार्थकं वाक्यं कस्यचन विधायकस्य वाक्यस्य न साहाय्यकृत्, तदा न तस्य किमपि महत्त्वम्। आत्मामरत्वादिविषयकाणि यान्यपि सिद्धार्थकानि वाक्यानि सन्ति तानि सर्वाण्यपि अवश्यमेव यागादिकर्म-विधायकानि वाक्यानि परिष्वजन्ते। तानि परोक्षभावेन विहितेषु कर्मसु जनानां प्रवर्तने निषिद्धेषु कर्मसु तेषां निवर्तने सहायकानि सिद्ध्यन्ति। मीमांसाया एषा प्रवृत्तिः आधुनिकं व्यवहारवादं स्मारयति। व्यवहारवादस्य मान्यतेयं यत् सर्वविधस्यापि लौकिकस्य वैज्ञानिकस्य दार्शनिकस्य वा ज्ञानस्य मूल्यं कार्यसम्पादनसहायकत्वमेव नान्यत् किमपि। मीमांसाया मतेन च वैदिकस्य ज्ञानस्य मूल्यं क्रियाविधिरेव। तस्माद् यदि मीमांसाशास्त्रीयो व्यवहारवाद इति नाम्नोच्चारिता स्यात्, तदोचितमेव।

मीमांसा नेश्वरे विश्वसिति तद्दृष्ट्या नेश्वरो जगतः कर्ता न च तस्य संहर्ता। जगत्तु नित्यम्। वेदाश्च न सन्ति ईश्वरकर्तृकाः। वेदानामपौरुषेयत्वमधिकृत्य तदभिधानमिदम्—वर्णो नित्यः। श्रूयमाणो ध्वनिः केवलं तदभिव्यक्तिः। श्रुतो वा उच्चरितो ध्वनिर्यदि याथार्थ्येन शब्दः स्यात् तदैकस्यैव शब्दस्य दशकृत्वमुच्चारितत्वात् स एक एव शब्दो दशशब्दानुभूतिजनक इत्येतदङ्गीकरणीयं भवेत्। परमनुभूतिस्तु नैवंविधा। अनुभूतिस्तु एकस्यैव शब्दस्य भवति तेन शब्देन। कामं स्यात् तदुच्चारणमनेकवारम्। तेन सिद्धं यदुच्चारणं न शब्दं जनयति। तत्तु तद्रूपमेवाविर्भावयति। उच्चारणानवलम्बितत्वादतः शब्दो नित्यः। अर्थेन सममेव शब्दस्य स्वाभाविकः सम्बन्धः। शब्दार्थयोर्मध्ये समवायसम्बन्धः किञ्च तत्रान्वयव्यतिरेकित्वं विद्यते। यत्र शब्दस्तत्रार्थो यत्रार्थस्तत्र शब्दः। मीमांसासूत्रे प्रोक्तम्—"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः"।

वेदस्य नित्यशब्दसमूहात्मकत्वात् तस्य नित्यत्वं सिद्ध्यति। नित्यत्वाच्च तस्य, तस्यापौरुषेयत्वमपि सिद्धं भवति। न च ऋषयोऽपि वेद-कर्तारस्ते तु वैदिकमन्त्राणां द्रष्टारो व्याख्यातारो भिन्न भिन्नवैदिकसम्प्रदायप्रवर्तयितारश्च सन्ति। अतः वेदस्यापौरुषेयत्वमेव प्रमाणीभवति।

शब्द-प्रमाणजन्यं ज्ञानमनुमानान्तर्गतमित्येतत्कथनं न मीमांसा सहते। मा तु मन्यते यद् ज्ञानमात्रं स्वतः प्रामाण्यम्। यस्याः कारणसामग्र्याः ज्ञानमुत्पद्यते तस्यामेव ज्ञानस्य याथार्थ्यमपि सन्निहितमतो हि प्रमाणान्तराणीव शब्दप्रमाणमपि न केवलं ज्ञानस्य साधनमपि तु तद्ज्ञानस्य यथार्थताया अपि प्रमाणम्।

मीमांसा अर्थापत्तिप्रमाणमपि स्वीकरोति। मीमांसका अर्थापत्तेः प्रमाणत्वपक्षे वलीयसीर्युक्तीरवतारयन्तो लभ्यन्ते। ते दृष्टार्थापत्तिः श्रुतार्थापत्तिरित्येतद्भेदद्वयमर्थापत्तेः प्रतिपादयन्ति। यया दृष्टार्थ उपपन्नतां प्रपद्यते सा दृष्टार्थापत्तिर्यया च श्रुतार्थ उपपन्नतां प्रयाति सा श्रुतार्थापत्तिर्भवति। भावोऽयं यद् दृष्टार्थापत्त्यां वस्तुन उपपत्त्यै अर्थान्तरं कल्प्यते (यथा पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र रात्रौ भुङ्क्ते इत्यस्यार्थान्तरस्य कल्पना क्रियते) श्रुतार्थापत्त्यां वस्तुन उपपत्त्यै शब्दान्तरं कल्प्यते (यथा 'पिधेहि' इत्येतत्पदं निशम्य 'द्वारमि'ति पदं कल्प्यते) अनुपपद्यमानार्थदर्शनात् तदुपपादकीभूतार्थान्तरकल्पनम् अर्थापत्तिरित्येतदर्थापत्तेर्लक्षणं प्रदर्शयन्तो मीमांसकविद्वांसस्तस्याः प्रमाणान्तरेषु अनन्तर्भावत्वं साधयन्ति बलवद् युक्तिसमुपस्थानपुरस्सरम्।

मीमांसकेषु भाट्टा अनुपलब्धिं प्रमाणं स्वीकुर्वन्ति परं प्राभाकरा अभावमधिकरणरूपत्वेन मत्वा न तत्सत्तां स्वतन्त्रां मन्यन्ते। भाट्टमीमांसकानां किञ्च अद्वैतवेदान्तिनां मतमिदम्—कस्यचन विषयस्य अभावो येन ज्ञानविषयीक्रियते तदनुपलब्धिप्रमाणमिति कथ्यते। अत्र घटस्याभावोऽस्तीत्येतज्ज्ञानं केन प्रकारेण भवितुं शक्यम्? न तादृशं ज्ञानं प्रत्यक्षज्ञानमिति वक्तुमुचितम्। अभावस्तु नैवंविधः पदार्थो य इन्द्रियैः प्राप्यः स्यात्। घटस्तु चक्षुरिन्द्रियसन्निकृष्टो भवितुमर्हति परं घटाभावो न। घटाभावस्य ज्ञानमनुपलब्धिहेतोर्भवति। तस्मादनुपलब्धिः स्वतन्त्रं प्रमाणमस्ति। तस्याः स्वतन्त्रप्रमाणत्वोपपादनार्थं तेषां कथनमस्ति यत् यथानुपलब्धिप्रमाणस्य प्रत्यक्षप्रमाणान्तर्गतत्वमसम्भवं तथैवानुमानप्रमाणेऽपि न तस्यान्तर्भावो भवितुं शक्नोति 'घटस्याभावो घटादर्शनादनुमीयत' इति चेत् कथनं तर्हि तन्नोचितम्। अनुमानन्तु तदैव सम्भवमभविष्यत् यदा अनुपलब्ध्यभावविषयकस्यासिसम्बन्धो ज्ञातोऽभविष्यत्। वस्तुस्थितिर्नैतादृशी। चेद् यस्य वस्तुनो दर्शनं न भवति तस्याभावोऽस्ति इत्येतद्विधं ज्ञानं विदितं भवतीति स्वीक्रियेत तदा तु आत्माश्रयदोष एवापतेत्।

ज्ञानमिदं शब्दोपमानयोरपि नान्तर्भूतं भवितुं शक्यम्। तस्य शब्दाद्य-वयवत्वात् असादृश्यात्मकज्ञानत्वाच्च।

मीमांसका यथा प्रमाणानि गम्भीरतया विचारितवन्तस्तान्यधिकृत्य स्वकीयं मतं प्रकाशितवन्तस्तथैव ते महत्त्वपूर्णं प्रामाण्यवादमपि अतिसूक्ष्मतया विमृशन्ति स्म। ते प्रामाण्यं स्वतः अप्रामाण्यञ्च परत इति मन्यन्ते। स्वतः प्रामाण्यवादिनां मीमांसकानां मतेन स्वतः प्रमाणस्य लक्षणमिदम्—'ज्ञानग्राहकातिरिक्तानपेक्षत्वं स्वतस्त्वम्' इति। भावोऽयम्—ज्ञानग्राहकसामग्र्यतिरिक्ता सामग्री प्रामाण्यग्रहाय यत्र नापेक्षिता भवति तत् स्वतः प्रमाणमिति कथ्यते। अत्र ( स्वतः प्रमाणे ) ज्ञानस्य तद्गतप्रामाण्यस्य च ग्रहणमेकयैव सामग्र्या भवति। परतस्त्वन्तु नैक्या सामग्र्या समुत्पद्यते। तत्र तु ज्ञानग्राहिका सामग्री अन्या भवति; प्रामाण्यग्राहिका चान्या। तल्लक्षणमिदम्—'ज्ञानग्राहकातिरिक्तापेक्षत्वं परतस्त्वम्'।

मीमांसकानां मते ज्ञानं प्रामाण्यञ्च इत्येतदुभयमपि एकैव सामग्री गृह्णाति। सा चैका सामग्र्यस्ति—'ज्ञातताऽन्यथानुपपत्तिप्रसूता अर्थापत्तिः'।

नैयायिकानां मते ज्ञानग्राहिका सामग्री 'अनुव्यवसाय' इति कथ्यते। प्रामाण्यग्राहिका च सामग्री 'प्रवृत्तिसाफल्यमूलकानुमान'मस्ति।

मीमांसकानां कथनमिदम्—

"चक्षुरिन्द्रियसन्निकर्षमूलं दूरस्थं जलमालोक्य 'तत्र जलमस्य' मित्येतज्ज्ञानं यथार्थमेव मत्वा जना जलार्थं तत्र गच्छन्ति। न तस्मिन् ज्ञाने सन्देहस्य वा अयथार्थतायाः सद्भावो वर्तते। ज्ञानं तु यथार्थमेव भवति। न तस्य सत्यतायां सन्देहस्य प्रवृत्तिरिति"। अस्मिन् सम्बन्धे प्रभाकरस्य तु स्पष्टमेवाभिधानं यज्ज्ञानमस्ति न तन्मिथ्या भवितुमर्हति। उभयमपि तद् द्वितयं परस्परविरुद्धम्। ज्ञानत्वात् तद्यथार्थमेव। न तन्मिथ्या भवितुं शक्यम्। कुमारिलभट्टोऽप्येवमेवाह।

नैयायिकानामिदं कथनमेतत्—

इन्द्रियसंयोगाद् जलस्य ज्ञाने जाते तदर्थं गमनकारिणां न जनानां मनसि जल-प्राप्तिविषयकः सन्देहोऽपि स्थातुमर्हति। 'सम्भवतस्तत्र जलं प्राप्तं न स्यादि-त्येतद्विधः सन्देहोऽपि सम्भवो भवितुं शक्नोतीति। दूरस्थं जलमासाद्यैव ते जल-विषयकयथार्थज्ञानं लब्धुं शक्नुवन्ति। यावज्जलं न प्राप्यते न तावज्जलज्ञानस्य सत्यता सुनिश्चिततया जायते। तस्मात् प्रथमं 'जलमिद'मित्येताहशमयथार्थं ज्ञानं भवति ततश्च 'इदं जलमेव' इत्येतद्विधं यथार्थज्ञानं जायते। प्रथममयथार्थं ज्ञानं

'व्यवसाय' इति द्वितीयञ्च यथार्थज्ञानम् 'अनुव्यवसाय' इति कथ्यते। इदं हि कथयन्तस्ते वदन्ति यत् ज्ञानग्राहिका सामग्री अन्या भवति प्रामाण्यग्राहिका च सामग्री अन्या। एतत्सिद्धान्तस्वीकर्तृत्वात् नैयायिकाः परत:प्रामाण्यवादिन इति निगद्यन्ते।

मीमांसकानां स्वतःप्रामाण्यवादित्वे कारणमिदम्—

मीमांसका वेदं नित्यम् अपौरुषेयं स्वतःप्रमाणञ्च मन्यन्ते। तेषां मते वेद एव एकमात्रं प्रमाणम्। अत एव ते सन्ति स्वतःप्रामाण्यवादिनः। स्वतःप्रामाण्यवादेनैव वेदस्य नित्यत्वापौरुषेयत्वादिकं सिद्धं भवितुमर्हति। स्वतःप्रामाण्यवादस्यास्वीकरणेन न कदापि वेदस्य नित्यत्वादिकं स्थातुं शक्नोति। इदमेव कारणं यन्मीमांसका यदा प्रत्यक्षादिप्रमाणविषयिण्यां चर्चायां प्रवर्तन्ते तदापि ते तत्प्रामाण्यसम्बन्धेऽपि वेदप्रामाण्यमेव पुरस्कृत्य स्वतःप्रामाण्यमुररीकुर्वन्ति। वस्तुतः शब्दप्रमाणमेव मीमांसकानामभिमततमं प्रमाणं न च प्रत्यक्षादिप्रमाणानि।

भ्रमज्ञानं मीमांसकैर्बहुधा विचारितम्। प्रभाकरमतेन समस्तान्यपि ज्ञानानि भवन्ति यथार्थानि। शुक्तिरज्ज्वादौ रजत-सर्पादिकविषयको यो भवति भ्रमस्तत्र प्रभाकरगुरवो वदन्ति—'इदं रजतम्' इत्येवंविधे भ्रमे केवलमिदमंशो प्रत्यक्षज्ञानगोचरो जायते। चक्षुः इदम् इत्येतेन बोध्यमानस्य पदार्थस्यैवास्तित्वं संसूच्य विरमति। नास्ति रजतांशः प्रत्यक्षस्य विषयः। तत्र तस्य पदार्थस्याविद्यमानत्वात्। तत्र तु अन्यत्र दृष्टस्य रजतस्य स्मरणमात्रं सञ्जायते उभयमपि सत्यरूपं स्वस्वक्षेत्रे। स्मृतिप्रमोषादनुपलभ्यमानस्य 'इदं-पदार्थ'इत्येतस्य स्मर्यमाणस्य च 'रजतपदार्थ'स्यान्तराले पारस्परिकभेदग्रहणाभावात् तादृशो भ्रमः समुत्पद्यते। अत्र कारणं वस्तुनो ज्ञानयोर्विषययोश्च विवेकाग्रहः। शुक्ति-रजतयोर्ज्ञानद्वयमपि स्वस्वविषये यथार्थमेव"। 'विवेकाग्रह' इत्येतत् पदं यदर्थं प्रभाकरपादाः प्रयुञ्जन्ति तदर्थमेव 'अख्याति' इति पदं प्रयुज्यते।

कुमारिलस्य मुरारिमिश्रस्य च भ्रमज्ञानमधिकृत्य तदेव मतं यन्नैयायिकानामस्ति। शुक्तिविषयकं ज्ञानं शुक्तित्वप्रकारकं भवति रजतविषयकं ज्ञानञ्च रजतत्वप्रकारकम्। शुक्तित्वं किञ्च रजतत्वं धर्मविशेषत्वेन मतम्। स धर्मविशेषः शुक्तौ रजते च समवायसम्बन्धेनोपतिष्ठति। न स साम्यं कथमपि स्पष्टु शक्यः। या च शुक्तौ रजतज्ञानप्रतीतिर्जायते सा अन्यथाख्यातिरस्ति अन्यस्मिन् विषयेऽन्य-

विधज्ञानत्वात्। भट्ट मीमांसका अन्यथाख्यातिं विपरीतख्यातिरित्येतेन नाम्ना व्यवहरन्ति। अकार्यस्य कार्यतया मानं यज्जायते तत्कारणात् विपरीतख्यातिरित्येतन्नामापि सार्थकम्।

प्रत्यक्षज्ञानं यथार्थमित्येतन्मत्वा मीमांसाजगत् तद्गतान् समस्तानपि विषयान् सत्यान् मन्यते। न सा बौद्धानां शून्यवादं वा क्षणिकवादं किञ्चाद्वैतवेदान्तिनां मायावादमेवाद्रियते। सा स्वर्गं नरकम्, आत्मानं वैदिकयज्ञ-देवनाश्च प्रमाणान्तराधारेण स्वीकुरुते। तेषां सर्वेषामप्यस्तित्वं तदभिमतम्। सा मन्यते यद् आत्मा परमाणवश्च सन्ति नित्या अविनाशिनश्च पदार्थाः। सृष्टिरचना कर्मनियमापेक्षिणी। संसार एभिस्तत्त्वैर्विनिर्मितोऽस्ति—१. शरीरम् यत्र स्थित्वा जीवात्मा स्वानि कृतानि कर्माणि उपभुनक्ति। २. ज्ञानेन्द्रियाणि, कर्मेन्द्रियाणि च—सुख-दुःखभोग-साधनानि। ३. सांसारिकाणि वस्तूनि-भोग्यविषयाः। न मीमांसास्तीश्वरापेक्षिणी। यद्यपि केचन मीमांसका वैशेषिका इव सन्ति परमाणुवादिनः परं मीमांसकानां मतेन परमाणवो नेश्वरेण सञ्चालिता भवन्ति। कर्मणां नैसर्गिकनियमा एव तांस्तथा प्रवर्तयन्ति। तस्मादेव संसारोऽयं तादृशः सञ्जायते यादृशो हि कर्मफल-भोगाय जीवात्मनामपेक्षितोऽस्ति।

तत्त्व-विचारो हि मीमांसायाः मीमांसां वस्तुवादिनामनेकतत्त्ववादिनाञ्च मध्ये आसयति।

कारण-कार्यसम्बन्धनिमित्तेन मीमांसा शक्तिवादमङ्गीकुरुते। सा मन्यते यद्बीजे भवति अदृष्ट-शक्तिः। तत्साहाय्येनैव बीजमङ्कुरमुत्पादयितुं क्षमते। बाधितायां च सत्यां तस्यां, सा शक्तिः अङ्कुररूपं कार्यं जनयितुं न प्रवर्तयति बीजम्। सा हि शक्तिः प्रकाश-शब्दानलादौ भास्वरतार्थबोधकतादहनादिरूपाणि गृहीत्वा सन्निविशते।

न्यायशास्त्रिणो नेमामदृष्टशक्तिं मन्यन्ते। तन्मतं यददृष्टशक्तेरभ्युपगमनमपेक्ष्यत एव न; बाधाया अभावे कारणं कार्यमुत्पादयति, सत्याञ्च तस्यां न। इह मीमांसका वदन्ति यदि कार्यं बाधायां सत्यां नोत्पादयितुं क्षमते कारणं तदा तु सिद्ध्यतीदं यत् कारणं बाधाया अभावार्थं सामर्थ्यान्यां शक्तिमपेक्षते तदा बीजे हि क्षमता कापि शक्तिरदृष्टेत्येतन् कथं नाङ्गीक्रियते? अभावपदार्थं क्रियोत्पादकत्वतः सद्भावाङ्गीकरणात्तु भाव एव शक्तेरङ्गीकरणं समीचीनतरम्।

इमामदृष्टशक्तिमवलम्ब्य मीमांसा महतीमेव समस्यां समाधत्ते। कर्मणोऽस्तित्वाभावेऽद्यतनं कृतं यज्ञादिकं कर्म समाप्ते सति वर्तमाने जीवने लोकान्तरे केन प्रकारेण फलं दातुं क्षमम् इत्यत्र मीमांसा मूते—"एतस्मिन् लोके कृतं कर्म अदृष्टशक्तिं प्रादुर्भावयति—सा हि 'अपूर्वम्' इत्येतेन नाम्ना विश्रुतास्ति। यथासमयं सा अदृष्टशक्तिः ( अपूर्वम् ) फलति। अखिलान्यपि लौकिकानि वैदिकानि वा कर्माणि फलयन्ति भवन्तीत्येषोऽस्ति व्यापको नियमः। अपूर्वविषयकः सिद्धान्तस्तस्यैव व्यापकस्य नियमस्यास्यांशोऽन्यतमः।

मीमांसाया आत्मविषये विचारोऽयम्—

आत्मा कर्तास्ति भोक्ता च। स व्यापको भूत्वा प्रतिशरीरं भिन्नः। ज्ञानसुखदुःखेच्छादिगुणास्तत्र समवायसम्बन्धेन सन्तिष्ठन्ते। नास्ति स ज्ञानसुखादिस्वरूपः। स नित्योऽविनाशी च। निधनानन्तरं स प्राक्तनजन्मनि कृतानि कर्माणि भोक्तुं परायणः सञ्जायते। नास्ति हि चैतन्यमात्मनोऽनौपाधिकगुणोऽपि तु औपाधिकगुण एव। अवस्थाविशेषे समुत्पद्यतेऽवश्यं स चैतन्यात्मौपाधिकगुणः। सुषुप्तौ मोक्षे चात्मा नानेन गुणेनानुस्रियते। इन्द्रिय-विषय-संयोगरूपोत्पादककारणाभावात्। यावन्तो जीवास्तावन्त एवात्मानः। जीवात्मानो बद्धा भवन्ति मुक्ताश्च। आत्मविषयका विचारा मीमांसायाः प्रायेण त एव ये सन्ति न्यायवैशेषिकादिदर्शनानाम्।

आत्मज्ञानमधिकृत्य मीमांसकपण्डितानां विचारेषु प्रायेण न साम्यम्। कुमारिलभट्टप्रभृतीनां मतमिदं यदात्मसम्बन्धि ज्ञानं न सर्वदैव भवति। यदात्मनि विचार्यते तदात्मज्ञानं सञ्जायते यद'हमस्मि'एवंविधं ज्ञानम् 'आत्मवित्ति'रिति कथ्यते। आत्मवित्तेर्विषयीभूतः पदार्थ आत्मेति प्रोच्यते।

प्रभाकरप्रभृतिपण्डिता न भाट्टानां मतमनुगच्छन्ति। ते तु भाषन्ते 'अहंवित्ति'सम्बन्धिनी धारणैवायुक्ता। एकस्यैवात्मनस्तज्ज्ञानस्य ज्ञातृत्वं ज्ञेयत्वञ्च युगपन्न सम्भवम्। कर्तृकर्मणोर्व्यापारः पृथक् पृथग् भवति। तत्र परस्परं विरोधो भवति। एकस्यामेव क्रियायां युगपदेकमेव वस्तु कर्तृ भवत् कर्म च भवत् न स्थातुं शक्नोति। प्रतिविषयस्य भानावसरे तेनैव ज्ञानेनात्मा कर्तृत्वेनोद्भास्यते तस्मात् ज्ञाने सति यस्मिंश्चिदपि यथं घटालो 'घटोऽस्माभिर्दृश्यते' किं वा 'घटविषयकं ज्ञानमस्माभिरनुभूयत' इति अत्र ज्ञानग्रहीतुर्ज्ञातृत्वेन प्रतीयमानत्वादेव ज्ञानग्रहीतृतदितरव्यक्त्योश्च ज्ञानं भिन्नभिन्नत्वेन निर्धार्यते।

न भाट्टसम्प्रदायः प्राभाकर सम्प्रदायस्योपर्यभिहित मतं स्वीकुरुते। तन्मतेन तु आत्मनो ज्ञानस्य विषयो भवितुं शक्य.। तत्कथनमिदम्—चेत् प्रतिविषय-ज्ञानेन सह आत्मनो ज्ञानमुद्भासिष्यत तदा 'घटमिममहं जानामीत्येव' भावोऽपि सदैव समस्फुरिष्यत। परं न प्रतिविषयज्ञानेन सार्धमेवंविधो भाव उपतिष्ठते। तेन ज्ञायते यद् आत्मज्ञानं विषय-ज्ञानस्य नास्ति नित्यः सहचरः। तत्कदाप्युदेति [illegible]पि च न। अतस्तद्-विषयज्ञानाद् विपरीतम्। एवं स्थिते कर्तृ-कर्मणो-[illegible] समापतेदित्येतत् कथनन्तु तुच्छमेव! न तत्र वस्तुतो विरोध। आत्मानं विद्धि इत्येतच्च वैदिकं वाक्यं किंवा 'अहमात्मानं वेद्मि' इत्येतच्च लौकिकं वाक्यं न सर्वमेव व्यर्थम्। अथ च चेदात्मा न कदापि ज्ञानगोचरो भवति तदार्त ते काले स्वात्मनोऽस्तित्वस्य स्मरणं कथं सम्भवं भवितुमर्हेत ?' अतीत-कालवर्तीत्वात्मा नास्य ज्ञानस्य ज्ञातास्ति। तत् तु साम्प्रतिकस्यात्मन. स्मृति-ज्ञानस्य विषयो भवितुमर्हति।

ज्ञानस्य ज्ञानं येन प्रकारेण भवतीत्यत्र प्राभाकरास्तु कथयन्ति यद् ज्ञानं ज्ञातृ-ज्ञेययोः प्रकाशकं सत् स्वयमपि प्रकाशते परं भाट्टास्तु वदन्ति यद् ज्ञानं न स्वाभाव्येन स्वविषयो भवितुं शक्नोति। तत्तु ज्ञाततामाधारीकृत्यानुमाने परोक्ष-रूपतया समवाप्तं भवति। अत ज्ञानस्य ज्ञानं स्वयं प्रत्यक्षं सञ्जायत इति युक्तं वचो न।

मीमांसायां कर्मकाण्डस्यैव प्राधान्यं दृश्यते। यासां देवताना कृते स कर्म-काण्ड· स्वीकृतोऽस्ति ता देवता अपि तत्र तस्य कर्मकाण्डस्य पुरतो नतभाला इव वीक्ष्यन्ते। ये हि वेदा ईश्वरं गायन्तो न तृप्यन्ति तम् ईश्वरमपि ता वेद-महिमगान-तरङ्गनिमग्नतया विसस्मार।

मीमांसकानां मतमिदं यत्कर्त्तव्यस्य पालनं मानवस्य धर्मोऽस्ति। कर्त्तव्य-पालनं स्वार्थ-भावं विहाय करणीयम्। कांटनामा जर्मनीयो दार्शनिकोऽपि एवमेव मन्यते मीमांसका वदन्ति यत् सकामभावेन धर्मस्याचरणं नोचिततरम्। सृष्टिस्तु स्वयमेवैवंविधा यत् सा धर्माचारिणं प्रति सुखानि सृजति। न तं सा सुख-वञ्चितं विदधाति। प्रतीच्यः पण्डित कॉटो यदि कर्म-फलप्रदाता परमेश्वर इति विश्वसिति तदा मीमांसका विश्वसन्ति यन्नैसर्गिकनियमा एव वस्तुत सन्ति कर्म-फल-प्रदाने कारणम्। प्राचीना मीमांसका जीवनस्य चरमं लक्ष्यं स्वर्गं मन्यन्ते परं नवीनास्तु बहवो मोक्षमेव जीवनस्य अन्तिमं लक्ष्यं स्वीकुर्वन्ति।

"प्रपञ्चसम्बन्धविलयो मोक्ष इति मोक्षमधिकृत्य मीमांसा प्राह। अग्रे च सा ब्रूते—"त्रेधा हि प्रपञ्चः पुरुषं बध्नाति—भोगायतनं शरीरं, भोगसाधनानी न्द्रियाणि, भोग्याः शब्दादयो विषयाः। भोग इति च सुखदुःखविषयोऽपरोक्षानुभव इत्युच्यते। तदस्य त्रिविधस्यापि बन्धस्य आत्यन्तिको विलयो मोक्ष इति। मुक्त आत्मा शरीरेन्द्रियमनोविरहितत्वात् चैतन्यरूपं धर्मं न विदधाति तस्मात् सा नानुभवति सुखं-दुःखञ्च। इदमेव कारणं यन्मोक्षावस्था नास्ति आनन्दावस्था। मोक्षावस्था सर्वविधदुःखरहितावस्थास्ति अत एव सा काम्यते मोक्षार्थिभिः। मोक्षविषये वेदान्त-मीमांसयोर्मध्ये एतावदेव वैमत्यं यद् वेदान्तदर्शनं प्रपञ्च-विलयं मोक्षं मन्यते परं मीमांसा प्रपञ्चसम्बन्धविलयं मोक्षम्। मीमांसाया मोक्ष आनन्दशून्यो यदस्ति तदा वेदान्तस्य मोक्ष आनन्दमयः।

वेदान्तस्य मतमिदं यत् स्वप्नप्रपञ्च इव संसारप्रपञ्चोऽविद्याकृतोऽस्ति। अतः ब्रह्मज्ञाने सति अविद्या विलीयते। अविद्यायां विलीनायां सत्यां जगदपि नावशिष्यते तदपि विलीयते परं मीमांसाया दृष्टिस्तु अन्यैव। सा तु मन्यते यत् संसारस्य सत्ता न नश्यति। सा वक्ति यन्मुक्तावस्थायां संसारस्तथैव तिष्ठति यथा अविद्यादशायाम्। केवलं बन्धस्य विलयो भवति। भट्टमते प्रपञ्चसम्बन्धस्य विलयो यदि मोक्ष इत्युच्यते तदा गुरुप्रभाकरमते धर्माधर्मयोर्निःशेषभावेन नाशे सति उत्पन्नस्य देहस्यात्यन्तिक उच्छेद एव मोक्ष इत्यभिधीयते।

वस्तुतो मीमांसा यज्ञादिवैदिकानुष्ठानानां तात्त्विकविवेचनोपपत्त्यर्थं यान् सिद्धान्तानाविश्चकार ते परममहत्त्वशालिनः सन्ति। शब्दविषयकश्च तदीयः सिद्धान्तो भाषाशास्त्रदृष्ट्या कामपि अद्वितीयामेव महत्तां विदधाति। कुमारिलस्याभिहितान्वयवादः प्रभाकरस्य चान्विताभिधानवादः शाब्दबोध-निरूपणाय परमोपकारी। बालमनोविज्ञानस्य तु दर्शनमिदं महान् निधिरेव। क्रियाम वाक्यमित्येतत्तु दर्शनमिदमेव बोधयति। वैदिकधर्म-ज्ञानाय मीमांसाध्येतव्यास्ति।



# वैशेषिकदर्शनम्

अस्ति वैशेषिकदर्शनस्य कर्ता महर्षिः कणादः। मूलनाम तु तदीयम् उलूक इत्यासीदत एव तस्य दर्शनं काणादं वा औलूक्यमित्येतेन च नाम्ना विश्रुतम्। एतस्मिन् दर्शने 'विशेष' इत्येतदाख्यः पदार्थः स्वीकृतोऽस्ति तस्माच्छास्त्रमिदं वैशेषिकमित्येतया च संज्ञया विश्वविदितम्। वैशेषिकदर्शनस्य सुप्रसिद्धं भाष्यमस्ति प्रशस्तपादकृतः पदार्थधर्मसंग्रहः। स्ववैशिष्ट्याद् वस्तुतो भाष्यमिदं वैशेषिकदर्शन-सम्बन्धी स्वतन्त्रो ग्रन्थ इव शोभते। शारीरकभाष्ये कृताभ्यां द्वाभ्यां टीका-ग्रन्थाभ्यां भवति ज्ञानं यत् सिंहलाधिपती रावणो वैशेषिकसूत्रे टीकयोऽपि मितस्रक-कार। परं न सा टीका साम्प्रतमवाप्यते। प्रशस्तपादभाष्ये पदार्थधर्मसंग्रहेऽपि द्वावुत्तमौ टीकाग्रन्थौ राजेते—१. उदयनाचार्यस्य किरणावली, २. श्रीधराचार्यस्य च न्यायकन्दली। अर्वाकूलनं हि वैशेषिकं साहित्यं न्यायमिश्रमधिगम्यते। न्यायसमन्वितवैशेषिकसाहित्ये शिवादित्यस्य सप्तपदार्थी लौगाक्षिभास्करस्य तर्क-कौमुदी, वल्लभाचार्यस्य न्यायलीलावती, विश्वनाथपञ्चाननस्य भाषापरिच्छेदः सिद्धान्तमुक्तावलीटीकोपेतो वितरां महत्त्वपूर्णा ग्रन्था विभान्ति।

न्यायवैशेषिकाभिधे दर्शने स्तो हि समानतन्त्रभूतदर्शने। द्वयोरप्युद्देश्यमेक-मेव। यथा वेदान्तसांख्यप्रभृतीनि दर्शनानि जीवः केन प्रकारेण दुःखेभ्यो मुक्तः स्यात् कथञ्च स मोक्षमरत्नुयादित्येतं विषयं प्राधान्येन प्रतिपादयन्ति तथैवेमेऽपि। एतत्साम्यं यद्यपि द्वेऽपीमे विस्तृतः परं द्वयोरपि मध्ये मतभेदोऽपि दृश्यते। न्याय-दर्शनं प्रत्यक्षानुमानोपमानशब्दसंज्ञकानि चत्वारि प्रमाणानि मन्यते परं वैशेषि-कदर्शनं प्रत्यक्षानुमानाख्ये द्वे एव प्रमाणे स्वीकरोति। प्रथमन्तु वैषम्यमिदमनयो-र्मध्ये। द्वितीयञ्चेदं यत् न्यायदर्शने षोडश पदार्थाः स्वीकृताः सन्ति। परमत्र वैशेषिके सप्त एवैतेऽङ्गीकृताः—१. द्रव्यं, २. गुणः, ३. कर्म, ४. सामा-न्यम्, ५. विशेषः, ६. समवायः, ७. अभावः। एतेषु षट् भावपदार्थाः सन्त्य-दिमाः। अन्त्यश्चाभावपदार्थोऽस्ति।

'पदार्थः'—इत्येतस्यार्थोऽस्ति तद् वस्तु यस्य बोधः केनापि पदेन जायते। अतः यावन्त्यपि वस्तूनि सन्ति वा यानि केनापि नाम्ना व्यपदिश्यन्ते तानि सर्वाणि 'पदार्थ' इत्युच्यन्ते। पदार्थो द्विविधो भावात्मकोऽभावात्मकश्च। सत्तावान् पदार्थो भावपदार्थः किन्तु असत्तावान् अभावपदार्थ इति कथ्यते। घट-पटमन-आत्मप्रभृतिपदार्थाः सन्ति भावात्मकाः। वैशेषिकसूत्रे केवलं "द्रव्य-गुण-कर्म-सामान्य-विशेषसमवाया" इत्येतान् षड् भावपदार्थान् मन्यते। अर्वाक्तने वैशेषिकदर्शने 'अभावो' नाम सप्तमश्च पदार्थो वर्द्धितः। अभावश्चतुर्विधः-प्रागभाव, प्रध्वंसाभावः, अत्यन्ताभाव, अन्योन्याभाव।

द्रव्यम्—क्रियागुणवत् समवायिकारणं द्रव्यमिति कथ्यते। द्रव्यं भवति पृथिवीजलतेजोवाय्वाकाशकालदिगात्ममनोभेदेन नवविधम्। नीलरूपस्य चलनक्रियायाश्चोपाधिकत्वात् तमो द्रव्यं नेत्येतदुक्त्वा वैशेषिका मीमांसकमतं दशमं द्रव्यं तमो निरस्यन्ति। पृथिवीजलतेजोवाय्वाकाशाः पञ्च महाभूतानीति कथ्यन्ते। पृथिव्या गन्धः, जलस्य रसः, तेजसो रूपम्, वायोः स्पर्शः, आकाशस्य च गुणः शब्दोऽस्ति। इमे गुणा बाह्येन्द्रियैः पञ्चभिः प्रत्यक्षा भवन्ति। इमानि पृथिवीजलतेजोवाय्वाकाशनामानि द्रव्याणि कारणरूपेण सन्ति नित्यानि परं कार्यरूपेण भवन्त्यनित्यानि। भावोऽयमेतेषां पञ्चानामपि द्रव्याणां परमाणवः सन्ति नित्याः। परमाणूनां निरवयवत्वात् अनादित्वादनन्तत्वाच्च। सर्वाण्यपि कार्यभूतद्रव्याणि परमाणुसंयोगेन निष्पद्यन्ते। संयोगजन्यात् सावयवत्वाच्चेमानि कार्यभूतद्रव्याणि सन्त्यनित्यानि। परमाणूनामस्तित्वमनुमानेन ज्ञायते।

आकाशस्य गुणः शब्द इत्युपरि प्रोक्तम्। आकाशो न प्रत्यक्षो भवति। शब्द एव भवति। अपरिमितत्वाद् रूपरहितत्वाच्चाकाशस्य प्रत्यक्षत्वं न जायते। शब्दज्ञानेनैव स अनुमीयते। दिक्कालात्ममनसां गुणः शब्दो न, तदभावेऽपि तेषां विद्यमानत्वात्। अत आकाश एव शब्दगुणकः निरवयवत्वान्निरपेक्षत्वात् स नित्योऽप्यस्ति।

आकाश इव दिक्कालावपि न गोचरौ भवतः। तावपि नित्यौ सर्वव्यापिनौ च। दिशोऽपि ज्ञानमनुमानेन जायते। अत्र तत्रादिविविधप्रत्ययानां कारणं सा। कालोऽपि भूतभाविप्राचीनादिप्रत्ययानां कारणम्। यद्यप्याकाशदिक्कालाः समर्थेकात्मका अविभाज्याश्च परमुपाधिभेदान्नाना प्रतीयन्ते।

आत्मा—आत्मास्ति नित्यद्रव्यम्। तत्र बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारादिगुणा वसन्ति। तच्च शरीरेन्द्रियमनोभ्यो हि पृथक् स्वतन्त्रसत्तावत्। 'सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात्', 'एकविनाशे द्वितीयाविनाशान्नैकत्वम्' इत्यादिसूत्रैरात्मन इन्द्रियत्वं, 'तस्मात्सुखविकासस्य हर्षो हर्षस्य च स्मृतिः स्मृतेरनुभवो हेतुः स च जन्मान्तरे शिशोः' इत्यादिना च तस्य (आत्मनः) शरीरत्वं खण्डयद् दर्शनमिदं दृष्टं भवति। आत्मा नित्यः सर्वव्यापी विभुश्चास्ति। स च परमात्मजीवात्मभेदेन द्विविधः। 'अस्यात्मनो मनस्त्वमपि न सङ्गच्छते। अणुरूपत्वान्मनो न भवति प्रत्यक्षम्। प्रत्यक्षार्थं महत्त्वमपेक्ष्यते। मनश्चेदात्मा स्यात् तदा सुखदुःखेच्छादिकानामपि अप्रत्यक्षत्वं भवेत्। इत्थं ह्यात्माख्यं द्रव्यं चैतन्याधिष्ठितं शरीरेन्द्रियमनोभ्यो भिन्नम्। 'वेदान्तदर्शनमात्मैक एव इति मन्यते परं न्यायवैशेषिकदर्शनमात्मनोऽनेकत्वं स्वीकुरुते। इच्छासुखप्रवृत्तिज्ञानादिविभिन्नतया तस्य अनेकत्वं सिद्ध्यतीति तस्य कथनमस्ति। प्राचां नैयायिकानां मतेन आत्मानुमेयोऽस्ति। इच्छाद्वेषप्रयत्नादिकलिङ्गेन स अनुमीयते। नव्यनैयायिका आत्मानं प्रत्यक्षस्य विषयं मन्यन्ते। एतदर्थन्ते मनोनामैकमन्तरिन्द्रियमभ्युपगच्छन्ति। कणादस्य तु मतमिदं यत् नात्मागमिको न चानुमेयोऽपि तु स प्रत्यक्षगम्यः—'अहमिति शब्दस्य व्यतिरेकान्नागमिकम्।

मनः—आत्मज्ञानेच्छासुखदुःखादिकं येनाभ्यन्तरेण साधनेन प्रत्यक्षं भवति तन्मन इति कथ्यते। उक्तञ्च—'सुखदुःखाद्युपलब्धिसाधनमिन्द्रियं मनः'। प्रतिशरीरं भिन्नत्वात् अनेकं, नित्याकारित्वान्मूर्तमणु च मनं तत्। तस्याणुत्वमधिकृत्य भाषापरिच्छेदे प्रोक्तम्—

"साक्षात्कारे सुखादीनां करणं मन उच्यते।
अयौगपद्यात् ज्ञानानां तस्याणुत्वमिहेष्यते॥"

मनो विभु न। एकस्मिन् काले एकस्यैव विषयस्य ग्राहकत्वात्।

गुणाः—गुणाः सन्ति द्रव्याश्रयाः। परमिमे स्वयं न गुणाश्रयाः। भावोऽयं—द्रव्यं गुणमाश्रित्य तिष्ठति परं गुणो गुणमाश्रित्य न। कणादः रूप-रसगन्ध-स्पर्श-संख्या-परिमाण-पृथक्त्व-संयोग-विभागपरत्वापरत्वबुद्धि-सुखदुःखेच्छाद्वेषप्रयत्नान् सप्तदशगुणान् उल्लिखति। प्रशस्तपादो गुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्मशब्दाख्यान् सप्तगुणानन्यांश्चोल्लिखतीत्यं चतुर्विंशतिगुणाः सन्ति।

नैयायिकवैशेषिकयोर्मध्ये गुणविषयकाः केचन मतभेदाः प्राप्यन्ते पाकजो-

त्पत्ति-द्वित्वसंख्या-विभागजविभागविषये द्वयोरपि विवादो वर्तते । नैयायिकानां मतमिदं यद् अग्नौ स्थिते सति घटे घटः पक्वतां याति न च परमाणवः परं वैशेषिका वदन्ति अग्निना परमाणवः पक्वतां गत्वा द्व्यणुकादिक्रमेण घटमुत्पादयन्ति पुनः एष हि परमाणुपाको वैशेषिकदर्शने पीलुपाक इति कथ्यते । द्वित्वविषये तयोर्विचारा इमे—द्वित्वसंख्या अपेक्षाबुद्धिजन्यास्तीति वैशेषिकाणां विचारः । द्वित्वसंख्या अपेक्षाबुद्धिज्ञाप्यास्तीति नैयायिकानां विचारः । अनेकैकत्वबुद्धिरपेक्षाबुद्धिरिति कथ्यते । वैशेषिकमतेन द्वित्वं स्वतन्त्रं वस्तु । नैयायिकमतेन द्वित्वमेकत्वकल्पनाभ्यन्तर एवास्ति न च स्वतन्त्रम् । अपेक्षाबुद्धितस्तदभिव्यक्तिर्भवति । एवमेव विभागजविभागमधिकृत्यापि तदीयो मतभेदः । वैशेषिका विभागं विभागजन्यं मन्यन्ते । नात्र नैयायिकाः श्रद्दधते । एतान् एव मतभेदान् विलोक्य केनाप्युक्तम्—

> द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे ।
> यस्य न स्खलिता बुद्धिस्तं वै वैशेषिकं विदुः ॥

कर्म :—शारीरिकक्रिया कर्म इत्युच्यते । गुण इव कर्मापि द्रव्यमाश्रयति । परमिदं द्रव्य-गुणाभ्यां भिन्नम् । द्रव्यं गुणं कर्म च श्रयति । गुणो द्रव्यस्य निष्क्रियं स्वरूपमस्ति कर्म तु सक्रियं रूपम् । गुणः स्वस्याधारभूतपदार्थस्य निष्क्रियो धर्मोऽस्ति स तत्रैव स्थितो भवति । कर्म तु गतिशीलो व्यापारः । तत् पदार्थं स्थानान्तरं प्रापयति अतस्तत् पदार्थं संयुनक्ति वियुनक्ति च । न तस्य स्वकीयो हि कोऽपि गुणः । उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनभेदात् तत् पञ्चविधम् । पृथिव्यप्तेजोवायुमनःसु कर्मणो गतिः प्राप्यते न चाकाशदिक्कालात्मसु । आकाशादीनां सर्वव्यापित्वात् ।

सामान्यम्—नित्यमेकमनेकेषु (समवायसम्बन्धेन) अनुगतं सामान्यम् । मनुष्यो जायेत म्रियेत वा आगच्छेत् गच्छेद् वा परं तदीयं मनुष्यत्वरूपसामान्यं सदैव विद्यमानमेव दृश्यते अतस्तदीया नित्यता प्रमाणमतिपद्यन्ति । सामान्यमेव जातिरित्युच्यते तर्कभाषायामुक्तम्—"अनुवृत्तिप्रत्ययहेतुः सामान्यम्" । यद्यपि यज्ञदत्तयज्ञदत्तदेवदत्ताः सन्ति भिन्नभिन्नजनाः । परमेतेषु त्रिष्वपि मनुष्यत्वं नाम सामान्यमनुगतमस्ति तस्मात् ते सन्तोऽपि भिन्नभिन्ना मनुष्या एव सन्ति । मनुष्यत्वसम्बन्धेन ते न भिन्नाः । एतेन सिद्धं यत् सामान्यनाम

पदार्थः सोऽस्ति यद्धेतोर्भिन्नभिन्नव्यक्तय एकस्यामेव जातौ समाविष्टा भूत्वा एकेनैव नामधेयेनोच्चरिता भवन्ति ।

भारतीयदर्शने सामान्यमधिकृत्य त्रीणि सन्ति प्रमुखानि मतानि—१. बौद्धानां मतम् , २. जैन-वेदान्तिनां मतम् , ३. नैयायिकवैशेषिकाणां मतम् । बौद्धा व्यक्तिमेव सामान्यत्वेन मन्यन्ते । ते सन्ति क्षणभङ्गवादिनः । अतः जातिमपि ते अनित्यामवगच्छन्ति । एकाकारप्रतीतिनिमित्तेन ते अपोहं स्वीकुर्वन्ति । जैना वेदान्तिनश्च सत्तां न व्यक्तेः पृथक् मन्यन्ते । तन्मतेन सामान्यव्यक्त्योर्मध्ये तादात्म्यसम्बन्धोऽस्ति । नैयायिकवैशेषिकमतेनावश्य सामान्य नित्यः पदार्थः । तद् ( सामान्यम् ) व्यक्त्या भिन्नं सदपि तत्र समवेतमस्ति । तेषा मतेन तस्य सत्ता स्वतन्त्रास्ति । व्यापकत्वदृष्ट्या सामान्य त्रिविधम्—परं सामान्यम् , अपर सामान्यम् , परापरसामान्यम् । अधिकतमसीमाया यद् व्यापक तद् पर सामान्यं भवति । न्यूनतमसीमायां व्यापकं यत् तद् अपर सामान्य किञ्च यच्चाधिकाया न च न्यूनाया सीमायां व्यापक तद् भवति परापरमिति । पर सामान्य जातिरस्ति; अपरं सामान्यं घटत्वे वर्तते किञ्च द्रव्यत्वं परापरसामान्यमस्ति ।

विशेषः—एष 'विशेष' पदार्थो वैशेषिकदर्शनस्य मुख्यपदार्थः । कदाचित् विशेषपदार्थवादित्वादेव दर्शनमिदं वैशेषिकमिति प्रथितम् । तर्कभाषाया विशेषा 'नित्या नित्यद्रव्यवृत्तिः' इत्येतत्प्रकारेण वर्णितः । भावोऽयं यत् विशेषो नाम पदार्थः परमाण्वादिषु वसति स अन्तिमव्यावर्तकधर्मोऽस्ति । अन्तिमभेदकधर्मत्वात् स 'विशेष' इत्यभिधीयते । परमाणुभेदोपपादनाय विशेषस्योपपत्तिः कृतास्ति । तद्धेतोः एकः पार्थिवः परमाणुः परस्मात् परमाणोर्भिन्नोऽस्ति । पृथिव्यप्तेजोवायुपरमाणुषु किञ्च आकाशे स वर्तते । दिक्कालयोरेकत्वादभिन्नत्वाच्च न विशेषस्तत्र अपेक्ष्यते । आत्मनो मनसश्च भेदकधर्मस्तदीया एव गुणाः सन्ति तस्मात् तत्रापि न विशेषः कल्प्यते । नित्यद्रव्य-पार्थक्यायैव 'विशेषो' नाम पदार्थोऽङ्गीकृतो जातः ।

समवायः—न्यायवैशेषिकदर्शने सम्बन्धो द्विविध —१. संयोगः, २. समवायश्च । तत्र अयुतसिद्धयोः समवाय इति कथ्यते । अन्ययोस्तु सम्बन्ध संयोग एव । पटे तन्तुः समवायसम्बन्धेन तिष्ठति परं पटे पुस्तकं स्थितमस्ति तु पुस्तकस्य स्थितिः पटे संयोगसम्बन्धेनास्ति । ययोर्मध्ये एकमविनश्यदपराश्रितमेवाव-

तिष्ठते तावयुतसिद्धाविति कथितौ । संयोगः सम्बन्धस्त्वनित्यो भवति यतस्तं विनापि वस्तु स्वसत्तां धारयितुं क्षमते । परं समवायसम्बन्धोऽस्ति नित्यः । स वस्तुद्वये नित्यत्वेनावतिष्ठते । सः अङ्गाङ्गिनोः गुणगुणवतोः,* क्रियाक्रियावतोः जातिव्यक्त्योः, विशेषनित्यद्रव्ययोश्च स्थितो भवति । समवायसम्बन्धस्य विशिष्टतास्ति तदीया नित्यता । समवायसम्बन्धाधार एव न्यायवैशेषिकदर्शने कार्यकारणविषयिणी तत्तत्कल्पना कृतास्ति ।

**अभावः**—अभावः सप्तमः पदार्थः । नास्यान्तर्भावो द्रव्यादिषट्सु भवितुं शक्नोति तस्मादेव तेभ्यः पृथक् स्वीकृतो जातः । यथा देवदत्तोऽत्रास्तीत्येतेन वाक्येन देवदत्तस्यास्तित्वं ज्ञातं भवति तथैव देवदत्तोऽत्र नास्तीत्येतेनापि निषेधात्मकेन वाक्येन देवदत्तस्यास्तित्वं सिद्ध्यति तस्यान्यत्र विद्यमानत्वात् । अत एव अभावोऽपि पदार्थेषु स्वीकृतः । वैशेषिकसूत्रे बहुत्र अभावः प्रमेयत्वेनोल्लिखितः प्रशस्तपादभाष्येऽपि अभावस्य व्याख्या प्राप्यते तेन स्पष्टत एव सिद्ध्यतीदं यत् कणादोऽप्यभावमन्वमन्यत । वस्तुतोऽभावपदार्थस्य कल्पना वैशेषिकसिद्धान्तस्य पूर्णत्वे नितान्तमेवापेक्षितम् । वस्तुवादोऽभावं तावन्तमेव महत्त्वपूर्णमवगच्छति यावन्तं स भावं महत्त्वपूर्णं जानाति । वैशेषिकदर्शनदृष्ट्या तु दुःखात्यन्ताभावरूपमुक्तिस्वरूपविवेचनमभावपदार्थाङ्गीकृतिमन्तरेण भवितुमेव नार्हति ।

**परमाणुवादः**—यथा दर्शनान्तराणां मतेन जगल्लीलास्थलमस्ति । तथ जीवानामुत्थानार्थं भुक्त्यर्थञ्च निर्मितमस्ति । वैशेषिकदर्शनदृष्ट्यापि तथैव सत्योऽयं संसारः । वैशेषिकदर्शने 'संसारस्य सर्वाणि कार्यद्रव्याणि पृथिवीजलतेजोवायुपरमाणुभिर्निर्मीयन्त' इति मन्यते । तस्माद् दर्शनमिदं परमाणुवादीति गीयते । अत्र तस्येदमपि मतं यत् परमाणूनां संयोगो वियोगश्च कर्मफलान्यनुसरन् भवति । प्रतीच्य· परमाणुवादो भौतिकवादसिद्धान्तं परिगृह्य प्रवर्तते परं भारतीय· परमाणुवाद आध्यात्मिकं सिद्धान्तमाश्रित्योपसरति । प्रतीच्या आहुः परमाणवः स्वतः परस्परं संश्लिष्यन्ति विभज्यन्ते च न च कापि नियन्त्रणकारिणी चेतनशक्तिर्या हि स्यात् नियन्त्रयति । परं भारतीया वैशेषिकास्तिका आचक्षते परमाणून् ईश्वरः शासितः स तान् स्वयत्नपाशे निदधाति । स जीवादृष्टानुरूपं कर्मफलानि उपभोजयितुं परमाणून् क्रियायां प्रवर्तयति । तदित्थमेव सृष्टिः सम्पद्य जायते ।

वैशेषिकस्य परमाणुवादो जगतस्तमेव भागं व्याख्याति यो सृज्यते विलीयते च । न ह्यनयोः नित्याः पदार्थाः —आकाश-दिक्-काल-मन-आत्म-सर्वनित्यपरमाणव—

जायन्ते न च लीयन्ते सन्ति इमे नित्या पदार्था न परमाणुवाद विषया। कार्यद्रव्याणि सन्त्यनित्यानि। परमाणुद्वयसयोगेन निर्मित कार्यद्रव्य 'द्व्यणुक' नाम्नाभिधीयते। अणूना सयोगेन कार्यद्रव्याणि जन्म गृह्णन्ति तेषा विच्छेदन च तानि विनाश प्रयान्ति। एषामेवानित्याना द्रव्याणा सृष्टेर्लयस्य क्रमप्रतिपादन परमाणुवादस्य वर्तते लक्ष्यम्।

समस्तमपि जगद् भौतिक, तस्य च कार्यद्रव्याणि चतुर्विधपृथिवी जल-तेजो-वायुपरमाणूना सयोगात् सञ्जाताना द्व्यणुकत्र्यणुकादीना सन्ति विकारभूतानि किंवा कार्याणि।

जगद्विषयिण्या व्यवस्थाया उपपत्तिमुद्दिश्य वैशेषिकदर्शनस्येद कथनमस्ति—जगति परमाणुसयोगजन्यानि भौतिकानि कार्यद्रव्याणि विद्यन्ते शरीरेन्द्रियमनोबुद्ध्यहङ्कारयुक्ता जीवात्मानश्च। सर्वेषामप्येतेषा वृन्द दिक्कालाकाशावस्थित कार्यकारणानुबन्धनियद्धमस्ति। जीवात्मानो नैजधी ज्ञान-कर्मवशात् सुखानि दुःखानि च उपभुञ्जन्ति। पुण्याना फल सुख दुरिताना च फल भवति दुःखम्। नात्र सन्ति जीवात्मना सुख दु खानि प्राकृतिकनियमनिघ्नान्येवापि तु कर्मफलनियमाधीनानि च वर्तन्ते। भावोऽय यो यद् वपति तदेव लुनाति। प्राकृतिकनियमस्यार्थोऽयम् कारण विना कार्यं नोत्पद्यते।

**सृष्टिप्रलयौ**—वैशेषिकदर्शने सृष्टि-संहारविधायक परमेश्वर मन्यते। स एवाखिलविश्वशास्ता। तदिच्छयैव सृष्टि प्रलयश्च भवत। यदा स इच्छति तदैव वितनोति विश्व येन जीवा स्वकर्मजन्यानि सुखानि दु खानि चोपभोक्तुमर्हन्। यदा धाता कामयते तदैव स विश्वमाकुञ्चयति। जगत सृष्टेर्लयस्य च प्रवाहो न कदाप्युच्छिन्नतामुपैति। सृष्टिर्लयमनुयाति लयश्च सृष्टिम्। पुरातनक्रम संहाय नवक्रमावतरणमेव सृष्टिरिति, निगद्यते। ईश्वरो हि जीवाना पुराकृतकर्माणि विचार्यैव नवां सृष्टिं तनोति। यदैव स सृष्टिप्रणयन कल्पयति तदैव जीवात्मना अदृष्टानुसार भोग-साधनानि निर्माणोन्मुखीभवितुमुपक्रमन्ते अदृष्ट्य जीवात्मनां, तत्कर्मफलानुरूपां दिशाम्प्रति च तान् ( जीवान् ) प्रचोदयति। वायुपरमाणु-सयोगाद् वायुमहाभूत, जलपरमाणुसयोगाज्जलमहाभूत, पृथिवीपरमाणुसयोगात् पृथिवीमहाभूत, तेजसश्च परमाणुसयोगात् तेजोमहाभूतमुत्पत्ति मन्तनि। वायुराकाशे, वायौ जल, जले च पृथिवी-तेजसी सन्तिष्ठन्त। ईश्वराभिध्यानमात्रेण विश्वस्य गर्भस्वरूपब्रह्माण्डमुत्पद्यते। अस्ति तत्र पार्थिवतैजसपरमा

पूर्वा बीजभूतम् ब्रह्माण्डमनन्तज्ञानवैराग्यैश्वर्यशाली ब्रह्मा तथा सञ्चालयति यथा प्राक्तनकर्मानुसारीणि सुख-दुःखानि जीवा भोक्तुं प्रभवेयुः।

जनन-मरण-परिक्रान्ता जीवाः प्रलये विश्रामं लभन्ते। तेषां विश्रामनिमित्तेनैव प्रलयः सम्पद्यते। संसारोऽनित्यस्तस्मात् सोऽपि लयं गच्छति। संसारे जायमानानां नदी-पर्वतादीनां सर्वेषामपि क्षयः सूचयति यत् यद्यपि कोऽपि काल एवंविधोऽपि घटते यदा संसारोऽप्येष अखिलोऽवश्यं विलीयते।

संसार-प्रलयस्य क्रमोऽयम्—समयवशात् यदा जीवात्मान इव विश्वात्मा *महानपि स्वशरीरं हातुमुद्युङ्क्ते तदा महेश्वरः संहर्तुमना भवति। तदभिलाषो* जीवान् स्वकीयादृष्टकार्येभ्यो विरमयति। तदीयशरीरेन्द्रियाणां परमाणवो विकीर्णा भूत्वा पृथक्त्वं यान्ति। परमाणव एव केवलमवशिष्यन्ते। एवमेव पृथिव्यादिमहाभूतानां परमाणव एवावतिष्ठन्ते। महाभूतानि सर्वाणि विलीनानि जायन्ते। सकलमपि संसारस्य कार्यद्रव्यजातं तिरोहिततां गच्छति। अन्ततः पृथिवी-जल-तेजोवायूनां परमाणवो दिक् काल आकाश आत्मा मनः किञ्च जीवात्मनां धर्माधर्मजन्यभावना एव स्थितिं गृह्णन्ति नान्यत् किमपि।

*ज्ञान-मीमांसा*—दर्शनेऽस्मिन् विद्याऽविद्याभेदेन ज्ञानं द्विविधं मतम्। *तत्र* च प्रत्येकं चतुर्विधम्। अविद्यायाश्चत्वारो भेदा इमे—१. संशयः, २. विपर्ययः, ३. अनध्यवसायः, ४. स्वप्नः। विद्यापि प्रत्यक्षानुमानस्मृत्यार्षभेदेन चतुर्विधा। *प्रत्यक्षानुमानविषयकविचारास्तु वैशेषिकशास्त्रिणो त एव ये सन्ति न्यायशास्त्रिणां* परं वैशेषिकपण्डिताः उपमानं शब्दञ्च न प्रमाणत्वेन स्वीकुर्वन्ति। ते ह्येतयोरन्तर्भावमनुमान एव कुर्वन्ति। स्मृतिः प्रसिद्धैव। ऋषीणामिन्द्रियातीतविषयकप्रतिभाजन्ययथार्थनिरूपणात्मकं ज्ञानम् आर्षमिति कथ्यते।

कर्त्तव्य-मीमांसा—निष्कामभावेन क्रियमाणानि कर्माणि चित्तं पुनन्ति। तस्माद् धर्मं हि चित्तशुद्धिविधायकनिष्कामकर्माणि प्रसुवते। न वस्तुतो निष्कामकर्मभ्यो व्यतिरिक्तो धर्मः। अत एव महर्षिः कणादः प्राह—यत्कर्मणो निःश्रेयसलाभोऽभ्युदयश्च भवति तदेव 'धर्म' इति ज्ञेयम्—"यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः"। निष्कामकर्माचरणं तत्त्वज्ञानं जनयति तत्त्वज्ञानाद् मोक्ष उपलभ्यते। *एतेन सिद्धमिदं यत् परम्परया निष्काम-कर्म मोक्षं प्रति कारणं भवति। निष्काम*कर्मरूपधर्ममन्तरेण न तत्त्वज्ञानं सम्भवं तत्त्वज्ञानञ्च विना न मोक्षसम्भव इत्येव विषयस्य जिज्ञासुभिलाषी महर्षिः कणादः स्वकीयवैशेषिकसूत्रे प्रथमं सूत्रं

जायन्ते न च लीयन्ते सन्ति इमे नित्याः पदार्था न परमाणुवाद-विषयाः। कार्यद्रव्याणि सन्त्यनित्यानि। परमाणुद्वयसंयोगेन निर्मितं कार्यद्रव्यं 'द्वयणुक'-नाम्नाभिधीयते।, अणूनां संयोगेन कार्यद्रव्याणि जन्म गृह्णन्ति तेषां विच्छेदेन च तानि विनाशं प्रयान्ति। एषामेवानित्यानां द्रव्याणां सृष्टेर्लयस्य क्रमप्रतिपादनं परमाणुवादस्य वर्तते लक्ष्यम्।

समस्तमपि जगद् भौतिकं, तस्य च कार्यद्रव्याणि चतुर्विधपृथिवी-जल-तेजो-वायुपरमाणूनां संयोगात् सञ्जातानां द्वयणुकत्र्यणुकादीनां सन्ति विकारभूतानि किंवा कार्याणि।

जगद्विषयिण्या व्यवस्थाया उपपत्तिमुद्दिश्य वैशेषिकदर्शनस्येदं कथनमस्ति—जगति परमाणुसंयोगजन्यानि भौतिकानि कार्यद्रव्याणि विद्यन्ते शरीरेन्द्रियमनो-बुद्ध्यहङ्कारयुक्ता जीवात्मानश्च। सर्वेषामप्येतेषां वृन्दं दिक्कालाकाशावस्थित-कार्यकारणान्दुकनिबद्धमस्ति। जीवात्मानो नैजधी-ज्ञान-कर्मवशात् सुखानि दुःखानि च उपभुञ्जन्ति। पुण्यानां फलं सुखं दुरितानाञ्च फलं भवति दुःखम्। नातः सन्ति जीवात्मनां सुख-दुःखानि प्राकृतिकनियमनिघ्नान्येवापि तु कर्मफलनियमाधीनानि च वर्तन्ते। भावोऽयं यो यद् वपति तदेव लुनाति। प्राकृतिकनियमस्यार्थोऽयम्-कारणं विना कार्यं नोत्पद्यते।

**सृष्टिप्रलयौ**—वैशेषिकदर्शनं सृष्टि-संहारविधायकं परमेश्वरं मन्यते। स एवाखिलविश्वशास्ता। तदिच्छयैव सृष्टिः प्रलयश्च भवतः। यदा स इच्छति तदैव वितनोति विश्वं येन जीवाः स्वकर्मजन्यानि सुखानि दुःखानि चोपभोक्तुं शक्नुयुर्यदा चासौ कामयते तदैव स विश्वमाकुञ्चयति। जगतः सृष्टेर्लयस्य च प्रवाहो न कदाप्युच्छिन्नतामुपैति। सृष्टिर्लयमनुयाति लयश्च सृष्टिम्। पुरातनक्रमं संलक्ष्य नवक्रमावतरणमेव सृष्टिरिति निगद्यते। ईश्वरो हि जीवानां पुराकृतकर्माणि विचार्यैव नवां सृष्टिं सृजति। यदैव स सृष्टिप्रणयनं सङ्कल्पयति तदैव जीवात्मनां ह्यदृष्टानुसारं भोग-साधनानि निर्माणोन्मुखीभवितुमुपक्रमन्ते अदृष्टञ्च जीवात्मनो, तत्कर्मफलानुरूपां दिशाम्प्रति च तान् (जीवान्) प्रचोदयति। वायुपरमाणु-संयोगाद् वायुमहाभूतं, जलपरमाणुसंयोगाज्जलमहाभूतं, पृथिवी-परमाणुसंयोगात् पृथिवीमहाभूतं, तेजसश्च परमाणुसंयोगात् तेजोमहाभूतमुत्पत्तिं व्रजति। वायुराकाशे, वायौ जलं, जले च पृथिवी-तेजसी सन्तिष्ठन्ते। ईश्वराभि-ध्यानमात्रेण विश्वस्य गर्भस्वरूपब्रह्माण्डमुत्पद्यते। अस्ति सत् पार्थिवतैजसपरमा-

पूर्ता बीजभूतम् ब्रह्माण्डमनन्तज्ञानवैराग्यैश्वर्यशाली ब्रह्मा तथा सञ्चालयति यथा प्राक्तनकर्मानुसारीणि सुख-दुःखानि जीवा भोक्तुं प्रभवेयुः।

जनन-मरण-परिक्रान्ता जीवाः प्रलये विश्रामं लभन्ते। तेषां विश्रामनिमित्तेनैव प्रलयः सम्पद्यते। संसारोऽनित्यस्तस्मात् सोऽपि लयं गच्छति। संसारे जायमानानां नदी-पर्वतादीनां सर्वेषामपि क्षयः सूचयति यत् कदापि कोऽपि काल एवंविधोऽपि घटते यदा संसारोऽयमेव अखिलोऽवश्यं विलीयते।

संसार-प्रलयस्य क्रमोऽयम्—समयवशात् यदा जीवात्मान इव विश्वात्मा महेशापि स्वशरीरं हातुमुद्युङ्क्ते तदा महेश्वरः संहर्तुमना भवति। तदभिलाषो जीवान् स्वकीयादृष्टकार्येभ्यो विरमयति। तदीयशरीरेन्द्रियाणां परमाणवो विकीर्णा भूत्वा पृथक्त्वं यान्ति। परमाणव एव केवलमवशिष्यन्ते। एवमेव पृथिव्यादिमहाभूतानां परमाणव एवावतिष्ठन्ते। महाभूतानि सर्वाणि विलीनानि जायन्ते। सकलमपि संसारस्य कार्यद्रव्यजातं तिरोहिततां गच्छति। अन्ततः पृथिवी-जल-तेजोवायूनां परमाणवो दिक् काल आकाश आत्मा मनः किञ्च जीवात्मनां धर्माधर्मजन्यभावनाः एव स्थितिं गृह्णन्ति नान्यत् किमपि।

ज्ञान-मीमांसा—दर्शनेऽस्मिन् विद्याऽविद्याभेदेन ज्ञानं द्विविधं मतम्। तत्र च प्रत्येकं चतुर्विधम्। अविद्यायाश्चत्वारो भेदा इमे—१. संशयः, २. विपर्ययः, ३. अनध्यवसायः, ४. स्वप्नः। विद्यापि प्रत्यक्षानुमानस्मृत्यार्षभेदेन चतुर्विधा। प्रत्यक्षानुमानविषयकविचारास्तु वैशेषिकशास्त्रिणां त एव ये सन्ति न्यायशास्त्रिणां परं वैशेषिकपण्डिताः उपमानं शब्दञ्च न प्रमाणत्वेन स्वीकुर्वन्ति। ते ह्येतयोरन्तर्भावमनुमान एव कुर्वन्ति। स्मृतिः प्रसिद्धैव। ऋषीणामिन्द्रियातीतविषयकप्रतिभाजन्ययथार्थनिरूपणात्मकं ज्ञानम् आर्षमिति कथ्यते।

कर्त्तव्य-मीमांसा—निष्कामभावेन क्रियमाणानि कर्माणि चित्तं पुनन्ति। तस्माद् धर्मं हि चित्तशुद्धिविधायकनिष्कामकर्माणि प्रसुवते। न वस्तुतो निष्कामकर्मभ्यो व्यतिरिक्तो धर्मः। अत एव महर्षिः कणादः प्राह—यत्कर्मणो निःश्रेयसलाभोऽभ्युदयश्च भवति तदेव 'धर्म' इति ज्ञेयम्—"यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः"। निष्कामकर्माचरणं तत्त्वज्ञानं जनयति तत्त्वज्ञानाद् मोक्ष उपलभ्यते। एतेन सिद्धमिदं यत् परम्परया निष्काम-कर्म मोक्षं प्रति कारणं भवति। निष्कामकर्मरूपधर्ममन्तरेण न तत्त्वज्ञानं सम्भवं तत्त्वज्ञानञ्च विना न मोक्ष-सम्भव इत्येव विमृश्य विषयमुमुक्षुभिलाषी महर्षिः कणादः स्वकीयवैशेषिकसूत्रे प्रथमं सूत्रं

धर्मपरकं प्रगिनाय। धर्मसाधकं कर्म सामान्यविशेषभेदेन द्विविधम्। सामान्य-धर्म—धर्मे श्रद्धा, अहिंसा, प्राणिहितसाधनम्, सत्यवचनम्, अचौर्यम्, ब्रह्मचर्यम्, भावशुद्धिः ( अनुपधा ), अक्रोध, स्नानम्, पवित्रद्रव्यनिषेवणम्, विशिष्टदेवता-भक्ति, उपवास, अप्रमादश्च गण्यन्ते। वर्णाश्रमकर्तव्यानि'विशेषधर्म'इत्युच्यन्ते।

वैशेषिकदर्शनं ज्ञान-कर्मसमुच्चयवादे न श्रद्धत्ते तदीया श्रद्धा ज्ञानवादे वर्त्तते। निष्कामकर्म तत्त्वज्ञानोत्पादने सहायकमेव। मोक्षस्य साधनं तु तत्त्व-ज्ञानमस्ति। परं तेन तत्त्वज्ञानेन निवृत्तिरूपधर्मप्रसूतेन द्रव्यादिषट्पदार्थविषय-काभ्यां साधर्म्य-वैधर्म्याभ्यामुत्पन्नेन भाव्यम्। क्लेशबहुलात् संसाराद् यः प्राणी निवृत्तिं कामयते तस्य कर्त्तव्यं प्रमुखं यदसौ निवृत्तिरूपं धर्मं वा निष्कामकर्मानु-तिष्ठेत्। योगाभ्यासः प्राणायामश्चैतदर्थमपेक्षितोऽस्ति नितान्तम्। वैशेषिक-दर्शनस्य मतमिदं यन्मुक्तौ दुःखानामात्यन्तिकनाशः सञ्जायते आत्मा च स्वकीय-गुणविशेषनिहीनो भवति। भावोऽयं मुक्तिर्दुःखात्यन्तनिवृत्तिरूपा आत्मविशेष-गुणोच्छेदरूपा च वर्त्तते। प्रशस्तपादभाष्ये प्रोक्तम्—"दग्धेन्धनानलवदुपशमो मोक्ष." ।

ईश्वरः—वैशेषिकसूत्रे यद्यपि ईश्वरस्य सत्ता नितान्तस्फुटतया न प्रतिपा-दितास्ति परं तत्रत्यं सूत्रद्वयमवश्यमेव तं निर्दिशति सङ्केतत्वेन। प्रशस्तपादः किञ्च तदुत्तरकालवर्तिनो वैशेषिकशास्त्रिण एकमतेन ईश्वरं स्वीकुर्वन्ति। प्रशस्त-पाद ग्रन्थस्यादावन्ते च महेश्वरं प्रमाणभूतं मन्यते। सृष्टिकाले ईश्वरस्य सिसृक्ष-यैव जडपरमाणुषु स्पन्दनं समुत्पद्यत इति सर्वत्र वैशेषिकाः स्वीकुर्वन्तः श्रूयन्ते। मोक्षार्थमनुग्रह ईश्वरीयोऽपेक्ष्यत इत्यपि ते वदन्तः श्रूयन्ते। तस्मादवश्यमेव वैशेषिकपण्डिताः सन्तीश्वरवादिनः। अस्ति चातो वैशेषिकदर्शनमीश्वरवादि। परं तस्येश्वर. सर्वनियन्तास्ति न च सर्वस्रष्टा।

उपसंहृतिः—वैशेषिकदर्शनाद् यजगन्महत्त्वपूर्णं वस्तु लभते तदस्ति—पदार्थानां वर्गीकरणमथ च परमाणुवाद। एतद्दर्शनकृतं पदार्थानां वर्गीकरणं व्यावहारिकमधिकतरमस्ति। नास्ति तदधिकतरमीमांसायामाध्यात्मिकम्। जैनद-र्शनस्य वर्गीकरणमतितरामाध्यात्मिकमस्ति। सांख्यदर्शनस्य च पदार्थ-वर्गीकरणं हि आध्यात्मिकदृष्ट्या नितरां समीचीनम्। वैशेषिकेण तु जडपरमाणु-जीवात्म-परमात्मादीनां सर्वेषां सन्निवेशो द्रव्ये विधीयते। दर्शनस्यास्यैतदप्युल्लेखनीयं वैशिष्ट्यं यदिदं परमाणुवादेश्वरवादयोर्मध्ये समन्वयतां प्रतिष्ठापयति।

—❋—

( १३ )

## बौद्ध-दर्शनम्

बौद्ध-धर्मस्य प्रवर्त्तक आसीद् गौतमबुद्धः। बाल्येऽयं 'सिद्धार्थ' इत्येतेन नामधेयेन प्रथितो बभूव। कपिलवस्तुनाम नगरं, सः स्वजनुषा अलञ्चकार जातस्य तस्य पञ्चविंशतिशताब्द्योऽद्यातिक्रान्ताः। युवावस्थायामेव स प्राव्राजीत्। प्राप्ते सति पूर्णज्ञाने स स्वबुद्ध्या प्रकाशितस्य प्रकाशस्य प्रसारं संसारे सर्वत्र चकार। तस्य शिष्यास्तदीयान् उपदेशान् सिद्धान्तांश्च संगृह्य अग्रन्थयन्। ते हि ग्रन्थास्त्रिपिटकाख्यया सन्ति प्रख्याताः। ते सन्ति त्रयः—१. विनयपिटकः, २. सुत्तपिटकः, ३. अभिधम्मपिटकः। विनयपिटके सदाचारविषयका नियमाः, सुत्तपिटके सदृष्टान्तोपदेशाः, अभिधम्मपिटके च दार्शनिका विषया सन्ति सङ्कलिताः। इमे पालीभाषायां सन्ति निबद्धाः।

गच्छता कालेन बुद्धमहात्मनः शिष्याणां संख्या परां वृद्धिमियाय। तेऽनेकसम्प्रदायेषु विभक्ता अभूवन्। धार्मिकमतभेदाद् बौद्धधर्मो द्वयोः प्रधानयोः शाखयोः समाविष्टः कृतः। तत्रैका शाखा हीनयानमित्येतन्नाम अपरा च महायानमित्येतदभिधानमभजत्। हीनयानशाखायाः प्रचारो दक्षिणभारते आधिक्येनाभूत्। हीनयानशाखायामनेके ग्रन्थाः सम्प्राप्यन्ते। ते सन्ति च पालीभाषायाम्। अधुनापि शाखेयं लङ्का-स्याम-ब्रह्मद्वीपेषु प्रचलितास्ति। अस्ति चेयं बुद्धोपदेशानुकूल्यमभ्यासक्ता। महायानस्य प्रचारो विशेषेण उत्तरदेशेष्वजायत। एतदनुयायिनस्त्रिविष्टप-चीन-जापानेषु लभ्यन्ते। महायानशाखा स्वकीयं दार्शनिकं विवेचनं संस्कृतभाषायां कृतवती। एतच्छाखासम्बन्धिसंस्कृतग्रन्थानामनुवादस्त्रिविष्टपीय-दरदीय(चीनीय)भाषासु च सञ्जातः। यो हि मानवः बौद्धसाहित्ये जिज्ञासां विदधाति तस्मिन् साहित्ये हि प्रावीण्यमवाप्तुमभिलषते तस्य कर्तव्यमिदं यत् स अनेकभाषाविद् भवेत् तीक्ष्णदार्शनिकधीयुक्तश्च स्यात्।

'आत्मा शरीराद् भिन्नो न वा, स अमरोऽस्ति न वा संसारो नित्योऽनित्यो वा'—इत्येतद्विधेषु विचारेषु महात्मा बुद्धो नात्मानमपातयत्; दुःखानि केन प्रकारेण विनष्टानि स्युरित्यत्रैव स विचचार विचारयामास च। तत्-कथनमा-

सीद् यद् येषां विषयाणां समाधानाय न पर्याप्तानि प्रमाणानि स्युस्तेषां समाधानाय न प्रयत्नः कार्यः। सन्दिग्धेन्द्रियज्ञानाकाङ्क्षाऽऽशङ्काधारत्वात् स बहूनि दार्शनिकानि मतानि निराचकार। स तानि युक्तिहीनानि मेने। तत्त्वविवेचनेन मानवः कमपि लाभं लभते इत्येतद् विसृश्य स तानि तत्याज। तद्विचारेण तदेव विमर्शनीयं येनार्हता वा मुक्तिः संलब्धा भवेत्।

बौद्धधर्मेऽधोलिखिता दश प्रश्नाः 'अव्याकृतानि' इत्युच्यन्ते—

१. अपि किं लोकोऽयं शाश्वतः? २. किं वा अशाश्वतः? ३. अपि किं सान्तोऽयम्? ४. उत अनन्तः? ५. आत्मशरीरयोर्मध्य ऐक्यं किम्? ६. अथवा आत्मा शरीराद् भिन्नः? ७. अपि किं तथागता मरणानन्तरं जीवनं धारयन्ति? ८. न वा धारयन्ति? ९. अपि किं धारयन्ति धारयन्त्यपि न? १०. आहोस्वित् ते न भवन्ति अमरा न च मरणधर्माणः?

महात्मा बुद्धो मन्यते यदेषां प्रश्नानां समाधानं न सम्भवमस्ति; व्यावहारिकदृष्ट्या तेषां समाधानेन न कोऽपि लाभश्च। स हेय-हेयहेतु-हान-हानोपायानां विचारणमुचितं मन्यमानस्तत्रैव प्रकाशं पातयितुमनिशं प्रायतत। दुःखानां नाशो यथा स्यात् तथा प्रयत्नो विधेयः। अयमेव धर्मः; अयमेव धर्मविषयकमूलसिद्धान्तः। एतेनैवानासक्तेरक्षयतृष्णायाः संहारो दुःखानामवसानं भवितुमर्हति; एतेनैव मानसिकी शान्तिः प्राप्ता भवितुं शक्नोति; ज्ञान-प्रज्ञयोरवाप्तिः सम्भवाथ च निर्वाणमपि।

ज्ञानस्य सारांशं चतुर्षु आर्यसत्येषु सन्निहितं मत्वा महात्मा बुद्धस्तान्येव जनसाधारणमुपदिदेश। तानि चत्वारि आर्यसत्यानीमानि सन्ति:—

१. सांसारिकं जीवनं दुःखाकीर्णमस्ति। २. दुःखानि सन्ति कारणजन्यानि। ३. दुःखानां विनाशः सम्भवः। ४. अस्ति दुःखानां विनाशनस्योपायः। एतानि हि सत्यानि दुःख-दुःखसमुदाय-दुःखनिरोध-दुःखनिरोधमार्गाभिधया चाभिधीयन्ते।

जन्मजरारोगमृत्युशोकक्लेशाकाङ्क्षानैराश्यानि संन्यासक्तिजानि। अतः इमानि पर्वाण्यपि दुःखान्येव। मानवस्य जीवनमेतैर्निपीड्यमानं वर्तते इत्येतदन्ततो गत्वा महात्मा बुद्धो निश्चिकाय। तस्मात् तदुन्मूलयितुमेव स उपादिशत्। बुद्धस्येदं प्रथममार्यसत्यं सर्वाण्यपि भारतीयानि दर्शनानि स्वीकुर्वन्ति। चार्वा-

करतु न मन्यतेऽवश्यम्। सः सांसारिकं जीवनं न केवलं दुःखमयमपि तु सुखमयमपि अवगच्छति। परं महात्मा बुद्धोऽन्ये च भारतीया दार्शनिकाः पण्डिताः 'सांसारिकाणि सुखानि न यथार्थसुखानि' इति मन्यन्ति। क्षणिकत्वात्तेषां ते तान्यपि दुःखकोट्यामेवान्तर्भावयन्ति।

दुःखस्य सद्भावे सर्वेऽपि दार्शनिका अङ्गीकुर्वन्ति परं तत्कारणविषये न तेष्वैकमत्यं दृश्यते। दुःखकारणावगमनस्य प्रयत्नं महात्मा बुद्धः प्रतीत्यसमुत्पादं महत्त्वं चकार। न किमपि वस्तु कारणविहीनमित्येषामस्ति मान्यताप्रतीत्यसमुत्पादस्य। न कारणमन्तरेण दुःखस्योत्पत्तिः सम्भवा। जीवनमस्ति दुःखबहुलम्। जरामरणादिकानि हि जीवनस्य दुःखानि कथ्यन्ते। जरामरणादिकस्यानुभूतिः शरीरावाप्तिवशाद् भवति। तेनायातमिदं यज्जातिः (जन्मग्रहणम्) एव दुःखस्य कारणम्। जन्मनः कारणमस्ति भवः। जन्मग्रहणस्य प्रवृत्तिर्भव इत्युच्यते। एतस्याः प्रवृत्तेर्हेतुरस्ति-सांसारिकविषयेषु राग.। अत्रापि कारणमस्ति शब्द-स्पर्शादिविषयोपभोगस्य वासना। वासनां किंवा तृष्णां जनयति विषयभोगः। इन्द्रियैर्वा सुखानुभूतिर्भवति तथैव तृष्णा जीवति परमनुभूतिरिन्द्रियाणां विषयैः सह संभोगमिच्छति अतस्तदर्थं (अनुभूतिकृते) स्पर्शोऽपेक्ष्यते। स्पर्शो न ज्ञानेन्द्रियाणि विना भवितुमर्हति। अतः स्पर्शः षडायतनानि अपेक्षते। पञ्चज्ञानेन्द्रियाणि मनश्च-षडायतनमिति कथ्यते। गर्भस्थं शरीरं मनश्चान्तरेण षडायतनस्य स्थितिर्नास्ति। गर्भस्थं भ्रूणशरीरं मतश्चनामरूपत्वेन मतम्। चेद् गर्भावस्थायां चैतन्यं वा विज्ञानं न भवेद् तदा नामरूपयोर्वृद्धिर्न भवितुं शक्नोति। परं गर्भावस्थायां विज्ञानं तदैव सम्भाव्यं यदा प्राक्तनजन्मनः संस्काराः स्युः नान्यस्माद् विज्ञानं सम्भवति। गतजन्मनोऽन्तिमावस्था मानवीयपूर्वर्नर्तिसरकर्मणां प्रभावमारोपयति। कर्मभिः संस्कारा उत्पद्यन्ते; संस्कारेभ्यो विज्ञानं सम्भवति। संस्काराणां च कारणमस्ति—अविद्या। चेज्जीवनस्य नश्वरतायां दुःखमयतायाश्च सम्यगवगमनं कृतं स्यात् तदा तादृशेषु कर्मसु प्रवृत्तिरेव न सम्भवा या यादृशानि कर्माणि जन्म ग्राहयन्ति। तस्मात् सिद्धमिदं यज्जन्मनो मूलकारणम् 'अविद्या'स्ति।

उपर्युक्तेन विवरणेन स्फुटीभवति यत्—

| | |
|---|---|
| १. दुःखस्य कारणं जातिः। | ४. उपादानस्य कारणं तृष्णा। |
| २. जातेः कारणं भवः। | ५. तृष्णायाः कारणं वेदना (अनुभूतिः) |
| ३. भवस्य कारणम् उपादानम्। | ६. वेदनायाः कारणं स्पर्शः। |

सीद् यद् येषां विषयाणां समाधानाय न पर्याप्तानि प्रमाणानि स्युस्तेषां समाधानाय न प्रयत्नः कार्यः। सन्दिग्धेन्द्रियज्ञानाकाङ्क्षाऽऽशङ्काधारत्वात् स बहूनि दार्शनिकानि मतानि निराचकार। स तानि युक्तिहीनानि मेने। तद्विवेचनेन मानवः कमपि लाभं लभते इत्येतद् विमृश्य स तानि तत्याज। तद्विचारेण तदेव विमर्शनीयं येनार्हता या मुक्तिः संलब्धा भवेत्।

बौद्धधर्मेऽधोलिखिता दश प्रश्ना 'अव्याकृतानि' इत्युच्यन्ते—

१. अपि किं लोकोऽयं शाश्वतः? २. किं वा अशाश्वतः? ३. अपि किं सान्तोऽयम्? ४. उत अनन्तः? ५. आत्मशरीरयोर्मध्य ऐक्यं किम्? ६. अथवा आत्मा शरीराद् भिन्नः? ७. अपि किं तथागता मरणानन्तरं जीवनं धारयन्ति? ८. न वा धारयन्ति? ९. अपि किं धारयन्ति धारयन्त्यपि न? १०. आहोस्वित् ते न भवन्ति अमरा न च मरणधर्माणः?

महात्मा बुद्धो मन्यते यदेषां प्रश्नानां समाधानं न सम्भवमस्ति; व्यावहारिकदृष्ट्या तेषां समाधानेन न कोऽपि लाभश्च। स हेय-हेयहेतु-हान-हानोपायानां विचारणमुचितं मन्यमानस्तस्यैव प्रकाशं पातयितुमनिशं प्रायतत। दुःखानां नाशो यथा स्यात् तथा प्रयत्नो विधेयः। अयमेव धर्मः; अयमेव धर्मविषयेकमूलसिद्धान्तः। एतेनैवानासक्तेरुद्भवस्तृष्णायाः संहारो दुःखानामवसानं भवितुमर्हति; एतेनैव मानसिकी शान्तिः प्राप्ता भवितुं शक्नोति; शम-प्रज्ञयोरप्राप्तिः सम्भवाथ च निर्वाणमपि।

ज्ञानस्य सारांशं चतुर्षु आर्यसत्येषु सन्निहितं मत्वा महात्मा बुद्धस्तान्येव जनसाधारणमुपदिदेश। तानि चत्वारि आर्यसत्यानीमानि सन्ति:—

१. सांसारिकं जीवनं दुःखाकीर्णमस्ति। २. दुःखानि सन्ति कारणजन्यानि। ३. दुःखानां विनाशः सम्भवः। ४. अस्ति दुःखानां विनाशनस्योपायः। एतानि सत्यानि दुःख-दुःखसमुदाय-दुःखनिरोध-दुःखनिरोधमार्गाभिधया चाभिधीयन्ते।

जन्मजरारोगशोकक्लेशाकाङ्क्षानैराश्याणि सत्यामक्तिजानि। अतः इमानि सर्वाण्यपि दुःखान्येव। मानवस्य जीवनमेतैर्निपीड्यमानं वर्तते इत्येतदन्तर्नेत्रया महात्मा बुद्धो निश्चिकाय। तस्मात् तदुन्मूलयितुमेव स उपादिशत्। दुःखस्येदं प्रथममार्यसत्यं सर्वाण्यपि भारतीयानि दर्शनानि स्वीकुर्वन्ति। चार्वा-

करतु न मन्यतेऽस्वरयम्। सः सांसारिकं जीवनं न केवलं दुःखमयमपि तु सुखमयमपि अगच्छति। परं महात्मा बुद्धोऽन्ये च भारतीया दार्शनिकाः पण्डिताः 'सांसारिकाणि सुखानि न यथार्थसुखानि' इति शंसन्ति। क्षणिकत्वात्तेषां ते तान्यपि दुःखकोट्यामेवान्तर्भावयन्ति।

दुःखस्य सद्भावं सर्वेऽपि दार्शनिका अङ्गीकुर्वन्ति परं तत्कारणविषये न तेष्वैकमत्यं दृश्यते। दुःखकारणावगमनस्य प्रयत्नं महात्मा बुद्धः प्रतीत्यसमुत्पादं सहकृत्य चकार। न किमपि वस्तु *कारणविहीनमित्येषामस्ति मान्यताप्रतीत्यस-मुत्पादस्य*। न कारणमन्तरेण दुःखस्योत्पत्तिः सम्भवा। जीवनमस्ति दुःखबहुलम्। जरामरणादिकानि हि जीवनस्य दुःखानि कथ्यन्ते। जरामरणादिकस्यानुभूतिः शरीरावाप्तिवशाद् भवति। तेनायातमिदं यज्जातिः (जन्मग्रहणम्) एव दुःखस्य कारणम्। जन्मनः कारणमस्ति भवः। जन्मग्रहणस्य प्रवृत्तिर्भव इत्युच्यते। एतस्याः प्रवृत्तेर्हेतुरस्ति-सांसारिकविषयेषु रागः। अत्रापि कारणमस्ति शब्द-स्पर्शादिविषयोपभोगस्य वासना। वासनां किंवा तृष्णां जनयति विषयभोगः। *इन्द्रियैर्या सुखानुभूतिर्भवति तयैव तृष्णा जीवति परमनुभूतिरिन्द्रियाणां विषयैः* सह संभोगमिच्छन्ति अतस्तदर्थं (अनुभूतिकृते) स्पर्शोऽपेक्ष्यते। स्पर्शो न ज्ञानेन्द्रियाणि विना भवितुमर्हति। अतः स्पर्शः षडायतनानि अपेक्षते। पञ्चज्ञाने-न्द्रियाणि मनश्च-षडायतनमिति कथ्यते। गर्भस्थं शरीरं मनश्चान्तरेण षडायतनस्य स्थितिर्नास्ति। गर्भस्थं भ्रूणशरीरं मनश्चनामरूपत्वेन मतम्। चेद् गर्भावस्थायां चैतन्यं वा विज्ञानं न भवेद् तदा नामरूपयोर्वृद्धिर्न भवितुं शक्नोति। परं गर्भावस्थायां विज्ञानं तदैव सम्भाव्यं यदा प्राक्तनजन्मनः संस्काराः स्युः नान्य-स्माद् विज्ञानं सम्भवति। गतजन्मनोऽन्तिमावस्था मानवीयपूर्ववर्तिसकलकर्मणां प्रभावमारोपयति। कर्मभिः संस्कारा उत्पद्यन्ते, संस्कारेभ्यो विज्ञानं सम्भवति। संस्काराणां च कारणमस्ति—अविद्या। *चेज्जीवनस्य नश्वरताया दुःखमयताया*श्च सम्यगवगमनं कृतं स्यात् तदा तादृशेषु कर्मसु प्रवृत्तिरेव न सम्भवा या यादृशानि *कर्माणि जन्म आह्वयन्ति। तस्मात् सिद्धमिदं यज्जन्मनो मूलकारणम् 'अविद्या'स्ति।*

उपर्युक्तेन विवरणेन स्फुटीभवति यत्—

१. दुःखस्य कारणं जातिः।
२. जातेः कारणं भवः।
३. भवस्य कारणम् उपादानम्।
४. उपादानस्य कारणं तृष्णा।
५. तृष्णायाः कारणं वेदना (अनुभूतिः)
६. वेदनायाः कारणं स्पर्शः।

सीद् यद् येषां विषयाणां समाधानाय न पर्याप्तानि प्रमाणानि स्युस्तेषां समाधानाय न प्रयत्नः कार्यः। सन्दिग्धेन्द्रियज्ञानाकाङ्क्षाऽऽशङ्काधारत्वात् स बहूनि दार्शनिकानि मतानि निराचकार। स तानि युक्तिहीनानि मेने। तत्त्वविवेचनेन मानवः कमपि लाभं लभते इत्येतद् विमृश्य स तानि तत्याज। तद्विचारेण सदैव विमर्शनीयं येनार्हता वा मुक्तिः संलब्धा भवेत्।

बौद्धधर्मेऽधोलिखिता दश प्रश्नाः 'अव्याकृतानि' इत्युच्यन्ते—

१. अपि किं लोकोऽयं शाश्वतः? २. किं वा अशाश्वतः? ३. अपि किं सान्तोऽयम्? ४. उत अनन्तः? ५. आत्मशरीरयोर्मध्य ऐक्यं किम्? ६. अथवा आत्मा शरीराद् भिन्नः? ७. अपि किं तथागता मरणानन्तरं जीवनं धारयन्ति? ८. न वा धारयन्ति? ९. अपि किं धारयन्ति धारयन्त्यपि न? १०. आहोस्वित् ते न भवन्ति अमरा न च मरणधर्माणः?

महात्मा बुद्धो मन्यते यदेषां प्रश्नानां समाधानं न सम्भवमस्ति, व्यावहारिकदृष्ट्या तेषां समाधानेन न कोऽपि लाभश्च। स हेय-हेयहेतु-हान-हानोपायानां विचारणमुचितं मन्यमानस्तत्रैव प्रकाशं पातयितुमनिशं प्रायतत। दुःखानां नाशो यथा स्यात् तथा प्रयत्नो विधेयः। अयमेव धर्मः अयमेव धर्मविषयैकमूलसिद्धान्तः। एतेनैवानासक्तेरुद्भवस्तृष्णायाः संहारो दुःखानामपगमनं भवितुमर्हति; एतेनैव मानसिकी शान्तिः प्राप्ता भवितुं शक्नोति; ज्ञान-प्रज्ञयोः प्राप्तिः सम्भवाथ च निर्वाणमपि।

ज्ञानस्य सारांशं चतुर्षु आर्यसत्येषु सन्निहितं मत्वा महात्मा बुद्धस्तान्येव जनसाधारणमुपदिदेश। तानि चत्वारि आर्यसत्यानीमानि सन्ति:—

१. सांसारिकं जीवनं दुःखाकीर्णमस्ति। २. दुःखानि सन्ति कारणजन्यानि। ३. दुःखानां विनाशः सम्भवः। ४. अस्ति दुःखानां विनाशनस्योपायः। एतानि हि सत्यानि दुःख-दुःखसमुदाय-दुःखनिरोध-दुःखनिरोधमार्गाभिधया चाभिधीयन्ते।

जन्मजरारोगमृत्युशोकक्लेशाकाङ्क्षानिराशयोग संस्थामीक्तजीन। अतः इमानि सर्वाण्यपि दुःखान्येव। मानवस्य जीवनमेतैर्निपीड्यमानं वर्तते इत्येतदन्ततो गत्वा महात्मा बुद्धो निश्चिकाय। तस्मात् तदुन्मूलयितुमेव स उपादिशत्। बुद्धस्येदं प्रथममार्यसत्यं सर्वाण्यपि भारतीयानि दर्शनानि स्वीकुर्वन्ति। चार्वा-

वस्तु न मन्यतेऽवश्यम्। स सांसारिक जीवनं न केवल दुःखमयमपि तु सुखमयमपि अवगच्छति। परं महात्मा बुद्धोऽन्ये च भारतीया दार्शनिका पण्डिता 'सांसारिकाणि सुखानि न यथार्थसुखानि' इति शंसन्ति। चणिकत्वात्तेषां ते तान्यपि दुःखकोट्यामेवान्तर्भावयन्ति।

दुःखस्य सद्भावं सर्वेऽपि दार्शनिका अङ्गीकुर्वन्ति परं तत्कारणविषये न ते वैकमत्यं दृश्यते। दुःखकारणावगमनस्य प्रयत्नं महात्मा बुद्ध प्रतीत्यसमुत्पाद सहस्कृत्य चकार। न किमपि वस्तु कारणविहीनमस्ति येषामस्ति साम्यतापतीत्यसमुत्पादस्य। न कारणमन्तरेण दुःखस्योत्पत्ति सम्भवा। जीवनमस्ति दुःखबहुलम्। जरामरणादिकानि हि जीवनस्य दुःखानि कथ्यन्ते। जरामरणादिकस्यानुभूति शरीरावाप्तिवशाद् भवति। तेनायातमिदं यज्जाति (जन्मग्रहणम्) एव दुःखस्य कारणम्। जन्मन कारणमस्ति भव। जन्मग्रहणस्य प्रवृत्तिर्भव इत्युच्यते। एतस्या प्रवृत्तेर्हेतुरस्ति सांसारिकविषयेषु राग। अत्रापि कारणमस्ति शब्द—स्पर्शादिविषयोपभोगस्य वासना। वासना किंवा तृष्णा जनयति विषयभोग। इन्द्रियैर्या सुखानुभूतिर्भवति तयैव तृष्णा जीवति परमनुभूतिरिन्द्रियाणां विषयै सह सम्भोगमिच्छन्ति अतस्तदर्थं (अनुभूतिकृते) स्पर्शोऽपेक्ष्यते। स्पर्शो न ज्ञानेन्द्रियाणि विना भवितुमर्हति। अत स्पर्शं षडायतनानि अपेक्षते। पञ्चज्ञानेन्द्रियाणि मनश्च षडायतनमिति कथ्यते। गर्भस्थ शरीरं मनश्चान्तरेण षडायतनस्य स्थितिर्नास्ति। गर्भस्थभ्रूणशरीरं मनश्चनामरूपत्वेन मतम्। चेद् गर्भावस्थाया चैतन्यं वा विज्ञानं न भवेद् तदा नामरूपयोर्वृद्धिर्न भवितु शक्नोति। परं गर्भावस्थाया विज्ञानं तदैव सम्भाव्यं यदा प्राक्तनजन्मन संस्कारा स्यु नास्स्माद् विज्ञानं सम्भवति। गतजन्मनोऽन्तिमावस्था मानवीयपूर्वर्तिसंस्कर्मणा प्रभावमारोपयति। कर्मभि संस्कारा उत्पद्यन्ते, संस्कारेभ्यो विज्ञानं सम्भवति। संस्काराणां च कारणमस्ति—अविद्या। चेज्जीवनस्य नश्वरताया दुःखमयतायाश्च सम्यगवगमनं कृतं स्यात् तदा तादृशेषु कर्मसु प्रवृत्तिरेव न सम्भवा या यादृशानि कर्माणि जन्म ग्राहयन्ति। तस्मात् सिद्धमिदं यज्जन्मनो मूलकारणम् 'अविद्या' स्ति।

उपर्युक्तेन विवरणेन स्फुटीभवति यत्—

१ दुःखस्य कारणं जाति।
२ जाते कारणं भव।
३ भवस्य कारणम् उपादानम्।
४ उपादानस्य कारणं तृष्णा।
५ तृष्णाया कारणं वेदना (अनुभूति)
६ वेदनाया कारणं स्पर्श।

७. स्पर्शस्य कारणं षडायतनम् ।
८. षडायतनस्य कारणं नाम-रूपे ।
९. नाम-रूप-कारणं विज्ञानम् ।
१०. विज्ञानस्य कारणं संस्कारः ।
११. संस्कारस्य कारणम् अविद्या ।
१२. जन्मनो मूलकारणम् अविद्या ।

बौद्धसाहित्यस्य शृङ्खलेयं भावचक्रमित्यभिधीयते वा द्वादश निदानमिति ।

द्वादशनिदानस्य व्याप्तिर्वर्तमान-भूत-भाविजीवनेषु वर्तते । वर्तमानजीवनस्य कारणमतीतं जीवनमस्ति । वर्तमानजीवनञ्च भाविजीवनस्य कारणम् । अतस्त्रयाणामपि जीवनानां शृङ्खलास्ति । द्वादशनिदानमस्यां शृङ्खलायां हि आचरणखण्डं निविशते । समग्रमपि द्वादशनिदानं भूत-भाविभवजीवनेषु हि एवं विभक्तीकर्तुं शक्यम्—

१. अविद्या
२. संस्कारः
} भूतजीवनम्

३. विज्ञानम्
४. नामरूपे
५. षडायतनम्
६. स्पर्शः
७. वेदना
८. तृष्णा
९. उपादानम्
१०. भवः
} भवजीवनम्

११. जातिः
१२. जरामरणम्
} भाविजीवनम्

द्वितीयेनार्यसत्येन विदितं भवति यद् दुःखस्य कारणमस्ति । यदि दुःखस्य कारणं ज्ञातं स्यात् तदा दुःखस्य समाप्तिरवश्यमेव भवितुं शक्नोति । अतः दुःखनाशककारणमवश्यमेव वेदितव्यं वर्तते । तदस्ति-निर्वाणम् । दर्शनान्तरेषु 'निर्वाणम्' मोक्ष इत्युच्यते । रागद्वेषौ जित्वा आर्यसत्यानि च सततं ध्यात्वा समाधिना समवाप्ता भवति या प्रज्ञा सा सांसारिकेषु विषयेषु विरतिं जनयति । इदं हि सांसारिकविषयेषु वैराग्यमेव निर्वाणमिति कथ्यते । निर्वाणं जीवनकालेऽपि लब्धुं शक्यमस्ति । प्राप्तनिर्वाणो महात्मा यावज्जीवति तावद्भावनिर्दां कर्म कुर्वन् एव जीवति । परं सर्वाण्यपि तस्य कर्माणि अनासक्तिपूर्वकं क्रियमाणानि भवन्ति । यानि कर्माणि रागद्वेषादिं विहाय क्रियन्ते न तानि बन्धने कारणानि भवन्ति ।

महात्मनो बुद्धस्योपदेशोऽयं यत् कर्म द्विधा। प्रथमं तत् यद् रागद्वेषमोहवशात् क्रियते। द्वितीयं तत् यद् रागद्वेषमोहत्यागपूर्वकमनुष्ठीयते। प्रथमविधं कर्म जन्मनः कारणं भवति, द्वितीयविधञ्च कर्म जन्म छिनत्ति। मानवेन तथाविधं कर्म कार्यं येन निर्वाणं प्राप्येत। निर्वाणं पुनर्जन्म नाशयति दुःखानि दलयति शान्तिञ्च वितरयति।

दुःख-निरोधस्य मार्गश्चतुर्थमार्यसत्यमस्ति। अनेन मार्गेण निर्वाणावस्था प्राप्ता भवति। येभ्यो हि कारणेभ्यो दुःखान्युत्पद्यन्ते तेषां नाशनस्योपाय एव निर्वाणस्य मार्गोऽस्ति। महात्मा बुद्धो निर्वाणावाप्तेर्यं मार्गं जगतां पुरस्ताद् निदधौ तस्य मन्त्यष्टाङ्गान्यष्ट। अतोऽयमष्टाङ्गमार्ग इति गद्यते। बौद्धधर्मस्य सारोऽयम्। एष मार्गः संन्यासिना गृहस्थाना सर्वेषामपि गम्योऽस्ति। मार्गस्य चाष्टाङ्गानि इमानि सन्ति—१. सम्यग्दृष्टि, २. सम्यक्सङ्कल्प, ३. सम्यक् वाक्, ४ सम्यक्कर्मान्त, ५ सम्यगाजीव, ६ सम्यग्व्यायाम, ७ सम्यक्स्मृति, ८ सम्यक्समाधि।

नैतिकं वस्तु यया समुन्नमति निर्मलीभवति सरस्तञ्च जायते सा सम्यग्दृष्टिरित्युच्यते। अतः सम्यग्दृष्टिः समुपार्जनीयास्ति। चत्वारि आर्यसत्यान्येव 'सम्यग्दृष्टि' इत्येतेन नाम्ना गीयन्ते। अविद्या दुःखस्य कारणमस्ति। तदधीनो भवन् मानव आत्म-संसारयोर्मिथ्याधियं निबध्नाति। एषा हि सम्यग् दृष्टिरना धियं सृजति या वस्तुनो यथावद्रूपमवगमयति।

आर्यसत्यानां ज्ञानमात्रेण न कोऽपि लाभो भवति तावत्, यावत् तदनुरूपजीवन-यापनस्य दृढीयान् सङ्कल्पो न कृतो भवति। निर्वाणमीप्सुभिः सांसारिकेषु विषयेषु आसक्तिस्त्यक्तव्या न कस्मिंश्चिदपि तैर्द्वेषः कर्तव्यो न च हिंसैवानुसरणीया—एतद्विधस्याचरणस्याङ्गीकरणमेव बौद्धदर्शनेन **सम्यक्सङ्कल्प** इति परिभाष्यते।

येन मिथ्यावादितायाः निन्दायाः अप्रियस्य वचनस्य वाचालतायाश्च परित्यागो भवति सम्यक्सङ्कल्पश्च गिराया परिणम्यते सा सम्यग्वागिति प्रोच्यते।

सम्यक्सङ्कल्पस्य कर्मणि परिणमनमहिंसाऽस्तेयेन्द्रियसंयमानामनुष्ठानं च **'सम्यक्कर्मान्त'** इत्युच्यते।

असद्वचनासत्कर्मपरित्यागपुरस्सरं यथोचितोपायेन जीविकोपार्जनं किंवा योग-क्षेमार्थं समुचितमार्गानुसरणं सम्यगाजीव इति व्याह्रियते ।

पुरातनासद्भावानां पूर्णतया विनाशनं, असद्भावेभ्यो मनसो रक्षणं, सततं सद्विचाराणां मनसि सन्निवेशनं, निरन्तरञ्च तथा प्रयतनं येन मनस्तान् सद्विचारान् वोढुं प्रभवेद्–इत्येते प्रयत्नाश्चत्वार एव सम्यग्व्यायाम इति नाम्ना व्यवह्रियन्ते ।

संसारे यावन्तोऽपि सन्ति पदार्थास्तावन्तः सर्वेऽपि क्षणिकाः सन्ति दुःखदाश्च सन्ति—इत्येतदवधार्य ज्ञानवतां तेषु सर्वेषु या अनासक्तिर्भवति या वैराग्यधीर्भवति या च निर्विण्णता भवति सैव हि सम्यक्स्मृतिरित्युदीर्यते । अनेनापि प्रकारेण वक्तुं शक्यते यच्छरीरं शरीरत्वेन, चित्तं चित्तत्वेन, मनो मनस्त्वेन, वेदनां वेदनात्वेन विभावनं सम्यक्स्मृतिरिति बौद्धदर्शनगाह । चित्तस्य एकाग्रता सम्यक्समाधिरिति निगद्यते बुधैः । सम्यग्दृष्ट्यादि सप्तसाधनैरसच्चित्तवृत्तीनां निराकरणं यो मानवः कुरुते स सम्यक्समाधौ प्रविष्टो भवितुमर्हति । सम्यक्समाधेः सन्ति चतस्रः स्थितयः । ता उत्तीर्य मानवो निर्वाणं लभते । शुद्धचित्तत्वात् पुमान् यमानन्दं याञ्च शान्तिं विन्दते स आनन्दः सा च शान्तिरस्ति सम्यक्समाधेः प्रथमा स्थितिः ।

द्वितीया स्थितिः सा अस्ति यत्र सर्वविधा अपि संशया उच्छिद्यन्ते, आर्यसत्येषु श्रद्धा वर्धते । अस्यां स्थित्यां प्रगाढचिन्तनात् शान्तिश्चित्तस्थिरत्वञ्चोदेति । साधकः शान्तिमानन्दञ्चानुभवति ।

तृतीयस्थित्यां साधक आनन्दे शान्त्याञ्चोपेक्षाधिकं निधातुमीहते । पुनरया ईदृश्या चित्ते ममतायाः सञ्चारो भवति विश्रान्तिश्चानुभूतिं याति । चतुर्थ्यां स्थित्यान्तु न सम्पत्परतया न दैहिकविश्रामस्य न ध्यानगतानन्दस्य न च कस्यापि ज्ञानमेव सन्तिष्ठते । एषा स्थितिः पूर्णशान्तेः पूर्णविरागस्य पूर्णस्य च संयमस्य स्थितिर्भवति । न तस्यां सुखमवशिष्यते न च दुःखम् । अतः परन्तु निर्वाणमेव संस्थितिर्ज्ञायते । साधकं भाति पूर्णप्रज्ञः ।

अष्टाङ्गमार्गस्य त्रीणि प्रधानान्यङ्गानि सन्ति—प्रज्ञा, शीलम्, समाधिश्च । प्रज्ञाशीलयोर्मध्ये समवायसम्बन्धोऽस्ति । न प्रज्ञा शीलात्, न च प्रज्ञायाः शीलं दूरीकर्तुं शक्यमस्ति । यथा तन्तुषु पटः पटे च तन्तवः स्थिता भवन्ति तथैव

प्रज्ञायां शीलं शीले च प्रज्ञावतिष्ठते । चित्तस्य एकाग्रता ( समाधिः ) तु सर्वत्रै-वापेक्ष्यते ।

भगवान् बुद्ध आत्मानं किञ्च जगदधिकृत्यापि उपदेशं कुर्वाणो दृश्यते । अत्र ते दार्शनिका विचाराः समुपस्थाप्यन्ते यैस्तदीया धर्मोपदेशा अवलम्ब्यन्ते । एवं-विधा विचाराः सन्ति चत्वारः—१. प्रतीत्यसमुत्पादः, २. कर्म, ३. क्षणिकवादः, ४. आत्मनोऽनस्तित्वम् ।

प्रतीत्यसमुत्पादः—

दुःखस्य मूलकारणम् अविद्यास्ति । तदीयाया विचित्रशक्तेः कारणानां पर-म्परा समुत्पद्यते । इमामेव कारणपरम्परां 'प्रतीत्यसमुत्पाद' इति कथ्यते कस्मा-च्चित् कारणात् यत्कार्यमुत्पद्यते तत्कार्यमेव कस्याप्यन्यस्य कार्यस्य कारणं भवति एवमेवोत्तरोत्तरमेकैकं कार्यं कार्यान्तरम्प्रति कारणत्वं गच्छति । नाक-स्मात् किमपि प्रादुर्भवति ।

प्रतीत्यसमुत्पादं बुद्धो 'धर्म' इत्येतेन सम्मानास्पदपदेन आजुहाव ।

कर्मवादः वर्तमानजीवनं भूतजीवनस्य परिणाम इति यद् बोधयति स कर्मवाद इत्युच्यते । प्रतीत्यसमुत्पादस्यैव रूपविशेषोऽयम् ।

क्षणिकवादः—सर्वाण्यपि वस्तूनि सन्त्यनित्यानि । यदपि नित्यं स्थास्नु च प्रतिभासते तदपि नश्वरमस्ति । सर्वेऽपि संयोगाः सन्ति वियोगान्ताः । यस्य यस्योदयो दृश्यते तस्य सर्वस्य पतनमपि स्यात् । सर्वमपि परिवर्तन-शीलम् । न किमपि एतादृशं यन्न परिवर्तेत इत्येवं यो वदति सोऽस्ति क्षणिकवादः ।

आत्मानस्तित्ववादः—प्रतीत्यसमुत्पादहेतोर्वा परिवर्तनवादवशाद्वा महात्मा बुद्ध आत्मनो नित्यत्वं स्वीकरोति । स आह जीवनं विभिन्नक्रमशीलाव्यवहिता-वस्थानां प्रवाहोऽस्ति । अस्य प्रवाहस्याभ्यन्तरे कस्या अपि अवस्थाया उत्पत्ति-स्तत्प्राग्वर्तिन्या अवस्थायाः सञ्जायते । प्राक्तनावस्थापन्नावस्थामापन्नावस्था च भाविनीमवस्थां प्रसूते । ते जीवनस्य सन्ततः सर्वा अवस्थाः पूर्वापरकारण-कार्यसम्बद्धा एव सन्ति । यथा कस्यचन दीपकस्य ज्योतिषा परदीपकोऽपि ज्योतिष्मान् भवति तथैव वर्तमानजीवनस्यान्त्यावस्थातो भाविजीवन-स्याद्युत्पत्तिमवबुध्यैतत्समुपस्थापयन् 'शैशवे यौवने वार्धक्ये चैकस्या एव सन्ततेः स्थितिः किञ्च प्राणिनः पुनर्जन्मापि जायते इत्येतत्स्वकीयं वादं परिपुष्णन् बुद्धो महात्माऽऽत्मनोऽनस्तित्वमङ्गीकरोति । यदि बौद्धदर्शनात् आत्मपदं दूरं

स्याथि वा नित्यं तत्त्वं सिद्धयति। विलियमजेम्सस्यापि मतमेतादृशम्। तन्मतेनापि आत्मा विज्ञानप्रवाहाद् भिन्नं नान्यत् किमपि। प्राग्वर्तिन्या अवस्थाया विद्यमानावस्थाजनकत्वात् आत्मनोऽङ्गीकरणत्वमपेक्षितमेव न जायते किञ्च स्मृतेरपि सम्यगुपपादनमपि कर्तुं शक्यं भवतीति समुदीरयन् बुद्ध आत्मसम्बन्धिविचारान् हातुमुपदिशति।

काय-चित्त-विज्ञानानां संघातो हि मनुष्य इति प्रोच्यते। यावत् तेषां *समष्टिः सत्तां निदधाति तावन्मनुष्योऽपि सत्तावान्। तन्नाशे तस्यापि* सञ्जायतेऽन्तः। अतः संघातं व्यतिरिच्य नान्यदात्मनामधेयं किमपि वस्तु। मनोविज्ञानदृष्ट्या मनुष्यः पञ्चस्कन्धानां संयोगोऽस्ति। पञ्चविधपरिवर्तनशीलसत्त्वसंघात एव पञ्चस्कन्धनाम्ना प्रथते। रूपं, वेदना, संज्ञा, संस्कारो विज्ञानं (चेतनता) इत्येतानि पञ्चस्कन्धा इत्युच्यन्ते। मानवीयशरीरस्याकारवर्णादीनामन्तर्भावो रूपे भवति; सुख-दुःख-विषादबोधो यतो जायते सास्ति वेदना। संज्ञया वस्तु प्रत्यक्षं भवति; गतकर्मवशात् सम्भूता प्रवृत्तयः 'संस्कार' इति कथ्यन्ते। पञ्चमो विज्ञानाख्यः स्कन्धश्चेतनतास्ति।

भगवद् बुद्धोपदेशेषु क्वचिदैहिकतावादो दृश्यतेऽतः केचन तं ऐहिकतावादी; क्वचित् तत्र *प्रतीतिवादः प्राप्यतेऽतस्तं केचन प्रतीतिवादी;* क्वचित् तत्रानुभववाद *उपलभ्यतेऽतस्तं केचन अनुभववादी* क्वचित् *तत्र संशयवादो* लक्ष्यतेऽतः केचन तं संशयवादी; क्वचित् तत्र रहस्यवादोऽप्याप्यतेऽतस्तं केचन रहस्यवादी; क्वचित्तु तत्रातीन्द्रियवादः प्रेक्ष्यतेऽतः केचन तमतीन्द्रियवादीति वदन्ति।

एवं हि बहूनां वादानां दर्शनस्य फलमिदं संवृत्तं यद् बौद्धधर्मो बहुलशाखाशाली सञ्जातः कालान्तरेण। तत्र प्रमुखाः सन्ति मताश्रतस्रः शाखाः। ता इमाः—

१. माध्यमिकानां (शून्यवादिनां) बौद्धानां शाखा
२. योगाचार (विज्ञानवादि) बौद्धानां ,,
३. वैभाषिक (बाह्यप्रत्यक्षवादि) बौद्धानां ,,
४. *सौत्रान्तिक (बाह्यानुमेयवादि)* बौद्धानां ,,

शून्यवाद—विज्ञानवादयोरन्तर्भावो महायानसम्प्रदायेऽस्ति बाह्यप्रत्यक्षवाद-बाह्यानुमेयवादयोः समावेशो हीनयानसम्प्रदाये वर्तते।

शून्यवादस्य (माध्यमिकमतस्य) प्रवर्तक आसीन् नागार्जुनः। नागार्जुनः माध्यमिककारिकाभिधे स्वकीये ग्रन्थे प्रसिद्धे *शून्यवादं* विनिनाय। तत्र सः

पाण्डित्यपूर्णं विवेचनं वादस्यास्य कुर्वाणैः प्राप्यते। शून्यवादे संस्कृतभाषायां बहवो ग्रन्था लिखिता अभूवन्। परं दुःखमिदं न ते प्राप्यन्ते।

माध्यमिकाः (शून्यवादिनः) मन्यन्ते यत्र मानसिकस्य न च बाह्यस्य वस्तुनोऽस्तित्वमस्ति। सर्वमपि शून्यम्। इदं शून्यमनिर्वचनीयम्। पुनःसद्-सद्भ्यां विलक्षणम्। सत् असच्च उभयमपि शून्यस्य गर्भे प्राप्तनिर्वाणं सदवतिष्ठते। नेदमभावात्मकं परमलक्षणमस्ति। अविद्यास्मादेव शून्यात् समस्तमपि जगदभिव्यक्तं भवति।

बौद्धदर्शनं वस्तुतो निःस्वभावमनिर्वचनीयमलक्षणमिदं शून्यमेव परमतत्त्वं *मन्यते। इदमेव महानिर्वाणपदमस्ति। इदमेव पदमासाद्य साधकः प्राप्तपरमपदो* भवति। नातः परं किमपि गन्तव्यम्।

*योगाचार (विज्ञानवाद)स्य प्रवर्तका आसन् असंग-वसुबन्धुदिङ्नागाः।* लङ्कावतारसूत्रमस्य वादस्य प्रमुखो ग्रन्थः। शान्तरक्षितस्य 'तत्त्वसंग्रहः' पाण्डित्यपूर्णोऽस्ति ग्रन्थराज। कमलशीलोऽस्मिन् ग्रन्थे वैदुष्यपूर्णामेनां टीकामपि लिलेख। विदुषां कथनमिदमपि यदस्य विज्ञानवादस्यादिप्रवर्तको मैत्रेयनाथो बभूव। श्रूयते यदसौ महायानसूत्रालङ्कार-धर्मधर्मताविभंग-मध्यान्तविभंग-योगाचार-भूमिशास्त्राभिसमयालङ्कारकारिका-महायानउत्तरतन्त्रं प्राणैषीत्। परं नोपलब्धा भवन्तीमे।

विज्ञानवादिनां मतमिदं यन्मानसिकं वस्तु वा विज्ञानमेव सत्यम्। न बाह्य-पदार्थः सत्तावान्। 'चित्तमे'व परमतत्त्वमस्ति। 'चित्तस्यै'व प्रवृत्तिर्मुक्तिश्च भवति। 'चित्त'मेवोत्पद्यते तदेव निरुध्यते। सर्वाण्यन्यानि वस्तूनि चित्तस्यैव विकल्परूपेण वर्तन्ते। चित्तमेव ज्ञातृ-ज्ञान-ज्ञेयरूपेणोपतिष्ठति। अविद्यया भिन्नमिव तदाभासते।

विज्ञानं प्रवृत्तिविज्ञानालयविज्ञानभेदाभ्यां प्राधान्येन द्विविधम्। वस्तुतश्चित्तमेवालयविज्ञानमिति नाम्ना व्यपदिश्यते। कायिकवाचिकमानसिकविज्ञानानां *वासनारूपस्य बीजस्य तत्र सन्निहितत्वादालयविज्ञानमिति स्मृतम्।* चक्षुःश्रोत्र-घ्राण-रसना-काय-मनः-क्लिष्टमनोविज्ञानानां सप्तानां व्यवहारार्थत्वात् तानि सप्तापि प्रवृत्तिविज्ञानमित्येतेन नाम्नाभिधीयन्ते। विज्ञानवादिनो योगजप्रत्यक्षं पृथक्प्रमाणत्वेन स्वीकुर्वन्ति नापि स्वीकुर्वन्ति। सन्तीमे व्यवहारदशायां परतः

सामाण्यवादिनः। मम इन्द्रियमस्ति-इत्येतन्मेषां मतम्। व्यवहारहेतुनेमे ज्ञानं द्विविधं मन्यन्ते ग्रहणरूपम् अध्यवसायरूपञ्च।

वैभाषिकमतस्य निरूपणे यो हयुत्तमो ग्रन्थोऽस्ति सोऽस्ति वसुबन्धुप्रणीतः 'अभिधर्मकोशः'। वसुबन्धुः प्रथमं वैभाषिकमतावलम्बी आसीत् परं पश्चादसौ सौत्रान्तिकमतस्याचार्यः सञ्जातः। अस्मिन् एव वैभाषिकसम्प्रदाये संघभद्रस्य 'न्यायानुसारः' 'समयप्रदीपिका' च किञ्च धर्मकीर्तेर्न्यायबिन्दुः सुविदितग्रन्थाः सन्ति। इदमपि श्रूयते यत् मतस्यास्य सिद्धान्तान् प्रथमं कात्यायनीपुत्रो प्रस्नातिस्म। सः संस्कृतभाषायां 'ज्ञानप्रस्थानशास्त्रं' नाम ग्रन्थञ्चकार।

वैभाषिका बाह्यप्रत्यक्षवादं रचयन्ति। इमे चित्तस्य बाह्यवस्तुनश्च सद्भाव-मुररीकुर्वन्ति। आधुनिकनव्यवस्तुवादिन इव इमे वदन्ति वस्तूनां ज्ञानं प्रत्यक्षेणैव प्रमाणेन भवितुं शक्यं नान्येनोपायेन। अस्मिन् मते तत्त्व-विचारो द्वाभ्यां दृष्टिभ्यां क्रियते। ते दृष्टी इमे :—१. विषयगता २. विषयिगता। विषयि-गतदृष्ट्या समस्तमपि जगत् स्कन्धायतन-धातुषु विभज्यते। स्कन्धाः पञ्च पूर्वमुक्ताः। आयतनानि च मन इन्द्रियाणि तद्विषयाश्च सन्ति। बौद्धदर्शने 'धातुः' इत्येतत् पदं 'स्वतन्त्रसत्ता' इत्येतस्मिन् अर्थे प्रयुज्यते। वसुबन्धुस्तु यतो ज्ञानसन्ततेः समुद्भवः स धातुरित्येतन्नाम्ना प्रोच्यत इत्याह।

विषयगतदृष्ट्या जगतो धर्माः प्रतिपाद्यन्ते। इमे च धर्मा द्वयोर्वर्गयोः विभज्यन्ते तद्वर्गगताश्च बहुषु विभक्तीकृताः सन्ति।

संक्षेपतोऽस्मिन् मते बाह्यं जगदाभ्यन्तरञ्च जगदुभयमपि स्वकीयमस्तित्वं निदधाति। उभेऽपि सत्ते परस्परं निरपेक्षे। इदं मतं मन्यते यत् साधकः सत्ताद्वयस्यापि स्वरूपं कार्त्स्न्येन प्रथमं विचिन्तयति ततश्च तदीयान्यधर्माणां ज्ञानमश्नुते ततश्च परमतत्त्वमार्गणे प्रवर्तते। अन्ततो गत्वा च स शून्य-तत्त्वमासादयति।

सौत्रान्तिकमतस्य ( बाह्यानुमेयवादस्य ) आदिप्रवर्तकः कुमारलात आचार्य आसीत्। नास्य मतस्य कश्चिदपि स्वतन्त्रो ग्रन्थ आसाद्यते। सर्वसिद्धान्त-संग्रहादिग्रन्थेषु वादस्यास्योल्लेखः प्राप्यते।

सौत्रान्तिका अपि वैभाषिका इव चित्तं बाह्यमपि जगत् मन्यन्ते। ते वस्तु किञ्च तद् वस्तुविषयकं ज्ञानं पृथक्-पृथक् इति कथयन्ति। युक्त्युपस्थापनपूर्वकं ते बाह्यवस्तुनोऽस्तित्वं प्रतिपादयन्तो वदन्ति यद् बाह्यवस्तूनामनेकाकारत्वात्

ज्ञानस्य भिन्नभिन्नाकारत्वं सिद्ध्यति। विभिन्नाकारज्ञानैस्तत्कारणरूपविभिन्न-बाह्यानि वस्तूनि चानुमातुं शक्यन्ते।

सौत्रान्तिका ज्ञानं चतुर्विधप्रत्ययमिति शंसन्ति। आलम्बनम्, समनन्तरम्, अधिपति, सहकारि-इत्येतानि सन्ति ज्ञानस्य चत्वारि कारणानि (प्रत्ययाः)।

एषाच्चतुर्विधकारणानां संयोगात् कस्यापि वस्तुनो ज्ञानं सम्भवं भवति। ज्ञानस्य आकारो ज्ञातवस्तु सदृश एव भवति। प्रत्यक्षवस्तूनां ये ह्याकारा अवलोक्यन्ते ते ज्ञानस्यैवाकाराः सन्ति। ते च मनस्येव वर्तन्ते। बाह्यवस्तुनो ज्ञानं वस्तुजनितमानसिकाकारादनुमानेनावगम्यते—इत्येतदभ्युपगमनात् सौत्रान्तिका बाह्यानुमेयवादिन इति कथ्यन्ते।

धार्मिकमतभेदाद् बौद्धधर्मो हि हीनयानमहायानाभिधयोः सम्प्रदाययोर्विभक्तोऽभवदिति पुरा प्रोक्तम्। तत्र हीनयाने हि बौद्धधर्मस्य प्राचीनं स्वरूपं परिलक्ष्यते। सम्प्रदायोऽयं धर्मेण सर्वमपि जगत् परिचाल्यत इति मन्वानो धर्मस्य नियामकतायां श्रद्धत्ते। विश्वसिति चायं सम्प्रदायो यन्मानवः स्वप्रयत्नेन निर्वाणं लब्धुं शक्नोति। एष सम्प्रदायः स्वालम्बनेऽभिनिविशते। स्वावलम्बनं नेश्वरमपेक्षते न च तदनुकम्पाम्। तत्र तु केवलं धर्मोऽपेक्ष्यते—इत्येतन्मतस्य सम्प्रदायस्य। सर्वथा समुदायोऽयं बुद्धोपदेशमनुगच्छति।

महायानसम्प्रदाये यदान्यमनोवृत्तेरस्तित्वमवाप्यते। एष सम्प्रदायस्तं मार्गं प्रदर्शयति येन सर्वेऽपि जनाः सुगमतया बुद्ध-धर्मं पालयितुं शक्नुयुः लोक-सेवास्यस्य सम्प्रदायस्य प्रधानोद्देश्यम्। हीनयानिनो हि यदि स्वमुक्त्यर्थमेव यतन्ते तदा महायानिनो न केवलं स्वमुक्त्यर्थमपि तु ते परमुक्त्यर्थमपि चेष्टन्ते।

महायानं हि त्रीन् महत्त्वमयान् विचारान् निदधाति। तेषु प्रथमोऽस्ति बोधिसत्त्वविषयकविचारो द्वितीयो बुद्धस्योपास्यरूपसम्बन्धीविचारस्तृतीयश्चात्मसद्भावनिष्ठो विचारः।

बोधिसत्त्वविषयकविचारेण प्रेर्यमाणो भूत्वा मानवः प्राणिनामार्तिनाशने यत्नं कुर्वाणो निर्वाणलाभाय प्रयतते।

बुद्धस्योपास्यरूपसम्बन्धिना विचारेण ते जना उपक्रियन्ते ये न बोधिसत्त्वादर्शमध्यारोढुं प्रभवन्ति न च स्वालम्बिन एव भवितुमर्हन्ति। अयं हि विचार

प्रामाण्यवादिन । मन इन्द्रियमस्ति इत्येतद्वैषां मतम् । व्यवहारहेतुनेमे ज्ञान द्विविधं मन्यन्ते ग्रहणरूपम् अध्यवसायरूपञ्च ।

वैभाषिकमतस्य निरूपणे यो हि प्रमुखो ग्रन्थोऽस्ति सोऽस्ति वसुबन्धुप्रणीत 'अभिधर्मकोश'। वसुबन्धु प्रथम वैभाषिकमतावलम्बी आसीत् पर पश्चादसौ सौत्रान्तिकमतस्याचार्य सञ्जात । अस्मिन् एव वैभाषिकसम्प्रदाये संघभद्रस्य 'न्यायानुसार' 'समयप्रदीपिका' च किञ्च धर्मकीर्तेर्न्यायबिन्दु सुविदितग्रन्था सन्ति। इदमपि श्रूयते यत् मतस्यास्य सिद्धान्तान् प्रथम कात्यायनीपुत्रो प्रस्तौतिस्म । स संस्कृतभाषायां 'ज्ञानप्रस्थानशास्त्र' नाम ग्रन्थञ्चकार ।

वैभाषिका बाह्यप्रत्यक्षवादे रज्यन्ति । इमे चित्तस्य बाह्यवस्तुनश्च सद्भाव-मुररीकुर्वन्ति । आधुनिकनव्यवस्तुवादिन इव इमे वदन्ति वस्तूनां ज्ञान प्रत्यक्षेणैव प्रमाणेन भवितु शक्य नान्येनोपायेन । अस्मिन् मते सत्त्वविचारो द्वाभ्यां दृष्टिभ्यां क्रियते । ते दृष्टी इमे —१ विषयगता २ विषयिगता । विषयिगतदृष्ट्या समस्तमपि जगत् स्कन्धायतनधातुषु विभज्यते । स्कन्धा पञ्च पूर्वमुक्ता । आयतनानि च मन इन्द्रियाणि तद्विषयाश्च सन्ति । बौद्धदर्शने 'धातु' इत्येतत् पद 'स्वतन्त्रसत्ता' इत्येतस्मिन् अर्थे प्रयुज्यते । वसुबन्धुस्तु यतो ज्ञानसन्तते समुद्भव स धातुरित्येतन्नाम्ना प्रोच्यत इत्याह ।

विषयगतदृष्ट्या जगतो धर्मा प्रतिपाद्यन्ते । इमे च धर्मा द्वयोर्वर्गयो विभज्यन्ते तद्वर्गगताश्च बहुषु विभक्तीकृता सन्ति ।

सङ्क्षेपतोऽस्मिन् मते बाह्य जगदाभ्यन्तरञ्च जगदुभयमपि स्वकीयमस्तित्व निदधाति । उभेऽपि सत्ते परस्पर निरपेक्षे । इद मत मन्यते यत् साधक सत्ताद्वयस्यापि स्वरूप कार्त्स्न्येन प्रथम विचिन्तयति ततश्च तदीयान्यधर्माणा ज्ञानमश्नुते ततश्च परमार्थमार्गणे प्रवर्तते । अन्ततो गत्वा च स शून्य-तत्त्वमासादयति ।

सौत्रान्तिकमतस्य ( बाह्यानुमेयवादस्य ) आदिप्रवर्तक कुमारलात आचार्य आसीत् । नास्य मतस्य कश्चिदपि स्वतन्त्रो ग्रन्थ आसाद्यते । सर्वसिद्धान्तसंग्रहादिग्रन्थेषु वादस्यास्योल्लेख प्राप्यते ।

सौत्रान्तिका अपि वैभाषिका इव चित्त बाह्यमपि जगत् मन्यन्ते । ते वस्तु भिन्न तद् वस्तुविषयक ज्ञान पृथक पृथक इति कथयन्ति । युक्त्युपस्थापनपूर्वक ते बाह्यवस्तुनोऽस्तित्व प्रतिपादयन्तो वदन्ति यद् बाह्यवस्तूनामनेकाकारवत्त्वात्

ज्ञानस्य भिन्नभिन्नाकारत्वं सिद्ध्यति। विभिन्नाकारज्ञानैस्तत्कारणरूपविभिन्न-बाह्यानि वस्तूनि चानुमातुं शक्यन्ते।

सौत्रान्तिका ज्ञानं चतुर्विधप्रत्ययमिति शंसन्ति। आलम्बनम्, समनन्तरम्, अधिपति, सहकारि-इत्येतानि सन्ति ज्ञानस्य चत्वारि कारणानि (प्रत्यया)।

*एषाञ्चतुर्विधकारणानां संयोगात् कस्यापि वस्तुनो ज्ञानं सम्भवं भवति।* ज्ञानस्य आकारो ज्ञातवस्तु सदृश एव भवति। प्रत्यक्षवस्तूनां ये ह्याकारा अवलोक्यन्ते ते ज्ञानस्यैवाकारा सन्ति। ते च मनस्येव वर्तन्ते। बाह्यवस्तुनो ज्ञानं वस्तुजनितमानसिकाकारादनुमानेनावगम्यते—इत्येतदभ्युपगमनात् सौत्रान्तिका बाह्यानुमेयवादिन इति कथ्यन्ते।

धार्मिकमतभेदाद् बौद्धधर्मो हि हीनयानमहायानाभिधयोः सम्प्रदाययोर्विभक्तोऽभवदिति पुरा प्रोक्तम्। तत्र हीनयाने हि बौद्धधर्मस्य प्राचीनं स्वरूपं परिलक्ष्यते। सम्प्रदायोऽयं धर्मेण सर्वमपि जगत् परिचाल्यत इति मन्वानो धर्मस्य नियामकतायां श्रद्धत्ते। विश्वसिति चायं सम्प्रदायो यन्मानवः स्वप्रयत्नेन निर्वाणं लब्धुं शक्नोति। एष सम्प्रदायः स्वावलम्बनेऽभिनिविशते। स्वावलम्बनं नेश्वरमपेक्षते न च तदनुकम्पाम्। तत्र तु केवलं धर्मोऽपेक्ष्यते—*इत्येतन्मतमस्य सम्प्रदायस्य। सर्वथा समुदायोऽयं बुद्धोपदेशमनुगच्छति।*

महायानसम्प्रदाये श्रद्धान्यमनोवृत्तेरस्तित्वमवाप्यते। एष सम्प्रदायस्तं मार्गं प्रदर्शयति येन सर्वेऽपि जना सुगमतया बुद्ध-धर्मं पालयितुं शक्नुयुः लोक-सेवास्यस्य सम्प्रदायस्य प्रधानोद्देश्यम्। हीनयानिनो हि यदि स्वमुक्त्यर्थमेव यतन्ते तदा महायानिनो न केवलं स्वमुक्त्यर्थमपि तु ते परमुक्त्यर्थमपि चेष्टन्ते।

*महायानं हि त्रीन् महत्त्वमयान् विचारान् निदधाति। तेषु प्रथमोऽस्ति* बोधिसत्त्वविषयकविचारो द्वितीयो बुद्धस्योपास्यरूपसम्बन्धीविचारस्तृतीय-श्चात्मसद्भावनिष्ठो विचार।

बोधिसत्त्वविषयकविचारेण प्रेर्यमाणो भूत्वा मानव प्राणिनामार्तिनाशने यत्नं कुर्वाणो निर्वाण लाभाय प्रयतते।

*बुद्धस्योपास्यरूपसम्बन्धिना विचारेण ते जना उपक्रियन्ते ये न बोधिसत्त्वा-* दर्शमध्यारोढु प्रभवन्ति न च स्वावलम्बिन एव भवितुमर्हन्ति। अयं हि विचार

ज्ञानस्य भिन्नभिन्नाकारत्वं सिद्धयति। *विभिन्नाकारज्ञानैस्तत्कारणरूपविभिन्न-बाह्यानि वस्तूनि चानुमातुं शक्यन्ते।*

सौत्रान्तिका ज्ञानं चतुर्विधप्रत्ययमिति शंसन्ति। आलम्बनम्, समनन्तरम्, अधिपति, सहकारि-इत्येतानि सन्ति ज्ञानस्य चत्वारि कारणानि (प्रत्ययाः)।

एषाञ्चतुर्विधकारणानां संयोगात् कस्यापि वस्तुनो ज्ञानं सम्भवं भवति। ज्ञानस्य आकारो ज्ञातवस्तु सदृश एव भवति। प्रत्यक्षवस्तूनां ये ह्याकारा अवलोक्यन्ते ते ज्ञानस्यैवाकाराः सन्ति। ते च मनस्येव वर्तन्ते। बाह्यवस्तुनो ज्ञानं वस्तुजनितमानसिकाकारादनुमानेनावगम्यते—इत्येतदभ्युपगमनात् सौत्रान्तिका बाह्यानुमेयवादिन इति कथ्यन्ते।

धार्मिकमतभेदाद् बौद्धधर्मो हि हीनयानमहायानाभिधयोः सम्प्रदाययोर्विभक्तोऽभवदिति पुरा प्रोक्तम्। तत्र हीनयाने हि बौद्धधर्मस्य प्राचीनं स्वरूपं परिलक्ष्यते। सम्प्रदायोऽयं धर्मेण सर्वमपि जगत् परिचाल्यत इति मन्वानो धर्मस्य नियामकतायां श्रद्धत्ते। विश्वसिति चायं सम्प्रदायो यन्मानवः स्वप्रयत्नेन निर्वाणं लब्धुं शक्नोति। एष सम्प्रदायः स्वालम्बनेऽभिनिविशते। स्वावलम्बनं मेश्वरमपेक्षते न च तदनुकम्पाम्। तत्र तु केवलं धर्मोऽपेक्ष्यते—इत्येतन्मतमस्य सम्प्रदायस्य। सर्वथा समुदायोऽयं बुद्धोपदेशमनुगच्छति।

महायानसम्प्रदाये यदाम्यमनोवृत्तेरस्तित्वमवाप्यते। एष सम्प्रदायस्तं मार्गं प्रदर्शयति येन सर्वेऽपि जनाः सुगमतया बुद्ध-धर्मं पालयितुं शक्नुयुः लोकमेवास्यस्य सम्प्रदायस्य प्रधानोद्देश्यम्। हीनयानिनो हि यदि स्वमुक्त्यर्थमेव यतन्ते तदा महायानिनो न केवलं स्वमुक्त्यर्थमपि तु ते परमुक्त्यर्थमपि चेष्टन्ते।

महायानं हि त्रीन् महत्त्वमयान् विचारान् निदधाति। तेषु प्रथमोऽस्ति बोधिसत्त्वविषयकविचारो द्वितीयो बुद्धस्योपास्यरूपसम्बन्धीविचारस्तृतीयश्चात्मसद्भावनिष्ठो विचारः।

बोधिसत्त्वविषयकविचारेण प्रेर्यमाणो भूत्वा मानवः प्राणिनामार्तिनाशने यत्नं कुर्वाणो *निर्वाण* लाभाय प्रयतते।

बुद्धस्योपास्यरूपसम्बन्धिना विचारेण ते जना उपक्रियन्ते ये न बोधिसत्त्वादर्शमध्यारोढुं प्रभवन्ति न च स्वालम्बिन एव भवितुमर्हन्ति। अयं हि विचार

आचार्यमहावीर उपरि निर्दिष्टायामाचार्यपरम्परायामन्तिम । जय स्वशि ष्यान् अन्त करण निर्मलीकर्तुमिन्द्रियाणि निग्रहीतु कठोरतया ब्रह्मचर्य पातु जगति च निर्लिप्ता भवन्तो वस्तुमुपदिदेश । मनस्तावदसद्विचाररहित न भवितु महेति यावद् वस्त्राणामपि परित्यागो न कृत स्यात्-इत्येतेनैतदीयनोपदेशेन जैनसाधूना समुदायो भागद्वये विभक्तोऽभवत् । ये वसनाना त्यागमुचित मनि ते 'दिगम्बरा' किन्तु ये न त 'श्वेताम्बरा' इति सज्ञया प्रथिता जाता ।

जैनदर्शनस्य साहित्य परमसमृद्धमस्ति तत्र ग्रन्थाना बाहुल्य प्राप्यते । अधिकतरास्ते ग्रन्था प्राकृतभाषाया सन्ति । प्रामाणिकेषु ग्रन्थेषु जैनमतस्य मौलिकाना सिद्धान्ताना सग्रहो वर्तते । ते हि सिद्धान्ता सर्वेषामपि साम्प्रदायिकाना मान्या सन्ति । आचारविषयका ग्रन्था प्रमाणविषयकेभ्यो ग्रन्थेभ्य सख्यायामधिकतरा सन्ति । जैनधर्मस्य मूलागमग्रन्थाना रचनामधिकृत्य दिगम्बर श्वेताम्बरसम्प्रदाययोर्मध्ये मतभेदो दृश्यते । दिगम्बराणा कथनमस्ति यत् 'पूर्व' सज्ञका मूलागमग्रन्था विलुप्ता । एषामादिमरचनाकालोऽविदित । अन्तिम च लब्धोधन षष्ठे शतकेऽभूद् यल्याम् । श्वेताम्बराणाञ्च मतमिद यत् स्थूलभद्रस्याध्यक्षताया पाटलिपुत्रे जैनसाधुसमितिर्जैनागमग्रन्थान् सचस्कार । जैनसिद्धान्ता सन्ति गीता पञ्चचत्वारिंशद् ग्रन्थेषु । तत्र एकादश सन्ति अग ग्रन्था, द्वादश उपागग्रन्था, दश प्रकीर्णग्रन्था, षट् छेदसूत्रग्रन्था, चत्वारो मूलग्रन्था, द्वौ स्वतन्त्रग्रन्थौ-सन्ति । अगग्रन्थानामतिशयमहत्त्वशालित्वात् तेषा नामानीह लिख्यन्ते १ आमायारागसुत्तम् (आचाराङ्गसुत्तम्), २ सूयगडगम् (सूत्रकृताङ्ग), ३ ठाणगम् (स्थानाङ्ग) ४ समवायाङ्ग, ५ भगवतीसूत्रम् ६ नायाधम्मकहाओ (ज्ञाताधर्मकथा) ७ उवासगदसाओ (उपासकदशा) ८ अतगडदसाओ (अन्तकृद्दशा), ९ अणुत्तरोववाइय दसाओ (अउत्तरौपपादिकदशा), १० पण्हावागरणिआइ (प्रश्नव्याकरणानि) ११ विवागसुय (विपाकश्रुतम्), १२ दिट्ठिवाय (दृष्टिवाद) दृष्टिवादो न साम्प्रतमुपलभ्यते । आगमग्रन्थाना रचना अर्धमागधीभाषायां कृतास्ति । आगमग्रन्थेषु अनेकान्तवाद-जीव-पुद्गलादिदार्शनिकसिद्धान्तानामपि विवेचन प्राप्यते ।

श्वेताम्बरसम्प्रदायस्य इमे आचार्या सन्ति यनिषय—१ निर्युक्तिकर्ता भद्रबाहु, २ तत्त्वार्थाधिगमसूत्रस्य प्रणेता उमास्वाति, ३ पञ्चास्तिकाय प्रवचन

सारादिकर्ता कुन्दकुन्दाचार्य, ४ सम्मतितर्कसूत्रन्यायावतारादिग्रन्थानां लेखक सिद्धसेनदिवाकर, ५ तत्त्वार्थाधिगमसूत्र टीकाकार सिद्धसेनगणि, ६ षड्दर्शन-समुच्चय-न्यायप्रवेशसूत्रादिबहुलग्रन्थरचयिता हरिभद्रसूरि, ७ नयचक्रप्रणेता मल्लवादी, ८. वादमहार्णवकर्ता अभयदेव, ९ लघुटीकाकर्ता रत्नप्रभसूरि, १०. प्रमाणनयतत्त्वालोकालङ्कारनिर्माता देवसूरि, ११. प्रमाणमीमांसादिकर्ता हेमचन्द्र १२. स्याद्वादमञ्जरीटीकाकर्ता मल्लिषेणसूरि, १३ षड्दर्शनसमुच्चयकर्ता मलधारिराजशेखरसूरि।

दिगम्बरसम्प्रदायेऽपि ज्ञानचन्द्र–गुणरत्नसूरि–यशोविजयगणि–कुन्दकुन्दाचार्य–समन्तभद्रादिका जैनदर्शन–ग्रन्थकर्तारो बहव आचार्या सञ्जाता। कथ्यते यत् अकलङ्कदेवो नाम आचार्योऽष्टशती–राजवार्तिक–न्यायविनिश्चयनामकान् ग्रन्थान् व्यरचत्, परीक्षामुखसूत्र माणिक्यनन्दी, प्रमेयकमलमार्तण्ड प्रभाचन्द्र, गोम्मटसारलब्धिसारादिग्रन्थान् नेमिचन्द्रसिद्धान्तचक्रवर्ती लिलेख। अन्ये चानेकग्रन्थलेखका विद्यानन्द–प्रभाचन्द्र–श्रुतसागरगणि–धर्मभूषणप्रभृतयो हि प्रसिद्धा जैनदर्शननिष्णातविद्वांसोऽजायन्त। सप्तदशशतके यशोविजयसूरिरपि प्रख्यातो ग्रन्थानेकलेखको विद्वान् जैनसंसारमलङ्कृतवान्। जैनविद्वांसो न्यायशास्त्रस्य प्राधान्येनाध्ययन चक्रुस्तत्र स्वविचाराश्च प्रकटीचक्रु।

जैनमतेन जीवश्चैतन्यमय। ज्ञान तदीय साक्षाल्लक्षणम्। निसर्गत सोऽनन्तज्ञानविशिष्ट पर कर्मावरणहेतोस्तदीय शुद्ध चैतन्यरूपमस्मद्दृष्ट्या सतत तिरोहितमेवावतिष्ठते। सम्यक्चारित्र्य–सेवनेन स शुद्धरूप पुन प्राप्तु शक्नोति कैवल्येन सर्वज्ञत्वेन च मण्डितो भवितुमर्हति।

प्रत्यक्ष–परोक्षभेदेन ज्ञानं द्विविध मतम्। अनयोर्द्विविधयोरपि ज्ञानयोर्व्याख्या जैनदर्शनस्य स्वकीयैव। नैतादृशी व्याख्या ज्ञानमधिकृत्य दर्शनान्तरेषु प्राप्यते। जैनविपश्चितस्तज्ज्ञान प्रत्यक्ष वदन्ति यदात्मापेक्षि। तच्च ज्ञान परोक्ष भणन्ति ते यदिन्द्रियाणि मनश्चापेक्षते।

परोक्षज्ञानम् उमा स्वातिमतेन द्वय द्विविधम्–मतिज्ञानम्, श्रुतज्ञानञ्च। द्विविधमपि ज्ञानमिदमिन्द्रियमन साहाय्यतोत्पन्न भवति।

प्रत्यक्षज्ञानमपि त्रिविधम्–अवधि–मन पर्याय–केवलभेदेन। एतत् त्रिभेदग प्रत्यक्ष केवलमात्मयोग्यताबलादुत्पद्यते।

परोक्षज्ञानस्य मतिज्ञाननामको भेदः प्रथम. इन्द्रिय-मनःसंयोगसमुद्भूत-विषयको भवति ।

मतिज्ञानं सामान्यतो द्विविधमुक्तम्—१. इन्द्रियजन्यम्, २. अनिन्द्रियजन्यम् ( मानसम् ) ।

स्मृति-संज्ञा-चिन्ताभिनिबोधा इत्येते मतिज्ञानस्य पर्याया इति जैनानां विचारः ।

श्रुतज्ञानं नाम परोक्षं शब्दादुत्पद्यते । श्रुतज्ञानं मतिपूर्वकं भवति । मतिज्ञानं विद्यमाने वस्तुनि प्रवर्तते । श्रुतज्ञानं वर्तमानेऽतीते भाविनि च विषये प्रवर्तते । अत्रेदमपि वैशिष्ट्यं यन्मतिज्ञाने न शब्दोल्लेखो भवति श्रुतज्ञाने तु भवति । जैनागमस्य द्वादशाङ्गविषयकज्ञानम् अङ्गप्रविष्टम् इति, शुद्धबुद्धिमदाचार्यनिर्मितशास्त्रज्ञानञ्च अङ्गबाह्यं श्रुतज्ञानमिति प्रोच्यते ।

अवधि-मन.पर्याय-केवलभेदेन प्रत्यक्षं ज्ञानं यद् त्रिविधमुपरि प्रोक्तं तत्र दूरस्थितव्यवधानयुक्तपदार्थानां ज्ञानम् 'अवधिज्ञानम्' मिति निगद्यते । यदा जीवो विशिष्टसाधिरसाधनसाहाय्येनावरणकारिकर्माणि अपचेतुं प्रवर्तते तदा स दूरस्थान् अपि पदार्थान् आत्मयोग्यताबलात् ज्ञातुं प्रभवति एतदेव ज्ञानं हि अवधिज्ञानं भवति ।

एतदवधिज्ञानं तदा भवप्रत्यय इति नाम्ना व्यवह्रियते यदा तज्जन्मानन्तरमेव प्रस्फीभवति । परं यदा तत् व्रत-नियमाद्यनुष्ठानमपेक्षते तदा 'गुण प्रत्यय' इति व्यपदिश्यते ।

तद् मन.पर्यायनामकं प्रत्यक्षं ज्ञानं भवति येनेर्ष्याद्रोहादिभिःप्रवृत्तयो निवार्यन्तेऽथ च परकीयमनोविचारा बोध्यन्ते ।

केवलं ज्ञानं तु तत् यत्प्राप्य ज्ञानावरणकारीणि कर्माणि क्षीयन्ते आत्मा च शुद्धं सर्वज्ञं च रूपमश्नुते । सिद्धपुरुष एव एतज्ज्ञानमधिकरोति ।

आचार्यहेमचन्द्रो गुणरत्नश्च प्रत्यक्ष-परोक्षयोर्विभागमन्यथैव कुरुत.। इमे हि अर्वाक्कालीना जैनाचार्या वदन्ति प्रत्यक्षं सांव्यवहारिक-पारमार्थिकभेदेन द्विविधम् । यत्रेन्द्रियाणां मनसश्च साहाय्यं नितान्तमपेक्ष्यते तत् सांव्यवहारिकं प्रत्यक्षं भवति । येन चावरणे सति विलीने चेतनजीवस्य स्वरूपाविर्भावो भवति तदस्ति पारमार्थिकं ज्ञानम् ।

परोक्षज्ञानस्य च पञ्चविधता मता स्मृति-प्रत्यभिज्ञानतर्कानुमानागमभेदेन ।

वासनोद्बोधाज्जायमानस्यातीतस्य यथार्थस्मरणं स्मृतिरिति ।

इदं यत्तु तदेवेत्येतद्रूपात्मकं ज्ञानं प्रत्यभिज्ञानमिति ।

उपलम्भानुपलम्भनिमित्ताया व्याप्तेर्ज्ञानं तर्क इति ।

हेतोः साध्यस्यानुमानमनुमानमिति ।

आप्तपुरुषागमवाक्येभ्यः समुत्पन्नं प्रामाणिकं ज्ञानमागम इति कथ्यते ।

जैनदर्शनं प्रत्यक्षानुमानागमाख्यानि त्रीणि प्रमाणान्यङ्गीकुरुते । परं तत् प्रचुरदोषसद्भावात् श्रौत-स्मार्तप्रामाण्यं न स्वीकरोति ।

प्रतिवस्तु अनन्तधर्मात्मकमिति जैनदर्शनस्य प्रधानः सिद्धान्तः । केवलज्ञानवान् एव समस्तान् वस्तुधर्मान् यथार्थतया वेत्तु प्रभवति न च अन्यः कोऽपि जनः । वस्तुनोऽनन्तधर्मेषु केवलमेकस्यैव धर्मस्य यद् ज्ञानं 'नय' इति नाम्नाभिहितो भवति जैनदर्शने वस्तुस्थितिं बोधयति यत् एकं ज्ञानं तु एतादृशं भवति यत्परापेक्षि भवति अन्यच्च ज्ञानमेवं विधं भवति यन्न परापेक्षि कदापि । परापेक्षि ज्ञानं साधारणं ज्ञानमिति वक्तुं शक्यम् । एतत् त्रिविधं ज्ञेयम्—दुर्णय-नय-प्रमाणभेदेन । वक्ष्यमाणस्य वस्तुनो धर्ममात्रप्रतिपादनं तस्य चान्यविधतायाः प्रतिषेधनं हि दुर्णयज्ञानमिति कथ्यते । अन्यविधतायाः प्रत्याख्यानमन्तरा वस्तुनः सत्तायाः प्रकथनं 'नय' इति गद्यते सत्यांशितज्ञानसमन्वितत्वात् । प्रमाणं नाम ज्ञानमुभाभ्यामप्येताभ्यां भिन्नम् । विद्यमानं वस्त्वधिकृत्य 'सम्भवति इदं सत्' इत्येतद्रूपात्मकं यज्ज्ञानं तदेव प्रमाणमिति कथ्यते । इदमेव ज्ञानं ज्ञाताज्ञातसमस्तधर्माणां ग्राहित्वात् प्रमाणकोटिमायाति ।

जैनदर्शने नयसिद्धान्तः स्वीयप्रमुखतां निदधाति । नीयते परिच्छिद्यते एकदेशविशिष्टोऽर्थोऽनेनेति नय इत्येवास्य पदस्य व्युत्पत्तिः स्याद्वादमञ्जर्यां कृता । न्यायावतारे प्रोक्तम्—'एकदेशविशिष्टोऽर्थो नयस्य विषयो मतः' इति । नयवादोऽयं स यत्र कोऽपि विषयः सापेक्षं निरूप्यते । वस्तुनोऽनन्तधर्मात्मकत्वात् तद्गतप्रतिनियतस्य निरूपणीयत्वाच्च नया अपि सन्ति अनन्ताः । परं विवेकदृष्ट्या सः सामान्यतो द्विविधो दर्शितः—द्रव्यार्थिको नयः, पर्यायार्थिको नयः । वस्तुतस्तु वस्तुनो धर्मद्वयं सम्भवम् ।

यद्येकवस्तुनो विविधाः परिणामा एकीभूय व्याप्नुवन्ति स एव द्रव्यार्थिको नय इति कथ्यते । अपरविभागेन धर्मास्ते सन्ति देश-कालभेदेऽपि कतिपयविधा वस्तुनि समुत्पद्यन्ते एते 'पर्यायार्थिकनय' इत्येतेन सम्बोध्यन्ते । प्रथमस्तत्र

द्विविधो द्वितीयश्च चतुर्विधोऽस्ति अतः सङ्कलनेन ते सन्ति सप्त—नैगमनयः, संग्रहनयः, व्यवहारनयः, ऋजुनयः, शब्दनयः, समभिरूढनयः, एवम्भूतनयः।

एतस्मादांशिकज्ञानादेव जगति पारस्परिकः कलहो दृश्यते। सर्वाणि दर्शनानि विचित्रस्यास्य विश्वस्य विवेचने सन्ति रतानि। अंशविशेषस्यैव विचारणे या तेषां निष्ठा सा एव कलहस्य बीजम्। तेषु दर्शनेषु प्रतिदर्शनं स्वकीयं विवेचनमेव यथार्थं मन्यतेऽन्यस्य च दार्शनिकं विवेचनं तदयथार्थमवगच्छति। दार्शनिकानां स पारस्परिको विरोधो हस्तिस्वरूपनिर्णयनेपरान्धानां कलह इवैव। जैनदर्शनस्य तु कथनमेतद् यद् नानारूपसत्ताया अंशमात्रस्य विवेचनकारित्वादेव दर्शनानि स्वस्वमहत्त्वं भजन्ते। न तानि सन्ति परस्पर विरुद्धानि। अस्मादेवोदारहृदयत्वाज्जैनतत्त्वज्ञानस्य न केनापि दर्शनेन सह विरोधः।

प्रतिपरामर्शस्य परिवेषणार्थं जैनदर्शनं 'स्यात्' इत्येतस्य पदस्य व्यवहारं नितरामुचितं मन्यते। 'कथञ्चित्' इत्येतस्मिन् अर्थे सत् प्रयुज्यते। असधातोर्विधिलिङि रूपं तत्। परमव्ययत्वेन तत् प्रयोगोऽत्रापेक्षितः। कस्मिन्नपि विषये चेत् परामर्शोऽभिप्रेतस्तदा स 'स्यादस्ति' इत्येतत्पद-प्रयोगपूर्वकमेव कर्तव्य इति जैनदर्शनमाकाङ्क्षति। अतः 'घटोऽस्तीति नोक्त्वा 'स्यादस्ति घट' इत्येतेन प्रकारेण तत्परामर्शः कार्यः। काल-देशविचारेण घटस्य सत्तास्माभिरनुभूयते परं सा सत्ता नास्ति त्रैकालिकी। न तत्सत्ता सर्वत्र, सर्वविधेष्वपि कालेषु सर्वास्ववस्थासु अनुभूतिविषयतां याति। अतः घटादिपदार्थानां विषयेऽस्मदीयपरामर्शः 'स्यादस्तीतिपूर्वकमेवोचितः। एवं विधो हि वस्तु-परामर्शव्याहारः स्याद्वाद' इतिनाम्ना विश्रुतः। वादोऽयं महनीयप्राभृतत्वेन मतो यं हि जैनदर्शनं प्रामाण्यमीमांसेतिहासाय समर्पयति। स्याद्वादस्य नामान्तरम् 'अनेकान्तवाद' इत्येतदपि वर्तते।

घटादिकस्य कस्यचनापि पदार्थस्य सत्तामधिकृत्य—

१. स्यादस्ति, २. स्यान्नास्ति, ३. स्यादस्ति नास्ति च, ४. स्याद् अवक्तव्यम्, ५. स्यादस्ति च अवक्तव्यञ्च, ६. स्यान्नास्ति च अवक्तव्यञ्च, ७. स्यादस्ति च नास्ति च अवक्तव्यञ्च इत्येते सप्त विकल्पा एव भवितुमर्हन्ति जैनदर्शनमतेन। सप्तप्रकारकं ज्ञानमिदं तत्र 'सप्तभङ्गी नय' इत्येतया संज्ञया प्रथितम्।

तत्त्वं भवत्यनन्तधर्मात्मकम्। कस्यचन मानवस्य स्वरूपज्ञानाय देश-काल-जाति-जन्म-धर्म-वर्ग-समाजादिकानामवबोधनमेव न पर्याप्तं परं तद्वीयनिषेधात्मकानां धर्माणामपि ज्ञानमपेक्षितं भवति। निषेधात्मका धर्माः सन्त्यनन्ताः। सः मानवो न भारतीयो न चीनदेशीयो न च श्वेतवर्गो न च पीतवर्ण इत्यादिका भारतीयत्वादिधर्मा निषेधात्मका धर्मा इति कथ्यन्ते। सत्तात्मका धर्माः सन्ति तत्तद्-देशकालजात्यादिविषयिका विशिष्टता। जैनदर्शने सत्तात्मका धर्माः 'स्वपर्याय' इति किञ्च निषेधात्मकधर्माः 'परपर्याय' इत्यभिधीयन्ते। तन्मतेन प्रतिवस्तु स्वपर्याय-परपर्याययोः समुच्चयमात्रमस्ति।

'सत्'तत्त्व-समीक्षां जैनदर्शनमित्थं कुरुते—

प्रतिपदार्थोऽशद्वयभाग् भवति। तत्रैकः शाश्वतांशोऽपरश्चाशाश्वतांशो भवति। शाश्वतांशत्वात् प्रतिपदार्थोऽस्ति नित्यः। अशाश्वतांशत्वाच्च सोऽनित्योऽस्ति। चेदेकेवलं शाश्वतांशे दृष्टिः क्षिप्यते तदा तु वस्तु स्थिरं प्रतीयते यदि चाशाश्वतांशे दृक्पातः क्रियते तदा तदस्थिरम्। एकांशे दृक्पातेन एकाङ्गित्वं हस्तगतं भवति। सर्वाङ्गीणं तु सत्यं तदैवोपलभ्यते यदोभयांशनिरीक्षणं क्रियते एतद् दृष्टियुगल-मवलम्ब्य जैनदर्शनं पदार्थमुत्पादव्ययध्रौव्ययुक्तमङ्गीकरोति। तन्मतेन पदार्थो नित्योऽनित्यश्च उभयविधः। पदार्थो यदि नित्यस्तदा अनित्यः कथमित्यत्र तद् आह अपरिवर्तनशीलं समानभावमद्, वस्तु नित्यमिति न अपि तु यत् जात्या न च्यवते तद् वस्तु नित्यं भवति। तस्माज्जातेरच्युतत्वमेव नित्यत्वस्य लक्षणम्। परिणामगतेऽपि वस्तुनि जातित्वं न हीयते तस्मात् तस्य नित्यत्वाङ्गीकारे न कापि विप्रतिपत्तिः समुत्तिष्ठति। मृत्तिका-घट-शराव-क्रीडनकादिरूपं गतापि न स्वजातेश्च्युता भवति। सा घटादिरूपं परिणाममाश्रयन्त्यपि मृत्तिकैव भूत्वा तत्रावतिष्ठते। न तस्या जातिस्तथात्वे नश्यतीति।

जैनदर्शनस्यैव परिणामिनित्यताविषयके सिद्धान्ते वेदान्तिनो 'कूटस्थनित्यत्वस्य' सौगतानाञ्च 'परिणामवादस्य' मधुरः समन्वयो भाति। प्रपञ्चस्य नानात्वे विद्यमानमेकत्वं जैनदर्शनमङ्गीकुर्वाणं संसारस्य नानात्वमपि किञ्चैकत्वमपि-उभयमपि सत्यमिति शंसति।

वस्तुसत्तानिमित्तेनोपादेयाः सततविद्यमानाश्च धर्मा 'गुण' इति कथ्यन्ते किञ्च देश-कालजन्य- परिणामशाली धर्मः पर्याय इत्युच्यते। गुणपर्यायविशिष्टं वस्तु जैन-दर्शनं 'द्रव्य'मिति वदति। द्रव्यं द्विविधं भवति एकदेशव्यापि बहुदेशव्यापि

च। कालाख्यं द्रव्यमस्त्येकदेशव्यापि अन्ये च सर्वे पदार्थाः सन्ति बहुदेशव्यापिनः। बहुदेशव्यापिनः पदार्था 'अस्तिकाय' इत्येतेन नाम्ना कीर्त्यन्ते। अस्तिकायाख्याः पदार्थाः पञ्च मताः—१. जीवास्तिकायः, २. पुद्गलास्तिकायः, ३. आकाशास्तिकायः, ४. धर्मास्तिकायः, ५. अधर्मास्तिकायः।

जीवाजीवभेदेनास्तिकायद्रव्याणां प्राधान्येन द्वौ भेदौ। जीव आत्मवाचकोऽस्ति। सः सामान्यतो द्विविधो बद्धो मुक्तश्च। जीवाश्च बद्धा भवन्ति, बहुविधाः। जंगमास्तत्र त्रसा, अजंगमाः स्थावरा इति कथ्यन्ते। नारक-मनुष्य-तिर्यक्देव-भेदेन पुनश्च ते जीवाश्चतुर्विधाः प्रोक्ताः।

*अजीवा अपि पुद्गलाकाशधर्माधर्मभेदेन चतुर्विधाः कथिताः।* चेतनं द्रव्यं 'जीव' इति निगदितम्। जीवो हि निसर्गतोऽनन्तज्ञानदर्शन-सामर्थ्यवान्, परं तत्रावरणकारिकर्मवशात् ते नैसर्गिका गुणा न प्रादुर्भवन्ति। शुभकार्यानुष्ठानेन आवरणं तिरोधत्ते गुणाश्च तत्र प्रकटीभवन्ति। ज्ञानादिगुणानां विपुलतारतम्यत्वात् ते सन्त्यनन्ताः। ते शुभाशुभकर्मकर्तारः कर्मफलभोक्तारश्च सन्ति।

जैनदर्शनं जीवं मध्यमपरिणामविशिष्टं मन्यते। न तद् अद्वैतवेदान्त इवात्मानं विभुं न च वैष्णवदर्शनमिव तमणुं मन्यते। तत्तु मध्यममार्गमेवावलम्बते।

पुद्गलाकाशधर्माधर्मभेदेनाजीवस्य यच्चतुर्विधत्वमुक्तं तत्र पुद्गलाख्यं द्रव्यं तदेव यद् दर्शनान्तराणि प्रधान-प्रकृति-परमाण्वादिशब्दैर्व्यवहरन्ति। इदं द्रव्यं तदस्ति यत् प्रचयरूपेण शरीरं निष्पादयितुं शक्नोति। प्रचयविनाशे च छिन्न-भिन्नतां याति। पुद्गलं रूपद्वयं बिभर्ति अणु संघातञ्च। अविभाज्यं सूक्ष्मतमं रूपमणु भवति। सूक्ष्मांशानां पारस्परिकं मिलनं संघातमिति कथ्यते। संघातेन शरीराङ्गमन-प्राणादीनां सृष्टिर्भवति। पौद्गलिकेषु पदार्थेषु चत्वारो गुणाः प्राप्यन्ते—*स्पर्श-रस-गन्ध-वर्णाः। इमे गुणा अणौ संघाते चोभयत्र लभ्यन्ते।* दार्शनिकानामन्येषां मतेन शब्दोऽपि भूतानां गुणः। परं जैनानां मतेन न। तेसूक्ष्मत्व-स्थूलत्वादिवत् तमपि अवान्तरपरिणामं मन्यन्ते।

आकाशः स पदार्थो यतो जीवाद्यस्तिकायद्रव्याणि लभन्तेऽवकाशम्। आकाशस्य सत्तानुमानेन स्वीक्रियते। आकाशोऽपि द्विविधः—१. लोकाकाशः, २. अलोकाकाशः। यत्र जीव-पुद्गलादिद्रव्याणां स्थितिर्भवति स लोकाकाश इति कथ्यते। उपर्युपरि लोकं राजते यः सः अलोकाकाश इत्यभिधीयते।

कालोऽप्यनुमानगम्यः। जगतः समस्तानामपि पदार्थानां यत्परिणामशीलत्वं दृश्यते तस्य कारणं काल एव। वर्तन-परिणाम-क्रिया-परत्वापरत्वानि पञ्चाप्येतानि कालस्य 'उपकार' इति कथ्यन्ते। सर्वेषामपि पदार्थानां स्थितिः काल एव। द्रव्यसंग्रहे कालो द्विविध कथितः—१. व्यावहारिककालः, २. पारमार्थिककालः।' दण्ड-घटी-पल-विपलाद्यवयवसम्पन्न कालो व्यावहारिक- कालोऽस्ति किञ्च निरवयवो नित्य' कालः पारमार्थिक इति।

जीवेन किञ्च पुद्गलेन च यतः साहाय्यं लभ्यते स द्रव्यविशेषो 'धर्म' इत्युच्यते। जलवासिनीं मत्सीं प्रति यथा जलं सहकारि कारणमस्ति तथैव जीव-पुद्गलद्रव्यकृते धर्मोऽपि सहकारिकारणम्। एष धर्मः स्वयं जीवं प्रति गतिप्रेरणां न प्रददाति परं तद्गतौ सहायकृद् भवति। जलं मत्सीं चलनार्थं न प्रेरयति, परं गतौ साहाय्यप्रदं भवति।

स्थितिशील जीवस्य पुद्गलस्य च स्थितिं प्रति सहकारिकारणभूतद्रव्यविशेषो योऽस्ति स 'अधर्म' इति कथ्यते। वृक्षच्छायेव अधर्मास्तिकायोऽपि जीव-स्थित्यै कल्प्यते। यद्यपि पथिकम्प्रति स्थित्यर्थं प्रेरणां दातुं न छाया समर्था परं सामान्यत सा स्थितिं प्रति कारणं भवति एवमेव हि अधर्मोऽपि जीवं किञ्च पुद्गलम्प्रति स्थितिप्रयोजनेन प्रेरणाकार्ये सहायताकृद् भवति।

जैनदर्शनं त्रीति मोक्षसाधनानि प्रतिपादयति—१. सम्यग्दर्शनम्, २. सम्यग्ज्ञानम्, ३. सम्यक्चारित्रम्। 'दर्शनमित्येतत् पदं श्रद्धावाचकम्। तीर्थङ्करप्रतिपादितेषु शास्त्रेषु अगाधानवच्छिन्ना श्रद्धापेक्ष्यते। श्रद्धा साध्यप्राप्तौ साधकं भृशमुपकरोति। अतः सापेक्ष्यते। साध्य-लाभाय शास्त्रवर्णितसिद्धान्त-तत्त्वानाञ्च गम्भीरानुभूतेरपेक्षास्ति अतः सम्यग् ज्ञानमपि सम्यग्दर्शनभिन्नोपादेयम्। सम्यग्दर्शनस्य सम्यग्ज्ञानस्य च चरितार्थता सम्यक् चारित्रेणैव सम्पन्ना भवति तस्मात् तदपि ग्राह्यम्। एतानि त्रीणि साधनानि जैनदर्शने 'रत्नत्रय' मित्येतेन नाम्ना प्रथितानि सन्ति।

जीवो यद्यपि निसर्गतो मुक्तः परं वासनाजन्यकर्माणि तदीयशुद्धं रूपमावृत्य तिष्ठन्ति। जैनदर्शनस्य कर्मसिद्धान्तो नैजः। न स दर्शनान्तरप्रतिपादित सिद्धान्त इव। कर्माणि भवन्ति पौद्गलिकानि। पृथिवीजलादिरिव कर्मापि भौतिकम्। तत् जीवं दुःखमये प्रपञ्चे निपातयति। जैनशास्त्रम् अष्टविधं कर्म वर्णयति। तेषामष्टानां कर्मणां प्रभावो भिन्नभिन्नस्तत्र निगदितः। अष्टकर्माणी-

मानि-मोहनीय-वेदनीय-नामायुष्य-गोत्रान्तरायज्ञानावरणीयदर्शनावरणीयानि। फलानुसारीणि कर्मनामानि सन्ति। मोहं जनयति यत् तन्मोहनीयं कर्म, यद् सुखं दुःखञ्चानुभावयति तद्वेदनीयं कर्म, विश्वासनाशकं कर्म दर्शनावरणीयं, ज्ञान-नाशकं कर्म ज्ञानावरणीयम्, आयुर्निर्णायकं कर्म आयुःकर्म, जन्म कस्मिन् जन्मनि भवेदित्येतद् यत् प्रत्याययति तद् गोत्रकर्म, नामविधायकं नाम, आयुर्विधायक-मायुष्यं कर्मेति कथ्यते।

जीवने कर्मणां संयोगो वियोगश्च भवितुमर्हतीत्येतद्दर्शनाय जैनदर्शनं सप्तप-दार्थान् वर्णयति। ते सन्तीमे-आस्रव-बन्ध-संवर-निर्जरा-मोक्षजीवाजीवाः।

तत्त्वार्थसूत्रे शरीर-वचन-मनसां क्रिया योग इत्युक्ता। अयं योग एव आस्रव इत्युक्तः। भावास्रव-द्रव्यास्रवभेदेन सोऽपि द्विविधः। कर्मोत्पादकरागादिभावो भावास्रवः किञ्च पुद्गल-कर्मोदयो द्रव्यास्रव इत्यभिधीयते।

जीवो येन व्याप्यते तत् बन्धकर्मेत्युक्तम्। मिथ्यात्व-अविरति-प्रमाद-कषाय-योगवशाज्जीवो बद्धो भवति। संवरं कर्म जीवं मोक्षोन्मुखं करोति। तत् कर्माणि निरुणद्धि। संवरकर्मापि द्विविधम्—भावसंवरं द्रव्यसंवरञ्च। येन कर्म-मार्गो विरुध्यते तदस्ति भावसंवरकर्म। नवीनपुद्गलकर्मसम्बन्धोच्छेदि च द्रव्य-संवरकर्मेति कथ्यते। येन सम्पादितानि कर्माणि निर्वीर्याणि क्रियन्ते तन्निर्जराख्यं कर्म भवति। कर्मणां क्षयो हि मोक्ष इति निगद्यते। मोक्षेण जीवो नैसर्गिकं शुद्धं स्वकीयं रूपमवाप्नोति। जीवाजीवपदार्थौ तु वर्णितावेव।

सिद्धावस्थां लब्धुं मुमुक्षुणा स्वकीय आध्यात्मिको विकासः कर्त्तव्यः। एष विकासः शनैः शनैः सम्पद्यते। एतद्धेतोर्जैनदर्शनेन चतुर्दशगुणस्थानानि निरूपि-तानि। यथा सोपानेनोपरि गम्यते जीवेन तथैव गुणस्थानान्यवलम्ब्य जीव उच्चतमं मोक्षपदमश्नुते। गुणस्थानानि सन्तीमानि—१. मिथ्यात्वम् ( विवेक-हीनताया दशा ), २. ग्रन्थिभेदः ( सदसद्विवेकोदयः ), ३. मिश्रः ( निश्चया-निश्चययोर्युक्तता ), ४. अविरतसम्यग्दृष्टिः ( संशये सति नष्टे सम्यक्श्रद्धावस्था ), ५. देशविरतिः ( पापानामांशिकत्यागः ), ६. प्रमत्तः, ७. अप्रमत्तः, ८. अपूर्व-करणम्, ९. अनिवृत्तिकरणम्, १०. सूक्ष्मसाम्परायः, ११. उपशान्तमोहः, १२. क्षीणमोहः, १३. सयोगकेवलदशा, १४. अयोगकेवलदशा। सयोगकेवलद-शायां साधकोऽनन्तसुखभाग् भवति। अयोगकेवलदशा तु अन्तिमदशास्ति।

लोकाकाशालोकाकाशयोर्मध्ये तन्मानं पुनीत स्थानं सिद्धानां निवासभूमि रस्ति। स्थानमिदमेव 'सिद्धशिला' इति गीयते। साधकोऽनन्तचतुष्टयं प्राप्य चरमशान्तिमेति। इयमेव तदीया चरममुक्तावस्थास्ति।

सम्यक्चारित्र्यसाधनायै जैनदर्शनं पञ्च महाव्रतान्युपदिशति—अहिंसा सत्या स्तेयब्रह्मचर्यापरिग्रहा इति।

जैनदर्शनस्य वैशिष्ट्यमिदं यत् तत् कर्मफलदातेश्वर इति न मन्यते। तदीश्वरविषयिकां युक्तीस्तर्कैः प्रत्याख्याति। कर्माणि स्वयमेव फलप्रदाने क्षमाणीति तदीयो विश्वासः। अस्मिन् स्थले जैनदर्शनं मीमांसेवास्ति। परं मीमांसाधर्मे कर्मान्तिमनिर्णयाय श्रुतिं श्रयति जैनदर्शनं तु तामपि न। जैनमते सिद्धा एव ईश्वराः। तदर्हदेव समार्तहृदयमाश्वासयितुमेव सृजति। कामं जैनधर्मो भवत्वनीश्वरवादी वा श्रौतमार्गाग्रहीता। परं स समारस्य प्राणिमात्रं प्रति उपनिषत्प्रतिपादिताध्यात्मिकताज्योतिर्दर्शयतीति तु सोऽपि स्वीकुर्यात् यो ह्यन्यस्मिन् कस्मिन्नपि दर्शने श्रद्धाधियं निबध्नाति।

जैनधर्मे पञ्च परमेष्ठिनो मताः सन्ति अर्हत् सिद्ध आचार्योपाध्यायसाधवः। धर्मपरा जैना नित्यं पूजयन्ति इमान्। ईश्वरे विश्वासमनिदधाना अपि जैना धर्मो त्साहवन्तः सन्ति। तीर्थङ्करसद्गुणान् सततं ध्यायं ध्यायं स्मारं स्मारञ्च ते आत्मानं पुनानाः मोक्षावाप्त्यर्थं नितान्तमेव योग्याधिकारिणो जायन्ते। ते कर्मवादे विश्वसन्ति। प्राक्तनकर्मणां नाशः सद्विचारैः सद्वचनैः सत्कर्मभिरेव सम्भव इति ते सुदृढतया मन्यन्ते। तेषां मतमिदं यत् कल्याणप्राप्तिः स्वकर्मभिरेव भवति। तीर्थङ्करास्तु मार्गं प्रदर्शयन्ति। मार्गे गमनमस्मदीयं कर्तव्यमस्ति। वस्तुतो जैनधर्मो वाराणां दृढमनस्कानां कृतेऽस्ति। तदीयो मूलमन्त्रोऽस्ति— स्वावलम्बनमिति। तत्र मुक्तात्मा 'जिन' किंवा 'वीर' इति कथ्यते। 'जिन' इत्येतत्पदं विजेतृवाचकमस्ति। तदनुयायिवर्ग जयतीति जिन इत्यस्ति। पदमिदं जिनधातो 'इण्षिञ्जिदीङुष्यविभ्यो नक्' इति सूत्रेण नकि कृते निष्पद्यते।

साम्प्रतिकस्य जनसमुदायस्य कृते दर्शनमिदं परमोपकारि। यतो हि इदं वर्तते यथार्थवादि। तत्स्वानुकालादेः जगत्सत्तां स्वीकुरुते। तन्मूले वर्ततेऽनेकेषां तत्त्वानां सत्तेति व्याहरत् तत् समुपस्थितं भवत्यस्मत्पुरतः।

—:o:—

# चार्वाक-दर्शनम्

अवेदमूलकेषु दर्शनेषु चार्वाकदर्शनं प्राचीनतमम्। "अयं संसार एव आत्मनः क्रीडास्थलम्। नास्ति परलोकः। इदं शरीरमेव आत्मा। मरणमेव मुक्तिः। यावदस्मिन् देहे सन्ति प्राणास्तावत् सुख-लाभाय प्रयत्नः कार्यः। न धर्मः पुरुषार्थः। मानव-जीवने काम एव पुरुषार्थः"—इत्यादिकानां चार्वाक-सिद्धान्तानां प्रचारोऽस्मिन् देशे चिरन्तनात् कालाद् दृष्टो भवति।

यद्यौपनिषत्कालो विरेजे तदापि भौतिकवाद इतस्ततः प्रसृतोऽवाप्यत। "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके।" इत्येतत् कठस्य "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीति" इत्येतद् बृहदारण्यकस्य, अथ च—

"असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।
अपरस्परसम्भूतं किमन्यत् कामहैतुकम्॥"

इत्येतद् गीतायाश्च वाक्यं हि ज्ञापयति यदत्र देशे जडवादस्तस्मिन् तस्मिन् कालेऽपि विद्यते स्म। एष हि भौतिकवादो बौद्धग्रन्थेषु च बहुत्र वीक्ष्यते। उच्छेदवादप्रतिपादकस्याजितकेशकम्बलस्य सिद्धान्तो लोकायत-मतानुकूलोऽस्त्येव। जैनग्रन्थेषु चास्य चार्वाकमतस्य निर्देशः प्राप्यत एव। इत्थं नास्तिकमतस्यास्य प्राचीनतायाः अनुमानमुक्तप्रमाणाधारे सम्यक् कर्तुं शक्यम्। श्रुतीनाममहसि यज्ञानुष्ठानानां तपश्चरणानाञ्च प्राबल्यमासीत्। जनानां मनोवृत्तेरावर्जनं तदानीन्तने समये ऐहिकतातः पारलौकिकताम्प्रति प्रयत्नपूर्वकं कृतमभवत्। एतेषु यज्ञादिकर्मसु परलोकवादे च ये जनाः श्रद्धां न विदधुर्जुगुप्साञ्च तत्रादर्शयंस्ते परलोकवादं यज्ञादिकं कर्म आत्मनोऽस्तित्वञ्च निन्दयितुं प्रावर्तन्त। ते इन्द्रियानुभूयमानं जगदेव सत्यमित्येतं सिद्धान्तमुच्चैः स्वीचक्रिरे वैदिकञ्च सिद्धान्तं विरोद्धुं सुदृढतयोपचक्रमिरे। 'स वा एष पुरुषोऽन्नरसमय' इत्यादिश्रुतिमन्त्रस्य स्थूलशरीरात्मत्वप्रतिपादकतां व्याहृत्य ते स्वीयं भौतिकवादं पोषयितुं युयुजिरे।

इत्थं ज्ञातं भवति यद् पुनरस्य चार्वाकमतस्योदयः श्रौतकालवर्तिनो धर्मानुष्ठानस्योन्मूलनाय सञ्जातः।

चार्वाकदर्शनं पुरातनतमयुगे 'लोकायत' नाम्ना ख्यातमासीत्। लोकायतिकाः शुद्धबुद्धिवादेऽभिनिवेशं दर्शयाञ्चक्रुः। तेषां लक्ष्यं शुष्कतर्कैर्वैदिकसिद्धान्तानां प्रत्याख्यानमात्रमासीत्। ते न केवलं वेदान् अनिन्दन् बौद्धं जैनञ्चागमं कुत्सयाप्यभूषुः। लोके ह्येषां जडवादिनामाचरणानि विचारहीनानामाचरणानीवादृश्यन्त। तस्मादिमे 'लोकायतिका' इत्यवोचिषत। गच्छता कालेन 'चार्वाक' इत्येतया संज्ञया प्रसिद्धा अभूवन्। 'चार्वाकनामा कश्चिद् बृहस्पतेः शिष्य आसीत्; स मतमिदं प्रचारयामास इत्येतस्मात् कारणात् ते चार्वाक इत्यकथ्यन्त इत्येतदपि केषाञ्चन कथनमस्ति। 'चार्वा'नामकस्य कस्यचन आचार्यस्याप्युल्लेख. काशिकावृत्त्यामस्ति। तेनानुमीयते यदुक्ताचार्यसम्बन्धान्मतमपीदं चार्वाकमतमित्येतामाख्यां भेजे। पुण्यपापादिपरोक्षवस्तुजातस्य चर्वणकारित्वात् ते चार्वाका इत्यभ्यधायिषत इत्येतद् गुणरत्नस्य कथनमस्ति। 'भुङ्क्ष्व, पिब, मोदस्व च' इत्येतां हि तेषां जडवादिनां चारुवाचमाकर्ण्य लोकस्तान् 'चार्वाक' इत्येतेन नाम्नाऽऽजुहावेत्येषापि लोकश्रुतिरस्ति। भवतु नाम किमपि कारणम्। अद्यत्वे नास्तिकतासिद्धान्तमानिनश्चार्वाक इति नाम्नाऽऽहूयन्ते।

चार्वाकदर्शनं 'बार्हस्पत्यदर्शनम'पि कथ्यते। श्रूयते यद् बृहस्पतिर्नाम कश्चिदाचार्यश्चार्वाकमतं प्रवर्तयामास। अत एवेदं मतं बार्हस्पत्यमतमिति प्रसिद्धम्।

नास्तिकमत-संस्थापकस्य बृहस्पतेराचार्यस्यैतिहासिकत्वमनेकप्रमाणैः सिद्ध्यति। तद्रचितसूत्राणामुल्लेख. प्राचीनेषु दर्शनग्रन्थेषु दृश्यतेऽस्ति। "एक आत्मन. शरीरे भावात्" इत्येतद् ब्रह्मसूत्रं व्याचक्षाण आचार्यभास्करः स्वकीये भास्करभाष्ये, शङ्कराचार्यः स्वीये शाङ्करे भाष्ये गीतायाष्टीकायां नीलकण्ठः श्रीधरो मधुसूदनश्च विद्वाद्वैतब्रह्मसिद्धिकृद्‌धोल्लिखितानि सूत्राणि समुद्धरन्ति—

१. पृथिव्यप्तेजोवायुरिति तत्त्वानि। २. तत्समुदाये शरीरेन्द्रियविषयसंज्ञा। ३. तेभ्यश्चैतन्यम्। ४. किण्वादिभ्यो मदशक्तिवद् विज्ञानम्। ५. मदशक्तिवद् विज्ञानम्। ६. चैतन्यविशिष्टः कायः पुरुषः। ७. काम एवैक पुरुषार्थः। ८. मरणमेवापवर्गः।

राजनीतिशास्त्रेतिहासे च बृहस्पतेर्मतमुल्लिखितं प्राप्यते। कौटिल्योऽर्थ-

शास्त्रे भासः स्वकीये प्रतिमानाटके च बृहस्पति-मतमुल्लिखन्तौ दृश्येते। एतानि प्रमाणानि स्पष्टमेवोद्घोषयन्ति यदवश्यमेव बृहस्पतिर्नाम कोऽप्याचार्यः सम्बभूव। नास्ति 'बृहस्पति'रित्येतन्नाम कल्पनाजन्यम्।

यद्यपि साम्प्रतं चार्वाकदर्शनविषयको न कोऽपि ग्रन्थ उपलभ्यते परं प्राप्यमाणान्येतानि कतिपयानि सूत्राणि ज्ञापयन्ति यदवश्यमेव प्राचीने काले एतद् दर्शनसम्बन्धिनो हि मूलग्रन्था आसन्। नूनं नास्तिकसिद्धान्तेषु कृता तिरस्कारबुद्धिस्तान् ध्वंसयामास।

चार्वाकदर्शनं प्रत्यक्षमेव प्रमाणं स्वीकुरुते। तद्वादोऽयं यदिन्द्रियैरेव विधामाहं ज्ञानमवाप्तुं शक्यम्। इन्द्रियजनितज्ञानमेव यथार्थज्ञानमस्ति। प्रत्यक्षं विहाय नेदं दर्शनं दर्शनान्तरमतान्यनुमानशब्दादीनि प्रमाणानि प्रमाणत्वेन मन्यते।

अनुमानं लिङ्गलिङ्गिपूर्वकं भवति। तच्च व्याप्तिज्ञानावलम्बि वर्तते। अनुपाधिसाहचर्यनियमो हि व्याप्तिरित्युच्यते। अनुमानमिदमधिकृत्य चार्वाकदर्शनमाह-व्याप्तिसूचकवाक्यस्य सत्यता न प्रमाणसिद्धा अतो नानुमानमपि स्वीकरणार्हम्। 'यत्र यत्र धूमस्तत्र तत्राग्नि, पर्वतोऽयं धूमवान् तस्मादत्र पर्वतेऽग्निरवश्यमेव 'इत्येतां व्याप्तिमवलम्ब्य पर्वतस्याग्निमत्त्वं यत् प्रमाणीक्रियतेऽनुमानेन येन। तदनुमानं तदा स्वीकर्तुं शक्यं यदा व्याप्तिसूचकवाक्यस्य सत्यता प्रमाणसिद्धा स्यात्। यानि यानि स्थानानि धूमाग्निमन्ति सन्ति किं तेषां सर्वेषामपि स्थानानां निरीक्षणं सम्भवं कदापि? प्रत्यक्षस्य सीमितत्वात् वर्तमानकालवर्तिनाम् एव धूमाग्निविशिष्टानां स्थानानां प्रेक्षणमपि सिद्धीभवितुं न शक्यं कुत पुनर्भूतभाविस्थलानामीक्षणञ्च। एवंस्थिते व्याप्तिवाक्यस्य सत्यता कथं मता भवेत्? प्रत्यक्षेण केवलं सीमितं ज्ञानं भवति। तदेवं सीमितं ज्ञानमाश्रित्य व्याप्तिबलेन त्रिकालगामिनं सर्वस्थानवर्तिनश्च वस्तुविशेषस्य सत्ताया प्रतिपादनं न कदापि युक्तम्। महानसे जायमानस्य धूमविशिष्टस्य सम्बन्धं केनापि वह्निविशिष्टेन सार्धं वीक्ष्य समग्रस्यापि धूमस्य सम्बन्धः समग्रेणापि अग्निमात्रेण सह विद्यत-इत्येतद्विधनियमस्य निर्माणं किमुचितं भवितुमर्हति? तस्माद् व्याप्तेः सत्यत्वं न सिद्धम्। तस्या असिद्धत्वात् अनुमानमप्यसिद्धम्। सामान्येन ज्ञानेन विशेषस्य नानुमानं भवितुं योग्यम्। चेदिदं मतं भवेत् यद् व्याप्तिर्विशेषे न भवति अपि तु सामान्ये भवति तदापि दोषा न दूरीभवन्ति। 'सर्वे मनुष्या मरणशीला' इत्यत्र चेद्

दृष्टं भवति। तेषां सर्वेषामप्युपाधीनां यावत् पूर्णतया ज्ञानं न भवति तावत् कार्य-कारणभावस्य स्वरूपावधारणं न सम्भवम्। अत एव चार्वाकाः कार्य-कारणभावमङ्गीकर्तुं न भवन्ति समुद्यताः। ते हेतुमन्तरेणैव वस्तुनः सद्भावम्—अकस्मात् भूतिम्—स्वीकुर्वन्ति।

शब्दप्रमाणमपि दर्शनान्तरसम्मतं दर्शनमिदं न स्वीकरोति। अत्र तस्य कथनमिदम्—आप्तोक्तवाक्याकर्णनाद् योऽर्थबोधो भवति स तु प्रत्यक्षप्रमाणेनैव सिद्धो जायते तस्मात् तस्य (शब्दस्य) स्वीकरणं निरर्थकम्।

कस्यापि पुरुषस्याप्तत्वात् प्रामाणिकत्वात् सत्यवचनत्वात् हितेच्छुत्वाच्च तस्य वचसि आस्थायाः संस्थापनमनुमानमेव। अनुमानञ्चानुपदमेव प्रत्याख्यातमत आप्तपुरुषोक्तवाक्ये सत्यधियः प्रतिष्ठापनमेकान्ततो निस्सारम्। जगद्विषयकप्रत्यक्षपदार्थानां वर्णनन्तु तत्कृतं विश्वासार्हं परमदृष्टस्य लोकस्याश्रुतपूर्वपदार्थानां तद्विहितं वर्णनं मनोरञ्जनार्थकं न किमपि—इत्येतद्विचारं प्रकाशयन्तश्चार्वाका वेदानामपि प्रामाण्यं निराकुर्वन्ति। ते वदन्ति यद् वेदानां विरोधिवच प्रकाशनकारित्वात् निरर्थकशब्द-प्रयोगकारित्वात् असत्यचपदार्थविषयककल्पनाकारित्वाच, न ते प्रमाणानि भवितुं शक्नुवन्ति। वेदा यज्ञेषु घृणितानि कर्माणि अनुष्ठातुमुपदिशन्ति; ते *जर्भरी-तुर्फरी-पर्फरी-पर्फरीका-जेमनामदेयस्मृतिपदानि* निरर्थकानि प्रयुञ्जते, मांस-भक्षणञ्च यागेषु विधित्वेन प्रतिपादयन्ति तस्मात् वेदा न मान्याः। तेषां कर्तारश्च सन्ति धूर्ता भण्डा निशाचराश्च—

त्रयो वेदस्य कर्तारो भण्डधूर्तनिशाचराः।
जर्भरीतुर्फरीत्यादिपण्डितानां वचः स्मृतम्॥

इत्थं हि ते (चार्वाकाः) शब्दप्रमाणं खण्डयन्तो वेदान् अपि ते नितरां कठोरतया अवजानन्ति।

चार्वाकाः सन्ति स्थूलतमविचारकारिणः। ज्ञान-विकासस्य प्रथममेव सोपानमारुह्य ते आत्मानं मार्गयितुमुद्यताः सन्ति। स्थूलदृष्टिर्यानपि पदार्थान् तेषां पुरो निदधाति तानेव ते प्रमेयत्वेन मन्यन्ते। वस्तुतः सत्यमपीदम्। य पदार्थोऽस्ति दृग्गोचरस्तस्यैव तु सद्भावः स्वीक्रियेत। चार्वाकाणां दृष्टौ पृथिवी-जलतेजोवायव एवावतरन्ति तस्मात् ते तांश्चतुर एव प्रमेयत्वेन मन्यन्ते तेभ्य. संसारस्य प्रतिपदार्थं उत्पद्यत इति तेऽभ्युपगच्छन्ति।

बौद्धा इव तेऽपि कथयन्ति आवरणाभावादाकाशः शून्य एव। न कोऽप्यस्ति

सत्तात्मक पदार्थ । इदमेव पृथिव्यादिभूतचतुष्टयं स्थाणुदशाया जगतो मूलकारणम् । बाह्य जगत् इन्द्रियाणि, भौतिकं शरीरमेतेभ्य एव चतुर्भ्यो मूलभूतेभ्य उत्पद्यन्ते । न कापि चेतनसत्ता जगतो मूले । जगत् तु अकस्मादेव सम्मिलनशीलस्य भूतचतुष्टयस्य निचयमात्रम् । जगदुदिश्यैव वर्तते तेषा विचार ।

जीवं लक्ष्यीकृत्य यत् ते वदन्ति तदिदम् शरीर विहाय नास्ति कश्चिदात्माभिधान कोऽपि पदार्थ । चेतनता शरीरसम्बद्धास्ति तस्माच्छरीरस्यैवात्मत्व ज्ञेयम् । शरीरस्य चैतन्यसम्बद्धता त्रिभि प्रकारै सिद्ध्यति—

१ नैयायिकसम्मतान्वय व्यतिरेकिपद्धत्या शरीरे सत्येव चैतन्यस्याविर्भावो भवति तन्नाशे सति तस्यापि (चैतन्यस्यापि) तिरोभावो दृश्यते । अन्न पानादिना शरीरे प्रकृष्टचेतनताया अभ्युदयो भवति अन्नपानाद्यभावे चेतनताया ह्रास समवलोक्यते । चैतन्य हि शरीरापेक्षि, अतश्चैतन्य शरीरसम्बद्धमिति सिद्ध्यति ।

२. सर्वस्थानावासासुभूत्या स्थूलोऽहम्, कृशोऽहम्, खिन्नोऽहम्, प्रसन्नोऽहम्, इत्येतद्विधानामनुभवाना ज्ञान जगति प्रतिपदमवाप्यते । तत्तद्विषयकानुभूतिरचैतन्यविशिष्टे शरीर एव निष्पद्यते । चैतन्य हि शरीरसम्बद्धमित्येतद् याथार्थ्य मनुभवेनैव गम्यम् ।

३ वैद्यकशास्त्रेण भौतिकेन पदार्थेन सह चैतन्यस्य सम्बन्धोऽस्तीति सत्य प्रतीयते । ब्राह्मीघृतोपयोगेन शरीरे प्रज्ञा पटीयस्कता लभते किञ्च प्रावृषि दधनि कीटा रिङ्गन्त प्रेक्ष्यन्ते । एतै प्रमाणै शरीरे चैतन्यस्य स्थितेरङ्गीकरणं न तर्कासंगतं भवति । तस्मात् "चैतन्यविशिष्ट काय पुरुष" इत्येतत् सूत्रस्पते सूत्र युक्ति युक्तम् ।

एष सिद्धान्त एव चार्वाकाणा 'भूतचैतन्यवाद' इत्येतेन नाम्नापि स्यात । यथा मदिरासाधकेषु द्रव्येषु न मादकशक्तिर्विद्यते पर मदिरात्व गतेषु तेषु मादकशक्ति समुत्पद्यते, यथा च ताम्बूल खदिरसुधाद्यपदार्था न व्यष्टिदशाया रक्तगुणवन्त पर तेषां समष्टिस्तद्गुणवती जायते । तथैव भूतचतुष्टय स्वकीयपार्थक्यावस्थाया तु न चैतन्यगुणविशिष्ट दृश्यते पर तेषां चतुर्णामपि समष्टिर्यदा परिमाणविशेषेण च समुपपद्यते तदा तत्र चैतन्यगुणोदय सञ्जायते—इत्येतद्विधैस्तर्कैश्चार्वाका शरीरस्यैवात्मत्वमुपपादयन्ति ।

चार्वाकेषु केचन इन्द्रियाणामात्मत्व तदितरे प्राणानामात्मत्व तदपरे मनस आत्मत्वञ्च 'ते ह प्राणा' प्रजापतिम्', 'अन्योऽन्तर आत्मा प्राणमय' 'अन्योऽन्तर

सुखानि आसादयेत्। ऐहिकसुखार्थं कृतं किमपि कर्म नानुचितं कर्म। न ते पापे विश्वसन्ति तस्मात् ते उच्चैर्मुक्तकण्ठतयोद्घोषयन्ति—

यावज्जीवेत् सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥

भारतीयदर्शनशास्त्रेतिहासे यथा बृहस्पतिश्चार्वाकश्च भौतिकवादस्य संस्थापको वा प्रवर्तकः किञ्च प्रचारकोऽस्ति तथैव प्राचीनयवनदर्शनेतिहासे डिमाक्रिटस–एपुकुरिअस-ल्यूक्रेशियसा अपि भौतिकवादस्य प्रवर्तयितारः प्रचारकर्तारश्च सन्ति। एपिक्युरसस्य सुखवादः सर्वथैव चार्वाकस्य सिद्धान्तं संवदति। एकोनविंशतितमशतके समुद्भूतेषु पाजिटिविजमादिमतेषु स्फुटतयैव चार्वाकसिद्धान्तानां प्रभावो दृग्गोचरीभवति।

यवनदेशस्य दार्शनिक एपीक्यूरसः किञ्च तदीया अनुयायिनो यथा घृणाभावेन दृश्यन्ते तथैव भारतेऽपि चार्वाकमतानुगामिनोऽपि जुगुप्सापूर्वकं विलोक्यन्ते। वस्तुतो जनाश्चार्वाकमतं सम्यक् प्रयत्नपूर्वकमवगन्तुं न प्रायतन्त। नेदं विस्मरणीयमस्ति यद् भारतीयदर्शनानि सन्ति चार्वाकमतस्य ऋणीनि। संशयवादोऽज्ञेयवादश्च-उभावपि-स्वतन्त्रविचारान् आश्रियेते। न तौ समीक्षां विना किमपि मतं स्वीकुरुतः। दर्शनशास्त्रं स्वतन्त्रविचारा जनयन्ति। दर्शनशास्त्रस्य कर्त्तव्यं भवति यत् तदात्मानं द्रढयितु संशयवादिनामाक्षेपान् निराकुर्यात्। आक्षेपाणां निराकरणेन समस्यानां समाधानेन च दर्शनशास्त्रं समृद्धं परिपुष्टञ्च जायते। कौटनामा प्रतीच्य आट् यदसौ संशयवादस्य ऋणी वर्तते। चार्वाकमतमपि दर्शनशास्त्रमुपकुर्वाणं विलोक्यते। तद् (चार्वाकमतम्) तत् (भारतीयदर्शन-शास्त्रम्) दृढविश्वासात् त्रायते। चार्वाकमतं दर्शनशास्त्रं प्रति ता सहायता प्रददौ यामवाप्य तदात्मानं युक्तिपूर्वकविवेचनकार्ये व्यापृतं कर्तुं प्रबभूव।

चार्वाकाणां सुखवादित्वाद् निन्दन्ति जनास्तान्। परं नास्ति सुखवादो घृणाया विषयः अन्येऽपि सुखकामाः सन्ति। सुखं तु तदैव गर्हणीयं भवति यदा तद् भवेदश्लीलं स्वार्थमयञ्च।

सुशिक्षितो हि विचारवान् उत्कृष्टेषु सुखेषु रमते। भवति च स ललितकलासु अनुरागी। इदमेव कारणं यत् चार्वाकेषु सुशिक्षिता न स्वार्थान्धा अदृश्यन्त। ते जानन्ति स्म साधु यत् स्वार्थभावान्धसुखवादस्य फलं भवति नितान्तमेव दुःखकरम्। तेन सामाजिकी व्यवस्था च भवति निर्पीड्यमाना। अत एव तु ते

दण्डनीतिं वार्तां च आद्रियन्तेस्म। लोकायतिकदर्शने तत्तद्विषय-सद्भावः स्पष्ट-तश्चार्वाकाणां समाज-व्यवस्थापक्षपातित्वं प्रमाणीकरोति। चार्वाकाः सुखमयजीव-नस्यसाधनभूतानां कलानां सृष्टिं कृतवन्तः। जनानाञ्च मानसं तद्दिशायामावर्जय-न्तिस्म। आचार्यो बृहस्पतिः स्वकीयेन अर्थशास्त्रेण जीवनं नियम-पालनपूर्वकं यापयितुमुच्छृङ्खलताञ्च हातुमभिनिवेशं प्रदर्शयन् केन न दृश्यते। न मानवस्यो-न्नतिः समाजोन्नतिमन्तरेण भवितुमर्हति। अत एव चार्वाकं मतं समाजहिताय राजानमिच्छति। तदिच्छति यद्राजा निग्रहानुग्रहद्वारेण समाजं शिष्यात्। सन्म-तेन राजैवास्तीश्वरः। तदवश्यमेवास्ति न विशृंखलताप्रणधि। तदिदन्तु नेच्छति यन्मानवः पारलौकिकसुखमृगतृष्णायां निपत्य स्वकीयं महर्घं शरीरं मुधैव विनाशयेत्।

कामं पुमांसश्चार्वाकान् निन्दन्तु परं तेषां ज्ञानमीमांसा निदधाति स्वकीयां विशिष्टताम्। आप्तवचनानामन्धश्रद्धया स्वीकरणं न तदभिमतम्। इदं हि तदीयं वैशिष्ट्यं वस्तुतोऽवज्ञेयम् न।

श्रद्धा सत्सिद्धान्तस्यैव जननीति वक्तुं न सुशकम्। सिद्धान्तस्तु तर्कैः स्वं रूपमधिगच्छति। दार्शनिकानि तत्त्वानि समीक्षितुं यावन्मूलयस्ताविश्वासं निद-धाति न तावदन्धविश्वास। दर्शनस्योदयस्तावन्न भवितुमर्हति यावज्जिज्ञासुराप्त-वाक्य व्यामोहादात्मानं नोद्धरति किञ्च न स्वकीयां धियं तर्कावलम्बिनीं विदधाति।

शुद्धतर्कस्योपादेयता प्रदर्श्य निःसंशयं चार्वाका विचारवतो जनान् प्रति मनोऽभिरामं मार्गं सृजन्ति स्म।

अनुमानस्याप्रामाण्यं प्रदर्शयच्चार्वाकदर्शनं व्याप्तिमध्ये यान् दोषानुद्भावयति तान् इदानीन्तना प्रतीच्यास्तार्किका अपि आगमनं (इण्डक्शनं) परीक्षमाणाअधि-कांशतया स्वीकुर्वन्ति। जॉनस्टुअर्टमिलोऽतिमनोज्ञयुक्तिभिरागमनं (इन्डक्शनं) सम्भावनामात्राय कल्पते। आगमनं निश्चेत्तुं व्याप्तिवाक्यस्य सत्यत्वं नितरामपे-क्ष्यते, 'सर्वे मनुष्या मरणशीला'—इत्येतस्य वाक्यस्य सत्यता न कदापि प्रमा-णिता भवितुं शक्यास्ति। सर्वेषामपि मानवानां मरणशीलताविषयिण्या. सत्ताया व्यापकत्वेनाङ्गीकरणं प्रेक्षातः परं न किमपि। तस्मात् सन्दिग्धं वाक्यमव-लम्ब्य आगमनस्य सद्भावः प्रतिष्ठापनं वा न समीचीनम्, न तर्कानुकूलञ्च।

दण्डनीतिं वार्तां च आद्रियन्तेस्म। लोकायतिकदर्शने तत्तद्विषय सद्भाव स्पष्टतश्चार्वाकाणा समाजव्यवस्थापक्षपातित्वं प्रमाणीकरोति। चार्वाका सुखमयजीवनस्यसाधनभूताना कलाना सृष्टिं कृतवन्त। जनानाञ्च मानसं तद्दिशायामावर्जयन्तिस्म। आचार्ये बृहस्पति स्वकीयेन अर्थशास्त्रेण जीवन नियम पालनपूर्वक यापयितुमुच्छृंखलताञ्च हातुमभिनिवेश प्रदर्शयन् केन न दृश्यते। न मानवस्योन्नति समाजोन्नतिमन्तरेण भवितुमर्हति। अत एव चार्वाकं मतं समाजहिताय राजानमिच्छति। तदिच्छति यद्राजा निग्रहानुग्रहद्वारेण समाजं शिष्यात्। तन्मतेन राजैवास्तीश्वर। तदन्यस्यमेवास्ति न विश्वस्यताप्रणयि। तदिदन्तु नेच्छति यन्मानव पारलौकिकसुखमृगतृष्णाया निपत्य स्वकीयं महर्घं शरीरं मुधैव विनाशयेत्।

कामं पुमासश्चार्वाकान् निन्दन्तु परं तेषां ज्ञानमीमासा निदधाति स्वकीया विशिष्टताम्। आप्तवचनानामन्धश्रद्धया स्वीकरणं न तदभिमतम्। इदं हि तदीय वैशिष्ट्यं वस्तुतोऽवज्ञेयम् न।

श्रद्धा सत्सिद्धान्तस्यैव जननीति वक्तुं न सुशकम्। सिद्धान्तस्तु तर्कै स्वं रूपमधिगच्छति। दार्शनिकानि तत्वानि समीक्षितुं यावन्मूढयमृताविश्वासं निदधाति न तावदन्धविश्वास। दर्शनस्योदयस्तावन्न भवितुमर्हति यावज्जिज्ञासुराप्तवाक्य व्यामोहादात्मानं नोद्धरति किञ्च न स्वकीया धियं तर्कावलम्बिनीं विदधाति।

शुद्धतर्कस्योपादेयता प्रदर्श्य निःसशयं चार्वाका विचारवतो जनान् प्रति मनोऽभिराम मार्गं सृजन्ति स्म।

अनुमानस्याप्रामाण्य प्रदर्शयच्चार्वाकदर्शन व्याप्तिमध्ये यान् दोषानुद्भावयति तान् इदानीन्तना प्रतीच्यास्तार्किका अपि आगमनं (इण्डक्शन) परीक्षमाणाअधिकारतया स्वीकुर्वन्ति। जॉनस्टुअर्टमिलोऽतिमनोज्ञयुक्तिभिरागमनं (इन्डक्शनं) सम्भावनामात्राय कल्पते। आगमनं निश्चेतु व्याप्तिवाक्यस्य सत्यत्वं नितरामपेक्ष्यते, 'सर्वे मनुष्या मरणशीला'—इत्येतस्य वाक्यस्य सत्यता न कदापि प्रमाणिता भवितुं शक्यास्ति। सर्वेषामपि मानवाना मरणशीलताविषयिण्या सत्ताया व्यापकत्वेनाङ्गीकरणं मेवात परं न किमपि। तस्मात् सन्दिग्ध वाक्यमवलम्ब्य आगमनस्य सद्भाव प्रतिष्ठापनं वा न समीचीनम्, न तर्कानुकूलञ्च।

सिद्धस्य एषा तर्कपद्धतिश्चार्वाकाणां तर्कपद्धतिं केन प्रकारेण संवदतीति दर्शनीय-मस्ति मतिमताम् ।

निष्पक्षभावेन चार्वाकसिद्धान्तमधिकृत्येदन्तु कथनं सर्वथैवोचिततरं प्रति-भाति यच्चार्वाकदर्शनस्याचारमीमांसा नास्ति समादरणार्हा । यस्मिन् दर्शने धर्मस्य सम्मानं नास्ति, पाप-पुण्ययोः सद्भावो न वर्तते, स्थूलभौतिकसुखवाद एव प्राणिमात्रस्य पुरुषार्थो मतोऽस्ति न तद्दर्शनं मानव-जीवनस्य प्रगतिहेतुर्भवतीति । न तदादर्शं प्रतिष्ठापयितुमेव समाजे प्रभवति । परं सत्स्वपि एवंविधेषु दोषेषु तदीयेषु तत्र कतिपयानि वैशिष्ट्यानि च विद्यन्ते कतिपयांश्च गुणानपि प्रसूते तस्मात् तस्यापि अन्तर्भावो दर्शनेषु विधत्ते । तत्रापि कस्य चन नास्ति-कस्य सिद्धान्तस्य दर्शनाद् भारतीया मेधा तदपि सदयं दर्शनत्वेन स्वीकुरुते ।

—※—

## प्रतीच्यं दर्शनम्

प्रतीच्याः पण्डिता दर्शनं 'फिलॉसफी' इत्येतेन नाम्ना व्यवहरन्ति। परं 'फिलॉसफी' इत्येतस्य पदस्य सङ्केतितोऽर्थो 'विद्यानुराग' इत्यस्ति। साम्प्रतं ह्येतत् पदं न तावत्येवार्थे प्रयुज्यते। तदर्थं आत्मनि व्यापकमर्थं सन्निवेश्य संशोभते। इदं पदमादौ यवन ( ग्रीस ) देशे प्रचलितोऽभवत्। हिरोडोटस–थ्युसिडाइडस–शुक्रात–प्लेटोऽरस्तुभि: प्रयुक्तत्वादस्य शब्दस्य, नितान्तमेव प्राचीनतास्फुटतयैव सिद्ध्यति।

पाश्चात्यदर्शनस्य-फिलॉसफ्याः-श्रेणी-विभागमित्थं विदधाना विपश्चित्पादा वीक्ष्यन्ते—

दर्शनम्

| १ | २ | ३ | ४ | ५ | ६ |
|---|---|---|---|---|---|
| तत्त्वमीमांसा, | प्रमाणमीमांसा, | तर्कशास्त्रम्, | आचारमीमांसा, | सौन्दर्यमीमांसा, | मनोविज्ञानम् |
| (मेटाफिजिक्स), | (एपिस्टोमोलॉजी), | (लॉजिक), | (एथिक्स), | (एथेस्थेटिक्स), | (साइकोलॉजी) |

( अ ) तत्र तत्त्वमीमांसा सत्पदार्थं विविनक्ति। प्राणिनां पुरः प्रकृत्योपस्थाप्यमानयोः प्रातिभासिक-सत्पदार्थयोर्मध्ये सा ( तत्त्वमीमांसा ) प्रातिभासिकात् पदार्थात् सत्पदार्थं पृथग् विदधाति। द्वौ भावौ सत्यत्वेन सम्भाव्येते–१. भौतिको भाव, २. मानसिको भावश्च। भौतिके भावे नग-तरु-सरिदादीनां किञ्च सुख-दुःखत्वमादीनां मानसिके भावे भवत्यन्तर्भावः।

भौतिकाः पदार्था एव सन्ति वस्तुतः सत्याः; तेषामेव सत्तास्ति स्वतन्त्रा; मानसिकास्तु भौतिकानां सत्यताया आभासा एवेत्येतद् ये मन्यन्ते ते भौतिकवादिनः ( मैटीअरलिस्टाः ) इति कथ्यन्ते परं ये मानसिकानां सत्तां स्वतन्त्रां सत्यामथ च भौतिकान् पदार्थान् मानससत्तायाः प्रतीतित्वेन विभावयन्ति ते प्रत्ययवादिनः ( आइडीअलिस्टाः ) इति प्रोच्यन्ते। ये चोभयोरपि सत्यत्वं शाश्वतमित्यङ्गीकुर्वन्ति ते द्वैतवादिनः ( ड्युअलिस्टाः ) इति निगद्यन्ते।

(आ) प्रमाणमीमांसाया (एपिस्टोमॉलॉज्या) कार्यमस्ति ज्ञानस्य विवेचनम्। इह ज्ञानस्य स्वरूपं, ज्ञानस्य प्रामाण्यं, ज्ञानस्यावधिः, संयम् अन्याश्चैवंविधान् विषयान् समीक्षते।

(इ) तर्कं स्थापयितुं प्रमाणयितुं च प्रयुज्यमानान् विशिष्टान् नियमान् विशदतया यथार्थतया च वर्णयति तर्कशास्त्रम् (लॉजिक) तस्मात् ज्ञानस्य व्यावहारिक्याः प्रक्रियाया उपपादनमेतदीयं कार्यं वेद्यम्।

(ई) आचारमीमांसा (एथिक्स) आचारं मीमांसते। किं नाम कर्त्तव्यम्? तत् कतिविधम्? कर्त्तव्याकर्त्तव्ययोर्निर्णयश्च कस्मिन्नाधारे कर्तुं शक्यम्—इत्येतेषां प्रश्नानां युक्तं विवेचनमत्र कृतमस्ति। प्रतिमानवो मानवजीवनस्य ध्येयं जिज्ञासते ईप्सति च स कल्याणं नैजमन एतद्विधेषु च विषयेषु प्रकाशपातनमाचारमीमांसाया प्रमुखं कार्यमस्ति।

(उ) 'सौन्दर्यमीमांसा' (एथेटिक्स) इत्यनेन शब्देनैव स्पष्टं विदितं संज्ञायते यदेतद्दर्शनं सौन्दर्यं व्याचष्टे। किं नाम सौन्दर्यम्? सौन्दर्यस्य निर्णयनं कथं स्यात्? कस्य चन पदार्थस्यावलोकनात् सुखं वा दुःखं कस्मात्कारणादुत्पद्यते? सुन्दरत्वस्य तात्त्विकी व्याख्या च का। इत्येते विषया सौन्दर्यमीमांसाया न केवलं प्रतिपादिता सन्ति तत्र सौन्दर्यस्य कलाया परिष्कृत कलाया विवेचनं च निरूपितमस्ति।

(ऊ) मनोविज्ञाने (साइकॉलॉज्याम्) मनसो विविधानां प्रवृत्तीनां शास्त्रीयपद्धत्या निरूपणं कृतं वर्तते। डॉक्टर फ्रायडेन नैजमौलिकान्वेषणबले मनोविज्ञानस्य यो नूतनोऽध्यायः प्रवर्तितस्तेन दार्शनिके संसार एव न ततोऽन्यत्रापि महत्कौतूहलमुत्पादितमस्ति।

प्रतीच्यदर्शनस्योद्देश्यं भारतीयदर्शनस्योद्देश्याद्भिन्नमेव। यदा भारतीयदर्शनस्योद्देश्यं दुःखनिवृत्तिः, मृत्युविजयः, मोक्षाधिगमनञ्चास्ति तदा प्रतीच्यदर्शनस्य प्रादुर्भावः कुतूहलधियो ज्ञानपिपासाया उपशमनाय राजनीतिकप्रयोजननिष्पादनाय च जातोऽस्ति। अर्थ काम धर्मार्जनं भारतीय दर्शनं स्वकीयमवान्तरमेवोद्देश्यं मन्यते।

प्रायेण पाश्चात्यदर्शनस्य गतिर्मनःपर्यन्तमेव दृश्यते। नास्मवादिनोऽपि मनस आत्मनश्चान्तराले कमपि भेदं मन्यन्ते। वर्तमानसृष्टेः प्राग् जातानां सृष्टीनामपि विचारस्तत्र न कृतोऽवाप्यते। प्राचीनतरेष्वपि यूनानीयेषु दर्शनेषु, तत्रापि

न जडाजडयोर्मध्ये कोऽपि भेदोऽङ्गीकृतः। कस्मात्प्रथमद्रव्याज्जगदिदमुत्पन्नमभूदित्येष विषयस्तस्य विचारणीयो विषयः।

यूनानाभिधानेदेशे ईशवीयाब्दात् प्राक् षष्ठे शतके थैलीज-एनैक्सीमेण्डर–एनैक्सिमैनीज नामधेयास्त्रयो दार्शनिका बभूवुः। एतेषु थैलीज़ो जलात्, एनैक्सीमेण्डरः कस्माच्चिदनियतद्रव्यात्, एनैक्सिमैनीजश्च वायोः सृष्टेरुद्भवं मन्यते। आत्मानं वा ईश्वरमभिकृत्य नैते दार्शनिकाः काम‍पि चर्चां कृतवन्तः। सन्तीमे वस्तुतो द्रव्यवादिनः। चेतनाचेतनताविशिष्टं द्रव्यमेव मूलकारणमित्येषा तेषामास्था। एनैक्सिमेण्डरस्य कथनमेतद् यद् विश्वस्योत्पत्तिः अपरिच्छिन्नपरिमाणाद् द्रव्याद् भवति तत्रैव च लीयते पुनः। स द्रव्यस्य अपरिमितत्वमनश्वरत्वं मन्यमानस्तदीयां गतिं शाश्वतिकीं मनुते। वक्ति च स यद् द्रव्यमेवैतत् शैत्यौष्ण्यभूसलिलसमीरादीनां मूलम्। एनैक्सिमैनीजो वायुं प्रथमं द्रव्यं स्वीकुर्वाणो वायोरेव शीतलतोष्णताभ्यां यथाक्रमं घनत्वं शिथिलत्वञ्चोपपादयते; वायोः शैत्याज्जलमथौष्ण्यादग्निरजायत वस्तुतो जगदिदं वायौ स्थितमिति वक्ति। हिप्पो-डायोजिनीजश्चोपरिनिर्दिष्टानामेव थैलीजप्रभृतीनामनुयायिनावास्ताम्। तत्र हिप्पो आर्द्रतातोऽग्निरग्निजल-संघर्षाच्च संसार उद्बभूवेति विश्वसिति। परं डायोजिनीजः वायुमेव मूलकारणत्वेनोपपादयति। एनैक्सिगोरस-पीथागोरसौ दार्शनिकावीश्वरवादिनावास्ताम्। एनैक्सिगोरसो बहूनां तत्त्वानामस्तित्वं स्वीकुरुते। परमीश्वरस्य प्रेरणामवाप्यैव तेषु तत्त्वेषु सृष्टिम्प्रति कारणत्वमुपपद्यते नान्यथेति स आह। पाइथोगोरसश्च यूनानीयेषु प्राचीनतरेषु दार्शनिकेषु महान् तत्त्ववेत्ताऽभूत्। अस्य दार्शनिकस्य सृष्टौ मतमतिसूक्ष्मम्। पदार्थानां मूलतत्त्वं प्रकृतिर्न। अपि तु तदीय आकार एवेत्यस्य विचारः सङ्गीताध्ययनेन समानुपातविषयकं तथ्यमाविष्कृत्य अयं विद्वान् समानुपातिकं तथ्यं जगतः सकलेष्वपि पदार्थेषु तल्लीनवदनुभवति। शरीरं स्वस्थं तावदेव तिष्ठेयते यावत् तदीया मौलिका गुणास्तत्र (शरीरे) समानुपातेन स्थिता भवन्ति तेषां असमानुपातता शरीरे रोगं जनयति; अतो वस्तुतथ्यमाकारमध्यास्ते। एतदीया मान्यतेयं यत् सर्वे पदार्था अङ्काः सन्ति। ईश्वरोऽपि अङ्केषु एकाऽभिधोऽङ्कः। अन्ये सर्वे एतस्मादेव समुद्भूताः। अस्यैव सिद्धान्तः "एकोऽहं बहु स्याम्" इत्येतं श्रौतं सिद्धान्तं संवदति।

न विश्वस्योत्पत्तिः कदाप्यभवच्च तस्य नाश एव स्यादित्येतत् परामेनी-

परमाणुवादाद् भिन्नोऽपि समवाप्यते । प्रतीच्यः परमाणुवादः परमाणोर्गतिशीलत्वं जगत्पदार्थनिर्माणकारित्वञ्च स्वीकुरुते । परं भारतीयः परमाणुवादः परमाणुं जडं मन्यते; परमेश्वरेच्छया तत्र गतिरुत्पद्यते—इत्येतच्च तन्मतम् । प्रतीच्येषु देशेषु सोफिस्ट इत्येतां संज्ञां भजमाना दार्शनिका मानवजीवनस्य समस्याः समीक्षमाणाः पर्यवलोकयन्ते । एषामुपदेशेषु भ्रमं तत्त्वज्ञानं व्यराजत । प्रोटेगोरस एतेषु श्रेष्ठो विद्वान् सञ्जातः । 'मनुष्य एव पदार्थानां मानदण्ड' इत्येषा हि तस्योक्तिरासीत् । सोफिस्टानां समयो यूनानीयदर्शनस्य सुवर्णसमय इव मतो भवति । यतो हि तस्मिन् युगे सुकरातः ( सोक्रेटीजः ) अफलातूनः ( प्लेटो ) अरस्तू ( एरिस्टाटलः ) च समजनिषत । एते दार्शनिकाः पाश्चात्यं दर्शनं नैजैर्मौलिकैर्विचारैः सर्वथैव समुन्नमयाम्बभूवुः ।

सुकरातो ज्ञानात्परं न किमप्यवगच्छति स्म । न स धर्मं ज्ञानाद् भिन्नममन्यत । तन्मतेन धर्म-ज्ञानयोर्मध्येऽभिन्नतैव वर्तते । स स्वोपदेशस्य स्वश्रद्धायाश्च विषयं ज्ञानमाचारञ्च कृतवान् । तयोरुपर्येव तस्य निष्ठासीत् । दार्शनिके जगति तस्य महनीयं कार्यमासीत्—ज्ञानाधिगमनार्थं निगमनपद्धतेः प्रयोगोऽथ च तद्द्वारेण ज्ञानोपलब्ध्यर्थमीहा ।

तत्त्वज्ञानं लक्ष्यीकृत्य प्लेटो दार्शनिकेन प्रतिपादिताः सिद्धान्ताः सन्ति वस्तुतस्तु महत्त्वशालिनः । अस्ति स ईश्वरवादी । तन्मतेन ईश्वर एव सदा शुद्धः । सः संसारं महाप्रकृष्टं जीवनोज्ज्वलं वस्तु मन्यते । स वक्ति यज्जगतः शरीरं दृश्यमस्ति परमात्मा त्वदृश्यः । मनुष्यस्यात्मा परिणामिना जगता सह स्वकीयं सम्बन्धमिन्द्रियजन्यज्ञानेन प्रतिष्ठापयति किञ्च पारमार्थिकेन जगता सार्धं सः प्रज्ञया स्वं सम्बन्धं सम्बध्नाति । तदेवं प्लेटो प्रतीच्या विषय-वासनानां समुच्चयमेवात्मेति वदति । स मन्यते—यदात्माऽस्त्यमरः । स तत्रागच्छति ततो निर्याति च । श्रेयःप्राप्तिरेव मानवस्योद्देश्यमन्त्यम् । श्रेयस्यामज्ञानं न मानव-जीवनस्य लक्ष्यमन्तिमम् । ज्ञानं, शौर्यम्, आत्मसंयमः, न्यायपरता—सन्त्येते चत्वारः सद्गुणा इत्येष तदीयो विचारः । चातुर्वर्ण्ये च सः प्रीतिं निदधौ । वस्तुतः प्रतीच्यं दर्शनशास्त्रमपि प्लेटो महाभागस्य दानं महनीयं दानं मतं भवति ।

अरस्तुः ( ३८४-३२२ ई० पू० ) अनुभववादिनामथ यथार्थवादिनाञ्च च स्वगुरोः प्लेटो दार्शनिकादुद्भूत आसीत् । इन्द्रियगम्यं संसारं श्रद्दधानोऽप्यसावन्यविधानपि सत्तां न सम्भावयन्ती । ज्ञानप्रयोजनेन सः सत्यस्य महनी-

यतायां धियं निबबन्ध । यथार्थवादित्वात् स भौतिकाज्जगतो भिन्नं स्वतन्त्रं कमपि विचारलोकमङ्गीकर्तुमात्मानं नोद्यतश्चकार । सोऽनारतमेतद् दर्शयितुं प्रायस्यद् यत्समवेततया जगज्ज्ञानसत्ताभिव्यञ्जनयोर्जाति-व्यक्त्योरन्तराले परस्परं सामञ्जस्यमविरोधश्च सन्तिष्ठेते । स द्रव्यमाकारञ्च प्रकल्प्य सकलस्यापि संसारस्य व्याख्यानार्थं श्लाघास्पदपद्धत्या प्रायतिष्ट । स आकारमेवेश्वरं मेने । स 'ईश्वरः स इति' न विश्वसितिस्म । परमेश्वरस्य समप्रेक्षावत्त्वं कामनानां केन्द्रत्वमवश्यं स्वीकुरुते । तद्-विचारानुसारेण जगतः सर्वेऽपि पदार्था आकार-द्रव्याभ्यां घटिताः सन्ति । आकारद्रव्ययोश्चाकार एव प्रमुखतरः । द्रव्यमस्ति सहकारकम् । केवलं द्रव्यं न वस्तुनः पूर्णतया निर्माणं कर्तुमर्हति । तत् तदर्थ-माकारमपेक्षते । प्रतिमायां प्रस्तरस्तु द्रव्यमस्ति मूर्तिकलाकारावतारितं रूपञ्च तदीयोऽस्याकारः । जगतो मूले यस्य स्थितिर्दृश्यते स आकार एव । तमेव केचन 'ईश्वर' इत्येतेन व्यपदेशेन व्यपदिशन्ति । स्वकीयमेतं सिद्धान्तमन्वेतु-ममुना हेतुचतुष्टयं कल्पितम् । ते च सन्ति इमे—१ उपादानकारणम्, २ असमवायिकारणम्, ३ निमित्तकारणम्, ४ लक्ष्यञ्च ।

घटं प्रति मृत्तिकोपादानकारणमाकारोऽसमवायिकारणं, कुम्भकारो निमित्त-कारणं जलादिनिधानप्रयोजनं च लक्ष्यमस्ति ।

अरस्तुर्न दार्शनिक एव स वैज्ञानिकोऽप्यासीत् । विज्ञानं स आत्मनो रूपत्वेनावागमत् ।

वस्तुतो हि प्रतीच्ये संसारे दर्शन-विज्ञानयोर्या धाराः प्रेक्ष्यन्ते प्रवाहिता-स्तासामुद्गमभूमिः सुकरात-प्लेटोऽरस्तूनां ग्रन्था एव सन्ति ।

अरस्तोरर्वाक् कालगामि दर्शनं प्राधान्येन नैतिकं किं वा धार्मिकमवाप्यते । स्टोइक-एपिक्युरियन-संशयवादीनि च मतानि सर्वाणि जीवनसम्बन्धिनीनां समस्यानामुन्मीलने व्यस्तानि अभूवन् । आसीत् तेषां प्रमुखो विषय —आचारः । व्यावहारिकजीवनस्य सुखे परिणमनं तेषामुद्देश्यमभवत् । ततः शमं संश्रयेत, बाह्येभ्यो बन्धनेभ्य आत्मा मुक्तो भवेदित्येतदर्थं तत्कालवर्तिनां सम्प्रदायानाम-भिनिवेश आसीत् । स्टोइक-मतेन गुण एव सुखम् । एपिकुरस-मतेन सुखार्थं गुणा अपेक्ष्यन्ते । स्टोइक-मतेन गुणानां प्रयोगो गुणानां कृत एव । गुणवृत्त्या यद्यपि दुःखं सम्भवं परं गुणवृत्तिरेवास्ति सुखम् । एपिकुरसस्य मतेन गुणः सुखस्य साधनमात्रम् । सुखमेव जीवनस्य लक्ष्यमस्ति । विश्व-नियमानामव-

बोधेन भवति तत्सुलभम् । तेषामनभिज्ञतयैव मानवो निपीड्यते । मानवो नानावस्थनासु आत्मानं निपात्य भीतो भवति । सुखानुरागिणा जनेन महत्त्व-बुद्धि-न्यायशीलतादिवा गुणाः संप्राद्याः । स्टोइकादिस्तः सुखवादिन आसन् परम् अरस्तुप्रभृतिविद्वांसो ज्ञानवादिनो बभूवुः । तेषां दर्शनस्य कथनमिदं यद् ज्ञानं सुखाधिगतेरभ्यास्ति ।

दशमेशवीयशतकात् पञ्चदशेशवीयं शतकं यावत् प्रतीच्येषु देशेषु सञ्जातानां तत्त्वज्ञानरतानां समाजे अलकिन्दी-अलफराबी-अवीसीना-अवेरोजनामधेया यवनाः किञ्च स्काटसएरिजेना-एन्सेलम-टामसएक्वाइनस-डंसस्कोट्सनामका ईसामतावलम्बिनः सन्ति विश्रुताः । अस्त्येषां सिद्धान्तानां, परं, व्यावहारिकं महत्त्वं न्यूनतमम् ।

षोडशे शतके समुद्भूतानां दार्शनिकानां विचाराः प्रतीच्ये जगति वर्तमानं दार्शनिकं युगमारभन्त । उक्ते शतके सञ्जातेषु दार्शनिकेषु इटलीवास्तव्यो ब्रूनो, इंग्लैण्डनिवासी बेकनः, फ्रान्सीयो डेकार्टः प्रख्याताः सन्ति ।

डेकार्टस्य दर्शनं सेश्वरमस्ति । 'अहं विचारयामि, अतोऽहमस्मि' इत्येव तदीयः सिद्धान्त आसीत् । सिद्धान्तस्यास्य दर्शनं शङ्करोक्तेऽस्मिन्—

"अहमित्यस्मिन्नर्थे न कस्यास्ति संशयः पुंसः ।
अत्रापि संशयश्चेत् संशयिता यः स एव भवसि त्वम् ॥"

—श्लोकेऽपि भवति । डेकार्ट आत्मानमेतं निश्चयं गमयामास यत् यदस्ति प्रतीत-मभिव्यक्तं निश्चितञ्च तदस्त्यवश्यम् अवितथम् । ईश्वरस्य प्रतीतिर्नितान्त-विशुद्धा सुनिश्चिता च । स जगदपि सत्यं जानाति स्म । जगतोऽनुभूतिगम्यत्वात् तस्य सत्तायां न कोऽपि सन्देह इति ब्रुवाणः स जगतः सत्यत्वमङ्गीकरोति । तस्य कर्तास्ति परमेश्वर इत्यपि स वदति । महात्मा अगस्टाइन इव सोऽपि शरीरात्मानौ मिथो भिन्नौ इति स्वीकुरुते ।

सप्तदशे शतके उल्लेखनीया दार्शनिका डेकार्ट व्यतिरिच्य अन्येऽपि हाब्स-स्पिनोजा-लाइबनिस-लॉकाः सन्ति ।

हाब्स आसीत् प्रकृतिवादी । द्रव्यं गतिश्चेत्येतौ द्वौ पदार्थाववितथाविति तस्य विचारः । तयोर्मेलनेन संसारस्य प्रतिपदार्थो मनसि निर्मित इति स मन्यते । जगतो मूलकारणमीश्वर इत्येतं सिद्धान्तं यद्यपि न सः प्रत्याख्यातवान्

परं तस्यासीद् विश्वासोऽयं यत् तमधिकृत्य किमपि कथनं कठिनं, न वयं किमपि वक्तुं शक्नुमः।

स्पिनोज़ाख्यस्य दार्शनिकस्य सिद्धान्ता भारतीयवेदान्त-सिद्धान्तसदृशाः सन्ति। यथा आचार्यशङ्करः ब्रह्मरूपां सत्तामेकां मन्यते तथैव स्पिनोज़ापि। स आह—विश्वम् ईश्वरः, ईश्वरश्च विश्वम्। तस्येश्वरोऽस्ति—निर्गुणः। परं सर्वथैव न तस्य निर्गुण ईश्वरोऽद्वैतवादिनामभिमतं निर्गुणमीश्वरं संवदति। आयामस्येश्वर-धर्मत्वेन स्वीकरणात् सोऽद्वैतवादिभ्यो भिन्न एव। स्पिनोज़ामतेन जीवो यदा ईश्वर-विषयीमैक्यं ऐक्यमवगन्तुमर्हति तदा तन्मानसे बौद्धिक्या भक्त्या प्रेम्णश्चोद्रेको जायते। मानव-जीवनस्य लक्ष्यं स इदमेवामंस्त।

लाइबनिसः शक्त्यणुवादं प्रातिष्ठिपत्। तस्य द्रढीयसीयं धारणा यदन्यथा सत्त्वैव। अस्ति जीवो नित्यः।

अनुभववादी लॉकः प्रज्ञापरीक्षाविषये ग्रन्थमरचत्। तदीयं दर्शनमस्तीश्वरवादि। तस्य दर्शने ईश्वरेच्छाया अनुवर्तनं धर्म इत्येतन्मतं स्पष्टमेव दृष्टं जायते।

सप्तदशशतकाब्दीयेषु यूरोपदेशेषु दर्शनेषु देहवादस्य सर्वत्र व्यापकता प्राप्यते परमष्टादशीयशतकगामिषु दर्शनेषु न तत्तावलोक्यते। अष्टादशे शतके बर्कले-ह्यूम-काण्टप्रभृतयो दृढदृग्विचारवन्तो विद्वांसोऽजायन्त। तेषां विचारास्तत्त्वज्ञानिनः प्रति प्रेरणाप्रदा अभिदधन्।

दार्शनिको विद्वान् बर्कले अध्यात्मवादी बभूव। स देहवादं निराचकार। स बाह्यवस्तुनः सत्तामपि प्रत्ययवदत्। तस्य मतं बौद्धविज्ञानवादेन सार्धं प्रयांसं सादृश्यं बिभर्ति।

संसारस्यानिश्चितत्वमुपपादयन् ह्यूम आत्मनो बुद्ध्यगम्यत्वं सम्याज्ञानत्वञ्च प्रतिपादयति।

काण्टेन ज्ञानस्य मीमांसा परमविवेकपूर्वकं प्रस्तुता। तेन मानविचारकाः समीक्षितुं ग्रन्थाः त्रयो विवेचनात्मका ग्रन्था अलेखिषत—शुद्धबुद्धिपरीक्षा (क्रिटिक ऑफ प्योर रीजन), तद्वच्च व्यावहारिकबुद्धिपरीक्षा (क्रिटिक ऑफ प्रैक्टिकल रीजन), भावनायां निर्णयपरीक्षा (क्रिटिक ऑफ जजमेण्ट)। तस्य कर्मसम्बन्धिनः सिद्धान्ता भगवद्गीतायाः कर्मसिद्धान्तानुसरन्ति। तन्मतमिदम्—यथा बाह्यजगतः सत्तायाः प्रमाणं भौतिकविज्ञानेनाप्यते तथैवेश्वर-

स्यामरत्वस्य च प्रमाणं नैतिकतायाः स्वतन्त्रसत्तासामर्थ्यात्प्राप्तं जायते। सः सर्वेष्वपि वस्तुषु द्विविधत्वं पश्यति—पारमार्थिकत्वं प्रातिभासिकत्वं च। अतो न साधारणो जनो वस्तुनो यथार्थं ज्ञानं कर्तुं पारयति।

काण्टस्य दृष्ट्या मानवेषु ज्ञानस्य शक्तिद्वयं निवसति—१ इन्द्रियाणि ( सेन्सीबीलिटी ), २ बुद्धिश्च। असम्बद्धसंवेदनानां ( सेन्सेशन ) समुपस्थापनमिन्द्रियाणां कार्यमस्ति। बुद्धेः ( इण्टलेक्ट ) कार्यं वर्तते—प्रस्तुतीकृतेषु संवेदनेषु विभिन्नानां सम्बन्धानां सन्निवेशनम्। चेद् बुद्धिरेवंविधान् सम्बन्धान् न प्रतिष्ठापयेत् तदा कीदृशोऽपि नानुभवः समुपलभ्येत। अस्मदखिलमपि ज्ञानं द्वादशश्रेणीश्रिताभिर्बुद्धिभिर्व्यवह्रियते। यावन्तो हि तर्कशास्त्रीयाः प्रतिज्ञा भवितुं शक्यास्तावत्य एव श्रेण्योऽपि ( कैटेगरीज़ ) सन्ति। सन्ति च निर्णयानां चत्वारो हि प्रमुखा वर्गाः—१ परिमाण, २ गुण, ३ सम्बन्ध, ४ प्रकारः। एतेष्वप्येकैकस्त्रिविधः। तदेवं कौण्टविचारेण सन्ति श्रेण्यो द्वादश। सोऽनुभवमपि द्विविधं मन्यते। एकन्तु तत्त्वमनुभवस्य बाह्यजगदस्ति, अपरं च सम्बन्धस्रोतो भूतास्मद्‌धीरस्ति। एतेन तस्यानुभववादित्वं बुद्धिवादित्वञ्च युगपदेव सिद्ध्यति।

काण्टो वस्तुसत्तामपि द्विविधां वदति। तत्रैकास्ति अनुभवनिरपेक्षिणी, अपरा चास्ति अनुभवापेक्षिणी।

( १ ) अनुभवनिरपेक्षिणी—एतद्रूपाङ्गतायानुभवो नापेक्ष्यते। तदभावेऽनुभवस्य स्वतोऽसम्भवित्वात्। ( २ ) अनुभवापेक्षिणी—अनुभव एवेन्द्रिय-प्रस्तुत-पदार्थ-सत्तां ज्ञापयति। न स ( अनुभवः ) तद् विशुद्धं रूपं प्रकटीकरोति। अपितु देश-काल-द्रव्य-गुण-कार्य-कारणादिसम्बन्धैस्तस्य विकृतमेव रूपमभिव्यनक्ति। प्रज्ञायां न शुद्धवस्तु साक्षात् वस्तुं शक्नोति। सा जगति प्रतीयमानस्यैवाविर्भावने क्षमते।

काण्टस्य मतमेतच्च यत् कर्तव्यानि कर्माणि न लाभ-प्रयोजनेन सम्पाद्यानि अपितु तानि कर्तव्यबुद्ध्याचरणीयानि।

एकोनविंशेशवीयशतके सञ्जातेषु तत्त्ववेत्तृषु फिक्टे-शेलिङ्ग-हेगलाख्य एते सन्ति विख्याताः।

काण्ट इव फिक्तेऽपि नैतिकमादर्शं स्वीकरोति। स्पिनोज़ेव सोऽपि द्वयोरपि जगतोः सत्ताञ्च मन्यते। तस्य सिद्धान्त प्राधान्येन नैतिकमाध्यात्मिकञ्च तत्त्व-

समलङ्करते । श्रेयः, शुद्धसङ्कल्पः, नैतिकमात्मतत्त्वम्—इत्येतानि सः सत्तत्त्वेनो-
रीकुरुते । दृश्यमानं संसारं मूलतत्त्वस्य प्रतिच्छायां मन्यते । वस्तुतत्त्वं मनः-
सृष्टिमात्रं सः कल्पते । न सन्ति वस्तुतो जीवा अनेके । सन्ति ते एकस्या एव
नैतिक्या व्यवस्थाया अभिव्यञ्जकाः ।

शेलिंगस्य मूलं तत्त्वं फिश्ते-कृत-कल्पना-विलक्षणम् । न मूलतत्त्वं तदीय-
मात्मा न चानात्मा । परमस्ति तत् द्वयोरपि कारणम् । अस्ति तद् निर्गुणं
निरपेक्षम् । तत्र विरोधिनीनां भावनानां समन्वयोऽस्ति । वस्तुतस्तु शेलिंगस्य
निरपेक्षतत्त्वं कॉण्ट-फिश्ते-स्पिनोजादार्शनिकानां समन्वय-स्थलं प्रतिभाति । तस्य
मतेन प्रकृतिश्चेतनात्त्वं जीवितत्वञ्च लभते । नाध्यात्मवादिन इव स प्रकृति-
माभासमेवावगच्छति ।

हेगलस्य विचारधारा अद्वैतवेदान्तस्य सिद्धान्तमस्मच्चित्ते समुपस्थापय-
न्तीव प्रतिलक्ष्यते । शेलिंगस्य ब्रह्म चेत्पदार्थेभ्यः पृथगवतिष्ठते नापेक्षते तान्; तदा
हेगलस्य ब्रह्म प्रक्रियास्वरूपमस्ति । न तत् क्रियां किञ्च जीवनमुत्पादयत्यपि तु
स्वयं क्रियारूपं जीवनरूपञ्च वर्तते । न तद् वस्तूनि अतिक्रमते अपितु तत्र
व्याप्तं भवत् सन्तिष्ठते । तस्य ब्रह्म विश्वातीतं न भूत्वा विश्वानुगमेव । वैज्ञा-
निकास्तु भौतिके जगत्येव बुद्धेः राज्यं स्वीकुर्वन्ति परं हेगलस्तु ततोऽपि पर-
स्तादुपयाति । न प्रपञ्चं स सत्यं मन्यते । विश्वप्रक्रियाया नियामको हेतुः पूर्ण-
प्रत्ययः ( परब्रह्म ) एव । तदेवान्तिमं लक्ष्यं; जगत् तद्दिशयैवोपसरति अहरहः ।
अस्ति विश्वस्य सत्ता व्यावहारिक्या दृष्ट्या सत्या परं पारमार्थिकदृष्ट्या न ।

हेगलोऽस्ति स महादार्शनिको यो हि कलां धर्मं दर्शनञ्च गाम्भीर्येण जगाहे ।

शोपेनहावरः, हरबार्टः, नीत्शे, वुण्टश्चैते चत्वारो दार्शनिकास्ते सन्ति ये
सत्तां सङ्कल्परूपां मन्यन्ते । 'बुद्धितत्त्वमेव सत्ता' इत्यत्र न ते श्रद्दधते । वेदान्त-
प्रभावो हि शोपेनहावरादीनां सिद्धान्तेषु स्पष्टं दृश्यते । वेदान्तिन इव एते
दार्शनिका अपि जगत्पदार्थान् मायामेव वदन्ति । हेगलश्चैतन्यस्य सारो बुद्धिरिति
कथयति यदि, तदा शोपेनहावरो बुद्धिं चैतन्यस्याङ्गमेव । स चैतन्यस्य सारं
सङ्कल्पं मन्यते । सङ्कल्पशक्तिं सः सर्वासामपि स्थितीनां मूलमवगच्छति । तया
मानवः स्वसत्तामधिगच्छति । सैव बुद्धिं सहकृत्य मानवेषु नानाविधान् प्रत्ययान्
रचयति । जीवनस्य लक्ष्यं निर्वाणमिति शोपेनहावरस्य मतम् ।

एकोनविंशे ईशवीये शतके इङ्गलैण्डे भौतिकवादस्य विरोधाय अध्यात्म-

वादी प्रादुर्भूतोऽभवत् सोऽस्ति ग्रीनो नाम दार्शनिकः। तद् दृष्ट्या ह्यूमस्यानुभववादः स्पेन्सरस्य च विकासवाद उभावपि मानवस्य चरित्रं प्रकृतिं च व्याख्यातुं न प्रभवतो; द्वयोरपि सदोषत्वात्। आत्मोपलब्धिं ग्रीनो मानवस्य लक्ष्यममंस्त। तद्विचारोऽयं मानवः स्वकल्याणं समाजमधिवसन्नेव कर्तुं क्षमते; समाजव्यवस्थयोर्मध्ये सम्बन्धोऽस्ति नितान्तसान्द्रः। मानवः समाजस्य प्रधानमङ्गमतः समाजादेव तस्य मङ्गलं भवितुमर्हति।

एतेन विवेचनेन स्पष्टमेवेदं विदितं जायते यत् प्रतीच्ये संसारेऽपि तत्त्वज्ञाननिष्ठाः सत्यस्यान्वेषणं महता प्रेम्णा महताध्यवसायेन च कृतवन्तः। इदं त्ववश्यमेव सत्यं यत्प्रतीच्यानां दर्शनानां चरमास्त्रानं ज्ञानतृप्तावेव। सर्वाण्यपि दर्शनानि तत्रत्यानि ज्ञानसम्बन्धिनीं तृप्तिं समवाप्तुं सततं रतानि विलोक्यन्ते। तेषां मतेन ज्ञानान्वेषणस्य लक्ष्यं ज्ञानमेव। परं भारतीयानि दर्शनानि ज्ञानं साधनमेव मन्यन्ते न च साध्यम्। प्रतीच्यदर्शनं न स्थूल-लिङ्गादिशरीर-भेदं, न च जन्मान्तरसिद्धान्तं स्वीकुरुते। मन आत्मानञ्च न तत् सम्यक् सम्प्रत्यपि ज्ञातुं शक्नोति। तत्तज्ज्ञानार्थं कृतस्तस्य प्रयासोऽवश्यमेवाभिनन्दनीयः।



## श्रीकृष्णलीलामृतं श्रीमद्भागवतम्

श्रीमद्भागवतं संसारभयनाशनप्रवीणमज्ञानध्वान्तविध्वंसननिपुणं कालव्यालाननग्रासत्रासनिवारणनदीष्णं भक्तिशास्त्रजीवनसर्वस्वं संस्कृत साहित्यस्याभरणं भगवत्तत्त्वप्रकाशनपरं परमानन्दसुधारसमयं विमलविवेकमसुन्मीलनकुशलं किमपि परमज्योतिः ।

एतद् ग्रन्थरत्नं प्रधानतयैव वैष्णवानां विचक्षणवराणां जगदुपजीव्यत्वेन मन्यते । भगवान् वेदव्यासोऽत्र समाध्यवस्थानुभूतानि भगवत्तत्त्वानि वर्णयामास । एतदीय प्रभविष्णुः प्रभावः सकलानामपि विद्याविदां जगत्यां समग्राणामपि रसमर्मज्ञानां संसृत्यां सर्वतो वितत समवाप्यते । वल्लभसम्प्रदायश्चैतन्यमहाप्रभुभक्तसमुदायश्च नितरामेवास्मालौकिक्या विभयाऽऽवर्जित संलक्ष्यते । आध्यात्मिकं तत्त्वमिहानन्यगामिन्या परमोदात्तया विद्वत्तया गीतं तस्मात् तत् तत्त्वमवगन्तुं तत् रसामृतं पातुं सर्वेऽपि विद्वद्वरेया अहमहमिकया प्राधाविषु । विपुला ग्रन्था ग्रन्थरत्नस्यास्य व्याख्यायै विपश्चिद्वरैर्लेखित । तत्र भागवततत्त्वनिर्णय आनन्दतीर्थप्रणीतः, षट्सन्दर्भश्च जीवगोस्वामिविरचित उल्लेखनीयौ ग्रन्थौ स्तः । षट्सन्दर्भस्तु व्यापकत्वाद् विशदत्वाच्च परामेव प्रकर्षश्रियं समश्नुते । भागवतं तत्त्वं किंवा भागवतस्य गूढार्थं प्रकटीकर्तुं याः सम्प्रदायभाजां प्रेक्षावतां बहुलाष्टीका साम्प्रतं सन्ति शोभमानास्तासु रामानुजमतपरका सुदर्शनसूरेः शुकपक्षीया, श्री वीरराघवाचार्यस्य भागवतचन्द्रचन्द्रिका, माध्वमतरता विजयध्वजस्य पदरत्नावली, निम्बार्कमतभाक् शुकदेवाचार्यस्य सिद्धान्तप्रदीपो, वल्लभमतानुरागिणी वल्लभाचार्यस्यैव सुबोधिनी, गिरिधराचार्यस्याध्यात्मिकी, चैतन्यमतस्नेहिनी श्रीसनातनस्य बृहद्वैष्णवतोषिणी, जीवगोस्वामिनः क्रमसन्दर्भो, विश्वनाथचक्रवर्तिनः सारार्थदर्शिनी, श्रीश्रीधरस्वामिनश्च श्रीधरी सुविदिता समेषामपि मतिमताम् । सर्वेष्वपि सम्प्रदायेषु या अपि आध्यात्मिक्यो मौलिक्य सत्यप्रणाः प्रसूतास्तासां स्रोत इदमेव भगवद्विग्रहरूपं भागवतम् ।

श्रीमद्भागवतमद्वैततत्त्वं विशदतया स्फुटतया च प्रतिपादयदपि भक्तिशास्त्रमग्रियं भक्तिशास्त्रम् । भगवद्भक्तिमन्तरेण न ज्ञानोदय-सम्भवः, यावद् ज्ञान-

भानो प्रादुर्भावो न भवति तावत् कर्मतमोऽपि नापैति कर्मणा प्रवाहस्यानव च्छिन्नताया कुतोऽपवर्ग ? तस्मादेव कारणात् तत्र परोक्षतया अपरोक्षतया च भगवद्भक्तिरेव सर्वत्र [गीता । मानवजीवनस्य चरम साध्य यदस्ति तद् भगव च्चरणप्रेमैव । तद्भक्त्यैव कृत्स्नतया सिध्यति । यावन्न साध्यते न ताव न्मानवस्य परमार्थत कल्याणमित्येतद् विमृश्य तद्वादावेवामनति—

स वै पुसा परो धर्मो यतो भक्तिरधोक्षजे ।
अहैतुक्यप्रतिहता ययाऽऽत्मा सम्प्रसीदति ॥
वासुदेवे भगवति भक्तियोग प्रयोजित ।
जनयत्याशु वैराग्य ज्ञान च यदहैतुकम् ॥ १ ॥
धर्म स्वनुष्ठित पुसा विष्वक्सेनकथासु य ।
नोत्पादयेद् यदि रतिं श्रम एव हि केवलम् ॥
धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते ।
नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृत ॥ २ ॥
कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता ।
जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभि ॥ ३ ॥

ज्ञान तदेव धन्य यद् भगवति भक्तिमुत्पादयति, तपस्तदेव श्रेष्ठ यन्मनो भगवदुन्मुख विदधाति, धर्म स एवाभिनन्द्यो यो भगवच्चरणेषु प्रीतिं पुष्णाति ज्ञानतपोधर्मादीना प्रयोजन भगवत्कृपाधिगमनमेव—

वासुदेवपर ज्ञान वासुदेवपर तप ।
वासुदेवपरो धर्मो वासुदेवपरा गति ॥

सत्त्वगुणोपाधिविहीनोऽव्यक्तो निराकारो भगवान् 'निर्गुण' इति कथ्यते स एवोपाध्यवच्छिन्नत्वेन 'सगुण' इति निगद्यते । शुद्धसत्त्वावच्छिन्नत्वात् स 'विष्णु'-रिति, रजोमिश्रसत्त्वावच्छिन्नत्वाद् 'ब्रह्मा' इति, तम सत्त्वावच्छिन्नत्वाद् 'रुद्र' इति, तुल्यबलरजस्तमोऽन्वितसत्त्वावच्छिन्नत्वाच्च 'पुरुष' इत्यभिधीयते । जगत स्थितौ निमित्तकारण विष्णु, तस्य रचनायां निमित्तकारण 'ब्रह्मा' किञ्च तस्य प्रत्यवहारे निमित्त कारण 'रुद्रो' मत । पुरुषस्तु तस्योपादानकारणम् । एते विष्णुप्रभृतयश्चत्वारोऽपि गुणातीतस्य ब्रह्माख्यस्य तत्त्वस्य सगुणस्वरूपत्वेनाम्नाता । इत्थ भागवतस्य मते 'ब्रह्म' एवाभिन्ननिमित्तोपादानकारणमस्ति । ब्रह्म एव

नरो यो न भगवल्लीलानुरागी स सारमेयादपि वाल्मेयादपि वराहादपि क्षुद्रतरः। प्रत्यहमायुः क्षयमेवोपैति तस्मात् तत् प्रयतितव्यं तेन, यत् समुपक्रुर्वीत—

आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ।
तस्यर्ते यत्क्षणो नीत उत्तमश्लोकवार्तया॥ १॥
तरवः किं न जीवन्ति भस्त्राः किं न श्वसन्त्युत।
न खादन्ति न मेहन्ति किं ग्रामपशवोऽपरे॥ २॥
श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः।
न यत्कर्णपथोपेतो जातु नाम गदाग्रजः॥

श्रीमद्भागवतसागरे सर्वा अपि शास्त्र सरितो निपतन्ति। दर्शनानि प्रकृति-पुरुषात्ममुक्तिसृष्ट्यादिविषयान् यान् प्रतिपादयन्ति, उपनिषदो यद्धि आत्मतत्त्वं गृणन्ति, स्मृतयो य हि धर्मं परिशीलयन्ति श्रीमद्भागवते शास्त्रे तेषां सर्वेषामपि विषयाणां सम्यग् निरूपणं दृग्गोचरं सञ्जायते। चेद् येन–पृथु–ध्रुव–प्रह्लाद–बलि–प्राचीनबर्हिर्दक्षप्रजापति–वृत्रासुरर्षभदेव–देवासुरसमर–समुद्रमन्थन–गङ्गावतरणादिकथानां सरसानां श्रवणाय परमौत्सुक्यं मनसि बलीयस्कतया जागर्ति, तदा शास्त्रमिदं तदर्थौत्सुक्यं पूर्णतया सफलीतुमलम्। इक्ष्वाकु–निमि–चन्द्र–पुरु–यदुवृद्धजिप्रभृतिमहीरमणानां वंशेषु ये हि पुण्यकर्माणो राजानो बभूवुस्तेषामावेदनवचांसि पेशलानि चरितानि श्रोतुं मानसे उत्कण्ठोऽभिलाषः समुत्तिष्ठति तदा सोऽप्यभिलाषस्तादृग्रं तृप्तिमश्नुते। महर्षेश्च्यवनस्य पावनं चरित्रमुपस्थाप्य भक्तप्रवरस्य अम्बरीषस्यानुकरणीयं स्पृहणीयञ्च वृत्तं सन्निधाय विदुरोद्धवादीनां पुनीतानि सदाचरणानि च प्रणिगद्य शास्त्रमेतत्सर्वस्यैव मनः प्रीणाति। भगवतः श्रीकृष्णचन्द्रस्य पापापहा लीला उद्दीय एषा श्रीमद्भागवतमाता समारस्य मनोग्लानमपनेतुं, तस्य मङ्गलमाचरितुं, तत्प्रवृत्तितो निवृत्तिं प्रति नेतुं, त भगवदुन्मुखं विधातुमनारतं दिवानिशं निनायाममुभवन्ती, निनास्वैरं गच्छन्ती, सोत्साह सस्नेहञ्च व्यापृता केन न चक्षुष्मता वीक्ष्यते? पश्यन्तु प्रेक्षावन्तः, अत्र बालोत्तारे ससोपो ग्रामप्रभो हि धेनूश्चारयति, इह स कालियनागस्य विवादं गोपवृन्दं गोपायन्तं विलोकयन्तु, इह स गोवर्द्धनस्योत्थापनं विधाय शक्रस्य मानमपहरन् गोपांश्च रक्षन् वीक्ष्यन्ताम्, इह स गोपाङ्गनाभिः सह रासोत्सवं वितन्वन् प्रेक्ष्यन्ताम्, इह स कंस निगृह्णन्निह शिशुपालस्य शिर-

सुदर्शनचक्रेण भेदयन्तमिह च महाभारते धनञ्जयं गीतामुपदिशन्तञ्च वीक्षन्तो विपश्चित्सत्तमाः।

श्रीमद्भागवतं वस्तुतस्तास्ता विविधा भगवतो लीलाः संश्राव्यानेकोपाख्यानोपन्यासपुरस्सरं मानवमात्रं 'कोऽहं'मित्येतच्चिन्तयितुं, 'किमर्थमहं शरीरं संलब्धवान्' इत्येतद्विचारयितुम् 'मदीयं किं कर्म कश्च मम धर्मः' इत्येतद् विभावयितुम्, 'कस्माद् मामाधिव्याधिजरामृत्यवः प्रपीडयन्ती'ति ध्यातुम्, 'किमर्थमहं पुनःपुनः जननमरणान्योर्मी'ति च बोद्धुम्, 'कस्मात्कारणादहं दरिद्रः स च धनवान्' इति अवगन्तुं प्रेरयति नक्तन्दिवम्।

श्रीमद्भागवतमुपरिस्थितान् सर्वान् अपि प्रश्नान् समादधदस्माकं पुर उपतिष्ठति। तत्पुरञ्जनोपाख्यानमाख्याय मानवमुपदिशति यत् पुरञ्जनो राजा नान्यः कश्चित् स एव स्वयमस्ति। पुरं नान्यत् किमपि। इदं शरीरमेव पुरम्। प्राकृतानां विषयाणामुपभोगाय स तदधितिष्ठति। देहाभिमानी जीवोऽज्ञानपरिच्छिन्नो भूत्वा विविधान्याधिभौतिकाधिदैविकाध्यात्मिकानि च दुःखान्युपभुञ्जानः संहननं बिभर्ति। अस्ति तु परमार्थतोऽसौ निर्गुणः परं प्राणेन्द्रियमनोधर्मानात्मन्यारोप्य 'ममेदमिदमहं करोमि' इत्येवमाद्यभिमानधिया निबद्धो भवन् क्षुद्रान् विषयांश्चिन्तयन् बहुविधानि कर्माण्यनुतिष्ठति। अस्ति वस्तुतः स स्वयं प्रकाशः परं यावत् स सर्वेषामपि परमगुरुमात्मस्वरूपं भगवन्तं नावगच्छति तावत् स प्रकृतेर्गुणेष्वेव निमज्जति। गुणजनितान् धर्मान् स्वकीयान् विभाव्य संसारसागरे गभीरे पतति। कदाप्यसौ तत्र सद्भावैर्निषेव्यमाणो भवति, कदाप्यसौ चाञ्चल्येन धूयमानो जायते; कदापि चासौ मोहेन मुह्यमानः सञ्जायते; कदापि स सात्त्विकैः कर्मभिः प्रकाशबहुलं नाकमश्नुते; कदापि राजसकर्मवशाद् दुःखप्रदान् लोकान् लभते; कदापि च स तमोमयकर्मभिः शोकसंकुलितासु तमःपरिवेष्टितासु योनिषु च जनुर्गृह्णाति। यथा घुरघामकण्ठः श्वा स्थले स्थले विचरन् स्वप्रारब्धानुरूपं क्वचिद् दण्डप्रहारं सहते, क्वचिदोदनं भुङ्क्ते तथैव जीवोऽपि—मानवोऽपि—नानावासनाः आदाय उच्चावचेन च मार्गेण उपर्यधो मध्ये च पर्यटन् स्वकर्मानुरूपाणि फलानि विन्दति। यस्या अविद्याया वशात् परमार्थस्वरूपमात्मानमेषा जन्ममरणरूपानर्थपरम्परा कदर्थयति तस्या निवृत्त्यर्थं श्रीहरिसम्बन्धिनी दृढीयसी भक्तिरपेक्ष्यते।

एकनानतया भगवति वासुदेवे निहिता भक्तिर्ज्ञानं वैराग्यञ्च जनयति।

भक्तेरुद्भयास्पदमस्ति भागवती कथा। अतः श्रद्धया भगवत्कथाध्येतव्या श्रोतव्या च। यत्र भगवद्गुणकीर्तनविमलमानसा भक्ता निवसन्ति तत्र भगवच्चरित्रामृततरङ्गिण्यो वहन्ति। दुःखमिदमतितरां यत्स्वभावजैः प्रत्यूहैरपप्लुतो जीवः श्रीहरिलीलासुधासिन्धोर्विमुखीभवन् परमदारुणसांसारिकविषयविषमयावहसागरे आमज्जति। तस्य मनो हा भगवति न सज्जति; न स्निह्यति न लगति च। अत एव तु स संसारदुर्गमकाननेन कण्टकाकुलविषमधरणीतलेन हिंस्रसत्त्वसङ्कुलेन नितान्तमेव निपीड्यमानः सन्ताप-सन्तप्तो भयात् संत्रस्तः सन् उच्चैः क्रन्दति। देह-गेहासक्तस्य कीदृशी शोचनीयावस्था जायते तामधिकृत्य श्रीमद्भागवतमाह—

आत्मा जायासुतागारपशुद्रविणबन्धुषु।
निरूढमूलहृदय आत्मानं बहु मन्यते॥ १॥
सन्दह्यमानसर्वाङ्ग एषामुद्वहनाधिना।
करोत्यविरतं मूढो दुरितानि दुराशयः॥ २॥
अर्थैरापादितैर्गुर्व्या हिंसयेतस्ततश्च तान्।
पुष्णाति येषां पोषेण शेषभुग् यात्यधः स्वयम्॥ ३॥
वार्तायां लुप्यमानायामारब्धायां पुनः पुनः।
लोभाभिभूतो निःसत्त्वः परार्थे कुरुते स्पृहाम्॥ ४॥
कुटुम्बभरणाकल्पो मन्दभाग्यो वृथोद्यमः।
श्रिया विहीनः कृपणो ध्यायञ्छ्वसिति मूढधीः॥ ५॥
एवं कुटुम्बभरणे व्यापृतात्मा जितेन्द्रियः।
म्रियते रुदतां स्वानामुरुवेदनयास्तधीः॥ ६॥

अज्ञानान्मनुजो यद् दुःखं तदेव सुखमवगच्छति। सुखाधिगमनाशया स स्वकीयं मनो ललनासु योजयति परं ताभ्यः कुतः सुखं सम्भवं मरथम्। अन्ततो गत्वा नितरां विषीदति। अनुतापेन दूयमानो ब्रवीति—हन्त यन्मयावगतं सुखं तत्तु भीषणं दुःखमेवासीत्। संसारस्य दुःखप्रदत्वमुद्दिश्य श्रीमद्भागवतं प्राचीनबर्हिषं क्षितीशं यदुपदिशति तत् सस्पृहदेव श्रूयताम्—

"सुमनःसमधर्मणां स्त्रीणां शरण आश्रमे पुष्पमधुगन्धवत्क्षुद्रतमं काम्यकर्मविपाकजं कामसुखलवं जैह्व्यौपस्थ्यादिविचिन्वन्तं मिथुनीभूय तदभिनिवेशितमनसं षडङ्घ्रिगणसामगीतवदतिमनोहरवनितादिजनालापेष्वतितरामतिप्रलोभ-

भिन्नवर्णमग्रे पृथक्पृथग्वदात्मन आयुर्हरतोऽहोरात्रान्तान् कालचक्रविशेषानविगणय्य गृहेषु विहरन्तं पृष्ठत एव परोक्षमनुप्रवृत्तो लुब्धकः कृतान्तोऽन्तःशरेण यमिह पराविध्यति तमिमात्मानमहो राजन् भिन्नहृदयं द्रष्टुमर्हसीति ।

सत्त्वं विचक्ष्व मृगचेष्टितमात्मनोऽन्त-
श्चित्तं नियच्छ हृदि कर्णधुनीं च चित्ते ।
जह्यङ्गनाश्रममसत्तमयूथगाथं
प्रीणीहि हंसशरणं विरम क्रमेण ॥"

श्रीमद्भागवतं जननायाः पुरो भवाटव्या भीषणत्वमुपन्यस्यति तत् तथ्या अलभ्यद्वारगम्यपथप्रवरं ज्ञापयन्मानवनिकरं प्रबध्नाति यत् तेऽपगृतास्ततो भूयो तिष्ठेयुः । भवाटवीं प्रविश्य न कोऽपि शर्मणो बिन्दुमपि लब्धुं प्रभवति । अत्र मनो ज्ञानेन्द्रियाणि च सन्ति दस्यवः । यैर्मानवो भवति विलुप्यमानः । पुत्र-कलत्रबन्धुप्रभृतयस्तथैवात्र मानवं दुन्वन्ति यथा वृक-जम्बुकादयः । सर्पदो दंश-मशका इवात्र जनानुपरुन्धन्ति । धर्मांशो मञ्जुलता इव गुल्म-तृणवीरुधवत् सन्ति । ताभ्यो जनानां निर्मुक्तिर्भवत्येव न । मरुद्भूमिधितास्ते न कदापि सुखेन श्वासमप्येकं ग्रहीतुं शक्नुवन्ति । प्रमदात्र वात्येव विद्यते । सा तेषां नयनयो रजः क्षिपति यदन्धा भवन्तस्ते गुरुजनानां मर्यादामपि न विचारयन्ति । रजोमलिन-नयना भूत्वा ते कर्मणाधिभूता देवताः अपि अवज्ञातुं प्रक्रमन्ते । शत्रूणां वचांसीह कौशिकरव इव वर्तन्ते तान्याकर्ण्य तेषां मनो भृशं शस्यति । राजकुलस्य भर्त्सनापूर्णानि वचनानि चात्र श्वापदानां कठोरशब्द इव सन्ति तानि तु तेषां हृदयमेव भिन्दन्ति । गृहस्थाश्रमपरको महान् विस्तृतः कर्मकलाप इह महीधर इव विद्यते । स तु तेषां जीवनं कठोरेषु सङ्कटेष्वेव निपातयति । इह तृष्णास्तु सन्ति मरीचिकाम्भ इव तासां तरणं तु सम्भवमेव न भवति । जना दुर्व्यसनात् तासां तासु मुह्यन्ति । कदापि ते पुनरत्र भवाटव्यां दुर्जन-द्वन्द्वसङ्घर्षक्लिश्यमाना भग्नदन्ता उद्विग्नताञ्च नीयमाना रुदन्ति, विवेकहीनाः धीरपद्व्या इवान्धान्धतामापतन्ति । कदापि तेऽत्र भवारण्ये विषय सुख-मधुकणान् विचिन्वन्तो यदा परस्त्रीधनानि ग्रहीतुमपि धर्तुं प्रयतन्ते तदा तत्तद्-दण्डाधिपतिभिर्निगृह्यमाणा अपारे निरये निपतन्ति ।

एवं सविस्तरं भवाटव्या घोराणि दुःखानि वर्णयित्वा महर्षिर्भरतो रहूगणा-

धिपोपदेशापदेशेनाखिलानपि विश्वजनानाचष्टे यत् ते विषयेभ्यो व्यावृत्ता भूत्वा ज्ञानघनद्वारासेन भवाटवीं भिन्द्युः —

> रहूगण त्वमपि ह्यध्वनोऽस्य
> संन्यस्तदण्डः कृतभूतमैत्रः ।
> असज्जितात्मा हरिसेवया शितं
> ज्ञानासिमादाय तरातिपारम् ॥

श्रीमद्भागवते भारतमहिमवर्णनमधीत्य विदितं भवति यत् पुरातने भारते भगवत्कथासरित् सर्वत्र सवेगं कलकलशब्दं कुर्वाणा गभीरप्रवाहपूर्वकं प्रवहमाना बभूव । साधुजनैरत्रत्या वसुन्धरालंक्रियमाणा भूत्वा विललास । नृत्यगीतमङ्गल-तूर्यनिस्वनैः समं जना भगवन्तं यज्ञपुरुषमर्चयन्त इह तत्त्वादर्शिषत । भारतीया विभिन्नदेवताः उद्दिश्य पृथक् पृथग् भागं निदधानास्ताभ्यश्च विधिमन्त्रद्रव्यादि-योगेन सश्रद्धं हविः प्रददाना अवालोक्यिषत । अत एव तु भगवान् वेदव्यासः स्वयं भारतमेवमुपश्लोकयति—

> यैः श्रद्धया बर्हिषि भागशो हविर्निरुप्तमिष्टं विधिमन्त्रवस्तुतः ।
> एकः पृथङ् नामभिराहुतो मुदा गृह्णाति पूर्णः स्वयमाशिषां प्रभुः ॥ १ ॥
> सत्यं दिशत्यर्थितमर्थितो नृणां नैवार्थदो यत्पुनरर्थिता यतः ।
> स्वयं विधत्ते भजतामनिच्छतामिच्छापिधानं निजपादपल्लवम् ॥ २ ॥
> यद् यत्र नः स्वर्गसुखावशेषितं स्विष्टस्य सूक्तस्य कृतस्य शोभनम् ।
> तेनाजनाभे स्मृतिमज्जन्म नः स्याद् वर्षे हरिर्यद् भजतां शं तनोति ॥ ३ ॥
> अहो अमीषां किमकारि शोभनं प्रसन्न एषां स्विदुत स्वयं हरिः ।
> यैर्जन्म लब्धं नृषु भारताजिरे मुकुन्दसेवौपयिकं स्पृहा हि नः ॥ ४ ॥

हा हन्त यद् भारतं पुरा एतादृशं सच्चरित्रमासीद् यत् तद् वीक्ष्य देवा अपि तत्र प्रहीतुं जनुरचीकमन्त यन्महर्षयोऽपि भूयो भूयोऽभिनन्दन्तोऽपि नातृप्नुवन् तदेव भारतं साम्प्रतं नानादुराचरणभ्रष्टाचरणादिभिर्निन्दितकुत्सितघृणितकर्मभि-र्भ्रंश्यमानं दृश्यते । न साम्प्रतं भारतीया जघन्यानि कर्माणि कुर्वाणा मनागपि त्रपन्ते, धनवन्तो दीन-दरिद्रान् मध्यमवर्गान् शोषयन्तो निपीडयन्तश्च दिवानिशं प्राप्यन्ते, शास्तारः स्वयमेवाद्य कुमार्गं गच्छन्त आसाद्यन्ते । ते स्वकीयं वैभवं वर्धयन्तो नानाविधैरन्याय्यैः साधनैः सर्वत्र विलोक्यन्ते; शासनमध्ये पदमनाप्तु

ते निर्वाचनावसरेषु यान् अनाचारान् अवलम्बन्ते तेषामनालपनमेव वरम्, हा, अस्मद्-देशस्य रामादिराजान क्व चेमे साम्प्रतिकाः शास्तारो येषां मनसि जनताया हितस्य स्तोकमपि चिन्ता न दृश्यते। हा, कीदृशं शोचनीयमस्मत्पतनं संवृत्तम्।

श्रीमद्भागवतं जनान् सत्पथं नेतुं बहुधा यतते। तस्करान् प्रदर्श्य भाययति वाञ्छति च यत् ते भीता भूत्वा दुष्कर्मभ्यो विरमेयुः पापेभ्यः पराङ्मुखाश्च स्युः। तद्यथा—

"ये त्विह वै दस्यवोऽग्निदा गरदा ग्रामान् सार्थान् वा विलुम्पन्ति राजानो राजभटा वा तांश्चापि हि परेत्य यमदूता वज्रदंष्ट्राः श्वानः सप्तशतानि विंशतिश्च सरभसं खादन्ति······"।

अतः परं किं खेदास्पदं स्याद् यद् यस्य भारतस्य जीवनं धर्म एव बभूव तस्यैव भारतस्य शासनकारिणो धर्ममवजानन्ति। 'को नाधर्म' इति तु तैर्विचार्यते न। 'धर्मोऽस्त्युपद्रवाणामयनि'रिति निगद्य, हन्त, अधर्मं धर्मं मन्यमानास्ते धर्मं दलन्ति। धर्मदलनस्यैव खिदं कुफलं यदिदानीं क्वापि न नैतिकता, क्वापि न सत्यपरता, क्वापि न लोभे जुगुप्सा, क्वापि न कुकर्मसु घृणा च विलोक्यते। श्रीमद्भागवतं 'धर्मः क' इत्यत्र शास्ति—

धर्ममूलं हि भगवान् सर्ववेदमयो हरिः।
स्मृतं च तद् विदां राजन् येन चात्मा प्रसीदति ॥ १ ॥
सत्यं दया तपः शौचं तितिक्षेक्षा शमो दमः।
अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम् ॥ २ ॥
सन्तोषः समदृक् सेवा ग्राम्येहोपरमः शनैः।
नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम् ॥ ३ ॥
अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः।
तेष्वात्मदेवताबुद्धिः सुतरां नृषु पाण्डव ॥ ४ ॥
श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः।
सेवेज्यावनतिर्दास्यं सख्यमात्मसमर्पणम् ॥ ५ ॥
नृणामयं परो धर्मः सर्वेषां समुदाहृतः।
त्रिंशल्लक्षणवान् राजन् सर्वात्मा येन तुष्यति ॥ ६ ॥

महाकविकालिदास–भवभूति–बाणादयो याभ्यां द्वाभ्यां कविभ्यां काव्य–कवन–शिक्षां गृहीतवन्तो यद्‌रचितान् ग्रन्थानधीत्य ते काव्यं केन प्रकारेण रचनीयमित्येतद् विविदुस्तयोरेकतरः श्रीमद्भागवतप्रणेता व्यासो वर्तते। महर्षिव्यासस्यैवं भागवतं महनीयं काव्यरत्नमपि विद्यते। वस्तुवर्णनशैली तदीया काव्यमयी विभाति। तत्रत्यर्तुप्रभृतिप्रकृतिच्छटां विलोक्य कवयोऽपि स्वस्वकाव्ये तद्विधं वर्णनमकुर्वन्। भागवतस्य वर्षर्तुसुषमा दृश्यताम्—

> तडित्वन्तो महामेघाश्चण्डश्वसनवेपिताः।
> प्रीणनं जीवनं ह्यस्य मुमुचुः करुणा इव॥ १॥
> श्रुत्वा पर्जन्यनिनदं मण्डूका व्यसृजन् गिरः।
> तूष्णीं शयानाः प्राग् यद्वद् ब्राह्मणा नियमात्यये॥ २॥
> हरिता हरिभिः शष्पैरिन्द्रगोपैश्च लोहिताः।
> उच्छिलीन्ध्रकृतच्छाया नृणां श्रीरिव भूरभूत्॥ ३॥

अत्र शरच्छोभा निभाल्यताम्—

> शरदा नीरजोत्पत्त्या नीराणि प्रकृतिं ययुः।
> भ्रष्टानामिव चेतांसि पुनर्योगनिषेवया॥ १॥
> सर्वस्वं जलदा हित्वा विरेजुः शुभ्रवर्चसः।
> यथा त्यक्तैषणाः शान्ता मुनयो मुक्तकिल्बिषाः॥ २॥
> गिरयो मुमुचुस्तोयं क्वचिन्न मुमुचुः शिवम्।
> यथा ज्ञानामृतं काले ज्ञानिनो ददते न वा॥ ३॥

कविरत्नकलितभावान् विभावयन्तु मानवीयं मानसं च प्रेरयन्तां प्रेक्षावन्तः—
मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम्।
बलिमपि बलिमत्त्वावेष्टयद् ध्वाङ्क्षवद् यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः॥१॥
यदनुचरितलीलाकर्णपीयूषविप्रुट्सकृददनविधूतद्वन्द्वधर्मा विनष्टाः।
सपदि गृहकुटुम्बं दीनमुत्सृज्य दीना बहव इह विहङ्गा भिक्षुचर्यां चरन्ति॥ २॥
*अपि बत मधुपुर्यामार्यपुत्रोऽधुनाऽऽस्ते, स्मरति स पितृगेहान् सौम्य बन्धूंश्च गोपान्।*
*क्वचिदपि स कथा नः किङ्करीणां गृणीते, भुजमगुरुसुगन्धं मूर्ध्न्यधास्यत् कदा नु॥*

वैदुष्यस्य समुपार्जितानेकशास्त्रज्ञानस्य वा सौन्दर्यमस्ति पारमार्थिकतायामनुरागो द्रढीयान् भगवच्चरणेषु निर्व्याजप्रीतिर्वा। सुदाम्नो विप्रस्य ज्ञानिनामग्रेसरस्योपाख्यानं निधाय श्रीमद्भागवतं ज्ञानिनां जगदिदमेव बोधयति नूनम्।

"स एवं भार्यया विप्रो बहुशः प्रार्थितो मृदु ।
अयं हि परमो लाभ उत्तमश्लोकदर्शनम् ॥"

इत्येषा हि सुदाम्नो वाणी यत् सत्यमाख्यति तद्दिशि विपश्चितः स्वचेत आवर्जयेयुः। सुदामा महादारिद्र्येण दूयमान आसीत्, न तस्मिन्विषे भोक्तुमन्नमासीच्च चावरीतुं वपुर्वासः एव युक्तमासीत् परं सत्यपि तद्विधे आर्थिके सङ्कटे, न स जीवनम्प्रति तमभावप्रबलं तुच्छतमामपि हानिमवजगाम। जीवनस्य दारिद्र्यं वा दुर्भाग्यं स भगवच्चरणविमुखतामेव विवेद। परमार्थविश्वादेव तस्य श्रीकृष्णस्तदर्थं तत्प्रेम तत्सम्मानं हार्दिकं समर्पयन् यत्प्रेम यत्र सम्मानं विलोक्य सकलमपि राजभवनं परं विस्मयं प्रपेदे—

तं विलोक्याच्युतो दूरात् प्रियापर्यङ्कमास्थितः ।
सहसोत्थाय चाभ्येत्य दोर्भ्यां पर्यग्रहीन्मुदा ॥ १ ॥
सख्युः प्रियस्य विप्रर्षेरङ्गसङ्गातिनिर्वृतः ।
प्रीतो व्यमुञ्चदब्बिन्दून् नेत्राभ्यां पुष्करेक्षणः ॥ २ ॥
अथोपवेश्य पर्यङ्के स्वयं सख्युः समर्हणम् ।
उपहृत्यावनिज्यास्य पादौ पादावनेजनीः ॥ ३ ॥
अग्रहीच्छिरसा राजन् भगवाँल्लोकपावनः ।
व्यलिम्पद् दिव्यगन्धेन चन्दनागुरुकुङ्कुमैः ॥ ४ ॥

मन्ये ज्ञानं श्रीमद्भागवतरूपं निधाय भुवि विभाति। तद्धियोऽज्ञानमपसृज्य तत्र महाप्रकाशं विकिरति। तत् तथेहते येन बुद्धिर्महाकाराकारितैव जायते। तन्निदाघ्याधीत्य च हृदयग्रन्थिर्भिद्यते संशया अपि छिद्यन्ते। वेदस्तुतिद्वारेण तद्वेदमन्त्राणां रहस्यं स्फुटतयैवोन्मीलयति। वस्तुतः संसारस्य पुरस्तात् सत्यं निधातुमेव महर्षिर्व्यासः श्रीमद्भागवत-ज्योतिः प्रज्वालयामास। तज्ज्योतिषा द्रष्टव्यं द्रष्टुं शक्नोति पुमान्—

सन इदमुत्थितं सदिति चेन्ननु तर्कहतं
व्यभिचरति क्व च क्व च मृषा न तथोभययुक् ।
व्यवहृतये विकल्प इषितोऽन्धपरम्परया
भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान् ॥

सांख्ययोगयो रहस्यं गुह्यं च श्रीमद्भागवतं तेनोपदेशेनाभिव्यनक्ति यमुपदेशं हंसो भूत्वा भगवान् सनकादिभ्यः प्रददौ—

ईक्षेत विभ्रममिदं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम् ।
विज्ञानमेकमुरुधेव विभाति माया स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्पः ॥

श्रीमद्भागवतस्य पारायणेन भवति विदितं यन्मानवोद्धारो न तावत् सम्भवो यावत् तस्मिन् भागवती भक्तिर्नोत्पद्यते । न ज्ञानाच्छास्त्राणां न च यज्ञादिकर्मणामनुष्ठानादेव स प्राशस्त्यं प्राप्तुमर्हति । प्राशस्त्यप्रदाने चेत् क्षमता क्वाप्यस्ति तर्हि सा भगवद्भक्तावेव । वस्तुतो भगवद्भक्तिरेव ज्ञानमस्ति कर्म च सैव । रासपञ्चाध्याय्यां प्रेमभक्तिप्रतिनिधिव्रजाङ्गनानां विमलं प्रेम सङ्कीर्त्य महर्षिव्यास इदमेवामनति यत्प्रेम्णा भगवल्लाभः सम्भवः । धन्या हि संस्कृत-भाषा धन्यं हि संस्कृतसाहित्यं यत्र श्रीमद्भागवतकल्पतरुरुल्लसति ।

सत्यमेवोक्तम्—

श्रीमद्भागवतं पुराणममलं यद् वैष्णवानां प्रियं
यस्मिन् पारमहंस्यमेकममलं ज्ञानं परं गीयते ।
तत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं
तच्छृण्वन् विपठन् विचारणपरो भक्त्या विमुच्येन्नरः ॥



## महाभारतम्

अस्ति महाभारतं रामायणमिवास्मद्राष्ट्रिय इतिहासः। भारतीयायाः संस्कृते-र्भव्यं रूपमस्मिन् अतिद्वये ग्रन्थे चतुरस्रतया प्रफुल्लतां गतमवलोक्यते। नास्यस्य ग्रन्थस्योद्देश्यमेकमात्रं कौरवपाण्डवयोः सम्परायस्य वर्णनमपि तु भारतीय-धर्मस्य कार्त्स्न्येन सविस्तरं चित्रणमपि तदीयं प्रमुखं लक्ष्यं विद्यते। नैजजनुः-कालादेव ग्रन्थोऽयं महान्, जीवनस्य समस्यानां समाधाने मनोयोगपूर्वकं संलग्नमनाः सन् नयनपथमधिरोहति तस्मादस्माकं भारतीयानां कृते ग्रन्थराज एव धर्मशास्त्रस्यापि कार्यं साधु साधयति। कानिचन स्थलानि तु सत्यमेवं-विधानि यानि निशम्याधीत्य वा लोकः काव्यस्यानन्दमश्नुते। एवंविधानेकवैशिष्ट्य-विभूषितत्वाद्, वस्तुतोऽयं ग्रन्थो बहूपकरोति संसारम्। इतिहासत्वात् सः अस्मत्पुरतोऽस्मदीयानां पूर्वजानामितिवृत्तं प्रस्तवीति; ऐहिकामुष्मिकनिःश्रेयस-मार्गप्रदर्शनकारित्वात् सः अस्मत्समक्षे धर्मशास्त्रं भवत् समुपतिष्ठते, मनःप्रीति-कारिण्या पद्धत्या ललितया संस्कृतेः सभ्यतायाश्च धर्मार्थकाममोक्षप्रदर्शनपुरस्सरं मनोज्ञं रूपं च निदधात्यतः स काव्यायते च। तदेवं ग्रन्थोऽयं सुन्दर इतिहासो रुचिरं धर्मशास्त्रं रमणीयञ्च काव्यं वर्तते। ग्रन्थस्यास्य महत्ता कियतीत्येतस्मिन् विषयेऽभिदधाति श्लोकोऽयम्—

> धर्मे ह्यर्थे च कामे च मोक्षे च भरतर्षभ।
> यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्॥

रामायणरचनाकारः श्रीवाल्मीकिरिव महाभारतप्रणेता श्रीवेदव्यासोऽपि संस्कृतकवीनामुपजीव्यत्वेन मतः। के कवय एतदीयान्युपाख्यानान्यादाय काव्य-नाटक-चम्पू-कथाऽऽख्यायिकादिमयं विपुलं साहित्यं सृजन्तः कैर्न प्रेक्ष्यन्ते? न केवल-मस्मद्देशस्य कवयः स्वकीयाः कृतीः कर्तुमिमं महाग्रन्थमवलम्बन्ते स्म यव-सुमात्रादिसंज्ञकद्वीपानामपि कलाकाराः स्वस्वरचनानां प्रणयनाय ग्रन्थादेत-स्मान्महतीं सहायतामविन्दन्। न यावदस्य ग्रन्थराजस्याध्ययनं विधीयते तावन्न प्राक्तनराजनीतिविषयकं ज्ञानं जायते न च अर्थशास्त्रस्यापि मर्म

विदितं भवति तस्माद् ग्रन्थस्यास्य गरिमाणं संस्कृतवाङ्मयस्य न ग्रन्थान्तरमासादयितुं शक्नोति इति निश्चप्रचभावेन वक्तुं शक्यते ।

अविरामे परिश्रमे आत्मानं विनियोज्य महर्षिणा व्यासेन ग्रन्थोऽयं त्रिभिर्वर्षैः समाप्तिं नीत इत्येतत् तथ्यमादिपर्वस्थितः श्लोक एव प्रकाशयति—

"त्रिभिर्वर्षैः सदोत्थायी कृष्णद्वैपायनो मुनिः ।
महाभारतमाख्यानं कृतवानिदमुत्तमम् ॥"

अथ महाभारतं यद् रूपं बिभर्ति तत्र शतसहस्रसंख्याकाः श्लोकाः शोभन्ते । अत इदानीमिदं 'शतसाहस्री संहिता' इत्येतेन नाम्ना प्रथितम् । गुप्तकालवर्तिनि एकस्मिन् शिलालेखे ग्रन्थोऽयमुपरिनिर्दिष्टया संज्ञयैव स्मृतस्तस्माद् भवतीदमवगतं यदेष ग्रन्थो वर्तमानेऽहनि यं कायं श्रयति कायं तं गमितस्यास्य प्रायेण षोडशशतकसमाः संवृत्ताः । विपश्चितामत्रेदं मतं यदेतद्रूपं तदनेकशतकानन्तरं समुपलब्धुमशकत् । तदर्थमिदं क्रमांस्त्रीन् परिजग्राह । प्रथमे क्रमे ग्रन्थोऽयं 'जय' नाम्ना, द्वितीयस्मिन् क्रमे 'भारत' नाम्ना ततश्च तृतीये क्रमे 'महाभारतम्' इत्येतन्नाम्ना प्रसिद्धिमवाप ।

महाभारतस्य पाठ-सम्प्रदायः प्राधान्येन द्विविधो विलोक्यते । तयोरेकतर उत्तरभारते तदितरश्च दक्षिणभारते प्रचलति । उभयस्यापि श्लोकसंख्यायाम्, अध्यायानां क्रमे, आख्यानानां सन्निवेशे च भूयान् भेदः समवाप्यते ।

महाभारतस्यादिमं रूपं कीदृशमासीत् तत्र कियन्तः श्लोका आसन्; कानि कानि चाख्यानान्यवर्तन्त—इत्येतदर्थं चिरादन्वेषणकारिणां प्रयासो वरीवर्ति । पूनास्थिताद् 'भण्डारकर-ओरिएण्टलरिसर्चइन्स्टीट्यूटात्' यत्संस्करणमधुनाधिगम्यते तत्र ग्रन्थस्यास्य मौलिकं रूपमधिकतरायां मात्रायां दृग्गतं भवति ।

महाभारतस्य व्याख्यातॄणामपि संख्यास्ति विशाला । तेषु नीलकण्ठानन्तभट्टार्जुनमिश्ररामानुजविमलबोधशङ्कराचार्यश्रीनिवासप्रमुखा द्वाविंशतिः सुविदिताः । इमे हि व्याख्याकर्तारः प्रकाण्डपाण्डित्यशालिनां मनीषिणां धुरि कीर्तनीयाः सन्ति, सन्ति च तेऽध्यात्मविद्यापारावारीणाः । व्याख्या-टीकादिकर्तॄणामियती महती संख्या ग्रन्थस्यास्य विद्वत्प्रियतां लोकप्रियताञ्च ख्यापयति ।

महाभारतेऽस्ति प्रधानो रसः शान्तः । अङ्गभूतश्च तदीयोऽस्ति रसो वीरः । एतेन प्राधान्येनावबोधनवर्णनं न लेखकस्याभिमतमित्येतच्च विदितं जायते ।

भौतिकजीवनस्य निस्सारतां प्रदर्श्य मोक्षंप्रति प्राणभृतां मानसे उत्सुकतायाः सञ्चारणं वस्तुतस्तस्येष्टं विद्यते ।

धर्म एव भारतीयसंस्कृतेर्जीवनमित्येतदवगमयितुं महर्षिव्यासः सुन्दर-सुन्दरतराणि आख्यानानि ग्रन्थेऽस्मिन् निदधौ । अधर्मेण राष्ट्रस्य विनाशो धर्मेण च तस्योत्थानं भवतीति व्याहरन् विश्वशुभचिन्तको लेखकः 'को धर्मः' इत्यत्रोदीरयति—

सर्वेषां यः सुहृन्नित्यं सर्वेषां च हिते रतः ।
कर्मणा मनसा वाचा स धर्मं वेद जाजले ॥ १ ॥
अहिंसा सत्यमक्रोधस्तपो दानं दमो मतिः ।
अनसूयाप्यमात्सर्यमनीर्ष्या शीलमेव च ॥ २ ॥
एष धर्मः कुरुश्रेष्ठ कथितः परमेष्ठिना ।
अस्मिन् धर्मे स्थितो राजन् नरो भद्राणि पश्यति ॥ ३ ॥
धारणाद् धर्ममित्याहुर्धर्मेण विधृताः प्रजाः ।
यः स्याद् धारणसंयुक्तः स धर्म इति निश्चयः ॥ ४ ॥

इत्थं धर्मस्य स्वरूपं प्रतिपादयन् स तमेव जनं वस्तुतो धर्मात्मानं मन्यते यो हि वेदबोधिताचारं सम्यक् संरक्षति । 'आचारः परमो धर्मः' इति यदुक्तं तत्राह स—

'आचाराज्जाजले प्राज्ञः क्षिप्रं धर्ममवाप्नुयात् ।
एवं यः साधुभिर्दान्तश्चरेदद्रोहचेतसा ॥

महाभारतं धर्ममनुष्ठातुं मानवलोकमुपदिशत्येवम्—

न जातु कामान्न भयान्न लोभाद्
धर्मं त्यजेज्जीवितस्यापि हेतोः ।
धर्मो नित्यः सुखदुःखे त्वनित्ये
जीवो नित्यो हेतुरस्य त्वनित्यः ॥

अर्थकामाभ्यां धर्म एव ज्यायान् । तेनोभयोरपि सिद्धत्वात् । अत उक्तम्—

ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे ।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥

सर्वेषामपि वर्णानां, सर्वेषामप्याश्रमाणाम्, सम्प्रदायानामपि वर्गाणां, नृपाणां, स्त्रीणां पतिव्रतानां, पितृमातृप्रभृतीनां, सामान्यस्य समयस्य, विशेषसमय-स्थाना-

दीनाञ्च धर्मस्य निरूपकत्वात् प्रदर्शकत्वादुपदेशकत्वाच्च महाभारतं निःसंशयं भारतीयानां जनानां धर्मशास्त्रं वा पञ्चमो वेदो विद्यते।

जगत्यर्थस्य 'किं महत्त्वं' किञ्च तदीयमुपादेयत्वमित्येतत् सर्वेषां विदितम्। अर्थं विना संसारे मानवस्य जीवनं क्षणमपि न स्थातुं शक्नोति। अर्थमन्तरेण न किमप्यैहलौकिकं, नहि नहि पारलौकिकमपि, न सम्पन्नतां याति। अर्थविहीनो जनो जगति क्वापि प्रतिष्ठामवाप्तुं न प्रभवति; न चोन्नतिमपि कस्मिश्चपि क्षेत्रे कर्तुं पारयति। अर्थरहितस्य तु दशैव संसारे शोचनीयतां गच्छति। केनापि कविनोक्तं—

> तानीन्द्रियाण्यविकलानि मनस्तदेव
> स बुद्धिरप्रतिहता वचनं तदेव।
> अर्थोष्मणा विरहितः पुरुषः स एव
> ह्यन्यः क्षणेन भवतीति विचित्रमेतत्॥

कृषिर्वाणिज्यं, शिल्पं, सैन्यं, शिक्षा, स्वास्थ्यं, जनरक्षा, गोपालनमित्येवमादीनि सर्वविधान्यपि सुखानि च अर्थमपेक्षन्ते। वस्तुतोऽर्थस्य, यादृशी महत्त्वापेक्षा जगति, समाजे, कुटुम्बे, बन्धुतायाञ्च वर्तते न तादृश्यन्यस्य कस्यापि भवति। अर्थोऽयं केन प्रकारेण संग्राह्य उपार्जनीयो रक्षणीयो वर्धनीयश्चेत्येतेषु निखिलेष्वपि विषयेषु महाभारतं प्रकाशमुत्सृजति। तदुपदिशत्यर्थमधिकृत्यैवम्—

> कर्मभूमिरियं राजन्, इह वार्ता प्रशस्यते।
> कृषिवाणिज्यगोरक्षं शिल्पानि विविधानि च॥ १॥
> अर्थ इत्येव सर्वेषां कर्मणामव्यतिक्रमः।
> न ह्यृतेऽर्थेन वर्तेते धर्मकामाविति श्रुतिः॥ २॥
> अर्थस्यावयवावेतौ धर्मकामाविति श्रुतिः।
> अर्थसिद्ध्या विनिर्वृत्तावुभावेतौ भविष्यतः॥ ३॥
> आसीनश्च शयानश्च विचरन्नपि वा स्थितः।
> अर्थयोगं दृढं कुर्याद् योगैरुच्चावचैरपि॥ ४॥

न केवलं महाभारतमर्थशास्त्रीयमिति तत्कामशास्त्रीयमिति च। तत् कामस्यापि महत्तां तदीयाञ्च ग्राह्यतां साधु युक्तिपूर्वकं प्रतिष्ठापयति सर्वेषामपि पुरः। काममन्तरेण न कोऽपि प्राणी किमपि कर्तुं प्रवर्तते। कस्मिंश्चिदपि कार्ये धार्मिके सामाजिके आर्थिके आध्यात्मिकेऽपि वा न रुचिं न चोत्साहं विदधाति पुमां-

दीनाञ्च धर्मस्य निरूपकत्वात् प्रदर्शकत्वादुपदेशकत्वाच्च महाभारतं निःसंशयं भारतीयानां जनानां धर्मशास्त्रं वा पञ्चमो वेदो विद्यते ।

जगत्यर्थस्य र्कि महत्त्वं किञ्च तदीयमुपादेयत्वमित्येतत् सर्वेषां विदितम् । अर्थं विना संसारे मानवस्य जीवनं क्षणमपि न स्थातुं शक्नोति । अर्थमन्तरेण न किमप्यैहलौकिकं, नहि नहि पारलौकिकमपि, न सम्पन्नतां याति । अर्थविहीनो जनो जगति क्वापि प्रतिष्ठामवाप्तुं न प्रभवति; न चोन्नतिमपि कस्मिन्नपि क्षेत्रे कर्तुं पारयति । अर्थरहितस्य तु दशैव संसारे शोचनीयतां गच्छति । केनापि कविनोक्तं—

> तानीन्द्रियाण्यविकलानि मनस्तदेव
> स बुद्धिरप्रतिहता वचनं तदेव ।
> अर्थोष्मणा विरहितः पुरुषः स एव
> ह्यन्यः क्षणेन भवतीति विचित्रमेतत् ॥

कृषिर्वाणिज्यं, शिल्पं, सैन्यं, शिक्षा, स्वास्थ्यं, जनरक्षा, गोपालनमित्येवमादीनि सर्वविधान्यपि सुखानि च अर्थमपेक्षन्ते । वस्तुतोऽर्थस्य याद्दशी महत्त्वपेक्षा जगति, समाजे, कुटुम्बे, बन्धुतायाञ्च वर्तते न तादृश्यन्यस्य कस्यापि भवति । अर्थोऽयं केन प्रकारेण संग्राह्य उपार्जनीयो रक्षणीयो वर्धनीयश्चेत्येतेषु निखिलेष्वपि विषयेषु महाभारतं प्रकाशमुत्सृजति । तदुपदिशत्यर्थमधिकृत्यैवम्—

> कर्मभूमिरियं राजन्, इह वार्ता प्रशस्यते ।
> कृषिवाणिज्यगोरक्षं शिल्पानि विविधानि च ॥ १ ॥
> अर्थ इत्येव सर्वेषां कर्मणामव्यतिक्रमः ।
> न ऋतेऽर्थेन वर्तेते धर्मकामाविति श्रुतिः ॥ २ ॥
> अर्थस्यावयवावेतौ धर्मकामाविति श्रुतिः ।
> अर्थसिद्ध्या विनिर्वृत्तावुभावेतौ भविष्यतः ॥ ३ ॥
> आसीनश्च शयानश्च विचरन्नपि वा स्थितः ।
> अर्थयोगं दृढं कुर्याद् योगैरुच्चावचैरपि ॥ ४ ॥

न केवलं महाभारतमर्थशास्त्रीयति कामशास्त्रीयति च । तत् कामस्यापि महत्तां तदीयाञ्च ग्राह्यतां साधु युक्तिपूर्वकं प्रतिष्ठापयति सर्वेषामपि पुरः । काममन्तरेण न कोऽपि प्राणी किमपि कर्तुं प्रवर्तते । कस्मिंश्चिदपि कार्ये धार्मिके सामाजिके आर्थिके आध्यात्मिकेऽपि वा न रुचिं न चोत्साहं निदधाति पुमा-

स्तावत्, यावत्कामी कामेन प्रेर्यमाणो भवति । सम्पूर्णोऽयं लोकः कामाधीनः । कामस्य शासनं सर्वत्र सोत्कर्षं प्रस्फुरति । सर्वेऽपि प्राणिनस्तद्वशवर्तिनः सन्ति । सुरा असुरा नराः सर्वेऽपि कामस्य पुरो बद्धाञ्जलयो भूत्वा दासा इव सन्तिष्ठन्ते । कामादेव ते सर्वे जीवन्ति । जीवनमेव स सर्वेषाम् । कामस्य विचित्रमेव प्रभावं तेज ऐश्वर्यञ्च विशेषेण महाभारतं तमेवमुपवर्णयति—

नाकामः कामयत्यर्थं नाकामो धर्ममिच्छति ।
नाकामः कामयानोऽस्ति तस्मात् कामो विशिष्यते ॥ १ ॥
कामेन युक्ता ऋषयस्तपस्येव समाहिताः ।
पलाशफलमूलाशा वायुभक्षाः सुसंयताः ॥ २ ॥
वेदोपवेदेष्वपरे युक्ताः स्वाध्यायपारगाः ।
श्राद्धयज्ञक्रियायां च तथा दानप्रतिग्रहे ॥ ३ ॥
वणिजः कर्षका गोपाः कारवः शिल्पिनस्तथा ।
दैवकर्मकृतश्चैव युक्ताः कामेन कर्मसु ॥ ४ ॥
समुद्रं वा विशन्त्यन्ये नराः कामेन संयुताः ।
कामो हि विविधाकारः सर्वं कामेन सन्ततम् ॥ ५ ॥
नास्ति नासीन्नाभविष्यद् भूतं कामात्मकात् परम् ।
एतत् सारं महाराज धर्मार्थावत्र संश्रितौ ॥ ६ ॥
पुष्पतो मध्विव रसः काम आभ्यां तथा स्मृतः ।
कामो धर्मार्थयोर्योनिः कामश्चाथ तदात्मकः ॥ ७ ॥

मानवजीवनस्यास्य लक्ष्यमस्ति मोक्षः । यावदसौ मोक्षं नाप्नुते न तावत् स कदापि दुःखेभ्यो जराजन्म-मरणकष्टेभ्यश्च मुक्तो भवितुं शक्नोति । सुखरूपाणि यान्यपि सांसारिकसुखानीव भासन्ते तानि सत्यतस्त्वपि दुःखरूपाण्येव सन्ति । सांसारिकाणां सुखानामनित्यत्वात् तेषां वियोगोऽवश्यमेव सञ्जायते । न केवलं तेष्वनित्यत्वमेव, तेषु दोषा अपि सन्त्यनेके । अतः कदापि तानि स्पर्शादिभिस्तैर्दोषैः कदापि च संसर्गनित्यतापर्षेण निर्वाहयन्ति नः । शान्तिदः सागरोऽपि सततमेव तु तरङ्गः । संसारसागरेऽस्मिन् रागो च ग्राहाः परमदारुणमायादिकञ्च विस्तृतिः । तत्र पतितो धीरादिभ्यपमनः सर्वेश्च यत्नं चिन्तामेव ततो न्वर्देति । चिन्ता चितासमैव यद् यत्र चिन्ता तत्र सुखं कुतः ? अतएव सुखकाङ्क्ष-

दिखजना भवन्तिस्वच्छन्दचारिणस्ते आदेशपरा अपि न भवन्ति। स्वार्थभावाक्रान्ता भूत्वा ते तत् तदाचरन्ति यत् प्राणिनं नितान्तमेव व्यथयति। तस्मात् सांसारिकाणि सर्वाण्यपि सुखानि वस्तुतो दुःखान्येव। अत एव तु योगदर्शनमाह—

"परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः"।

स्वर्गलोकोऽपि वस्तुतो न सुखदः। सत्कर्मणामवसाने सोऽपि हस्ताद् भ्रंशते। इदमेव सर्वं विचार्य्य सुधियोऽभिलषन्ति मोक्षम्। इमं मोक्षमुद्दिश्य महाभारतं मानवान् पुनः पुनर्मधुरं शास्ति—[१]

मर्त्यलोकाद् विमुच्यन्ते विद्यासंयुक्तचेतसः।
ब्रह्मभूता विरजसस्ततो यान्ति परां गतिम्॥ १॥
भगवन्तमजं दिव्यं विष्णुमव्यक्तसंज्ञितम्।
भावेन यान्ति शुद्धा ये ज्ञानतृप्ता निराशिषः॥ २॥
ज्ञात्वाऽऽत्मस्थं हरिं चैव न निवर्तन्ति तेऽव्ययाः।
प्राप्य तत् परमं स्थानं मोदन्तेऽक्षरमव्ययम्॥ ३॥
श्रुतिप्रमाणागममङ्गलैश्च शेते जरामृत्युभयादभीतः।
क्षीणे च पुण्ये विगते च पापे ततो निमित्ते च फले विनष्टे॥ ४॥
अलेपमाकाशमलिङ्गमेवमास्थाय पश्यन्ति महत्यसक्ताः।
यथोर्णनाभिः परिवर्तमानस्तन्तुक्षये तिष्ठति पात्यमानः॥ ५॥
तथा विमुक्तः प्रजहाति दुःखं विध्वंसते लोष्ट इवाद्रिमृच्छन्।
द्रुमं यथा वाप्युदके पतन्तमुत्सृज्य पक्षी निपतत्यसक्तः॥
तथा ह्यसौ सुखदुःखे विहाय मुक्तः परार्ध्यां गतिमेत्यलिङ्गः॥ ६॥

महाभारतं कर्मण्यनुरज्यति। कर्म एव मनुष्यस्य पारमार्थिकं लक्षणमिति तदीयो द्रढीयान् विश्वासः। अत एव तन्मतमिदं यत् कर्मपराङ्मुखो मानवो मानवतातः स्रंसते। कर्मानाचरणात् दुःखानि प्राप्तानि भवन्ति, कर्मणि रतस्तु स्वः सुखेन जीवनं नेतुं पारयति। संसारेऽस्मिन् सततं कठोरतापूर्वकं कर्म कुर्वाणा एव जनाः हितं गच्छन्तः प्रायेण वीक्ष्यन्ते। चेत् कर्मकुशलः पुरुषः कर्म कुर्वन्नपि तत् फलं न लभते तदा न कोऽपि तं निन्दति। एतदेव मानवजगत् प्रति महाभारतमेवमुपदिशति—

प्राप्यते हि कृतं कर्म नाफलं दृश्यते भुवि।
अकृत्वा च पुनर्दुःखं कर्म पश्येन्महाफलम्॥ १॥

शक्नोति जीवितं दक्षो नालसः सुखमेधते ।
दृश्यन्ते जीवलोकेऽस्मिन् दक्षा प्रायो हितैषिण ॥ २ ॥
यदि दक्ष समारम्भात् कर्मणो नाश्नुते फलम् ।
नास्य वाच्य भवेत् किञ्चिल्लब्धव्यं वाधिगच्छति ।
हीन पुरुषकारेण कर्म सिद्ध न सिद्ध्यति ॥ ३ ॥

अस्तीय भव्या भारतभू कर्मभू । इह मानवै सन्तत सत्कर्मपरैर्भाव्यम् । येन कर्मणोन्नतिर्मानसिकी दैहिक्याध्यात्मिकी च जायते येन सर्वेऽपि सात मामाद्यन्ति, येन सदाचारो विकसति तदेव कर्म सत्कर्म इति कथ्यते । कर्मणि शक्तिर्महती सन्निहितास्ति । तत्स्वर्गमपवर्गञ्च प्रदातु क्षमते पर स्वर्गाधिगमनाय सत्कर्म कार्यते, अपवर्गार्थञ्च निष्कामकर्म । कर्म बन्धुरिव साहाय्यकृदस्ति पाणिरिव तत्सर्वदोपकरोति प्राणिनम् । स एव पुरुषो भुवि दीनो हीनो योऽस्ति कर्मरहितो वा पाणिरहित । व्यासो ब्रवीति यत् पाणिलाभ एव महाँल्लाभ —

अहो सिद्धार्थता तेषा येषा सन्तीह पाणय ।
अतीव स्पृहये तेषा येषा सन्तीह पाणय ॥
न पाणिलाभादधिको लाभ कश्चन विद्यते ।

वस्तुतो व्यास कर्मवादी आचार्योऽस्ति । तज्जीवनमेव तस्य कर्मवादिता घोषयति । श्रीमद्भागवत पुराण महाभारतप्रभृतयस्तदीया ग्रन्थास्तस्य कर्मण्य धौरेयस्य कर्मवादिताया समुज्ज्वलानि देदीप्यमानानि च प्रमाणानि सन्ति ।

यदि राजधर्मं जिज्ञासास्ति तर्हि महाभारत पठ्यताम् । तत्रैव राजधर्म-विषयोऽपि सविस्तर वर्णित । प्राचीनो राजधर्म कीदृश आसीदिति चेत्कश्चित् ज्ञातुमाकाङ्क्षति तदा तेन महाभारत पठनीयम् । महाभारतमन्तरेण न कोऽपि मानव कदापि पूर्णतया राजनीतिविचक्षणो भवितुमर्हतीति चेदुक्त स्यात् तदा नानुचित भवेत् । एतद् ग्रन्थावलोकनेन ज्ञात सञ्जायते यदस्मदीया पूर्वजा नून राजनीत्यामपि परा कृतविज्ञतां गता आसन् । केचिदिह श्लोका उद्ध्रियन्ते तेभ्यो ज्ञायते यत् स महान् दुरूहो विषय केन प्रकारेण साधिकार वर्णित —

मृदुर्हि राजा सतत लङ्घ्यो भवति सर्वश ।
तीक्ष्णाच्चोद्विजते लोकस्तस्मादुभयमाश्रय ॥ १ ॥
अवमन्यन्ति भर्तार मर्षार्दुपजीविन ।
स्वस्थाने च न तिष्ठन्ति लङ्घयन्ति च तद्वच ॥ २ ॥

व्यसनानि च सर्वाणि त्यजेथा भूरि दक्षिण ।
न चैव न प्रयुञ्जीत सङ्गं तु परिवर्जयेत् ॥ ३ ॥
नित्योद्युक्तेन वै राज्ञा भवितव्यं युधिष्ठिर ।
प्रशस्यते न राजा हि नारीवोद्यमवर्जितः ॥ ४ ॥
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य दण्डो भवति शाश्वतः ॥ ५ ॥
चारश्च प्रणिधिश्चैव काले दानममत्सरात् ।
युक्त्यादानं न चादानमयोगेन युधिष्ठिर ॥ ६ ॥
सतां संग्रहणं शौर्यं दाक्ष्यं सत्यं प्रजाहितम् ।
अनार्जवैरार्जवैश्च शत्रुपक्षस्य भेदनम् ॥ ७ ॥
आत्मा जेयः सदा राज्ञा ततो जेयाश्च शत्रवः ।
अजितात्मा नरपतिर्विजयेत कथं रिपून् ॥ ८ ॥
न्यसेत गुल्मान् दुर्गेषु सन्धौ च कुरुनन्दन ।
नगरोपवने चैव पुरोद्यानेषु चैव ह ॥ ९ ॥

राजनीतेर्नेतारं प्रति महाभारतं महनीयमादर्शमुपस्थापयति । धर्मस्य व्यवस्थायाः उत्तरदायित्वं राजानमेव प्रयाति । यदि राजा प्रजाः न पालयेत् तदा प्रजानामेव क्षयो न, वेदत्रय्या अपि अवस्थानं नितान्तं कठिनं स्यात् । राजधर्मे सति नष्टे समाजस्य राष्ट्रस्य च सर्वनाशो भवति । अस्ति राजा राष्ट्रपुरुषस्य मेरुदण्ड इत्यादिशब्दैर्महाभारतमुच्चै राजधर्मस्योत्कृष्टतरतां किञ्च राजनीतेरुपादेयतां प्रतिपादयति । अस्मद्भारतं कृषिप्रधानराष्ट्रमस्ति । अतः कथनं महाभारतस्येदं यद् यो नेता स्वयं कृषिकर्मा न, स राष्ट्रसमितिप्रवेशाधिकारी अपि न—

"न नः स समितिं गच्छेद् यश्च नो निर्वपेन्महीम्"

महाभारतं परमरमणीयं मनोऽभिराममुपवनमिव संस्कृतसाहित्यसंसारस्य । तत्रानन्तानि नानाविधानि च सुमनांसि विलोक्यन्ते । तानि स्वस्वालौकिकेन सौरभेण समेषामपि मनांसि सम्यक् परितर्पयन्ति । तानि न केवलं चेतः परिप्रीणयन्त्यपि मनसो मलिनतामपनयन्ति धियमेधयन्ति आत्मानञ्चोन्नमयन्ति ।

परिप्रीणयन्तु मनीषिण आत्मानं शील-सौरभेण—

शीलं प्रधानं पुरुषे तद् यस्येह प्रणश्यति ।
न तस्य जीवितेनार्थो न धनेन न बन्धुभिः ॥

जिघ्रन्तु तावत् सत्य सुमनसः पुण्यं परिमलम्—

सत्यमेकाक्षरं ब्रह्म सत्यमेकाक्षरं तपः ।
सत्यमेकाक्षरो यज्ञः सत्यमेकाक्षरं श्रुतम् ॥

अथ दम-कुसुम-गन्धमादाय प्रवहति गन्धवहोऽनेन नन्दयन्तु सुधियः आत्मानम्—

दमस्तेजो वर्धयति पवित्रं दम उच्यते ।
विपाप्मा निर्भयो दान्तः पुरुषो विन्दते महत् ॥

स्वकीय सर्वंजयिना गन्धं विकिरदिदं ज्ञान कुसुमं शोभतेतमां तेन सफली कुर्वन्तु स्व विचक्षणवराः—

न स्त्री न पुमांश्चैव तथैव न नपुंसकः ।
केवलं ज्ञानमात्रं सत् तस्मिन् सर्वं प्रतिष्ठितम् ॥

एषा हि सच्चरित्रता वल्लरी कियत् सौन्दर्येण शोभमाना सर्वमपि संसारं मोदयते—

वृत्तं यत्नेन संरक्षेद् वित्तमायाति याति च ।
अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥

चेद् गुणः फलमितो न गृहीतः तदा जीवनमेव मुधा, गृह्यतां तावत् मत्सरम्—

गुणेषु यत्नः क्रियतां किमाटोपैः प्रयोजनम् ।
विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥

महाभारतस्य रमणीयतायाः वर्णनं केन प्रकारेण कर्तुं शक्यमस्ति । वस्तुनो हि कमनीयताया उद्गमस्थली स्वयं भूत्वा विभाति । क्वचित् तत्र अहिंसायाः शोभा, क्वचिद् दयायाः आभा क्वचित् तपसः प्रभा, क्वचित् दानस्य मन्जुरता, क्वचिद् विद्यायाः मन्जुलता, क्वचिच्च त्यागस्य पेशलता, क्वचिच्च यमोपयमादीनां छटा समुद्रेण पूर्णेन च तारुण्येन परिस्फुरन्ती विलोक्यते । इदमत्र तपोवनं नगरं यत्र गीता गङ्गापि प्रवहमाना प्राणिमात्रस्य त्रिविधमपि तापं हरति ।

महाभारतं हि उज्ज्वलानां चरित्राणां महाकान्तारमिव भाति । तत्रोशीनर विश्वामित्र च्यवनसम्भृतिप्रभृतनृपतिमहर्षीणामन्येषाञ्च उत्तङ्कोपमन्यवारुण्यादीनामुपा

स्थानानि भूयिष्ठानि तत्र राजन्ते। तन्मनोभिरामा महाचित्रशालेव शोभते सामाजिक-धार्मिक-भक्तिविषयकचरित्र-चित्र-सहस्रैर्विभूष्यमाणत्वात्।

महाभारतस्य पात्राणि सन्ति स्वाभिमानशालीनि। प्रेमपरायणः पुरुषस्तत्र प्रेम्णि धर्मनिष्ठो धर्मे, ज्ञानवान् ज्ञाने पुरुषार्थी पुरुषार्थे, भाग्यवादी भाग्यवादितायां, कारुणिकश्च करुणायां तत्र सिंह इव गर्जन् श्रुतो भवति।

महाभारतं दर्पण इव शोभते। संसारवृत्तय सर्वा अपि तत्र प्रतिबिम्बिता भवन्त्यः प्राप्यन्ते। महर्षिणा व्यासेन लोकनयनोन्मीलनाय 'को मार्गः श्रयणीयः कश्च न' इत्येतदवबोधनाय संसार-स्वरूपस्यावगमनाय च एष महान् श्रेयस्करो ग्रन्थः सृष्टः।

अथ स्थितेन श्लोकेन केनापि कोविदेन ग्रन्थमेतमधिकृत्य या श्लाघना या च शुभकामना कृता तामेव श्लाघनां तामेव शुभकामनां विदधाना वयं महर्षिव्यासचरणश्रीनमस्करणसहितं संवृणुम उपक्रममिमम्—

पाराशर्यवचः सरोजममलं गीतार्थगन्धोत्कटं
नानाख्यानककेसरैर्हरिकथासम्बोधनाबोधितम्।
लोके सज्जनषट्पदैरहरहः पेपीयमानं मुदा
भूयाद् भारतपङ्कजं कलिमलप्रध्वंसि नः श्रेयसे॥



## श्रीमद्रामायणी गङ्गा पुनाति भुवनत्रयम्

श्रुतयो यत् परमतत्त्वं 'ब्रह्म' इत्येतेन नाम्ना गृणन्ति तदेव ब्रह्मतत्त्वं श्रीमद्-रामायणमपि 'राम' इत्येतयाभिधया गायति । वेदवेद्यः परमपुरुषोत्तमः श्रीरामो भूत्वा भुवि यदावततार वेद एव तदा श्रीमन्महर्षिवाल्मीकिवदनात् श्रीरामायण-रूपमादाय प्रादुर्बभूवेत्येषा हि मान्यता रामायणमधिकृत्य चिरादास्तिकानां संसारे प्रवर्त्तमानास्ति । तस्माद् रामायणं नाम काव्यं तदेव गौरवं गाहते यद् वेदः । यो ह्यस्य वेदसमपूज्यस्य काव्यस्य रचयिता सोऽपि महर्षिः प्राचेतसः 'आदिकविः' इत्येतयाभिख्यया लोकविश्रुतः । आदिकविरादर्शो विश्वस्य सर्वेषामपि कवीनां गुरुः । तस्याननेन्दुस्रवत्कवितासुधां निपीयैव कवयः काव्यरसेन रसिकानां चेतांसि सततं चिरन्तनादनेहसः परिप्रीणयितुं क्षमा अभूवन् इत्येतदवलोक्यैव वक्ष्यन् मनीषी तमादिकविमेवं स्तवीति……"पीत्वा यद्वदनेन्दु-मण्डलगलत्काव्यामृताब्धेः किमप्याकल्पं कविनूतनाम्बुदगणो वाङ्मिनी वर्षति ।"

महर्षेर्वाल्मीकेः काव्यमिदं या या विशिष्टताः संश्रयति तासां सर्वा विशिष्टता लक्षणकारैर्बुधवरैः काव्यस्य लक्षणत्वेनाभ्युपागामिषत । अतः सैव कृतिः काव्यं भवितुं शक्नोति यस्यां रामायणसमुल्लसिता विशिष्टता विभान्ति । रामायणं हि मानवीयजीवनस्य व्याख्यानमस्ति । तच्छ्रेयोमार्गप्रदर्शकं ज्योति-र्विधत्ते । तत् सांसारिकव्यवहारोपदेशकाचार्यो वर्तते । तत्सदाचारमर्मप्रदर्शनपरं किमप्यद्भुतमेव सरसं धर्मशास्त्रमास्ते । तन्मानवमानसगतभावानां प्रदर्शनकारिणी काव्यनिर्घनैव प्रदर्शनी विलसति । तद् भारतीयायाः संस्कृतेः समुज्ज्वलानां स्वाभाविकानाञ्च चारुतराणां चित्राणां विचित्रमेव किमपि विशालं चित्रभवनं विभाति । तत्र नीतिशास्त्रस्यार्थशास्त्रस्याध्यात्मशास्त्रस्य च चतुर्विधानामपि पुरुषार्थानाम् हृदयहारीणि सजीवानि अभिनयमानि विलोकितानि जायन्तेऽन-रतम् कौतुकप्रदर्शनं पेशलमेव प्रेक्षागृहमस्ति । तद्धि येन रुचिरेण प्रकारेण मानव-स्याभ्यन्तरीं प्रकृतिं विशिनष्टि तेनैव वस्तुरेखोपक्रमेण बाह्यप्रकृतेरप्युपादानमपि प्रसाधयति तस्मात् तत्प्रकृतमेवानुपमं विधातुः सृष्टेर्विलक्षणाह्लादैकमयी सृष्टिश्च-कास्ति । तदस्य मञ्जुरागस्य—

"पठ रामायणं व्यास काव्यबीजं सनातनम् ।
यत्र रामचरितं स्यात् तदहं तत्र शक्तिमान् ॥
रामायणं पाठितं मे प्रसन्नोऽस्मि कृतस्त्वया ।
करिष्यामि पुराणानि महाभारतमेव च ॥"

इत्येतौ श्लोकौ रामायणस्योच्चतमशिखरासीनं गरिमाणमुच्चैरुन्मीलयन्तौ श्रूयेते । श्रीस्कन्दपुराणञ्च तन्महिम्नि—

"रामायणं महाकाव्यं सर्ववेदेषु सम्मतम् ।
सर्वपापप्रशमनं दुष्टग्रहनिवारणम् ॥
धर्मार्थकाममोक्षाणां हेतुभूतं महाफलम् ।
अपूर्वं पुण्यफलदं शृणुध्वं सुसमाहिताः ॥
रामायणं नाम परं तु काव्यं
सुपुण्यदं वै शृणुत द्विजेन्द्राः ।
यस्मिञ्छ्रुते जन्मजरादिनाशो
भवत्यदोषः स नरोऽच्युतः स्यात् ॥"

इति यदाह तत्सर्वथैव सत्यम् । यतस्तत्स्वाध्यायेन मानवस्य मनः कुपथाद् दूरीभूय सत्पथे प्रवर्तते । मानवस्तदधीत्य संश्रुत्य वा पापे जुगुप्सते पुण्ये च धियं निबध्नाति ।

रामायणं वस्तुतो भारतस्य राष्ट्रियनिधिरस्ति । यस्मिन्नहनि भारते 'राम' इति न श्रुतः स्यात् तस्मिन् दिने भारतमपि मृतं भवेत । इमां शोचनीयामवस्थां गतमपि भारतं रामं स्मरद् रामं गायद् रामं भजद् यद् दृश्यते वा लभ्यते तत्र कारणं रामायणमेव । रामायणस्य प्रचारः प्रसारो वा देशे सर्वत्र वर्तते तस्य प्रभावो देशस्यास्य ग्रामे ग्रामे गृहे गृहे व्याप्तोऽस्ति विततोऽस्ति च । अशिक्षिता ग्रामिता अपि भारतीया नार्यः पर्वसूत्सवेषु व्रतेषु अन्येषु च धार्मिकेष्ववसरेषु रामकथां गायन्त्यो रामचरित्रपरकं गीतिमुच्चैर्गुञ्जयन्त्यः सहर्षं समवेता भवन्ती-त्यत्र यत्कारणं तदपि रामायणमेव । यतः साम्प्रतमपि येन भारतमिदं जीवति येन भारतीया सभ्यता श्वसिति येन च भारतीयाः संस्काराः प्राणवन्तः सन्ति तद् रामायणमेवादिकवेः । इदं वाल्मीकिरामायणमेवास्मद्-देशे कालिदासं भवभूतिं मुरारिं जयदेवं तुलसीदासं मैथिलीशरणं राधेश्याममजीजनत् ।

रामायणस्य समुपलभ्यमानाः शतशष्टीकाश्च तस्य लोकप्रियतां विद्वत्प्रिय-

ताश्चोद्घोषयन्ति । सुविदितासु तदीयासु टीकासु रामवर्मणस्तिलकाख्या, माहेश्वरतीर्थस्य तत्त्वदीपिकाभिधा, गोविन्दराजस्य शृङ्गारसंज्ञिका, रामानन्दतीर्थस्य रामायणकूटनामधेया, अहोबलस्य वाल्मीकिहृदयनाम्नी, अप्पयदीक्षितस्य रामायणतात्पर्यसंग्रहाह्वा वरदराजमैथिलभट्टस्य विवेकतिलकाभिधेया, विश्वनाथस्य वाल्मीकितात्पर्यतरणिनामिका च टीका किञ्च नागेशस्य रामीया व्याख्या' इत्येता विद्वदानन्दवर्धिन्य उत्तमाष्टीका मता भवन्ति ।

महर्षिर्वाल्मीकी रामायणं येन रूपेण येन विग्रहेण वा गुगुम्फ तदीयं तन्मूलं रूपं कालेन किमपि रूपान्तरं नीतं न सम्प्रति तद्रूपं हि आद्यमुपलभ्यते । विदुषां मतमेतद् यदिदानीं रूपं यदवाप्यते तद् ईशवीयद्वितीयशतकाभ्यर्णे जनुरुपलेभे । परं नेदं मतं सर्वसम्मतं बहूनां तु कथनमिदं यत् तद्रचना बुद्धात् प्रागेव सञ्जाता । तत्र बौद्धधर्मदिशि सङ्केतोऽपि न संलक्ष्यते; तत्र बहव आर्षाः प्रयोगाः प्राप्यन्ते तत्पाणिनिभासकौटिल्यपतञ्जलिप्रभृतयोऽपि स्मरन्ति विदन्ति च, तस्मात् तस्य रचनाकालो न कदापि ईशवीयद्वितीयशतकाभ्यर्णवर्ती । तद्रचना तु अवश्यमेव ततश्चिरात् प्राक् जातेति प्रतीयतेऽतः साम्प्रतिकेऽपि समये रामायणं यद्रूपं बिभर्ति तस्यापि रूपस्योत्पन्नस्य प्रायेण पञ्चविंशतिशतकानि व्यतीतानि ।' दशरथजातकप्रभृतिकथा' अश्वघोषस्य कृतयः, विमलसूरेः पउमचरियकाव्यमन्ये चानेके बौद्धधर्मसम्बन्धिनो ग्रन्था रामायणीयं प्रभावं धारयन्ति तेनेदमेव सिद्ध्यति यद् रामायणस्याधुना यद्रूपं विलोक्यमानं भवति तदपि बुद्धोदयात् प्रागेव व्यवस्थिततां स्थिरताञ्च नीतमभूत् ।

अद्यत्वे रामायणस्य चत्वारि प्रामाणिकानि संस्करणान्युपलब्धानि भवन्ति । तानि चेमानि—औदीच्यं, गौडीयं, पश्चिमोत्तरीयं, दाक्षिणात्यञ्च । एषु संस्करणेषु पर्याप्तः पाठभेदः प्राप्यते । कतमच्च संस्करणं नितरां प्रामाणिकमित्येतत् निश्चयपूर्वकं वक्तुं न सुशकम् । ऐतिहासिकं समीक्षणं विधाय विद्वांस इमं निश्चयं यान्ति यद् रामायणे समये समयेऽनेकप्रक्षिप्तांशाः स्थानं लब्धवन्तः । याकोबीमहोदयस्य कथनमिदमपि वर्तते यद् रामायणं मूलतः काण्डपञ्चकमेवासीत् । न तत्रादौ बालकाण्डोत्तरकाण्डयोः सत्तासीत् । तत्काण्डद्वयन्तु पश्चात् कालेन तत्र समावेशमुपलेभे । भवतु नाम किमपि, इदं हि चतुर्विंशतिसहस्रश्लोकनिबद्धं रामायणं संस्कृतसाहित्यस्य श्रेष्ठेषु ग्रन्थेष्वस्ति । ग्रन्थस्यास्य नैजानुपमवैशिष्ट्यकारणात् न ग्रन्थान्तरमेनदीयां समतामधिगन्तुं प्रभवति ।

"पठ रामायणं व्यास काव्यबीजं सनातनम् ।
यत्र रामचरितं स्यात् तदहं तत्र शक्तिमान् ॥
रामायणं पाठितं मे प्रसन्नोऽस्मि कृतस्त्वया ।
करिष्यामि पुराणानि महाभारतमेव च ॥"

इत्येतौ श्लोकौ रामायणस्योत्तमशिखरासीनं गरिमाणमुच्चैरुन्मीलयन्तौ श्रूयेते । श्रीस्कन्दपुराणश्च तन्महिम्नि—

"रामायणं महाकाव्यं सर्ववेदेषु सम्मतम् ।
सर्वपापप्रशमनं दुष्टग्रहनिवारणम् ॥
धर्मार्थकाममोक्षाणां हेतुभूतं महाफलम् ।
अपूर्वं पुण्यफलदं शृणुध्वं सुसमाहिताः ॥
रामायणं नाम परं तु काव्यं
सुपुण्यदं वै शृणुत द्विजेन्द्राः ।
यस्मिञ्छ्रुते जन्मजरादिनाशो-
ऽभवत्यदोषः स नरोऽच्युतः स्यात् ॥"

इति यदाह तत्सर्वथैव सत्यम् । यतस्तत्स्वाध्यायेन मानवस्य मनः कुपथाद् दूरीभूयं सत्पथे प्रवर्तते । मानवस्तदधीत्य संश्रुत्य वा पापे जुगुप्सते पुण्ये च धियं निबध्नाति ।

रामायणं वस्तुतो भारतस्य प्राप्रियनिधिरस्ति । यस्मिन्नहनि भारते 'राम' इति न श्रुतः स्यात् तस्मिन् दिने भारतमपि मृतं भवेत् । इमां शोचनीयामवस्थां गतमपि भारतं रामं स्मरद् रामं गायद् रामं भजद् यद् दृश्यते वा लभ्यते तत्र कारणं रामायणमेव । रामायणस्य प्रचारो प्रसारो वा देशे सर्वत्र वर्तते तस्य प्रभावो देशस्यास्य ग्रामे ग्रामे गृहे गृहे व्याप्तोऽस्ति वितर्तोऽस्ति च । अशिक्षां गमिता अपि भारतीया नार्यः पर्वसूत्सवेषु मृतेषु अन्येषु च धार्मिकेष्ववसरेषु रामकथां गायन्त्यो रामचरित्रपरकं गीतिमुच्चैर्गृणन्त्यः सहर्षं समवेता भवन्ती-त्यत्र यत्कारणं तदपि रामायणमेव । अतः साम्प्रतमपि येन भारतमिदं जीवति येन भारतीया सभ्यता श्वसिति येन च भारतीयाः संस्काराः प्राणवन्तः सन्ति तद् रामायणमेवादिकवेः । इदं वाल्मीकिरामायणमेवास्मद्-देशे कालिदासं भवभूतिं मुरारिं जयदेवं तुलसीदासं मैथिलीशरणं राधेश्यामञ्चाजीजनत् ।

रामायणस्य समुपलभ्यमानाः शतशष्टीकाश्च तस्य लोकप्रियतां विद्वत्प्रिय-

शास्त्रोद्घोषयन्ति । सुविदितासु तदीयासु टीकासु रामवर्मणस्तिलकाख्या, माहे-श्वरतीर्थस्य तत्त्वदीपिकाभिधा, गोविन्दराजस्य शृङ्गारसंज्ञिका, रामानन्दतीर्थस्य रामायणकूटनामधेया, अहोबलस्य वाल्मीकिहृदयनाम्नी, अप्पयदीक्षितस्य रामायणतात्पर्यसंग्रहाख्या वरदराजमैथिलभट्टस्य विवेकतिलकाभिधेया, विश्वनाथस्य वाल्मीकितात्पर्यतरणिनामिका च टीका किञ्च नागेशस्य रामीया व्याख्या-इत्येता विद्वदानन्दवर्धिन्य उत्तमाष्टीका मता भवन्ति ।

महर्षिवाल्मीकी रामायणं येन रूपेण येन विग्रहेण वा गुगुम्फ तदीयं तन्मूलं रूपं कालेन किमपि रूपान्तरं नीतं न सम्प्रति तद्रूपं हि आद्यमुपलभ्यते । विदुषां मतमेतद् यदिदानीं रूपं यदवाप्यते तद् ईशवीयद्वितीयशतकाब्दपर्वे जनुरलेभे । परं नेदं मतं सर्वसम्मतं बहूनां तु कथनमिदं यत् तद्रचना बुद्धात् प्रागेव सञ्जाता । तत्र बौद्धधर्मदिशि सङ्केतोऽपि न संलक्ष्यते, तत्र बहव आर्षाः प्रयोगाः प्राप्यन्ते तत्पाणिनिभासकौटिल्यपतञ्जलिप्रभृतयोऽपि स्मरन्ति विदन्ति च, तस्मात् तस्य रचनाकालो न कदापि ईशवीयद्वितीयशतकाब्दपर्णवर्ती । तद्रचना तु अवश्यमेव ततश्चिरात् प्राक् जातेति प्रतीयतेऽतः साम्प्रतिकेऽपि समये रामायणं यद्रूपं बिभर्ति तस्यापि रूपस्योदयस्य प्रायेण पञ्चविंशतिशतानि व्यतीतानि ।' दशरथजातक-प्रभृतिरथा अश्वघोषस्य कृतय, विमलसूरेः पउमचरियनाम्नश्चान्ये चानेके बौद्ध-धर्मसम्बन्धिनो ग्रन्था रामायणीयं प्रभावं धारयन्ति तेनेदमेव सिद्ध्यति यद् रामायणस्याधुना यद्रूपं विलोक्यमानं भवति तदपि बुद्धोदयात् प्रागेव व्यवस्थि-तत्वं स्थिरताञ्च नीतमभूत् ।

अद्यत्वे रामायणस्य चत्वारि प्रामाणिकानि संस्करणान्युपलभ्यानि भवन्ति । तानि चेमानि—औदीच्यं, गौडीयं, पश्चिमोत्तरीयं, दाक्षिणात्यञ्च । एषु संस्करणेषु पर्याप्त पाठभेदा प्राप्यन्ते । एतत्स्व संस्करणं नितरां प्रामाणिकमित्येतद् निश्चय-पूर्वकं वक्तुं न युज्यते । ऐतिहासिकैः समीक्षणं विधाय विद्वांस इमं निष्कर्षं यान्ति यद् रामायणे समये समयेऽनेकप्रक्षिप्तांशाः स्थानं लब्धवन्तः । याकोबीमहोदयस्य कथनमिदमस्ति यत् रामायणं मूलतः काण्डपञ्चकमेवासीत् । न प्रथमो बालकाण्डोत्तरकाण्डयोः सत्तासीत् । सप्तकाण्डयुक्तं तु गच्छता कालेन तत्र समावे-शमुपगते । अस्तु नाम किमपि, इदं हि चतुर्विंशतिसहस्रश्लोकनिबद्धं रामायणं संस्कृतसाहित्यस्य श्रेष्ठेषु ग्रन्थेष्वस्ति । ग्रन्थस्यास्य नैकानुपमवैशिष्ट्यकारणात् स ग्रन्थान्तरमेतदीयं समवाप्तविभवं प्रभवति ।

राम... [illegible] ...विधविषयविभूषितं काव्यमस्ति। तत्र क्वचिद् दर्शनानामाभा, क्वचिद् विज्ञानस्य भा, क्वचिद् आयुर्वेदस्य द्युतिः, क्वचिन्मनोविज्ञानस्य च्छविः, क्वचिद् ज्योतिषः प्रभा, क्वचित् तन्त्रशास्त्रस्य त्विट्, क्वचिच्चान्याभ्यविषयाणां विभा समुद्दीप्यते।

"त्वं गतिः परमा देव सर्वेषां नः परन्तप। बाल० १५, २५
वधाय देवशत्रूणां नृणां लोके मनः कुरु॥
स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः। अयो० १, ७
अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः॥
सर्वांल्लोकान् सुसंहृत्य सभूतान् सचराचरान्। सु०, ५१, ३९
पुनरेव तथा स्रष्टुं शक्तो रामो महायशाः॥
एतत् तदुक्तमव्यक्तमक्षरं ब्रह्मसम्मितम्। लङ्का, ११९।१२
देवानां हृदयं सौम्य गुह्यं रामः परन्तपः॥
भवान् नारायणो देवश्चतुर्बाहुः सनातनः। उत्तर, ८, २६
राक्षसान् हन्तुमुत्पन्नो ह्यजय्यः प्रभुरव्ययः॥"

इत्यादिश्लोकैर्दार्शनिकतायाः,

"एवमुक्तः स रामेण महात्मा हरियूथपः। यु० ९१, २४
लक्ष्मणाय ददौ नस्तः सुषेणः परमौषधम्॥
स तस्य गन्धमाघ्राय विशल्यः समपद्यत। यु० ९१, २५
तदा निर्वेदनश्चैव संरूढव्रण एव च॥"

इत्यादिगिरायुर्वेदस्य,

"त्रिशङ्कुर्लोहिताङ्गश्च बृहस्पतिबुधावपि। अयो०, ४१, ११
दारुणाः सोममभ्येत्य ग्रहाः सर्वे व्यवस्थिताः॥
अवष्टब्धं च मे राम नक्षत्रं दारुणग्रहैः। अयो०, ४, १९
आवेदयन्ति दैवज्ञाः सूर्याङ्गारकराहुभिः॥"

इत्यादिभिर्ज्योतिःशास्त्रस्य,

"लोहितानि च वासांसि स्रुवं कार्ष्णायसं तथा।
स तत्राग्नि समास्तीर्य शरपत्रैः सतोमरैः॥
छागस्य कृष्णवर्णस्य गलं जग्राह जीवतः। (युद्ध०, ७३, २३–२६)

सदृशं समिद्धस्य विधूमस्य महार्चिषः ॥
बभूवुस्तानि लिङ्गानि विजयं यान्यदर्शयन् ॥"

इत्यादिभिस्तन्त्रशास्त्रस्य,

"कच्चिदात्मसमाः शूराः श्रुतवन्तो जितेन्द्रियाः । अयो०, १००, १५
कुलीनाश्चेङ्गितज्ञाश्च कृतास्ते तात, मन्त्रिणः ॥
मन्त्रो विजयमूलं हि राज्ञां भवति राघव । अयो०, १००, १६
सुसंवृतो मन्त्रिधुरैरमात्यैः शास्त्रकोविदैः ॥"

इत्यादिभि राजनीतिशास्त्रस्य,

"सोऽहं त्वामागतो द्रष्टुं प्रस्थितो विजनं वनम् । अयो० २६, २४
भरतस्य समीपे ते नाहं कथ्यः कदाचन ॥
ऋद्धियुक्ता हि पुरुषा न सहन्ते परस्तवम् । „ „ २५
तस्माद्य ते गुणा कथ्या भरतस्याग्रतो मम ॥"

इत्यादिभिश्च मनोविज्ञानस्य शोभा शोभमाना लोचनपथेऽवतरन्ति ।

अस्मिन् काव्ये एवं विधानि बहूनि स्थलानि विभ्राजन्ते यान्यस्माकं पुरतोऽर्थशास्त्रस्य सुन्दरतां प्रस्तुवन्ति । पुरातनं भारतं जनानामाध्यात्मिकमभ्युत्थानमेव प्रति न रुचिं विदधात्यपि तु तत् तेषामैहिकं श्रेयः–सुखम्–च प्रति नितान्तं प्रीतिं जग्राह तदुद्दिश्यानारतं स्वकीयं येन आचकर्ष । संसारस्य सुखमर्थमूलमास्ते । नार्थं विना कुत्रोऽपि जगति सुखम् । जीवनं हि अर्थमन्तरेण जगति पदमेकमपि न चलितुं क्षमते । पुत्र-कलत्रमित्रादयः सर्वेऽपि धनवति रज्यन्ति । अर्थादेव धर्म–कार्याणि सम्पद्यन्ते । मानवीयजीवनस्य विकासार्थं यानि साधनान्यपेक्ष्यन्ते तेष्वर्थसाधनं नैजं महत्त्वमुपादेयत्वञ्च विदधाति । रामायणस्य "अयोध्यायां तदा न कोऽप्येतादृगासीत् योऽल्पसंनिचयः स्यात् । तत्र सर्वेऽपि कुटुम्बिनः, धनिनः, प्रभुतभोगवन्तः, सुगन्धवन्तः, सद्यानाः, दैवतातिथिपूजकाः, सुवाससः, सुवेषाः, व्यवहारकुशलाः, सुपौत्रवन्तः, भवनप्रभृतिविविधप्रचुरपरिच्छदशालिन आसन्" इत्यादिकं वर्णनं स्पष्टमेव देशस्यार्थशास्त्रीयसमृद्धिं, महद्विभुत्वञ्चोद्घाटयति । अर्थवान् देशस्तदा भवति यदा तत्र वाणिज्यप्रमुखकोटिस्थितं स्यात्, बहुविधानां यन्त्राणां निर्माणं स्यात्, तत्र नानाविधशिल्प–कलाकुशलता प्रवृत्ता स्यात्, कृषिः पुष्कला स्यात्, गावो भूयिष्ठाः स्युः । प्राचीने भारते इमानि सर्वाण्यपि अर्थकराणि साधनानि अभवन् । रामायणस्य—

( क ) "स तं कैलासशृङ्गाभं प्रासादं रघुनन्दनः"-
( ख ) "स हिरण्यं च गाश्चैव रत्नानि विविधानि च",
( ग ) "सिक्तसम्मृष्टरथ्यो हि तथा च वनमालिनी"
( घ ) "नानापण्यसमृद्धेषु वणिजामापणेषु च"
( ङ ) "अलङ्कारविधिं सम्यक् कारयामास वेश्मनः"
( च ) "दीपवृक्षांस्तथा चक्रुरनुरथ्यासु सर्वशः"
( छ ) "वैहारिकाणां शिल्पानां विज्ञातार्थविभागवित्"
( ज ) "स्थापत्ये निष्ठितांश्चैव वृद्धान् परमधार्मिकान्"

इत्यादिकाः पङ्क्तयः प्राचीनस्य भारतस्यार्थनिष्ठामर्थशास्त्रनिष्णाततामर्थसमुन्नततां चोद्घोषयन्त्यः केन न श्रोत्रवता श्रूयन्ते ?

काव्यमेतदादितोऽन्तपर्यन्तं धर्ममाचरितुं धर्मं रक्षितुमुपदिशति । इह समस्तमपि जगत् पित्राज्ञापालनरूपधर्मस्य रक्षणार्थं रामं गहने विपिने घोरघोरतराण्यसह्यानि कष्टानि सहमानं, पत्यनुगमनरूपं धर्मं पातुं शिरीषादपि मृद्वीं मिथिलेशस्य तनयां महाराजस्य दशरथस्य स्नुषां सीतां दारुणदुःखप्रदे कानने कण्टकाकीर्णपथे चलन्तीं, ज्येष्ठभ्रातृसेवारूपं धर्मं गोपायितुं वनमधिवसन्तं रामं सेवमानं सुमित्रानन्दनं योगिनामप्यगम्यं सेवाधर्मं स्वीकुर्वाणं त्रिविधबलभाजं हनुमन्तं, रामस्य वनवासित्वात् सकलान्यपि राजसुखानि अवज्ञाय नन्दिग्रामे नितान्तकठोरं तपश्चरन्तं राज्यञ्च रामीयं समयगवन्तं भरतं, लोकस्याराधनरूपधर्मं त्रातुं प्राणेभ्योऽपि प्रियतरामुत्पत्तिपरिपूतां जानकीमपि मुञ्चन्तं राजानं दशरथनन्दनं रामं समीक्षते ।

इदं हि रामायणं भृगु–नृग–निमि–पुरूरवो–ययाति–कल्माषपाद–मान्धातृ–लवणासुरागस्त्यवृत्रासुरैल–बुधप्रभृतीनां बहूनामुपाख्यानानि संधाय पुराणेतिहासयोरपि गुरुतरं कार्यं सम्पादयद् दृग्गोचरं भवति । इदं हि पाठकानां पुरोऽसंख्यातानि दृश्यानि मनःपावनकारीणि प्रस्तवीति । क्वाप्यत्र समुद्र–मन्थनस्य कौतूहलावहं दृश्यं, क्वापि गङ्गानयनार्थं तपश्चरतो भगीरथस्य भव्यं दर्शनं, क्वापि कार्तिकेयस्यावतारः, क्वापि कश्यपः क्वापि च रेणुकामाता क्वापि च त्रिशङ्कुविश्वामित्रादिकाः स्वां स्वां दिव्याभाभां विकिरन्तः सचेतसां चेतांसि भृशं रमयन्ति ।

समुद्राचारशिक्षायाः समवाप्त्यर्थं चेच्चेतः समुत्कण्ठते सदा रामायणस्य सविधे आयान्तु । सा तच्छिक्षां प्रदाय करिष्यति जीवनं ।

विभूषितश्च । जीवनस्य सफलतायाः कृते लोकाचार-व्यवहारविज्ञतापि अपेक्ष्यते । विना लोकाचारज्ञानं शास्त्रेष्वपि कुशलो जनो नाभीष्टमवाप्तुमर्हति न च लौकिकमभ्युत्थानमत एव तु पञ्चतन्त्रादिनीतिग्रन्थाः "अपि शास्त्रेषु कुशला लोकाचारविवर्जिता...."इत्यादिश्लोकमुपस्थाप्य मूर्खपण्डितानाञ्च दशां संश्राव्य जनान् सर्वान् आचार-व्यवहाराभिज्ञतालाभाय प्रेरयन्ति । "ततः प्रणम्य शिरसा तं विप्रं देववर्णिनम्", "भगवन् स्वागतं तेऽस्तु किं करोमि तवानघ"; "पितुः समीपं गच्छन्तं प्राञ्जलिः पृष्ठतोऽन्वगात्"; "कच्चिन्मया नापराद्धमज्ञानाद् येन मे पिता"; "अथ सीता समुत्पत्य वेपमाना च तं पतिम्" इत्यादिकाभिः सदाचार-शिक्षाप्रदायिकाभिः पङ्क्तिभिरलङ्क्रियमाणो दृश्यते ग्रन्थोऽयं सर्वथा ।

रामायणाध्ययनेन तदनुशीलनेन च देशस्यास्मदीयस्य पुरातनस्थानानां ज्ञानं जायते, तदीयानि प्राचीनानि नामानि ज्ञातानि भवन्ति, अस्मद्-देशस्य विस्तारः सीमा च विदिता भवति । भूगोलविद्यायां ये हि विपश्चितो रुचिं निदधति तैर्ग्रन्थमिममनुसन्धानात्मिकया दृष्ट्याधीत्य बहूनि पुरातनानि स्थानानि तत्तत्स्थानानां नामानि नद-पर्वतादिकाश्च, बहवः पदार्थाः प्रकाशं नीताः सन्ति । ग्रन्थस्यास्याध्ययनादेव कनिङ्घमस्य 'ऐन्शेण्टडिक्शनरी'; डे-महोदयस्य 'ज्याग्रफिकलडिक्शनरी'; 'एशियाटिकसोसाइटीजर्नलस्य' च एको महत्त्वपूर्णो लेखो जन्म ग्रहीतुमशक्नन् ।

> धर्मार्थकामाः खलु जीवलोके समीक्षिता धर्मफलोदयेषु ।
> ये तत्र सर्वे स्युरसंशयं मे भार्येव वश्याभिमता सपुत्रा ॥
> यस्मिंस्तु सर्वे स्युरसंनिविष्टा धर्मो यतः स्यात् तदुपक्रमेत ।
> द्वेष्यो भवत्यर्थपरो हि लोके कामात्मता खल्वपि न प्रशस्ता ॥
> गुरुश्च राजा च पिता च वृद्धः क्रोधात् प्रहर्षाद्यदि वापि कामात् ।
> यद् व्यादिशेत् कार्यमवेक्ष्य धर्मं कस्तं न कुर्यादनृशंसवृत्तिः ॥
> न तेन शक्नोमि पितुः प्रतिज्ञा-
> मिमां न कर्तुं सकलां यथावत् । ( अयो० २१, ५७–६० )
> स ह्यावयोस्तात गुरुर्नियोगे
> देव्याश्च भर्ता स गतिश्च धर्मः ॥"

इत्यादिभिः श्लोकैः रामायणं धर्मार्थकामानां स्वरूपं पितुर्भर्तुर्भूपस्य च महनीयत्वं कियत्या कौशलपूर्णया रीत्या प्रदर्शयतीति [illegible]

कारविषयिणी या चर्चा राम-लक्ष्मणयोः संवादेऽत्र प्रवृत्तास्ति साऽपि ध्यानपूर्वकं पठनीयास्ति।

"कः कस्य पुरुषो बन्धुः किमाप्यं कस्य केनचित्।
एको हि जायते जन्तुरेक एव विनश्यति॥
तस्मान्माता पिता चेति राम सज्जेत यो नरः।
उन्मत्त इव स ज्ञेयो नास्ति कश्चिद्धि कस्यचित्॥
न ते कश्चिद् दशरथस्त्वं च तस्य न कश्चन।" अयो० १०८ अ०

इत्यादिभिः श्लोकैर्जाबालिर्नास्तिकं यन्मतमुद्भावयामास तस्य प्रत्याख्यानं रामः समीचीनतया कृतवान्। स आह—

"निर्मर्यादस्तु पुरुषः पापाचारसमन्वितः।
मानं न लभते सत्सु भिन्नचारित्रदर्शनः॥
कुलीनमकुलीनं वा वीरं पुरुषमानिनम्।
चारित्रमेव व्याख्याति शुचिं वा यदि वाऽशुचिम्॥
सत्यमेवेश्वरो लोके सत्ये धर्मः सदाश्रितः।
सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम्॥
× × × सोऽहं पितुर्निदेशं तु किमर्थं नानुपालये।
सत्यप्रतिश्रवः सत्यं सत्येन समयीकृतम्॥"

रामायणमनिर्वेदं हि स्पृहयति। तदाह—

"अनिर्वेदः श्रियोमूलमनिर्वेदः परं सुखम्।
अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तकः (सु०, १२ स०)
करोति सफलं जन्तोः कर्म यच्च करोति सः॥"

जीवनं सर्वथैव रक्षणीयमित्यत्र तदाह—

"विनाशे बहवो दोषा जीवन् प्राप्नोति भद्रकम्" (सु० १३ स०)

दण्डमुद्दिश्य तदाह—

"अपराधिषु यो दण्डः पात्यते मानवेषु वै।
स दण्डो विधिवन्मुक्तः स्वर्गं नयति पार्थिवम्॥" (उत्तर० ७९ स०)

धनिययलाद् ब्रह्मबलं ज्याय इत्यत्र तदाह—

"ब्रह्मदण्डेन तच्छान्तमग्निर्वेग इवाम्भसा"

"धिग् बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम्। (बाल० ५७ स०)
एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे॥"

यथा रामायणग्रन्थो महान् धर्मग्रन्थो महान् राजनीतिग्रन्थो महान् इतिहासग्रन्थो महांश्च तत्तद्विषयप्रतिपादको ग्रन्थस्तथैव स महान् काव्यग्रन्थोऽपि विद्यते। तत्र शब्दार्थयोर्ललितः सन्निवेशः, गुणानां माधुर्यप्रसादादीनां मधुरसुगुम्फनं, किञ्च अलङ्काराणां समीचीनतया समुपस्थापनं कृतमीक्ष्यते। रसमन्तरेण तु काव्यस्याधानमेव न जायते तत्तु तदीय आत्मैव। सोऽपि च विभाव्यो रसस्तत्र सर्वत्रास्वाद्यमानो भवति। स्थाने स्थाने भव्यानां भावानां बन्धुरता स्वकीयं माधुर्यं वितन्वन्ती समवाप्यते। अत्र हि केचन श्लोकाः काव्यस्यास्य काव्यत्वं प्रदर्शयितुमुद्ध्रियन्ते—

"सा विद्रुमाशोकलताप्रताना वनस्थली शोकलताप्रताना।
जाता दशास्यप्रमदावनस्य कपेर्बलाद्धि प्रमदावनस्य॥" (सु० ४१, २०)

"ततः स मध्यंगतमंशुमन्तं ज्योत्स्नावितानं मुहुरुद्वमन्तम्।
ददर्श धीमान् भुवि भानुमन्तं गोष्ठे वृषं मत्तमिव भ्रमन्तम्॥" (सु० ५, १)

"लोकस्य पापानि विनाशयन्तं महोदधिं चापि समेधयन्तम्।
भूतानि सर्वाणि विराजयन्तं ददर्श शीतांशुमथाभियान्तम्॥" (सु० ५, २)

मानवो हि कामं भवतु कियान् अपि धीरो गभीरः कष्टसहिष्णुश्च पर विपदामनुविद्धा परम्परा तमपि धैर्यात् संमयति—

इतः सीतामपि पश्यन्तु—

"अनन्यदेवत्वमियं क्षमा च भूमौ च शय्या नियमश्च धर्मे।
पतिव्रतात्वं विफलं ममेदं कृतं कृतघ्नेऽपि च मानुषाणाम् ॥"
(सु० २८ सं०)

"मोघो हि धर्मश्चरितो ममायं तथैकपत्नीत्वमिदं निरर्थकम्।
या त्वां न पश्यामि कृशा विवर्णा हीना त्वया सङ्गमने निराशा ॥"

सम्प्रति प्रकृति-श्रियमपि तत्रत्यामीक्षन्ताम्—

"चक्रवाकयुता नित्यं चित्रप्रस्थवनान्तरा।
मातङ्ग-मृगयूथैश्च शोभते सलिलार्थिभिः ॥
वातविक्षिप्तविटपान् यथासन्नान् द्रुमानिमान्।
लताः समनुवर्तन्ते मत्ता इव वरस्त्रियः ॥" (किष्कि० १ स०)

"खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः।
शोभन्ते किञ्चिदालम्बाः शालयः कनकप्रभाः ॥" (अ० १६ स०)

"श्यामिश्रितं सर्जकदम्बपुष्पैर्नवं जलं पर्वतधातुताम्रम्।
मयूरकेकाभिरनुप्रयातं शैलापगाः शीघ्रतरं वहन्ति ॥" (कि० २८ स०)

"विद्युत्पताकाः सबलाकमालाः शैलेन्द्रकूटाकृतिसंनिकाशाः।
गर्जन्ति मेघाः समुदीर्णनादा मत्ता गजेन्द्रा इव संयुगस्थाः ॥"

"चञ्चच्चन्द्रकरस्पर्शहर्षोन्मीलिततारका।
अहो रागवती सन्ध्या जहाति स्वयमम्बरम् ॥" (कि० ३० स०)

संवादाः सूक्तयश्च काव्येऽस्मिन् पृथगेव स्वकीययाच्छटया विचित्रया सर्वेषां मनांसि चोरयन्ति नितराम्। आदिकविना तत्सन्निवेशोऽपि रमणीयतया विहितः। वस्तुतोऽस्य ग्रन्थरत्नस्य महिम्नो वर्णनं न कदापि सम्भवम्। यस्य काव्यस्य प्रणेता वाल्मीकिः, रामस्य च लोकपावनलीला यत्र गीतास्तस्य महत्त्वं केन गातुं पूर्णतया शक्येत। सत्यमेवोक्तमिदम्—

"वाल्मीकिगिरिसम्भूता रामाम्भोनिधिसंगता।
श्रीमद्रामायणी गङ्गा पुनाति भुवनत्रयम् ॥"

ध्यायश्च गौरवमतिशयमावहति। अङ्कगणितसम्बन्धी लीलावतीसंज्ञको ग्रन्थश्च परमोपयोगिषु ग्रन्थेषु गण्यते। भास्कराचार्यस्य सिद्धान्तशिरोमण्याख्यसन्दर्भे बीजगणितमतीव प्रकृष्टतां गाहते एवमेव अङ्कगणिततन्त्रे भास्कराचार्यब्रह्मगुप्तयोः स्वोत्कृष्टतायां सर्वत्र सुविदितम्। गणिततन्त्रस्य धन-ऋण-गुण-भागाकाराख्याश्चत्वारोऽपि विषयः वर्ग-धन-वर्गमूलघनमूलाभिधाश्च विधिविशेषा भास्कराचार्यब्रह्मगुप्तकृतेषु ग्रन्थेषु सविस्तरं प्रतिपादिताः सन्ति। शून्यविषये त्रैराशिकविषये विषयस्तत्राकलिताः सन्ति। बीजगणितमपि परां कोटिमाटीकते। उभावप्येताचार्यौ सरलसमीकरणसिद्धान्तं सविशदं विवृण्वानौ दृश्येते। यज्ञ्यामितिशास्त्रमत्र देशे यज्ञप्रक्रियासु बहुतरं साहाय्यं प्रददौ तदपि तत्र वैशद्येन निरूपितम्। अस्मद्विद्वत्प्रणीतेष्वेषु ज्योतिःशास्त्रविषयकेषु सोऽपि सिद्धान्तं निरूपितं नीतो यः पाइथोगोरससिद्धान्त इत्येतेन नाम्नाधुना प्रसिद्धः। त्रिकोणमितितन्त्रे च भारतीया विद्वांसोऽधिकारं निहितवन्तः। इत्थं हि ज्योतिःशास्त्रं संसारे स्वकीयाभिस्ताभिस्ताभिर्विशिष्टताभिरन्वितत्वात् परमोपादेयं परमहितकारकञ्च वर्तते।

अङ्कविद्याया इह देशे महत्युन्नतिः पुरासीत्। यूरोपीयः कश्चित् शिक्षकप्रवरो लिखति स्वपुस्तके यद् भारतीयानां त्रिकोणमितिशास्त्रमतिप्राचीनमस्ति। तदीये सूर्यसिद्धान्तग्रन्थे त्रिकोणमितिविषयिकाः याः क्रियाः प्रदत्ताः सन्ति ता यूनानीयक्रियाभ्यो गरीयस्यः। स एव तत्र लिखति यद् यूरोपीया विद्वांसो हि नास्यां विधायां षोडशशताब्दात् प्राक् अभिज्ञतामवापुः। स एव विद्वान् अध्यापको ब्रवीति यद्भारतीया एव रेखागणितशास्त्रस्याद्या विद्वांसः सन्ति। डीओफेण्टसाख्यस्य यूनानीयस्य पण्डितस्य जातस्य २२६० वर्षाणि गतानि। तद्रचितानि पुस्तकानि सन्ति तादृशानि यत् स पण्डितो भारतीयाचार्यप्रणीतग्रन्थानधीत्यैव गणितविषयिणीं विद्यां स्वदेशे समुत्थापयामास। इतिहासेषु सन्त्येवंविधा उल्लेखा बहवो येभ्यो यूनानारबदेशनिवासिनां विद्वद्वराणां गणितज्यौतिषविद्याध्ययननिमित्तेन भारतप्रत्यागमनं विदितं जायते। श्रूयते यत् अरबदेशीयः खालिफअल्मामनसरहारूनअलरसीदनामा सम्राट्, जातस्य यस्य १२०० वर्षाण्यतीतानि, महम्मद्बिनमूसाभिधेन विदुषा बीजगणितं गणितञ्च अरबीभाषायामनूदितं कारयामास।

"हिस्ट्रीऑफसंस्कृतलिट्रेचर" इत्येतन्नामके ग्रन्थे प्रो० मैक्समूलरः कथयति यत् अङ्कशास्त्रज्ञानार्जनं यूरोपीया भारतीयेभ्यः कृतवन्तस्तस्मात् ते तेषां सम्य-

धमर्णाः। अन्यैश्च बहुभिर्मेनियरविलियमप्रभृतिभिर्विद्वद्भिर्भारतीयानां पण्डितानां गणितशास्त्रपारंगततां प्रशंसद्भिरिदं स्पष्टमेवाभिहितं यत् प्रतीच्या देशा भारतीयेभ्यो गणितविद्यामगृह्णन्। याश्च सामुद्रिक–स्वरोदय–जीवस्वरविज्ञानविषयिकाश्च विद्याः भारतमतिप्राचीन एव काले साधु विवेद यूरोपीया विद्वांसोऽद्य तद्विद्यासम्बन्धिनो भारतीयविद्वत्प्रणीतान् ग्रन्थान् विलोक्य विस्मयं गच्छन्ति। किञ्च तेऽपि एतादृशीषु विद्यासु सम्प्रति रुचिं दर्शयन्तो दृश्यन्ते। अस्मद्देशस्य हि उक्तविषयकान् ग्रन्थानधीत्य प्रतीच्याः प्रभ्यः स्वस्वदेशभाषासु च तद्विषये पुस्तकानि प्रकाशयन्तोऽधुना प्राप्यन्ते। तानि पुस्तकानि प्रेक्ष्य तेषां विदुषां तच्छास्त्रज्ञानार्जनसम्बन्धिन्याः प्रगाढाया अभिरुचेः परिचयः प्राप्तो भवति।

एषा भरतभूर्ययोर्गणितज्यौतिषफलितज्यौतिषयोराविष्कारस्य महनीयं गुरुत्वं चकार तयोरुत्थानार्थमपि तं स्तुत्यं प्रयत्नमपि विदधौ येन न केवलं ते द्वे विद्ये अपि तु तदीयानि सर्वाण्यपि अङ्गोपाङ्गानि च उन्नतेः परां कोटिमासेदुः। आधुनिका वैज्ञानिकास्तु तेषां सर्वेषां विषयाणामवगमनेऽपि न सामर्थ्यं निदधाना वीक्ष्यन्ते। यद्यपि तैर्यन्त्राणां साहाय्यमधिगम्य गणितज्यौतिषे मनागुन्नतिः कृतास्ति परं फलितसम्बन्धिन्यां सूक्ष्मतायां तेषां गतिस्तत्त्वदृष्टेऽपि न जातास्ति। प्राक्तने काले ज्योतिःशास्त्रं न पूर्णामुन्नतिं गतमासीदिति केचन एकदेशदर्शिनो मनीषिणो वदन्ति। भारतीयशास्त्रानवगाहनहेतोरेव ते तद् ब्रुवन्ति। यदा हि ग्रह–नक्षत्र–राशिचक्र–नक्षत्रचक्र–अंश–विषुवरेखा–गोलकार्द्धोदीचीनादिराशिभेद–क्रान्ति–केन्द्रव्यासनिरूपण–सुमेरु–कुमेरुच्छायापथोपग्रह–कक्ष–धूमकेतूल्कापिण्ड–निर्घात–मध्याकर्षणशक्ति–सूर्य–महासूर्यादिभेदपृथिव्यावृत्तिग्रहणनिर्णयप्रभृतिसरलगम्भीरविषयास्तेषां सिद्धान्ताश्च प्राचां ग्रन्थेषु विलोकिता भवन्ति तदा केन प्रकारेणेदं वक्तुं सुशकं यत् प्राचीने काले भारतीया अस्मिन् ज्यौतिषशास्त्रे न पूर्णामुन्नतिं कृतवन्तः।

वेवरमहाभागो ज्योतिःशास्त्रस्य प्राचीनतामधिकृत्य ब्रूते—"शास्त्रमिदं भारतवर्षे, यदा ईसामसीहस्याजाररय २७८० वर्षाणि व्यतीतान्यभूवंस्तदानीमपि, प्रचलितमवाप्यत"।

काउण्टजोर्णस्जानीमहोदयः स्वकीये 'थिओगोनी ऑफ दी हिन्दूज'इत्येतन्नामधेये ग्रन्थे लिखति यत् कलियुगस्यारम्भादेव भारतवर्षे ज्योतिःशास्त्रस्यासीत् प्रसारः।

सरहण्टरमहोदय 'इण्डियनगजेटियर' मध्ये, "अनेकविषयेषु भारतीयानां ज्योतिःशास्त्रं यवन-प्रणीतात् ज्योतिःशास्त्रादुन्नततरमदृश्यत" इत्येतदुल्लिखति ।

श्रीकोलब्रुको नाम विद्वान् 'एल्फिन्स्टोन्स हिस्ट्री ऑफ इण्डिया'याम् "अयनगतिमुद्दिश्य पृथिव्याः स्वपरिधौ दैनिकावर्तनञ्चाधिकृत्य यद् गणितं भारतीयैः पाण्डित्याद्वितीयैस्तदन्यदेशीयकृतगणनाशास्त्राच्चद्भुततर"मिति वदति । एवमेव प्राध्यापको विलसनो धीमान् आमनति—"भारतीयैर्विद्वद्भिर्ज्योतिर्विद्यायामलौकिकी उन्नतिः कृता । द्वादशराशि-निर्धारणम्, ग्रहाणां गतिः, पृथिव्याः शून्ये आवर्तनम्, कोष्ठे भ्रमणमाह्निकम्, चन्द्रगतिः, पृथिवीचन्द्रयोर्दूरत्वनिर्णयः, चन्द्र-सूर्ययोः कालनिर्णयः अन्ये चैतंविधा विषया आर्यजातेर्ज्योतिर्विद्यायां पारदर्शितां प्रमाणयन्ति" ।

विष्णुपुराणे प्रोक्तम्—

"स्थालीस्थमग्निसंयोगादुद्रेकि सलिलं यथा ।
यथेन्दुवृद्धौ सलिलमम्भोधौ मुनिसत्तमाः ॥
न न्यूना नातिरिक्ताश्च वर्द्धन्त्यापो ह्रसन्ति च ।
उदयास्तमनेष्विन्दोः पक्षयोः शुक्लकृष्णयोः ॥
दशोत्तराणि पञ्चैव अङ्गुलानां शतानि वै ।
अपां वृद्धिक्षयौ दृष्टौ सामुद्रीणां महामुने ॥"

आर्यग्रन्थेष्वेवंविधानामुल्लेखानामवाप्तेः सिद्ध्यति स्पष्टमेव यद्भारतीया विपश्चितो ग्रहाकर्षणशक्तेः समुद्रजलवृद्धेश्च हेतुं सम्यग् विदन्ति स्म । महर्षय एव पुरा वार-तिथ्यादिकमाविष्कृत्य समयं शृङ्खलया नियच्छन्ति स्म । संवत्सराभ्यन्तरे हि तस्मिन् दिवसे दिनं नक्तञ्च समानं स्यादित्येतं नियमं प्राचीना भारतीया आचार्या यूरोपीयपण्डितटोलेमिविद्वद्वरस्य, यं हि यूरोपीया जातिः उपरिनिर्दिष्ट-नियमाविष्कर्तारं मन्यन्ते, जनुषश्चिरं प्रागेव निरूपयामासुः ।

"सूर्यसिद्धान्ते लेखोऽयं दृश्यते—

सर्वतः पर्वतारामग्रामचैत्यचयैश्चितः ।
कदम्बकेसरग्रन्थिकेसरः प्रसवैरिव ॥

मत्स्यकल्पेऽभिहितम्—

"कपित्थफलवद् विश्वं दक्षिणोत्तरयोः समम् ।"

पृथिवी नागरङ्गवद् गोलाकारेति वचो निशम्य प्रतीच्यानां प्रथीनां कस्य न धीमतो मानसे 'पृथिव्या गोलाकारत्वन्तु भारतीया विद्वांसश्चिरं प्रागेव प्रतिपादितवन्त' इति विचारः समुत्पद्येत। वर्तमाने हि छात्राणां पुरो भुवः स्वरूपावधारणप्रयोजनेन गोलकं प्रतिष्ठाप्यते परं यदा दारुमयं खगोलं भूगोलञ्च सहस्तम्य शिष्यान् अध्यापयन्तः प्राचीना विद्वांसो विलोक्यन्ते तदा को न विचारवान् विचक्षणः प्राचां पण्डितानामेतत्तत्त्वशिक्षण–विधिज्ञत्वं संस्मरेत्।

वर्तमानेऽनेहसि प्रचलिताया शिक्षणपद्धत्यां प्रधानोऽयं दोषो यत् सा शिक्षार्थिनं शिक्षायां पारदर्शिनं न कुरुते। स यद्यपि श्रमं विदधाति तत्र न पर्याप्तं पूर्णञ्च श्रमं सम्प्रदर्शयति। न तत्र देदीप्यमानां सफलतां परिगृह्णाति। अपरं च स स्वश्रमनिवारणाय न प्राच्यानां दर्शनानां न च प्रतीच्यानां दर्शनानामेवान्यतत्त्वावगाह्यध्ययनमनुतिष्ठति नोभयेषामपि गुणेषु विद्यमानं तारतम्यमेव ज्ञातुं प्रयतते, क्व सत्यमित्यत्र न श्राम्यति। एतस्माच्च कारणात् तदीयं ज्ञानं न शुद्धं न पूर्णं जायते। सत्यानुसन्धानविहीनज्ञानार्जनेन न कोऽपि लाभो भवति। नात्र संशयः।

आर्यभट्टो लिखति—'चला पृथ्वी स्थिरा भाति' अन्येषु च ग्रन्थेष्वेवमेवोल्लेखो लभ्यते—

> अपञ्जरः स्थिरो भूरेवावृत्यावृत्य प्रातिदैवसिकौ।
> उदयास्तमयौ सम्पादयति नक्षत्रग्रहाणाम्॥

पुनः पङ्क्तीः प्रेक्ष्य को न विश्वसीत यत् प्राञ्चो विपश्चितः पृथिव्या गतिमभिज्ञाय पूर्णं ज्ञानं निदधतिस्म। यदा च 'भूगोलो व्योम्नि तिष्ठति' इत्येतद् अथ च—

> नान्याधारं स्वशक्त्यैव वियति च नियतं तिष्ठतीहास्य पृष्ठे
> निष्ठं विश्वं च शश्वत् सदनुजमनुजादित्यदैत्यं समन्तात्।

इत्येवं भास्कराचार्यस्योक्तिः पठ्यते तदा कस्माच्च आर्याणां पृथिव्याः स्थितेः समीचीनमभिज्ञत्वं विदितं स्यात् को न तद्विषये तेषां निष्णातत्वे श्रद्दधीत? यदा च ब्रह्मपुराणे—

> पर्वकाले तु सम्प्राप्ते चन्द्रार्कौ छादयिष्यसि।
> भूमिच्छायागतश्चन्द्रं चन्द्रगोऽर्कं कदाचन॥

इत्येतत् पद्यं वीक्ष्यते; किञ्च यदा ज्योतिर्विदां ग्रन्थेषु—

छादको भास्करस्येन्दुरधःस्थो घनवद् भवेत् ।
भूच्छायां प्राङ्मुखश्चन्द्रो विशत्यर्थो भवेदसौ ॥

इत्येतद्विधानि वाक्यानि दृश्यन्ते तदा को न मतिमान् जनः प्राक्तनानां भारतीयानां ग्रहण-विज्ञानाभिज्ञतां विज्ञतां जानीयात् ? को न तेषां तत्तद्विषयकज्ञानस्य पारगामितायां विश्वासं निदधीत ?

तदेवं ज्योतिःशास्त्रस्योन्नतिः पुरा कीदृशी कियती चासीदित्येतद् यावदेवानिष्यते तावदेव धी दार्ढ्यमुपैति । सा तस्मिन् सम्बन्धे निश्चयमिमं प्रयाति यद् भारतं प्राचीनं गम्भीरे हि विज्ञानशास्त्रे परामेवोन्नतिमदीदृशत् ।

यूरोपाख्यमहाद्वीपस्य निवासिनो विद्वद्वेली-प्लेफेयर-कैशेनीप्रभृतयो मुक्तकण्ठतयोररीकुर्वन्तीदं यत् पञ्चसहस्रवर्षव्यापिनः कालात् प्राग्वर्तिनि कालेऽपि भारतीया ज्योतिःशास्त्रे विस्मयावहं कौशलमदर्शयन् । तेषां तत्कालप्रणीताः ग्रन्था इदानीमपि प्राप्यन्ते ते तेषां ज्योतिर्विदां हि उच्चैः प्रकटीकुर्वन्ति । तस्मात् भारतमेव ज्योतिःशास्त्रमादावाविश्चकारेति निश्चयतयाभिधातुं शक्यते ।

वर्तमानसमयस्य सुविदितो ज्योतिःशास्त्राध्यापकः कोलब्रुकः सप्रमाणं लिखति यत् अतितरां प्राचीने काले ज्यौतिषगणनायाः प्रधानसहायिकां पृथिव्या अयनांशगतिं किंवा क्रान्तिपातस्य वक्रगतिं भारतवर्षीयाः पण्डितसत्तमा एव प्रादुर्भावयाम्बभूवुः ।

प्राचीना आर्यजातिरेव 'शास्त्रस्यास्य आद्यगुरुरिति एकदेशदर्शिनो यवना अपि स्वीकुर्वन्ति । अरबीय"तारिकलहुकम", "गुलाशतुलहिमाव" इत्यादिग्रन्थेषु तेषामुक्तविचारसम्बन्धीनि प्रमाणानि च लभ्यन्ते । ते अरबीया विद्वांसः स्वग्रन्थेषु आर्यभट्टम् 'आज्यभर'इत्येतेन किञ्च भास्कराचार्यं 'वास्कर' इत्येतेन नाम्नोल्लिखन्तोऽधिगम्यन्ते । एतैर्विचारैः सिद्ध्यतीदं यत् एतादृशानां गम्भीराणां वैज्ञानिकानां तत्त्वानां वैज्ञानिकानां शास्त्राणां चादिगुरुर्भारतमेवासीत् । भारतस्येमां श्रेष्ठतां सर्वेऽपि इस्लामधर्मावलम्बिनः किञ्च 'मुसल्मान' इत्येतेन नाम्ना ख्याताः सर्वेऽपि यवनाः स्वीकुर्वन्ति । एतस्मात् कारणात् भारतस्यादिगुरुत्वं ज्योतिःशास्त्रेऽपि सर्वविश्वसम्मतमस्ति ।

गणितज्योतिषमन्तरेण फलितज्योतिषस्यास्तित्वं न सम्भवम् । अतः भारतस्य गणितशास्त्रोन्नतेः कारणं फलितशास्त्रमेव प्रतीयते । अद्यतनानां यूरोपीय-

संवादानां श्रवणेन बुद्धिमन्तोऽनायासेन ज्ञातुं शक्नुवन्ति यस्मात्सतं यूरोप-निवासिनोऽन्तरिक्षविज्ञाताः—मिस्टिऑरॉटोजीनः—स्वकीयां दृष्टिमाकृष्य फलित-ज्यौतिषम्प्रति कियतानुरागेण प्रवृत्ताः सन्ति । अथानन्तरस्य यूरोपस्यैषा फलितज्यौतिषशास्त्रगूढतैवास्मदीयमिमं फलित-गणितज्यौतिषविषयकं सिद्धान्तं पूर्णरूपेण दृढीकरोति । वस्तुतः पुरातनं भारतं ज्योतिर्विद्यायां यामुन्नतिमधिजगाम तामुन्नतिं प्रतीच्या देशाः सम्प्रत्यपि न गताः सन्ति तदर्थं तु शतं वर्षाणि अपेक्ष्यन्ते । अस्यां दिशायामद्यपर्यन्तं याम्युन्नतिरेभिर्दर्शितास्ति तां ते भारतीयज्योतिर्विज्ञानावलम्बनेनैव दर्शयितुं क्षमा अभूवन् ।

महाकर्षणशक्तेराविष्कारं न्यूटनोऽकरोदिति यत् ते ब्रुवन्ति तदपि न सत्यम् । भारतमेव प्रथमं तामाविश्चकार । श्रीभास्कराचार्यः प्राह तद्विषये—

"आकृष्टिशक्तिश्च मही तया यत् खस्थं गुरु स्वाभिमुखं स्वशक्त्या ।
आकृष्यते तत् पततीति भाति समे समन्तात् क्व पतत्वियं खे ॥"

आर्यभट्टश्च ब्रूते—

"आकृष्टशक्तिश्च मही यत् तया प्रक्षिप्यते तत् तया धार्यते" एवंस्थिते कथमेतत्स्वीकर्तुं शक्यं स्याद् यद् न्यूटनस्तदाविष्कर्तास्ति । अस्तु । किमधिकेन पल्लवितेन । ज्योतिषशास्त्रस्योद्गमभूर्भारतमेवास्ति । भारतमेवास्य गुरुर्यो हि सकलमपि विश्वंप्रति ज्योतिर्विद्यामपीपठत् । ज्योतिर्विद्या लोकस्य परमोपकारिणी विद्यास्ति सा परमोपादेया महत्त्वशालिनी चेत्यत्र न स्वल्पोऽपि सन्देहः ।

—:o:—

## शब्दानुशासनम्

आदिमकालादद्यतनसमयं यावद् भारते ये केऽपि विद्वांसः सञ्जाताः सन्ति च तेषां सर्वेषामपि मतमिदं यद् संसारे यावदपि ज्ञानं प्रावर्तत तावत् सर्वस्यापि आदिस्रोतोऽस्ति श्रुतिः। अत एव स्वायंभुवो मनुः 'सर्वज्ञानमयो हि सः' इत्यवकथत्। एतेन व्याकरणशास्त्रस्याप्यादिमूलं वेद इति निष्पन्नम्। वैदिकमन्त्रेषूपलभ्यमानाऽनन्तपदविषयिण्यो व्युत्पत्तयोऽप्युपर्यभिहितमभिधानं परिपुष्णन्ति—

१. यज्ञेन यज्ञमयजन्त देवाः। ऋग् १।१६४।५०, यजयाच··· इति नङ्।
२. ये सहांसि सहसा सहन्ते ,, ६।६६।९ सहधातोः असुन् उणादौ।
३. धान्यमसि धिनुहि। यजुः १।२०। धिनोतेर्धान्यम्, महाभा०।
४. केतपूः केतं नः पुनातु। यजु. ११।७। क्विप् च।
५. तीर्थैस्तरन्ति। अथर्व १८।४।७। पातृतुदिव···इति स्थक् उ०।

व्याकरणशास्त्रस्य प्रमाणभूत आचार्यः पतञ्जलिर्व्याकरणाध्ययनप्रयोजनानि वर्णयन् 'चत्वारि शृङ्गा', 'चत्वारि वाक्', 'उत त्वः', 'सक्तुमिव', 'सुदेवोऽसि'—इत्येतन्मन्त्रपञ्चकमुद्धरति स्म। व्याख्याच्च तदीयां व्याकरणशास्त्रपरकाञ्चकार। पतञ्जलेरपि प्राचीनतरो यास्कोऽपि 'चत्वारि वाक्' इत्येतस्य मन्त्रस्य व्याख्यां व्याकरणशास्त्रपरकामेव कुर्वाणोऽवाप्यते। व्याकरणमित्येतत्पदं यस्माद्धातोर्निष्पद्यते तस्यापि मूलार्थो यजुषि 'दृष्ट्वा रूपे व्याकरोत् सत्यानृते प्रजापतिः' इत्येतस्मिन् वाक्ये प्रयुक्तः प्राप्यते।

तदेवं हि व्याकरणस्य वेदप्रादुर्भूतता सिद्ध्यति सम्यक्। व्याकरणशास्त्रस्योत्पत्तिमधिकृत्य तु न निश्चयतया किमपि कथनं सम्भवम्। इदन्तु वक्तुं शक्यं यदुपलब्धनैघण्टुकपदपाठेभ्यः प्राक् व्याकरणं शास्त्रं पूर्णतां गतं बभूव। प्रकृतिप्रत्ययधातूपसर्गसमासस्वरपदविभागाश्च स्पष्टतया निर्धारितो जातो यदा तस्मादिदसौ गतस्यानेकसहस्राब्दी व्यतीताः। वाल्मीकिरामायणस्य रचनाकाले व्याकरणशास्त्रस्याध्ययनमध्यापनञ्च सुव्यवस्थिततया प्रचलितमासीदित्येतद्धि—

नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम् ।
बहु व्याहरतानेन न किञ्चिदपभाषितम् ॥

इत्यादिश्लोकेभ्यो विदितं जायते । भारतयुद्धकालवर्तिनि यास्क-निरुक्ते बहूनां व्याकरणाचार्याणामुल्लेखो दृश्यते । आचार्यः शाकटायनस्तु नैजं व्याकरणं यास्कादपि प्राक् लिलेख । पतञ्जलिमुनिर्लिखति—

"पुरा कल्प एतदासीत् संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते" । एतेनापि व्याकरणं प्रति लोकस्य प्रवृत्तिः चिरादासीदिति ज्ञायते ।

यदा हि कापि भाषा व्यवहारातीततां प्रयाति तदा तस्या भाषाया ज्ञानं व्याकरणमन्तरेण न प्रतिपत्तु शक्या भवति । व्याकरणमेव भाषायाः स्वरूपसंघटनं सर्वात्मना कुरुते । तस्माद् व्याकरणमेव भाषा-ज्ञान-लाभाय सर्वेषामपि अष्टानां शक्तिग्राहकाणां मध्ये मूर्धन्यं स्थानमध्यास्ते । व्याकरणस्य नितान्तमेवोपादेयतां श्रेष्ठताञ्च तत्र तत्रावलोक्यैव तन्महिम्नि बुधैरभिहितमिदम्—

यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम् ।
स्वजनः श्वजनो माभूत्सकलं शकलं सकृच्छकृत् ॥
शब्दशास्त्रमनधीत्य यः पुमान् वक्तुमिच्छति वचः सभान्तरे ।
बन्धुमिच्छति वने मदोत्कटं हस्तिनं कमलनालतन्तुना ॥

व्याकरणानि बहुभिर्वैयाकरणैर्महर्षिभिः प्रणीतानि । तेषु व्याकरणकर्तृषु विद्वत्तमेषु-इन्द्र', चन्द्र', काशकृत्स्नः, आपिशलिः शाकटायनः, पाणिनिः, अमर', जैनेन्द्रः इत्येतेऽष्टौ सन्ति सुप्रथिताः । न केवलमेतेषामष्टानामेव व्याकरणकर्तॄणां व्याकरणान्यपि तु अन्येषामपि आचार्याणां व्याकरणानि श्रूयन्ते यथा—कौमारं, सारस्वतं शाकलञ्च व्याकरणम् । व्याकरणसारान् अथ च व्याकरणान्यधिकृत्यैतच्छ्लोकद्वयं प्रथितमस्ति—

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः ।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः ॥
ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम् ।
सारस्वतं चापिशलं शाकलं पाणिनीयकम् ॥

साम्प्रतं सर्वत्र प्राधान्येन पाणिनीयं व्याकरणमेव प्रचलितं वर्तते । इदं हि पाणिनीयं व्याकरणं नितरामेव सुसमृद्धं सुमस्पष्टं सुललितं सर्वाङ्गीणं व्यापकञ्च विद्यते । श्रीसत्यव्रतसामश्रमिप्रभृतीनां विचारविचक्षणानां तु मतमिदम्—

पाणिनितः प्राचीनमेवंविधं सर्वतोमुखं व्याकरणं नासीदिति । इन्द्रचन्द्रादयस्तु आदिशाब्दिका एव बभूवुर्न च व्याकरणकर्तारः । शाब्दिकत्वं तु शब्दशास्त्रपारङ्गतत्वम्, शब्दशास्त्रप्रचारकत्वमित्यादिभिरनेकैः प्रकारैर्व्यवहर्तुं शक्यमस्ति । शब्दशास्त्रपदेन च न केवलं व्याकरणमपि तु कोशमीमांसादिकमपि गृह्यते । शब्दपदेन च पदं वाक्यञ्चोभयमपि संग्रहीतुं शक्यमतो वाक्यार्थनिर्णायिका मीमांसापि शब्दशास्त्रम् । ये चैतेऽष्टशाब्दिकाः कीर्तितास्तेषु विभिन्नप्रकारत्वमेव शाब्दिकत्वं प्रमाणान्तरैः सिद्ध्यति । ते हि शब्दकोशरूपव्याकरणनिर्मातार एव सिद्ध्यन्ति । इदं हि स्वीयं मतं प्रकाशयन्तः श्रीमन्तः सत्यव्रतसामश्रमिमहाशया मन्यन्ते यत् पाणिनेः पूर्वं कस्यापि व्याकरणस्य सत्ता नानुमातुं शक्या भवति । दृढतरप्रमाण-दर्शनाभावात् । अतः पाणिनिरेव प्रथमो व्याकरणकर्ता स्वीकार्यः ।

पाणिनिरेव प्रथमो व्याकरणकर्तेत्यत्र न सर्वेऽपि विद्वांसः श्रद्दधते । तेषां कथनमिदं यद्यपीदानीं पाणिनीयव्याकरणात् प्राक्तनं किमपि व्याकरणं सर्वाङ्गपूर्णं न प्राप्यत इति सत्यं किन्तु पाणिनेः पूर्वं किमपि व्याकरणं नासीदेवेति नाभ्युपगन्तुं शक्यम् । सन्ति तत्र कानिचन साक्षीणि तत्त्वानि, तैः सिद्धं भवति यत् पाणिनिमहर्षेः प्रागपि व्याकरणस्य सत्तासीदेव । तथाहि पाणिनिरेव 'आङि चापः' इति तृतीयाविभक्तेरेकवचनमाङ्शब्देनाह, न च तृतीयैकवचनं तेन 'आङ्' इति पठितं, किन्तु 'टा' इति । तत्र 'आङिति टासंज्ञा' प्राचाम् इत्येवं व्याख्यातारो ब्रुवते । तेनेदमेव सिद्ध्यति यत् प्राचीनेषु व्याकरणेषु तृतीयैकवचनं 'आङ्' इत्येवं श्रुतमासीत्, तत् स्वपरिभाषया ङित्त्वप्रयुक्तानि कर्माणि परिहर्तुं पाणिनिना 'टा' रूपतां प्रापितम् परं प्राक्तनव्याकरणसंस्कारवशात् तस्यापि स्मरणरक्षणार्थञ्च सूत्रम् 'आङ्' अपि निरदेशि तेन । तथैव 'औङ आपः' इत्यपि । न हि प्रथमाद्वितीययोर्द्विवचने 'औङ्' प्रत्ययः पाणिनिना स्वव्याकरणेऽभ्युपगतः, अपि तु 'औ', 'औट्' इति । प्राक्तनव्याकरणसंस्कारवशात्तु सूत्रे 'औङ' इत्यप्युच्चारितम् । अन्यच्च—'कर्मणि द्वितीया' 'कर्तृकरणयोस्तृतीया' इत्यादिषु द्वितीयातृतीयादिनाम्ना विभक्तयः पाणिनिना विहिताः, न तु द्वितीयातृतीयादिसंज्ञा स्वशास्त्रे कृता, तत्रापि प्राक्तनव्याकरणस्थसंज्ञाभिरेवात्र व्यवहार इति व्याचक्षते व्याख्यातारः । अन्यच्च 'तितुत्रतथसिसुसरकसेषु च' इति सूत्रे कृत्प्रत्ययेषु इण्निषेधः पाणिनिना पठितः । न चैतेषु बहवः प्रत्ययाः पाणिनिशास्त्रे कृत्प्रत्ययेषु पठ्यन्ते—तस्माद् व्याकरणान्तरस्था अत्रानूदिता इत्येव वक्तव्यं स्यात् । किञ्च स्तम्भु-स्तुम्भुप्रभृ-

तिधातवो न पाणिनीये धातुपाठे दृश्यन्ते, सूत्रेषु तु दृश्यन्ते। ते धातवश्च पूर्वव्याकरणसंस्कारेणैव पाणिनिना स्वसूत्रेषु निबद्धा इत्येव स्वीकर्तुमापतति। एवं 'चर्करीतं च' इत्यदादिगणे पाणिनिना, यङ्लुगन्तं तेन गृह्यते इति व्याख्यातार आहुः। न हि पाणिनीये व्याकरणे यङ्लुगन्तं चर्करीतमिति परिभाष्यते, प्राक्तनेष्वेव व्याकरणेषु कारितमितिणिजन्तं, चिकीर्षितमिति सन्नन्तं, चेक्रीतमिति यङन्तं, चर्करीतमिति यङ्लुगन्तं व्यवहृतमासीत्। तस्मात् प्राचीनव्याकरणसंस्कारेणैव पाणिनिना 'चर्करीतं च' इत्यदादौ सन्निवेशितम्। इदं दिङ्मात्रप्रदर्शितमपि स्पष्टमेव द्रढीयस्तया ज्ञापयति यत् पाणिनेः प्रागपि व्याकरणस्य सत्ताऽऽसीत्।

पाणिनिरष्टाध्याय्यां स्वकीयायां दश प्राचीनान् व्याकरणाचार्यान् स्मरति सादरम् अधोलिखितेषु सूत्रेषु—

| | |
|---|---|
| १. वा सुप्यापिशलेः, | २. तृषिमृषिकृशेः काश्यपस्य, |
| ३. ओतो गार्ग्यस्य, | ४. तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य, |
| ५. ई चाक्रवर्मणस्य, | ६. ऋतो भारद्वाजस्य, |
| ७. लङः शाकटायनस्य | ८. लोपः शाकल्यस्य, |
| ९. अवङ् स्फोटायनस्य, | १०. गिरेश्च सेनकस्य, |

मीमांसकयुधिष्ठिर- 'संस्कृतव्याकरणशास्त्रका इतिहास'इत्येतन्नामके स्वकीये ग्रन्थे पाणिनेः प्राग्वर्तिनस्त्रयोदश आचार्यानन्यानपि निर्दिशति, तेनोल्लेखेन सिद्धवतीदं यत् ततः प्राक् त्रयोविंशतिराचार्या उद्बभूवुः। बहूनि प्रमाणानि समुद्धृत्य आचार्यमीमांसको मन्यते यत् सञ्जातस्य पाणिनेः साम्प्रतिकात् कालात् ४८२१ वर्षाण्यतीतानि। परमाधुनिकाना प्रतीच्यानां विपश्चितां तु मान्यतेयं यत्पाणिनेर्जातस्य प्रायेण २७०० वर्षाणि व्यतीतानि।

पाणिनीयस्य व्याकरणस्य परममहत्त्वपूर्णमङ्गं कात्यायनस्य वार्तिकपाठोऽस्ति। इममन्तरेण वस्तुतः पाणिनीयं व्याकरणमपूर्णमेव प्रतिभाति। पतञ्जलिः कात्यायनीयं वार्तिकपाठमवलम्ब्यैव नैजं महाभाष्यमररचत्। पतञ्जलिप्रणीता एषा हि महाभाष्याख्या रचना पाणिनीयं व्याकरणं सरलया सरसया च रीत्या व्याचष्टे। सकलेऽपि संस्कृतवाङ्मये महाभाष्यं वस्तुतोऽद्वितीयो ग्रन्थः। सर्वेऽपि विद्वांसो मुक्तकण्ठतया प्रशंसन्ति ग्रन्थमिमम्।

शब्दानुशासनस्य ( व्याकरणस्य ) यानि प्रयोजनानि पतञ्जलिर्महाभाष्ये निजगाद तत्र चेद् मनागपि दृक्पातः क्रियेत तदा व्याकरणस्य महनीयता तदुपादेयता तन्महत्ता च सम्यगवबोद्धुं शक्या भवति। श्रुतिर्ब्रूते यद् वेदानां रक्षायै व्याकरणाध्ययनमपेक्ष्यते। यो जनो लोपागमवर्ण-विकारज्ञो भवति स एव वेदान् साधु रक्षितुमर्हति। तथाहि—वेदे 'जहार' इत्येतस्य क्रियापदस्य स्थाने 'जभार' इत्येतत् क्रियापदं प्रयुज्यते। व्याकरणानभिज्ञस्य दृष्ट्या 'जभार' इत्येतत्पदं न शुद्धम् स 'जहार' इत्येतदेव शुद्धं मत्वा 'जभार' इत्येतत्पदमनुच्चार्य 'जहार' इति प्रयोक्तुमुपक्रान्तो भविष्यति। फलस्त्वेतदीयमिदं स्याद् वेदोऽनेकपरिवर्तितपदवान्। अयं हि महानर्थो व्याकरणज्ञानशून्यतया निपातितो भवेत्। तस्माद् व्याकरणाध्ययनमतितरामपेक्ष्यते।

व्याकरणस्याध्ययनेन विभक्ति-विपरिणामस्य च बोधो जायते तस्माद् व्याकरणमवश्यमध्ययनीयमस्ति। न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्राः सन्ति निगदिताः। ते चावश्यं यज्ञगतेन यथायथं विपरिणमयितव्या भवन्ति। नावैयाकरणस्तान् यथायथं विपरिणमयितुं शक्नोति। तथाहि 'अग्नये त्वा जुष्टं निर्वपामि' इत्येतदस्ति वेदवाक्यम्। इदं हि वाक्यमग्निदेवताकं वर्तते। निर्वापकालेऽग्निर्देवतामुद्दिश्य मन्त्रोऽयं पठितो भवति परं यदा सूर्यदेवतां लक्ष्यीकृत्य निर्वापः कृतो भवति तदा 'सूर्याय त्वा जुष्टं निर्वपामि' इत्येतेन विपरिणामेन पठनीयो भवति मन्त्र एषः। इमं हि विपरिणामं वैयाकरण एव सम्यग् यथायथं कर्तुं पारयति।

ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च-इत्येतस्मादपि हेतोर्व्याकरणस्याध्ययनं परमापेक्षितं भवति। वेदस्य षडङ्गत्वात् षट्स्वङ्गेषु च व्याकरणस्य प्रधानत्वात्।

सुलभतया यथार्थज्ञानं व्याकरणं विना न भवितुमर्हति अतोऽपि व्याकरणस्य पठनमपेक्ष्यते। इदन्तु विदितमेव वर्तते यद् जिज्ञासुनावश्यमेव शब्दस्य कार्यं ज्ञानम्। शब्दस्य ज्ञानं व्याकरणं विहाय न केनाप्यन्येन सुलभेनोपायेन शक्यम्।

संशयराहित्यनिमित्तेनापि व्याकरणमध्येयमस्ति। याज्ञिकाः पठन्ति—"स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति तस्यां सन्देहोऽयम्—स्थूला चासौ पृषती च स्थूलपृषतीतिस्थनमभिप्रेतं किंवा स्थूलानि पृषन्ति यस्याः सा स्थूल-

शब्देन सह तादात्म्ये सति शब्दस्य परब्रह्मभूतेनार्थेन सहापि तादात्म्यं भवितुं शक्नोति इत्येतस्मादपि हेतोर्व्याकरणस्य ज्ञानं ग्राह्यमस्ति।

वाक्यगतस्य अर्थस्य यथायथबोधनिमित्तेन च व्याकरणं पठनीयम्। यावदर्थस्य समीचीनतया ज्ञानं न जायते तावत् न श्रुतेन वा लिखितेन वाक्येन किमपि कार्यं सिद्ध्यति। वस्तुतस्तदनवगतार्थं वाक्यन्तु तिरश्चां वच इव निरर्थकमेव। अतः सिद्धमिदं यदर्थावबोधनाय व्याकरणज्ञता काङ्क्ष्यते।

वचसः शुद्धत्वं व्याकरणाधीनमस्ति। व्याकरणं वस्तुतस्तितउरिव वर्तते। यथा तितउना वस्तु निर्मलीक्रियते, तद्द्वारेण तृण-कणादिका दूरीक्रियन्ते तथैव व्याकरण-साधनेन वैयाकरणो विचक्षणः अपशब्दान् अपसार्य स्वकीयं वाक्यं शुद्धं सुशब्दलसितं विधत्ते गृह्णाति च तस्य साहाय्येन यथार्थमर्थम्। सुशब्दप्रयोगेण यथार्थार्थावगमनेन च शब्दार्थयोर्मध्ये ऐक्यभावनाया निर्माणं जायते। तस्याः ऐक्यभावनायाश्च फलमिदं मधुरं समुत्पद्यते यत् स वैयाकरणः सुधीरनुभवतीदं यत् तस्य वस्तुभिः सर्वैः सार्धमैक्यमेव। न सः किञ्च वस्तु भिन्नभिन्नपदार्थस्तद्-द्वयमपि वस्तुतः एकमेवाभिन्नमेव। यत् स तदेव वस्तु, यद् वस्तु तदेव स–इत्यनेन ऐक्यानुभवेन भवति स महाज्ञानवान्। पुनश्च परमपदस्य लाभस्य साधनभूतं यद् व्याकरणशास्त्रमस्ति तस्याध्ययनमतोऽवश्यमेव कर्तव्यम्।

किञ्च प्रायश्चित्तीया मा भूम इत्येतदर्थं, कृत्तद्धितप्रत्ययानां ज्ञानार्थमथ च विभक्तिज्ञानमधिगम्य सुदेवीभवितुमपि व्याकरणमध्येयमवश्यम्।

आचार्यपतञ्जलिवर्णितव्याकरणाध्ययनप्रयोजनानि हि उपर्यभिहितान्येतानि व्याकरणस्य महत्तां तदीयामनन्यगामिनीञ्चोपादेयतामुच्चैरुद्घोषयन्ति।

सत्यं किञ्च शब्दशास्त्रमधिकृत्य यादृशं गभीरं व्यापकं विस्तृतं सूक्ष्मतमञ्च विमर्शनं संस्कृतव्याकरणं विदधदवाप्यते न तादृशं विचारं भुवि कस्या अपि भाषाया व्याकरणं कुर्वत् समवाप्यते। अतोऽपि एतादृशं यन्महद् व्याकरणं विद्यते यस्य साहित्यं संस्कृतव्याकरणस्य साहित्येन सदृशं स्यात्। न किमपि व्याकरणं तत्तुलामधिरोढुं प्रभवति। प्रथमन्तु यावन्ति व्याकरणानि संस्कृतभाषा विदधाति न तावन्ति व्याकरणानि काप्यन्या भाषा विदधाति। अस्याः संस्कृतभाषाया एषा हि व्याकरणबहुलता संस्कृतभाषायाः प्राचीनतमतां च साधयति। किञ्च संस्कृत–व्याकरणं समुद्दिश्य यावन्तो व्याख्याग्रन्था भाष्यग्रन्था आलोचनाप्रधा-नग्रन्था अन्यविधाश्च ग्रन्थाः प्रणीता अभूवन् न तावन्तस्तादृशा ग्रन्थाः कस्या

अपि अन्यस्या भाषाया विरचिता अजायन्त इत्येतत् सत्यं सर्वविदितम्। कस्या हि भाषायाः व्याकरणे अष्टाध्यायी-महाभाष्य-वार्तिकपाठ-वाक्यपदीय-परिभाषेन्दुशेखर-काशिका-मनोरमा-सिद्धान्तकौमुदी-बृहद्वैयाकरणभूषण-शब्दिवाद-शब्दकौस्तुभ-वैयाकरणभूषण-व्युत्पत्तिवाद-स्फोटवाद-स्फोटसिद्धिप्रभृतयो हि महायशो ग्रन्थाः शोभन्ते ? कस्या हि भाषाया व्याकरणे पाणिनि-पतञ्जलि-कात्यायन-कैयट-भर्तृहरि-नीलकण्ठ-नागेश-वररुचि-जयादित्य-पुरुषोत्तमदेवभट्टोजिदीक्षित-पण्डितराजजगन्नाथ-अप्पयदीक्षितप्रभृतयः संख्यातीताः संख्यावन्तः सञ्जाताः ? कस्या हि भाषायाः व्याकरणोपरि लिखितस्यैकस्यैव ग्रन्थस्य एतावन्तष्टीकाप्रटीकाग्रन्थाः प्राप्यन्ते यावन्तष्टीकाप्रटीकाग्रन्था अस्याः संस्कृतभाषाया अष्टाध्यायीनामकस्य ग्रन्थस्य ?

संस्कृतव्याकरणमत एव तु संसारस्य सर्वेऽपि विद्वांसो मुक्तकण्ठतया प्रशंसन्ति। प्रो० मोनियरविलियम्सो वदति—

संस्कृतव्याकरणं तस्य मानवमस्तिष्कस्य प्रतिभाया आश्चर्यावहं निदर्शनमस्ति यत् न कोऽपि देशो नेमं समयं यावदपि पुरो निधातुमशक्नत्।

प्रो० मैक्समूलरो गदति—भारतीयानां व्याकरणं संसारवर्तिनीनां सर्वासामपि जातीनां व्याकरणेभ्यो गरीयो महीयश्च।

कोलब्रुकः शंसति—व्याकरणस्य ते नियमा नितरां सतर्कतापूर्वकं कृता अभूवन्। शैली च तदीयातितरां प्रतिभापूर्णा। सर डब्लू० डब्लू० हण्टरोऽभिदधाति—संसारस्य व्याकरणेषु पाणिनीयं व्याकरणं श्रेष्ठं तिलकस्थानशोभि। तदीया वर्णशुद्धता भाषाया धात्वन्वयसिद्धान्तः प्रयोगविषयश्च अद्वितीया अपूर्वाश्च सन्ति'''वस्तुतः संस्कृतव्याकरणं मानवमस्तिष्कस्य परममहत्त्वपूर्ण आविष्कारः।

प्रो० टी० शेरबास्की कथयति—संस्कृतव्याकरणं मानवीयप्रतिभायाः सर्वोत्तमासु रचनास्वन्यतमा रचना राजते।

संस्कृतव्याकरणं स्वां भाषां स्वकौशलेन परामेव विचित्रतां परामेव रमणीयतां परामेव त्रिविधतां नयति। तत्कारणात् संस्कृतभाषा वीतुरागार इव तैस्तैरनन्तैर्विपुलैः परमाश्चर्यकरैर्विचित्रविचित्रैः सुन्दरसुन्दरैः पदार्थैरलंक्रियमाणा प्रदर्शनीव, परमभयावहैर्यादोभिर्भूर्मिभिः, संख्यातीतै रत्नैर्बहुलैस्तैस्तैः चन्द्र विद्रुमादिभिरगाधैश्चाम्भोभिः सुसमृद्धः सुशोभितो रत्नाकर इव, सञ्जातास्ति। तथाहि संस्कृतव्याकरणं सन्धिभिः संस्कृतभाषां नितरामेव मनोज्ञां विदधाति,

तस्मात्तैरेतां विचित्रैणैव प्रकारेण गुरुतां नयदपि लघुतां प्रापयति। तत्कारकैः स्वमायाया वाक्यानि नितरामेव नवनवतया पेशलानि-विदधत् समुपलब्धं भवति; तत् तेषां सहायतया वाक्यस्थान् भागान् अद्भुतैनेव विधिनाभिव्यनक्ति; तत् तान्यवलम्ब्यैकमेवार्थं विविधया रीत्या प्रकाशयितुमुपक्रमते। अत्रास्मिन् विषये त्रिचतुरुदाहरणानां समुपन्यासो न स्यादनुचितः—यथा लेखको वा 'कृष्णो देवताभ्यो गरीयान्'इत्येतद् वाक्यम् 'अतिदेवान् कृष्णः' इत्येतेन प्रकारेणापि वक्तुं लेखितुं वा स्वतन्त्र.। 'त्वद्वीर्यं मतिरस्तु मां संवदतीत्येतं भावं कीदृशेन भव्येन रूपेण प्रकटीकारयत्यहो संस्कृतव्याकरणं स्वकीय-कारकव्यवस्थासहायतया 'मर्दं मामनुते'इति। कपिला विद्युत् वातजनितप्रत्यूहानामागमनं सूचयतीत्येत-द्विषमर्थं कियत्परिमितपदैश्चारुतरविधिपूर्वकं संस्कृतव्याकरणं कारकविषयिण्या स्त्रीयया व्यवस्थया प्रकाशयितुमुद्युङ्क्ते 'वाताय कपिला विद्युत्' इति। यत्रातिदी-र्घ्याद्यत्पमाज्यं भुञ्जानेभ्यो दीयते तदुपहासार्थं संस्कृतव्याकरणं भाषायां वाक्यं कीदृशेन सौष्ठवेन सन्निवेशयति तदपि दृश्यताम्—

"सर्पिषोऽपि स्यात्" इति। वस्तुतः संस्कृतव्याकरणस्य तु प्रतिप्रकरणं नानाविधैर्वैचित्र्यैः संख्यातीताभी रमणीयताभीरम्यमस्ति तत्सौन्दर्यावलोकनात्तु कदापि न चित्तं तृप्यति। सन्धिषु 'सन्छम्भुः', 'सञ्च्छम्भु', 'सञ्च्शम्भु', सञ्शम्भुरित्यादीनि विचित्रतावहानि रूपाणि, सुबन्ते 'अमुमुयङ्', 'अदमुयङ्', 'अदम्रयङ्' इत्यादीनि सिद्ध 'गवाक्', 'गवाग्'; 'गोअक्'-'गोअग्'; 'गोऽक्'-'गोऽग्'; 'गवाङ् गोअङ्-गोऽङ्' इत्यादीनि परमकौतुककारीणि रूपाणि मजमा-नानि पद्यानि पर्यवेक्ष्य को न प्रधीः प्रसीदतितराम्। तिङ्प्रकरणं तु किमपि विस्मयकारि ललितमेव नन्दनकाननं तत्र भाति। तत्र विचित्रविचित्राः धातुतरवः शोभन्ते। तेषां तरूणां कुसुमानि स्वकीयेन दिव्येन सौरभेण स्वकीयेन नानावि-धेन रूपसौन्दर्येण स्वकीयया अनुपमयैवाभया सर्वेषामपि मनांसि नितरामेव परिप्रीणयन्ति। तत्र प्रायेण बीचितमिदं जायते यदेकमेव सुमगनेकानेकानि आश्चर्यसागरनिमग्नकारीणि संहननानि बिभर्ति। दृश्यतां क्षणम् एक-एव गुपूधातु-र्लिट्येकवचने प्रथमपुरुषे कियन्ति रूपाणि प्रदर्शयति—'गोपायाञ्चकार'; 'गोपाया-म्बभूव'; 'गोपायामास'; 'जुगोप'। सम्प्रति 'ऊर्णुञ्' धातोर्लुङि प्रथमपुरुष एक-वचन एव केवलं धीयताम्—'और्णुवीत्'; 'और्णावीत्'; 'और्णवीत्'; 'और्णविष्ट'; और्णुविष्ट इति। 'धूञ्' धातोः केवलं लटि प्रथमपुरुष एकवचनेऽधुना रूपश्रियं

विलोकयन्तु सुधियः—'धूनोति', 'धुनोति', 'धुनाति', 'धुवति', 'धूनयति'
'धवति'; 'धावयति'; 'धवते' इति । सर्वधात्वाम्भरं गणगतानां धातूनां
रूप-श्रिया' प्रदर्शनम् । संस्कृतव्याकरणतिङन्ताध्यायमनु वीक्ष्य ज्ञातं जायते यत्
संस्कृतभाषाया व्याकरणं किमस्ति । इदं व्याकरणमेव यदिमां भाषां पुरातन-
तमां एकाधिकसर्वदेशीयामपि सम्प्रत्यपि जीवयति । तिङन्ते हि एवंविधा भूयिष्ठा
धातवः सन्ति ये विचित्रतमानि रूपाणि गृहीत्वा समुपस्थिता भवन्ति । तेषां
भेदरूपं वैदग्ध्यमतिरूपवत्र अन्यानि च बहूनि वैचित्र्याणि समग्रमपि विश्वमतितरां
चिन्वन्ति । अधुना भूधातोरेव प्रक्रियासु केवलं लुङि तत्रापि केवलं प्रथमपुरुषे
तत्रापि एकमात्र एकवचने रूपमाधुरीमीक्षन्तां मेधाविनः—अबीभवत्, अनुभूवीत्,
अबोभूयिष्ट, अबोभूवी-अबोभोः, अभावि, व्यत्यभविष्टेति । इदानीं भूधातोः
कृत्प्रत्ययानां योगात् कियन्ति कीदृशानि च रूपाणि जायन्ते तानि विलोक्य
मोदन्तां मनीषिणः—भवितव्यम्, भवनीयम्, भव्यम्, भाव्यम्, भूतः, भूतवान्,
भवन्, भवन्ती, भविष्यन्, भविष्यती-भविष्यन्ती, भवितुम्, भूत्वा, सम्भूय,
भविता, भवित्री, भूष्णु, भविष्णुः, भावुकः, विभूः, विभुः, भूः, भूतिः, भावः,
भवः, भवनम्, भुवनम्, भूमिः, भूरिः, अद्भुत एवं हि सर्वेभ्योऽपि धातुभ्यो
यथासम्भवं कृत्सु रूपाणि समुद्भवन्ति । इदं हि संस्कृतभाषाया व्याकरणमेव यत्र
तितउ-शेवलश्वाहस्य, सहस्रगुप्रदेशस्य पञ्चगवधनस्य अकुतोभयस्य पञ्चरात्र-
एदस्य पुरोडाशस्य स्वयंकार्यस्य केशाकेशि जन्यस्य, रथपथस्य देशस्य वृद्धोक्षस्य
अपपस्य च जानपदस्य कर्णेजपस्य मौद्गल्यपुत्रस्य बृहस्पतेः किञ्चान्येषां
सहस्राणां पदार्थानां विचित्रविचित्राणां स्थितयश्चत्वारि समासप्रकरणे । व्याकर-
णस्य शास्त्रस्य यथान्यानि सर्वाणि प्रकरणानि महान्ति सन्ति तथैव तद्धितं
तद्धितप्रकरणमपि महत्त्वम् । तस्य गुणमपि अद्वितीयमेव । तस्यस्तुतिरनुपमैव
तस्य श्रद्धा यथार्थोऽपिव । को भुवि एतादृक् पुमान् यो हि तदीयां श्रियमालोक्य
न सन्तुष्टि न तुष्यति न विस्मयमुपैति । वीक्षन्तां मनाक् शर्कराभिर्निवृत्तनिर्मित-
स्मिन् अर्थे प्रयुक्तं शर्करेति पदं चातुरर्थिकप्रत्यय-लुपि–'शर्करा', अणि–'शार्करम्',
ठञि–शार्करिकम्, छे–शर्करीयम्, ठचि–'शर्करिकम्', 'वुञि–शार्करकम्–इत्येतानि
रूपाणि बिभर्ति । अपत्येऽर्थे कुत्सादात् यञि–कौत्स्यः, ढकञि–कौत्सेयकः, मे
कुत्रीव इत्येतानि रूपाणि सम्भवन्ति । शुक्रस्य भाव इत्येतस्मिन् अर्थे शुक्लपदात्
ष्यञि इति शौक्ल्यम् अण् च इमनिचि कृते शुक्लिमेति रूपं निष्पद्यते, अवारपार-

इत्येतस्माद् शर्मीयार्थे खप्रत्यये कृते कियन्ति रूपाणि अद्भुतानि वीक्षन्तां विपश्चित-अवारपारीण-अवारीण, पारीण-पारावारीण इति। अयमनयोरतिशयेन पटुरित्येतस्मिन् अर्थे तरपि पटुतर इति ईयसुनि पटीयान् इति च भवति। सर्वेष्वतिशयेन प्रिय इत्येतस्मिन् अर्थे प्रियशब्दादिष्ठनि प्रेष्ठ इत्येवंविधानि अनेकानेकचमत्कारपूर्णानि रूपाणि दृग्गोचराणि जायन्ते। स्त्रीप्रत्ययप्रकरणमपि स्वामलिङ्गयीं लक्ष्मीं प्रदर्श्य विज्ञानामपि सर्वेषां चेतांसि सर्वाधिरभावेन स्वां दिशमावर्जयति। अहह तत्र पाणिगृहीती पाणिगृहीता चन्द्रमुखी सुकेशी सुजघना क्षत्रियी कर्त्री करभोरू युवति गोपी कामुकी कामुकामन्याश्च गार्ग्यायणीन्द्राणी-मनायीमनाय्यप्रभृतिपुनीतावदातनिभाविभाविता पुरो निधाय व्याकरणमुपकरोति जगद् भृशम्। वस्तुतस्तद्व्याकरणमहिम्नो गानं केन विधिना कार्यं येन पुंसां गिरो धूयन्ते। नमो नमो व्याकरणाध्यायाय।

# साहित्यशास्त्रम्

महत्त्वम्—साहित्यशास्त्रं शास्त्रान्तराणीव परमोपादेयं शास्त्रम्। वैदिकानां लौकिकानाञ्च शास्त्राणां सर्वाङ्गीणतया ज्ञानं तावन्न भवितुमर्हति यावत् साहित्यशास्त्रस्य ज्ञानं न वर्तते। वेद-वेदाङ्गादिषु 'उत त्वः पश्यन् न ददर्श वाचं ...... जायेव पत्ये उशती सुवासा', 'द्वा सुपर्णा सयुजा सखाया' इत्यादिकानि मन्त्रसहस्राणि वाक्यानि एतादृशानि येषां भावान् न साहित्यशास्त्रानभिज्ञो ज्ञातुं प्रभवति अथ च यो अतः साहित्यशास्त्रे न निष्णातोऽस्ति स व्यञ्जनाप्रतिपाद्यमानान् अर्थान् अपि नावबोद्धुं शक्नोति। एवं स्थिते तस्य गतिरेतेषु स्थलेषु केन प्रकारेण स्याद् यानि व्यङ्ग्यार्थविलम्बितानि व्यञ्जकपदावलिपेशलानि च स्थलानि विद्यन्ते तस्मात् साहित्यशास्त्रस्यानिवार्यत्वेनाध्येतव्यतापद्यते। शास्त्रस्यास्यानेकैकीयविशिष्टताः विलोक्यैव राजशेखरः शास्त्रमिदं वेदाङ्गमिव मन्यते। स मूते "उपकारकत्वादलङ्कारः सप्तममङ्गमिति; ऋते च तत्स्वरूपपरिज्ञानादेवार्थानवगतिः।" सः साहित्यविद्यां स्वतन्त्रविद्यामेव न मन्यते अपि तु तत्त्रयीवार्तादण्डनीतिनामधेयानां चतसृणामपि विद्यानां निष्यन्दमवगच्छति। स्वकीयायां काव्यमीमांसायां लिखति सः—"पञ्चमी साहित्यविद्या" इति यायावरीयाः "सा हि चतसृणामपि विद्यानां निष्यन्दः"।

शब्दार्थकाव्यस्वरूपरसगुणरीतिदोषध्वनिभावालङ्कारादीनां विषयाणां निरूपणं प्रतिपादनं वा शास्त्रस्यास्य प्रयोजनम्। 'रसास्वादनं विना सद्यः परनिर्वृति'—इत्येतद्धि तज्जीवनस्य प्रमुखं स्वरूपम्। यः कोऽपि वेदादिशास्त्रीयं मर्म सर्वविधनयाधिजिगमिषति, किंवा आत्मकल्याणकामनया यद्वा यशोऽर्थसमवाप्तीच्छया अथवा लोक-व्यवहाराभिज्ञतावगमनवाञ्छया आहोस्वित् मन परितोषणाकाङ्क्षया वा अमङ्गलविनाशनलालसया काव्यं चिकीर्षति तत्र च शब्दार्थयोर्मध्ये सौन्दर्यमाधित्सति तस्य कर्तव्यमात्रमिदं यदसौ साहित्यशास्त्रं शरणं गच्छेत्।

शास्त्रमिदं स्वजन्मसमयादेव नितरां लोकप्रियतां गतं यस्मादेतत् काव्यालङ्कार-काव्यशास्त्र-क्रियाकल्प-साहित्यविद्यालङ्कारशास्त्रसाहित्यशास्त्रादिकनिपयनामभिः सम्मानं सानुरागञ्च समाहूतमभूत्।

उद्गमः—साहित्यशास्त्रस्योत्पत्तिमधिकृत्य काव्यमीमांसाकारो राजशेखरो यामाख्यायिकां समुपस्थापयति सा कथयति यत् श्रीकण्ठः परमेष्ठिवैकुण्ठादिभ्यश्चतुःषष्टये शिष्येभ्य उपदिदेश। एतेन कथनेन शास्त्रस्यास्याविर्भावो भगवतः शङ्करात् विदितो जायते। परमेतादृशीषु आख्यायिकासु न साम्प्रतिको वैज्ञानिकः कालः श्रद्धत्ते। काव्यसौन्दर्यस्याधायकानि यानि गुणरीतिध्वन्यलङ्कारादितत्त्वानि साहित्यशास्त्रं विविनक्ति तानि सर्वाण्यपि तत्त्वानि मूलतो वेदेषु प्राप्तानि भवन्ति तस्मात् साहित्यशास्त्रमपि स्वोत्पत्त्यर्थमुपादानानि सामग्रीं वा वेदेभ्य एव लेभे—इत्येतदेव सत्यमस्ति। वेदः स्वयमेव 'अमरकाव्यम्' इत्येतेन नाम्ना भुवनविदितः—"देवस्य पश्य काव्यं न ममार न जीर्यति"। एवं स्थिते साहित्यशास्त्रस्य जन्मदात्री श्रुतिमातैव सिद्ध्यति। इदन्त्ववधेयम् वेद-वेदाङ्गादिषु केवलं साहित्यशास्त्रस्य तत्त्वानि समुपलभ्यन्ते न च तानि शास्त्राणि प्रत्यक्षतयाऽप्रत्यक्षतया वा तस्य शास्त्रीयं निरूपणं कुर्वाणानि दृष्टानि जायन्ते। तदीयं शास्त्रीयं निरूपणन्तु भरतमुनि-समयात् प्रारब्धं भवति। भरतमुनेः समयमधिकृत्य विदुषां सन्ति भिन्नभिन्नानि मतानि। तस्य ( भरतस्य ) कालो विक्रमात् प्राक्शतकद्वयमारभ्य तदूर्ध्वमपि शतकद्वयं यावद् यो विद्यते तस्यान्तराले सुधीभिः प्रायेण विनिश्च्यते। अतः साहित्यशास्त्रस्य निर्माणं प्रारब्धमन्वभूत् भरतसमयात् परं तन्निर्माणस्यावसानं हि ईशवीयाष्टादशशतकेऽभवत्। तस्येतिहासः वर्षाणां सहस्रद्वयम् अभिव्याप्य वितनतः संलक्ष्यते। तस्मात् तद्विरचनाभेदाः तावान् महान् स्वीक्रियते सुधीभिः। विद्वांसस्तं चतुर्षु भागेषु विभजन्ते—

१. आदिमः कालः ( अज्ञातकालाद् भामहं यावत् )
२. रचनात्मकः ( भामहात् आनन्दवर्धनं यावत्—६०० समेशमाब्दात् ८०० समेशमाब्दपर्यन्तम् )
३. निर्णयात्मकः ( आनन्दवर्धनात् मम्मटपर्यन्तम्—८०० समाब्दात् १००० समाब्दपर्यन्तम् )
४. व्याख्यात्मकः ( मम्मटात् विश्वेश्वरपण्डितं यावत्—१००० [illegible] वत्समाब्दात् १७५० समाब्दपर्यन्तम् )

प्रारम्भकाले भरत-भामहावेव मुख्यावाचार्यौ प्राप्येते। भरतः स्वकीये नाट्यशास्त्रे रसं नाट्यस्य तत्त्वानि सुन्दरतया वर्णयन् दृग्गोचरो भवति। स तत्र [illegible] चतुरोऽलङ्कारान् दश गुणान् दश दोषांश्चोल्लिखन् प्राप्यते।

तदीयं नाट्यशास्त्रं वस्तुतो बीजभूतमेव । गच्छता कालेन विद्वांस आचार्यास्तद्गतान् विषयान् वितेनुः । भरतानन्तरं मेधाविरुद्रप्रभृतयः कतिपये विद्वांसोऽजायन्त परं न तेषां ग्रन्था उपलभ्यन्ते । भामह एव साहित्यशास्त्रस्यातः प्रथम आचार्यो मतः । काव्यालङ्काराभिधस्तदीयो ग्रन्थः साहित्यशास्त्रस्य मुख्यः प्रथमो वा ग्रन्थः स्मृतः । रचनात्मकः कालः साहित्यशास्त्रस्य महत्त्वमयः कालो गण्यते । अस्मिन् काले सञ्जाता रचनाः वस्तुतः साहित्यशास्त्रस्य गौरवशालिन्यो रचनाः सन्ति । एतस्मिन् काले साहित्यसंसारे अलङ्कार रीति-रस-ध्वनिनामकाश्चत्वारः सम्प्रदाया वीचिता अभूवन् । अलङ्कार-सम्प्रदाये भामहोद्भट-रुद्राटाः, रीतिसम्प्रदाये दण्डिवामनौ, रससम्प्रदाये लोल्लट-शङ्कुक-भट्टनायकप्रभृतय, ध्वनिसम्प्रदाये च आनन्दवर्धनः समजायन्त । निर्णयात्मकः कालोऽपि महीयान् कालः साहित्यजगति मतो भवति । एतस्मिन् काले बहवः साहित्यशास्त्रपारावारीणा उदपद्यन्त । ध्वन्यालोक-लोचनटीकाकारः अभिनवभारती-निर्माता आचार्यो ऽभिनवगुप्त, वक्रोक्तिजीवितकारः कुन्तकः, व्यक्तिविवेककारो महिमभट्टः कालस्यास्य प्रधाना आचार्याः सन्ति । रुद्रभट्ट-भोज-राज-धनिक-धनञ्जया अपि कालमिममधितस्थुः । आचार्यकुन्तको वक्रोक्तिं प्रतिपाद्य प्रामुख्येण, वक्रोक्तिसम्प्रदायं प्रतिष्ठापयामास, महिमभट्टः स्वरचनया ध्वनि-सिद्धान्तं निराचकार । व्याख्यात्मकः कालोऽपि नैजं महिमानं निदधाति । कालोऽयं दीर्घतमः । प्रायेण ७५० वर्षाण्यभिव्याप्य सन्तिष्ठते । अस्मिन् काले हेमचन्द्र-विश्वनाथ-जयदेवादिकाः साहित्यस्य सर्वाण्यङ्गानि समीचीनतया वर्णयामासुः प्रतिपादयामासुश्च । रुय्यकः अप्पयदीक्षितः अन्ये च कतिपये अलङ्कारेष्वेव रुचिं दर्शयामासुः । शारदातनय-शिङ्गभूपाल-भानुदत्तप्रभृतयः साहित्यिकसिद्धान्तविवेचने प्रशंसनीयमुद्योगं चक्रुः । रूपगोस्वामी दिशायामस्यां यं प्रयत्नं कृतवान्, सोऽपि श्लाघनीयः । राजशेखर-क्षेमेन्द्रामरचन्द्रादिका विद्वद्वरेण्याः कविशिक्षाविषये ग्रन्थान् अजग्रन्थन् ।

आचार्य-मम्मटस्य तु साहित्यसंसारे अवतारो वाग्देवताया अवतारत्वेन वर्ण्यते । १००० समे शतके प्रादुर्भूता प्रतिभेयमलौकिकी साहित्यशास्त्रसम्बन्धितः सिद्धान्तान् विषयांश्च समन्वयात्मिकायां शैल्यां निरूपितवती । आचार्य आनन्दवर्द्धनो यदि ध्वनिविरोधिनः सिद्धान्तान् प्रत्याख्याय ध्वनिसिद्धान्तस्थापनद्वारेण साहित्यशास्त्रस्य सत्तां शास्त्रजगति द्रढयामास, तदा

आचार्यमम्मटः काव्यप्रकाशं प्रणीय साहित्यिकानां समक्षे स्वरसात् प्राग्वर्तिन्यो सहस्राब्द्यां सञ्जातानामाचार्याणां कृतीः सम्यगवगाह्य तासां सारभागं निहितवान्, साहित्यिकान् विपर्यांश्च सर्वान् दोषनिरहितायां सर्वाङ्गसुन्दरायां भाषायां प्रस्तुतीकृतवान् किञ्च रसध्वनिगुणालङ्कारादीनां सर्वेषां महत्त्वमुपादेयत्वं चेति-हासञ्च यद् यदस्ति तत् तत् सकलं साधुतया दर्शितवान्।

इत्थं तत्तत्सम्प्रदायगता आचार्याः सर्वेऽपि साहित्यशास्त्रं प्रतिष्ठापयितुं तस्य शास्त्रत्वं साधयितुं तस्य सर्वाणि चाङ्गानि निष्पादयितुं निरूपयितुञ्च पूर्ण-मनोयोगपूर्वकं प्रयासं विदधुः। तेषां प्रयासादविरामात् यस्य साहित्यस्य बीजानि तत्त्वानि वा वेदादिषु विकीर्णान्यासंस्तानि शास्त्रीयं रूपमधिजग्मुः।

काव्यस्यात्मा—साहित्यशास्त्रिणामग्रे 'काव्यस्यात्मा कः'? इत्येष प्रश्न उपस्थित आसीत्। एतादृशं किं तत्त्वं वस्तुतः प्रधानमस्ति येन काव्यत्वस्याधानं जायते—इत्येतस्याः समस्यायाः समाधानार्थमनेके मनीषिणः प्रचक्रमिरे। केचन अलङ्कारमेव काव्यस्य जीवनं मन्यन्तेस्म तदितरे गुणान्, तदन्ये रीतिं, तदपरे च ध्वनिं काव्यस्य प्राणभूतत्वेन विचारयन्तिस्म। काव्यस्यात्मानमधिकृत्य सञ्जातायाः समीक्षाया विभिन्नता नवनवसम्प्रदायान् उत्पादयामास। एषां सम्प्रदायानां मध्ये ध्वनिसम्प्रदाय एव 'काव्यस्य आत्मा कः'? इत्येतस्य प्रश्नस्य युक्तियुक्तं बुद्धिग्राह्यं समुचितं युक्तं चोत्तरं दातुमक्षमत। एष सम्प्रदायः 'काव्यस्यात्मा ध्वनिः' इत्येतत् स्वकीयं मतं बलीयसीभिर्युक्तिभिर्गरीयोभिस्तर्कैः पुष्टतरैश्च प्रमाणैः प्रतिपाद्य तस्य पुष्टतां साधयामास। सः ध्वनिविरोधे समुपस्थापिता वैयाकरण-वेदान्ति-मीमांसक-नैयायिकानां युक्तीर्निराकृतवान्, किञ्च ये केऽपि साहित्यशास्त्रि-णोऽलङ्कारं वा गुणं वा रीतिं वा वक्रोक्तिं काव्यस्यात्मत्वेन किंवा प्राणत्वेनोपपा-दयामासुस्तेषामपि मतानि सर्वान् सर्वांश्च युक्तीश्चिच्छेद। ध्वनिमतं वस्तुतस्तु रसमतस्यैव विकसितं स्वरूपमस्ति। आचार्यभरतः प्राधान्येन रूपक-(दृश्य-काव्यम्)-मेव दृष्टौ निधाय तदीयां मीमांसाञ्चक्रे। आचार्यानन्दवर्धनादिका ध्वनिसम्प्रदायस्य आचार्याः किन्तु अभिनवगुप्तपादाः अधिकतरमुदारतया विचारं हि व्यापकदृष्ट्या कृतवन्तः। रसो न वाच्यो भवितुमर्हति, स व्यंग्य एव भूत्वा स्थातुं शक्यः—इमां विचारधारामुपसारयितुम् आनन्दवर्धनो ध्वन्यालोकमव-तारयामास। काव्ये व्यंग्यमेव प्रधानं तत्त्वमित्येतत् तदीयं मतमाचार्यमम्मटोऽ-भिनवगुप्तश्चान्वमन्येताम्। मम्मटस्तु व्यंग्यस्य विशिष्टतां साधयितुं यं प्रयत्नञ्च-

चार स तु न केवलं ध्वनिमतं सुदृढतया प्रतिष्ठापयामास अपि तु साहित्यशास्त्रमपि शास्त्राणां श्रेण्यामासयामास। तन्नामीनञ्च साहित्यं रसगङ्गाधरकारः पण्डितराजो जगन्नाथस्ततोऽभिषिषेच।

रसः—रससम्प्रदायस्य प्रथम आचार्यो भरतः स्वकीये नाट्यशास्त्रे षष्ठे सप्तमे चाध्याये रसस्य भावस्य च यन्निरूपणं प्रस्तुतश्चकार तत्साहित्यसंसारेऽपूर्वमेव वस्तु। भरतस्य 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः'—इत्येतद्रस-सूत्रे भिन्नभिन्नतया व्याख्यां कुर्वन्त आचार्याः प्राप्यन्ते। व्याख्याकारेष्वाचार्येषु चत्वारः सन्ति मुख्याः ते सन्ति इमे—(१) भट्टलोल्लटः, (२) शङ्कुकः, (३) भट्टनायकः (४) अभिनवगुप्तः।

भट्टलोल्लट उत्पत्तिवादी अस्ति। स रसं विभावादेः कार्यं मन्यते। तन्मतेन रसः अनुकार्य-(सीता-रामादौ) मधितिष्ठति। अनुकारित्वात् स नटे प्रतीयते। विभावस्तमुद्भावयति, अनुभाव उद्भावितं तं प्रत्याययति सञ्चारिभावश्च प्रतीतिपथं नीतं तमुपचिततां प्रापयति—इत्येतत् स रसं लक्ष्यीकृत्य स्वमतं प्रकटीकरोति। मीमांसाशास्त्रानुयायी आचार्योऽयम्।

अस्ति शङ्कुकः अनुमितिवादी। स रसं नानुकार्यनिष्ठं मन्यते। तद्विचारेण स नटगतो भवति। अभिनयनकौशलेन तांस्तान् भावानुभावान् प्रदर्शयन्तं नटं रामं मत्वा सामाजिको रसस्य स्थितिं नटेऽनुमिमीते। वासनावशीभूतत्वाच्च सः (सामाजिकः) अनुमीयमानं रसमास्वदते—इत्येतद् रसविषयकं मतं शङ्कुकस्यास्ति। अयमाचार्यो न्यायशास्त्रानुगामी।

भट्टनायकोऽस्ति भुक्तिवादी। तस्य रसविषये विचारोऽयम्—रसस्य निष्पत्तिर्न अनुकार्ये न च अनुकर्तरि भवति स तु सामाजिकेनानुभूयते। रसस्य अनुकार्यगततया वा अनुकर्तृगततया अङ्गीकारेण तु सम्बन्धः सामाजिकेन सह स्थापित एव न भवितुमर्हति। एवं स्थिते सामाजिकस्तस्मात् कं लाभं लभेत ? तदुत्पत्तिः सामाजिकगतेत्येतदपि स्वीकरणं नोचितम्। तदुत्पत्तेः सीतादिविभावजन्यत्वात्। सीतादिकाः रामम्प्रति विभावादिका भवितुं शक्नुवन्ति न च सामाजिकान् प्रति। साधारणीकरणव्यापारेण सीता-रामादिसम्बद्धव्यक्तित्वं दूरीभवति तत्र (सीतारामादौ) सामान्यकान्तात्वादिरूपमेवावशिष्यते तस्मात् सोऽनुकार्याः सीतारामप्रभृतयोऽपि-विभावादिकाः भवितुं सामाजिकानां कृतेऽपि सामर्थ्यमुपयन्ति। इदं हि साधारणीकरणं भावकत्वव्यापारेण निष्पद्यते। साधारणी-

करण्यात् यदा सामाजिकान् प्रति परकीयाः परकीयत्वविहीना भवन्तः स्वकीयत्वे परिणमन्ते तदा भोजकत्वव्यापाराद् ते सामाजिकास्तं विभावादिकं भोक्तुमारभन्ते । इत्थं हि रसः सामाजिकानुभूतिगतो जायते । रसमुद्दिश्य भट्टनायकस्येदमस्ति मतम् । सोऽयं साङ्ख्यानुगामी आचार्य एव ।

अभिनवगुप्तस्य वादोऽभिव्यक्तिवादनाम्ना विख्यातः । तस्य मतमिदम्—सामाजिक-हृदयस्थितः स्थायिभाव एव रसानुभूतेर्निमित्तं भवति । सामाजिकस्य मनसि वासनारूपेण रत्यादिस्थायिभावा ये स्थिता भवन्ति ते साधारणीकरणेन समुपस्थाप्यमानाभ्यो विभावादिसामग्रीभ्य उद्बुद्धा जायन्ते ततश्च ते तन्मयी-भावतया ब्रह्मास्वाद इव आनन्दाधायका भवन्ति । सामाजिकस्तदुपभोगावसरे नितान्तमेव वेद्यान्तरसंस्पर्शशून्यः सञ्जायते ।

आचार्योऽभिनवगुप्तो न भावकत्वं न च भोजकत्वं नाम व्यापारमाद्रियते । स केवलं व्यञ्जनाख्यव्यापारं रसाभिव्यञ्जनाप्रयोजकेन स्वीकुरुते । व्यञ्जना-व्यापाराङ्गीकरणात् स साहित्यशास्त्रानुगामी वर्तते ।

ध्वनिः—अनुपदमेवाभिहितं यद् रसो न वाच्यो भवति । काव्ये विभावानु-भावसञ्चारिणामेव कथनं क्रियते । तेषां संयोगात् स प्रतीतिमायाति किंवा तस्य-व्यञ्जनमेव भवत्यत एव ध्वनिकारास्तं 'रस' इति नोक्त्वा 'रसध्वनि' रिति वदन्ति । ध्वनिः स इत्थं स मृते—

विधः। अयं लक्षणामूलध्वनिर्लक्षणामाधिरय प्रवर्तते। अभिधामूलध्वनिरपि असंलक्ष्य-संलक्ष्यक्रमभेदेन प्रथमं द्विविधः पुनश्च संलक्ष्यक्रमभेदो ध्वनिः शब्द-शक्त्यर्थशक्त्युभयशक्त्युद्भवभेदेन त्रिविधः। वस्त्वलङ्कारगतत्वेन शब्दशक्त्युद्भवो ध्वनिर्द्विविधः, अर्थशक्त्युद्भवो ध्वनिश्च द्वादशविधः। उक्तञ्च द्वादशविधतामुद्दिश्य दर्पण एवम्—

> वस्तु वाऽलंकृतिर्वापि द्विधार्थः सम्भवी स्वतः।
> कवेः प्रौढोक्तिसिद्धो वा तन्निबद्धस्य चेति षट्॥
> षड्भिस्तैर्व्यज्यमानस्तु वस्त्वलङ्काररूपकः।
> अर्थशक्त्युद्भवो व्यङ्ग्यो याति द्वादशभेदताम्॥

उभयशक्त्युद्भवो ध्वनिरेक एव। सङ्कलय्य सर्वान् इमान् भेदान् ध्वनिरष्टादशधा। ध्वनेर्मुख्या भेदास्तु एत एव। अवान्तरभेदेन तु सहस्रशो भवन्ति। ते हि सहस्रशो भेदा ध्वनेर्व्यापकतां ज्ञापयन्ति।

काव्यम्—ध्वनिवादिनः काव्यं भेदत्रये विभजन्ते—यस्मिन् काव्ये व्यङ्ग्यस्य प्राधान्यं भवति तत् ते 'उत्तमम्', यस्मिन् काव्ये व्यङ्ग्यार्थो वाच्यार्थाधिको रमणीयो भवति तत् 'मध्यमम्', किञ्च यत्र व्यङ्ग्यरहितगुणालङ्कारसहितशब्दार्थानां सन्निवेशो भवति तत् काव्यं ते 'अवरम्' इति आमनन्ति। उक्तञ्च मम्मटेन काव्यप्रकाशे—

> "इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः।"
> "अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्।"
> "शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्।"

अवरं नाम काव्यमव्यङ्ग्यत्वात् अभिनवगुप्त-विश्वनाथप्रभृतयः काव्यकोटौ न निदधति। ध्वनिषु रसध्वनेः सर्वोत्तमत्वाद् यत्र तस्य सौन्दर्यं परिस्पन्दते पण्डितराजो जगन्नाथस्तत्काव्यम् उत्तमोत्तमकाव्यमिति मन्यते।

काव्यस्य लक्षणं साहित्याचार्यैर्नैकविधं कृतम्। अत्र केषाञ्चन प्रख्यातनाम-धेयानामाचार्याणामभिमतानि काव्यलक्षणान्युद्ध्रियन्ते—

( १ ) शब्दार्थौ सहितौ काव्यम्—भामहः
( २ ) काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वर्तते—वामनः
( ३ ) शब्दार्थौ काव्यम्—रुद्रटः
( ४ ) अदोषौ सगुणौ सालङ्कारौ च शब्दार्थौ काव्यम्—हेमचन्द्रः
( ५ ) शब्दार्थौ निर्दोषौ सगुणौ प्रायः सालङ्कारौ च काव्यम्—वाग्भटः

(६) गुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ—विद्यानाथः प्रतापरुद्रे।

(७) शब्दार्थौ वपुरस्य तत्र विबुधैरात्माभ्यधायि ध्वनिः—विद्याधरः एकावल्याम्।

एवं काव्यलक्षणानां दर्शनेन ज्ञायते इदं यत् पूर्वे काव्यलक्षणकारा भामह-वामनप्रभृतय आचार्याः काव्यत्वस्य स्थितिं शब्दार्थयोरुभयोरपि स्वीचक्रिरे। नागेशः "काव्यपदस्य प्रयोजनं रसास्वादस्य श्रवणं शब्दार्थयोरुभयोरपि तुल्यं भवतीत्येतदभिप्राय पण्डितराजजगन्नाथस्य काव्यलक्षणे शब्दनिष्ठ एवैतदेतन्मतेऽरुचिं दर्शयन् काव्यत्वं शब्दार्थोभयनिष्ठमिति वैतरणीकाराणां काव्यप्रकाशकारादीनां मते श्रद्धां प्रदर्शयति। पण्डितराज 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्' इत्येवं काव्यलक्षणं करोति। भामहवामनरुद्रटादीनां दृष्टिः शब्दार्थयोरेव स्थिताप्यवर्तत। ते वस्तुतः काव्यरहस्य मार्गणे न सफलप्रयासा अभूवन्। काव्य-कला हि कलासु शिरोमणिः। सा कलानां सीमा। न चमत्कारपूर्णौ सुललितौ शब्दार्थौ एव काव्यत्वोद्भावने सामर्थ्यं निधत्तः। तौ तु तदुद्भावने सहायकमात्रौ प्रमुखौ। अत एव आनन्दवर्द्धनः काव्यस्य स्वरूपं त्रिभिर्भेदैस्तदभिकृत्य प्राह—"काव्यस्यात्मा ध्वनिरिति" राजशेखरश्च "शब्दार्थौ शरीरं......रस आत्मा" इति निजगाद, कुन्तकश्च वक्रोक्तिजीवितकारः शब्दार्थौ काव्यमिति न प्रीणयितुं शशाक। स काव्यस्य महत्तां तदीयां सर्वातिशायिगौरवशालितां सम्यग् जानाति स्म। अत एव स आह—

> "शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।
> बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि॥
> शब्दार्थौ सहितावेव प्रतीतौ स्फुरतः सदा।
> सहिताविति तावेव किमपूर्वं विधीयते॥
> साहित्यमनयोः शोभाशालितां प्रति काव्यसौ।
> अन्यूनानतिरिक्तत्व मनोहारिण्यवस्थितिः॥"

इत्थं कुन्तकः काव्यस्य लक्षणं सविस्तरं प्रतिपाद्य तत्स्वरूपमवगमयितुं प्रयतते स्म।

विश्वनाथाय अपि न भामहादीनां काव्यस्य स्वरूपमरोचत। स तु तदेव काव्यं मेने यद्रसात्मकमतः स आह—"रसात्मकं वाक्यं काव्यम्" इति। आचार्यः क्षेमेन्द्रोऽपि काव्यत्वमभिज्ञातुं पूर्णं प्रयत्नं चकार। स न काव्यत्वं शब्दार्थयोर्न अलङ्कारेषु न गुणेष्वेव प्राप्तुमशक्नोत्। तद्विचारेण काव्यत्वं ततोऽतिदूरे वसति। अतः स तत्र नैजं विचारमेवमभिव्यानक्—

"काव्यस्यालमलङ्कारैः किं मिथ्या गणितैर्गुणैः।
यस्य जीवितमौचित्यं विचिन्त्यापि न दृश्यते॥
अलङ्कारास्त्वलङ्कारा गुणा एव गुणाः सदा।
औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्॥"

मम्मटं विहाय प्रायेण सर्वेऽपि काव्यलक्षणकाराः काव्यस्य यद् यत् स्वरूपं प्रोचुस्तत्र सर्वत्र सहृदय-हृदयं कश्चिन्न कश्चिदभावमनुभवति। किमपि लक्षणमस्त्येवंविधं यत्र काव्यस्य स्वरूपं स्पष्टं भवत्येव न, किमप्येतादृशं यत्र सामान्यकाव्यस्य कृते स्थानमेव न वर्तते, किमपि लक्षणमेवंविधं यत्र काव्यत्वस्यांशोऽपि न संलक्ष्यते।

"तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि।"

इत्येतन्मम्मटस्य काव्यलक्षणमेव एतादृशं लक्षणं यत् काव्यस्य यथार्थं स्वरूपं प्रस्तौति। मम्मटो ध्वनि-गुणीभूतव्यङ्ग्यचित्रकाव्यभेदांस्त्रीन् काव्यस्य विधाय सर्वविधानि साधारणासाधारणानि काव्यानि यथोचितविधिना आद्रियते स्म। तदीये काव्यलक्षणे तेषां सर्वेषामपि काव्यानामन्तर्भावो जायते यानि विशिष्टानि सन्ति वा अविशिष्टानि सन्ति।

(व्यञ्जना—साहित्यशास्त्रस्य निपुणाम् विशिष्टताम् एषा हि महीयसी मुख्या च विशिष्टतास्ति तस्य व्यञ्जनावादित्वम्। तदेकतस्तु व्यञ्जनाया अभिधा-लक्षणा-तात्पर्याभ्यो विलक्षणतां भिन्नताञ्चोपपादयत्यपरतस्तस्याः सौन्दर्यसोतस्त्वं साधयति। साहित्यं पदस्य पदार्थस्योभयस्यापि उपादेयत्वं सम्यग् वेत्ति परं कामं ताभ्यामन्येषां प्रयोजनं सिद्धं स्यात्, कामं शास्त्रान्तरं ताभ्यां वा तयोर्मध्ये एकतरेण कृतार्थत्वं गच्छेत् परं साहित्यशास्त्रस्य तौ द्वावपि (शब्दार्थौ) न प्रयोजनं न तद्दिष्टं साधयतः। साहित्यं तु न किमपि कथनमभिधया वक्तुमिच्छति। तस्य तु वाचकानि पदानि प्रियाण्यपि न। लक्षकपदान्यपि तदीयमभिलषितं साधयितुं न पारयन्ति। लक्षकशब्दास्तु तत्रैव प्रयुज्यन्ते यत्र वाचकपदप्रतिपादितेनार्थेन यथार्थावगतिर्न भवितुमर्हति। ते कामपि रूढिं वा प्रयोजनमाश्रित्यैव प्रवर्तन्ते। साहित्यमत्रैवंविधो वचनावलिं प्रयुनक्ति एवंविधान् अर्थांश्च अभिव्यनक्ति या वचनावलिर्न वाचकशब्दैः सृष्टा भवति न च तेऽर्था एव तेषामन्तर्भूता भवन्ति यान् अर्थान् लक्षकशब्दा वाचकशब्दा वा प्रस्तौ-

कुर्वन्ति। तस्मात् न अभिधा न च लक्षणैव साहित्यस्य कृते पर्याप्ते। अत एव तदुपकारिता व्यञ्जना। आचार्यविश्वनाथस्तस्यापेक्षां समर्थे प्रस्तौति—

"विरतास्वभिधाद्यासु ययार्थो बोध्यतेऽपरः।
सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च॥"

गुणाः—माधुर्यम्, ओजः प्रसादश्च एते त्रयो गुणाः सौन्दर्यविद्भिः यथावसरं प्रयुज्यन्ते। यत्र यस्य गुणस्य प्रकटनमपेक्ष्यते तत्र तैः स एव गुण उपयुज्यते। तदुपयोगेन वाणी लेखो वा उत्कृष्टतां याति; तदुपयोगेन श्रोतरि पाठके वा समुचितोऽमोघः प्रभावो निपतति तस्मात् साहित्यिका गुणान् आराधयन्ति। गुणान् अधिकृत्य आचार्यमम्मटो मनुते—

"ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः॥"

अलङ्काराः—अलङ्कारैः सौन्दर्यस्य वृद्धिर्भवति तस्मात् सौन्दर्यानुरागिणः सौन्दर्यं वर्धयितुं तद्वति तानपि आवर्जयितुमीहन्ते येषां दृष्टिर्बाह्य एव सौन्दर्ये रज्यति, ये हि आन्तरं सौन्दर्यं यथार्थं सौन्दर्यं सत्यं हि सौन्दर्यं नाभिज्ञातुं न सम्भावयितुं च शक्नुवन्ति। साहित्यिकाः स्वसम्भावनीयं साध्यमुपकर्तुमेव तान् प्रयुञ्जन्ति। आचार्यमम्मटोऽप्याह—

"उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः॥

उपसंहृतिः—वेदान्त-सांख्यादिदर्शनानि वस्तुतो मानवविशेषमेवोपकुर्वन्ति तानि न सन्ति मानवमात्रोपकारीणि। साहित्यशास्त्रमेव मानवमात्रस्य श्रेयः प्रेयश्च सम्पादयति। तदेव मानवस्य क्षमतां तदीयां मनोवृत्तिं सम्यग् वेत्ति। तत् तथा यतते येन सर्वेऽपि मानवाः सत्पथगामिनो भूत्वा स्वीयं परमार्थं लब्धुं शक्नुयुः। मानवो मनोऽधिवसति न च धियम्। साहित्यं तदेव मनो विमलीकरोति। तन्मानवो येषु रतिशोकक्रोधादिस्थायिभावेषु स्वपिति जागर्ति क्रीडति च निर्वेदग्लानिदैन्यश्रममदादीन् भावान् अहोरात्रं जीवने व्यवहरति तान् सर्वान् अपि निरूपयति।

साहित्यस्य विषय-प्रयोजनोद्देश्याधिकारिप्रभृतीनां स्वतन्त्रत्वात् तस्य शास्त्रत्वं निर्बाधमेव। शास्त्रेषु तत् स्वीयमुत्कर्षमुपादेयत्वञ्चादाय विलसतितराम्।

—०—

## संस्कृतनाटकमञ्जुता

संस्कृतरूपकं स्वप्रकृत्या प्रवृत्त्या च भाषान्तररूपकेभ्यो भिन्नम्। तत्र कुलजन्मन एव आदर्शवादि। (प्रख्यातवंशानां राजर्षीणां वा धीरोदात्तप्रतापवतां मानवानां चारुचरितानि चरित्राणि चाभिनीय विविधव्यापाराणां घटनाश्च सजीव चित्रणं विधाय तत्तत्पदार्थानां जीवनलीलाविधायास्तत्तद्वस्तूनां धर्मस्य च समुन्मेषणं न केवलं तस्योद्देश्यं, अपि तु काव्यमिव सामाजिकानां मनसि स्थितानां स्थायिभावानां रसात्मके तत्त्वे परिणमनं तदीयं प्रधानतमं लक्ष्यम्। अभिव्यक्तिनिरपेक्षत्वात् तद् वैदेशिकेभ्यो रूपकेभ्यः स्वकीयामतितरां गामिनीं विशिष्टतां जुषते। )

संस्कृतरूपकस्येष्टो रसोऽतस्तत्साधनार्थं तत्रान्येषां तत्त्वानां समावेशो विधीयते। 'अवस्थानुकृतिर्नाट्यम्' इति मन्वानेनापि संस्कृतनाटककारेण कथावस्तु चरित्रचित्रणादिषु तत्त्वेषु न गौरवधीराधीयते। रससाधनासरण्यां च कोऽपि प्रत्यवायश्चेत्तेनैव दृश्यते तन्निरासाय तेनानारतमिष्यते। (पात्रचित्रण संविधानवादि योजनाया यद्येव तेन कश्चिदेवंविधो भावोऽवलोक्यते यो रसानुभूतावन्तरायं स्थापति तदैव सत्वरमस्य तथापनयनमनुतिष्ठति यथा भावुका रसास्वादनं निष्प्रत्यूहं निर्धारन्। रसोद्रेकदिशायां संस्कृतनाटककेषु नितरामभिनिवेशोऽवाप्यते। "काव्यानन्दोऽप्यभिनीयमानाद् रसादेव समुत्पद्यते" इत्येतदभिप्रायगुप्तस्य गुरोर्भट्टतौतस्य वच इह समुज्ज्वलं प्रमाणं जागर्ति भरतमुनिस्तु स्पष्टमेवाचष्टे—

"नहि रसादृते कश्चिदप्यर्थः प्रवर्तते।" )

यथावस्तुनः किं वा पात्रचरित्रादिकस्य पर्युदासपरत्वेन सर्वविधान् नाधुनिकान् धिनोति। तेषां मतेन संस्कृतरूपकप्रकाराणामेव दोषः। परं तथ्यं नेदम्। भारतीयसंस्कृतरूपकस्य मूलभावनाया अनवगमनादेव ते तथा मन्यन्ते। संस्कृतरूपकप्रकाराणां तु विचारोऽयं यन्नाटकस्माद् वस्तु विच्छिन्नतां प्रापयेच्च वस्त्वलङ्कारलक्ष्यैः रसं तिरोधापयेत्। रूपककारेण तु सर्वदा मध्यममार्गावलम्बिनैव भवितव्यम्। उदीरितञ्च—

"न चाति रसतो वस्तु दूरं विच्छिन्नतां नयेत्।
रसं वा न तिरोदध्याद् वस्त्वलङ्कारलक्षणैः ॥" ( दशरूपके )

उपर्युक्तेन वचनेनेदं कदापि अवगन्तव्यं यत् संस्कृतरूपकेषु कथावस्तूपेक्ष्यते। तत्स्वरूपं महत्त्वञ्च संस्कृतनाट्यशास्त्रेऽतिशयसूक्ष्मतापूर्वकमाम्नातम्। भारतीयैर्नाट्यरचना कस्या अपि क्षणिकभावनाया वशात् न विधीयते। तदीयं प्रयोजनं प्राचां भारतीयविपश्चितां मतेन नितान्तं गम्भीरं व्यापकं सार्वभौमञ्च वर्तते। 'लोकवृत्तानुकरणम्' नाटकस्य स्वरूपं स्मृतम्। लोकवृत्तस्य नानाभावसमन्वितत्वात् नानावस्थान्तरात्मकत्वाच्च भारतीया नाटकीयमितिवृत्तं कस्यचन सीमितस्य पुरुषस्य पृष्ठतो बन्दीकृत्य न निधातुमीहन्ते। भारतीया हि प्राचीना रूपककारा नासन् अर्थगृध्नवो; न ते स्वानि रूपकाणि द्रव्यार्जनाय लिलिखुः। न ते स्वानि दृश्यकाव्यान्यपि स्वोदरभरणार्थमुपजीव्यत्वेन अकल्पयन्। व्यवसायसाधनत्वेन न तानि तैः प्रायुज्यन्त। अतस्तत्र तैर्महनीयानि चरित्राण्येव न्यधीयन्त। मानसगतस्य कालुष्यस्यापनयनं हि सतां कीर्तनेनैव वस्तुतः सञ्जायते। कामक्रोधलोभमोहाविभावाना सन्ति ये क्रीडनका, ये हि तेषां 'तिष्ठत' इत्येतद् वचो निशम्य तिष्ठन्ति, 'उपविशत' इति श्रुत्वा उपविशन्ति 'गच्छत' इत्याकर्ण्य गच्छन्ति तेषां जनानामिन्द्रियदासत्वप्रकथनेनेन न कोऽपि लाभो न तेन चरित्रनिर्माणं जायते, न च मनसः संशुद्धिरेव भवति। समाजस्य मध्ये आशायाः संचारणाय, मानवजीवनस्य च अन्तराले उदात्तानां भावानामुद्बोधनाय रागद्वेषेर्ष्यादिमतां पुरुषाणां कथाश्चरित्राणि च नैव कदापि सहायकानि भवितुमर्हन्तीत्येनत्सुदृढविश्वासात् तानि न ते आद्रियन्ते स्म। भरतकृत-नाट्यशास्त्रस्यानुशीलनमिदमेव सत्यमस्मत्पुरतः प्रस्तवीति—

"एतद् रसेषु भावेषु सर्वकर्मक्रियासु च।
सर्वोपदेशजननं नाट्यमेतद् भविष्यति ॥" ( भरतनाट्यशास्त्रम् )

नाटकं लोकहृदयमनुवर्तते। हृदयन्तु लोकस्य न सर्वैव एकरसमालोक्यते। तत् कदापि कुत्रापि रचिं निदधाति कदापि च कुत्रापि। कदापि तद् औदार्ये कदापि तत्कार्पण्ये कदापि तत् सौजन्ये, कदापि तद् दौर्जन्ये रममाणमाप्यते। संस्कृतरूपकं निसर्गतो विशुद्धस्य हृदयस्योपरितनां कर्म-संस्कारजन्यां मलिनतामपहर्तुं तादृशीमेव सामग्रीमुपयुनक्ति यादृश्या लोकस्य सर्वहितं सिद्ध्येत् परमेव मात्र मङ्गलं स।

संस्कृतनाटकानि नाट्यशास्त्रीयाणि विधिविधानानि सादरं रक्षन्ति जीवनस्यै-कदेशस्य चित्रं न प्रस्तूय जीवनस्य चतुरस्रं चित्रं प्रस्तुवन्ति । तानि मानवस्य न केवलं गुणानपि तु सद्गतान् दोषानपि आविष्कुर्वन्ति ।

(अभिज्ञानशाकुन्तले शकुन्तलामालोक्य दुष्यन्तस्य मानसे या भावनोद्भूता, अविमारके राजकुमारस्य हृदये ये विकाराः समुत्पन्नाः; मृच्छकटिके मदनिकां वीक्ष्य शर्विलको यां दिशां नीतोऽभवत , मुद्राराक्षसे मलयकेतुर्याभिर्दुश्चिन्ताभि-रगृह्यत; रत्नावल्यामादौ वासवदत्ता सागरिकायां यामीर्ष्यां बबन्ध, वेणीसंहारे भीमः क्रोधघृणादिभावैर्यैरपीड्यत तानि सर्वाण्यपि तु मानवीयानि दौर्बल्यान्येव तु विद्यन्ते । नाटककारो हि भारतीयेषु नाटकेषु मानवस्य सर्वान् अपि सद्-सद्भावान् चित्रयति परं न स गुणजेतृत्वेन दोषम् , सौजन्यजेतृत्वेन दौर्जन्यं, अनुक्रोशजेतृत्वेन निरनुक्रोशत्वम्; अन्यायजेतृत्वेन अन्यायम् , सदाचारजेतृत्वेन दुराचारञ्च दर्शयति । प्रतीच्यानां शेक्सपियरप्रभृतिनाटककाराणां नाटकेष्वयं हि अन्याय-निर्दयतानृशंसतादुराचारप्रभृतयोऽसद्भावा अन्ततो यद्यपि विजयिनो भवन्तः संदर्शिता भवन्ति । अन्याय-दौर्जन्यादिना सर्वेऽपि दोषा न सत्ये पक्षे स्थिता भवन्ति ते अनृतमेव अवलम्ब्य उत्थिता भवन्ति तेषामुत्थानस्य मूले न शाश्वतिकी शक्तिरधिष्ठिता भवति तस्मादेव कारणात् अनश्वरबलमवलम्बमानस्य सत्यं भजमानस्य—भावस्य पराजयो न कदापि सम्भव । संस्कृतनाटककारस्य नाटकेष्वत एव सततं प्रकाशस्य न्यायस्य सत्यस्य सद्भावस्य एव विजयो दृग्गोचरीभवति । संस्कृतनाटककारोऽसत्यस्य अन्यायस्य वा अभ्युदयं दर्शयित्वापि नान्ततस्तस्यैव सत्तां समुपस्थापयति स तु अन्ते सत्यस्यैव न्यायस्यैव लब्ध-विजयमभ्युदयं प्रदर्शयति । मृच्छकटिके असत्यस्य विजयं शूद्रको रूपकस्या-न्त्यमङ्कं यावत् दर्शयन्नपि न स्वकीयं प्रकरणं तत्रैव पर्यवसाययति । भवभूतेः उत्तररामचरिते प्रारम्भात् समाप्तिं यावत् रामं शोक-सन्तापा दहन्तु, परं तथा-पि अन्ते न तेषां विजयग्राही स्वरूपं प्रदर्शितं ।

"अवस्था या तु लोकस्य सुखदुःखसमुद्भवा ।
नानापुरुषसञ्चारा नाटके सम्भवेदिह ॥
सर्वभावैः सर्वरसैः सर्वकर्मप्रवृत्तिभिः ।
नानावस्थान्तरोपेतं नाटकं संविधीयते ॥"

(भरतनाट्यशास्त्रम्)

इत्येतद् यन्नाट्यशास्त्रे प्रतिपादितं तस्याक्षुण्णतया रक्षा कर्तुं संस्कृतनाटकेषु पूर्णोद्यावहिता जायते ।

( दर्शकानां मानसेषु रसस्योन्मेषणं भारतीयस्य रूपककारस्य चरममुद्देश्यम् । अत स कदापि न प्रतीच्यरूपककार इव कथावस्त्वादिव्यापार रूपकस्य सर्वस्वत्वेनाभ्युपगच्छति । )

( भारतीया विद्वांसो देशस्य मर्यादां पोषयितुं गरिमाणं च वर्धयितुमनारतं प्रायस्यन् । तेषां सर्वाण्यपि कार्याणि तदर्थमेव जन्म अगृह्णन्, तदर्थमेव ताम्यजीवन् तदर्थमेव तानि स्वजीवनमपि अत्यजन् । तेषां रूपकेष्वपि तस्यैव आदर्शस्य अवदातशोभा प्रस्फुरति । )

( वयोऽनुरूपः प्रथमस्तु वेषो वेषानुरूपश्च गतिप्रचारः ।
गतिप्रचारानुगतं हि पाठ्यं पाठ्यानुरूपोऽभिनयश्च कार्यः ॥ )

( नाट्यशास्त्रम् )

पौराणिके वा ऐतिहासिके उपाख्याने यदि रूपककार क्वापि अनौचित्यमीक्षते तदासौ तद्वर्जनपूर्वकं कथां निबध्नाति । अभिज्ञानशाकुन्तले कालिदासेन दुर्वाससः शापप्रसङ्गः पौराणिककथागतस्य अनौचित्यस्यैव निरासाय समुपन्यस्त । )

भारतीयनाटककाराणां स. प्रयत्न सदा भवति येन नायकस्य चरित्रं पवित्रं सन्निवेश्येत न कालुष्यस्य लेशोऽपि तन्मनागपि संस्पृशेत् । नायकचरित्रस्य रक्षार्थमिह सदैव प्रयत्न कृतोऽभूत् । एवंविधस्य प्रयत्नस्य दिशि सङ्केत साधुतया धनञ्जयस्य निम्नलिखितासु पङ्क्तिषु भवति—

"यत् तत्रानुचितं किञ्चिन्नायकस्य रसस्य वा ।
विरुद्धं तत् परित्याज्यमन्यथा वा प्रकल्पयेत् ॥" ( दशरूपकम् )

कथावस्तुन सरसत्वेऽभिमतेऽपि नौचित्यस्यातिक्रमणं तदर्थमावाञ्छितमिह भारतीयेन संस्कृतनाटककारेण ।

रूपकेषु न केवल राजवंशोत्पन्नानां वा महामानवानां चरित्राणि समुल्लिख्यन्ते अपि तु तत्र सामान्यानामपि जनानां वृत्तमालिख्यते ।

"प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ।" ( सा० दर्पण )

इत्येतद् यदुदीरितं तत्तु नाटकाभिधं रूपकं लक्ष्यीकृत्योक्तम् । न च तस्य प्रकरणवृत्तप्रभृतिष्वपि अपेक्षा भवति । एवमेव न 'केवलं' अभिजाता एव तत्र पात्रत्वेन गृह्यन्ते साधारणा अपि अकुलीना अपि रूपकेषु पात्रत्वेन स्वीकृता

भवन्ति । प्रकरणाख्ये रूपके सर्वविधानामपि पात्राणां सन्निवेशः स्पष्टमेव सर्वैरवलोक्यते । भाणादिषु रूपकेष्वपि साधारणा एव जना दृश्यन्ते । तेषु तेषु रूपकेषु उपरूपकेषु च नानाविधानामुच्चावचानां पात्राणां सन्निधानादिदं निश्चप्रचमावेदनं निष्पद्यते यत् संस्कृतदृश्यकाव्येषु सर्वविधानामपि पुंसां कलत्राणाञ्च समावेशः क्रियतेऽथ च बहुविधानि च चरित्राणि तत्रालिख्यन्ते ।

संस्कृतनाट्यशास्त्रे गीत नृत्य वादित्रादीनां कलानां कीर्तनेनेदं सिद्ध्यति यत् पुरातनतरं भारतीय जीवनं कलानुरागरतं बभूव । भारतीयेयं कलानुरागिणी रुचिस्तदाप्रभृत्येव अजागः यदात्र वैदिक कालो विजजृम्भे ।

"यस्यां गायन्ति नृत्यन्ति भूम्यां मर्त्या व्यैलवाः ।" ( अथर्ववेद )

इत्येवविधाः पद्भूयः कथनमुपर्युक्तं परिपुष्णन्ति ।

ईशवीयपञ्चमशतकारम्भात् प्रागेव अजन्ता अभिनयादिकला कृत्स्नतया विकासमगुः । शिलाखिन कृशाश्वमङ्को लेखकौ कलामिमां प्रचारयामासतुरिति को न जानाति ? अजन्ता-साञ्चीप्रभृतिस्थानेषु तत्तद्भावविभाविता कला पर्यवलोक्यन्ते, तासां कलानां निर्देशो भरतस्य नाट्यशास्त्रे सर्वं पर्यवेद्यते । भासकालिदासशूद्रकादीनां रूपकाणां रूपकाणिता एव कला स्फुटतयास्माकं पुर आकलयन्ति ।

संस्कृतरूपकेषु पद्यानां बाहुल्यं विलोक्य, हन्त, प्रतीच्या कतिपये कोविदा लोचना जुगुप्सन्ते तत्र । परं तेषामेव बान्धवं तादृशीं बहुलतां प्रशंसन्त्यपि । तत्र ते प्रमोदन्ति । आगल कविद्विमसहार्डी विपुलकायस्य स्वीयस्य 'डाइनास्ट' संज्ञकनाटकस्याकारमुद्दिश्य सविस्तरं यल्लिखितिस्म तस्य सारोऽयम्—(रङ्गमञ्चोपरि अभिनेयं नाटकमपकृष्टमूल्यं भवति । उत्कृष्टमूल्यं तु तस्यैव नाटकस्य कृते जनैः प्रदीयते यद् रङ्गमञ्चोद्देश्येन न प्रणीयते । वस्तुतस्तेनैव नाटकेन श्रेष्ठेन भूयते यदावृतकपाटस्य निकेतनस्याभ्यन्तरे भागेऽध्ययनार्थं विरच्यते ।)

संस्कृतनाटककारः संसारस्यासीमवैचित्र्यानुभूतिमालम्ब्य स्वीयानि पात्राणि घटयन्ति स न तानि व्यक्तित्ववैशिष्ट्याद् यथार्थजीवनाच्च स्रंसयति । तदीयं परम्परागतमपि पात्रं न कदापि वैरस्यं जनयति न च तदीयं पात्रं कल्पनालोकस्यापि पात्रं भवति । तद् भूतलस्यैव प्राणवान् मानवः । दुष्यन्तो भरतभुवः सम्राडवश्यमास्ते परं सत्वपि तादृक् स पुरुष एव न तदितरः ।

"गच्छति पुरः शरीरं धावति पश्चादसंस्तुतं चेतः ।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥"
"अस्मिन् तनो हृदयं तथापि नेदं निवर्तयितुम् ।"
"कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव मे हृदयम् ॥"

इत्येतदादिवचोभिर्नाटककृत् तस्मिन् सम्राजि मानवसुलभदुर्बलताया सद्भावं स्पष्टमेव समुन्मीलयति । एतेन सिद्ध्यति यत् संस्कृतरूपकेषु पात्राणि यद्यपि सन्ति विशिष्टानि परं तानि संसारस्यैव सन्ति पात्राणि न च द्युलोकस्य । अपि किं शर्विलक शकार माथुरक शकुनि कर्ण द्रोण भीष्म दुष्यन्त-सागरिका-पद्मावती शकुन्तलादिका भूभुवनस्य प्राणभृतो न भूत्वा लोकान्तरस्य सन्ति ? (अपि न एषु निर्दिष्टेषु पात्रेषु त एव दोषा प्रदर्शिता ये मानवेषु निसर्गत प्राप्यन्ते ?( एवंविधायां स्थित्यां कथमेतद् वक्तुं शुशक यत् संस्कृतरूपकेषु अनैसर्गिकता सन्तिष्ठते ?) वस्तुतस्तत्र मानव एवाङ्कितो न च निदश । को राक्षसं चाणक्यं चन्द्रगुप्तं वा देव इति ब्रुवीत ? रामो यद्यपि अस्ति उपमानविहीनं नररत्नं परं संस्कृतरूपकेषु सोऽपि मानवत्वेन चित्रितो न च देवत्वेन । )

'क्षुभिता कामपि दशां कुर्वन्ति मम सम्प्रति ।
विस्मयानन्द-सन्दर्भजर्जरा करुणोर्मय ॥"
"एषा वसिष्ठशिष्याशा रघूणां वंशनन्दिनी ।
कष्टं सीतापि सुतयो संस्कर्तारं न विन्दति ॥"

इत्यादिषु रामः किं मानवाद् भिन्न ? किं न तत्र मानवसुलभदुर्बलता ? संस्कृतरूपकेषु गृहीतं कथावस्तु रामकृष्णविषयकमेव प्रायेण । तत्रयैषा रूढिप्रियता वैरस्यं जनयतीति ब्रुवाणान् प्रति प्रसन्नराघवकार साधु प्राह—

"स्वसूक्तीनां पात्रं रघुतिलकमेकं कलयतां
कवीनां को दोष स तु गुणगणानामवगुण ।
यदेतैर्निःशेषैरपरगुणलुब्धैरिव जग
त्यसावेकश्चक्रे सततसुखसंवासवसति ॥"

रामायणे महाभारते च श्रीवाल्मीकिव्यासाभ्यां सकलानामपि वेदशास्त्रादीनां निष्कर्षं सुबोधसरलभावेन सन्निहित । तत्र ताभ्यां भारतीयाचारविचारमर्यादा-

आस्ते यदिह तादृशानां हिंसामयानां दृश्यानां समावेशनं न नाटककृद् आराद्धुमि न च जनतैव तानि दिदृक्षते ।

संस्कृतरूपकेषु यथाविधः समुत्कर्षशाली मनोऽभिरामोऽभिनयो विभाति तथाविधः सम्भवतः कुत्रापि न विलोक्यते । ईशवीयाब्दारम्भात् प्राक् अर्वाक् च अभिनयनृत्यसंगीतादिकलाशिक्षाप्रदायिनीनां संस्थानामिह प्राचुर्यमासीत् । भरतस्य नाट्यशास्त्रमत्र प्रमाणम् । प्राचीनसमयेऽभिनयस्ता परोन्नतिं श्रितासीत् । हृदयोऽभिनयो मनोविज्ञानाधारे च धृतोऽस्ति । अग्निपुराणे नन्दिकेश्वरीयेऽभिनयदर्पणे मन्दारमरन्दे चाभिनयस्त्वाया विशदं विवेचनं विराजते—

उत्पादयन् सहृदये रसज्ञानं निरन्तरम् ।
अनुकर्तृस्थितो योऽर्थोऽभिनयः सोऽभिधीयते ॥
विभावयति यस्माच्च नानार्थान् हि प्रयोगतः ।
शाखाङ्गोपाङ्गसंयुक्तस्तस्मादभिनयः स्मृतः ॥

इत्यभिनयलक्षणमाकरग्रन्था उपस्थापयन्त आङ्गिकवाचिकाहार्यादिचतुर्णामप्यभिनयानां वर्णनं विदधतोऽवाप्यन्ते ।

"आस्येनालम्बयेद् गीतं हस्तेनार्थं प्रदर्शयेत् ।"

इत्यादिश्लोको हि आङ्गिकाभिनयमधिकृत्य नियन्मधुरमुपदिशति एवमेव—

यतो हस्तस्ततो दृष्टिर्यतो दृष्टिस्ततो मनः ।
यतो मनस्ततो भावो यतो भावस्ततो रसः ॥

इत्येतत् पद्यं च अभिनयस्य रसोन्मेषकर्तां क्रियया मनोज्ञया रीत्योपपादयति ।

भारतीयस्य अभिनयस्य एषा चर्चा पुरातनस्य भारतस्य कलानुरागितां प्रकाशयन्ती संस्कृतनाटकस्य तामुत्कृष्टतां निदधाति यामद्यतनानि नाटकानि अद्यपर्यन्तं नाधिगन्तुमशकन् । चिरकालः सञ्जातस्तदैव संस्कृतनाटकानि सर्वाङ्गपूर्णानि दृष्टान्यभवन् । नासीत् तदीयं किमप्यङ्गं न्यूनं वा कद्रूपम् । तेषां सविधे कान्ताः प्रेक्षागृहाः पेशलो रङ्गमञ्चः, ललितो वेशविन्यास, भास्वराणि भूषणानि अन्यश्च समग्रो नाट्यपरिच्छदः प्राचुर्येण प्राबल्येन च व्यराजन्त । भरतकृते नाट्यशास्त्रे द्वितीयेऽध्याये हि एतद्विषयक उल्लेखः समवाप्यते ।

संस्कृतनाटकानि सार्वजनीनसंस्कृतेः प्रचारकाणि सन्ति । तानि तस्याः सन्देशं सर्वतः प्रसारयन्ति । तानि विश्वं भारतीयां संस्कृतिं प्रति सततमाकर्षय-

न्यैव सञ्चयन्ते । वस्तुतस्तत्र धर्मकामयो, धर्मार्थयो, प्रणय कर्त्तव्ययो, स्वार्थ परमार्थयो समस्या साधु समाहिता सन्ति । )

"धर्मार्थकामाः सममेव सेव्या यो ह्येकसक्तः स जनो जघन्यः"

इत्येतदस्ति तेषां मतं महीय ।)

अनासक्तिविभाविता पुरुषार्थलसिता वरिवस्या, समन्वयकारिणी च मनीषा भारतीयसंस्कृतेर्मेरुदण्ड । संस्कृतरूपकं स्वेषु रूपकेषु तत्प्रतिपादनं नितरां प्रीतिपूर्वकं विधाय विविधपरिस्थितिवीचीवचसि तरन्तीं मानवस्य मानसगतिं चित्रयन्ति । कामकामनायाः का शक्तिः ? अर्थस्य कापेक्षा ? का च तन्महत्ता ? इत्यादिकं सर्वमपि ते समीचीनतया समादधति ।(मानवजीवनमुन्नेतुं निर्बोद्धुं च तत् तेषामध्यवसाय सततं दृष्टो भवति । )

(मानवस्य मानसं कदापि धर्मं, कदापि च अर्थं आवर्जयति । धर्मेणाकृष्टो भूत्वा मनुष्यः किं किं न दुःखमावहति । एवमेव अर्थेन वा कामेन आकृष्टो भूत्वा कानि कानि च गर्हणीयानि कृत्यानि अनुष्ठातुमात्मानं नियोजयति— इत्येतत् सर्वं रूपकेषु सम्यग् देदीप्यते । )

ज्ञान कर्म भक्तीनां सामरस्ये सत्येव संसारः शुभमीक्षते—इत्यत्र संस्कृत-रूपकाणामास्था अविचला । संस्कृतरूपकाणि विश्वसन्ति यत् स्वच्छन्दमुच्छृङ्खलञ्च प्रेम न परिणामे हितावहम् । कर्तव्यरक्षा अधिकार जीवयति । धर्मोऽविरुद्धश्च कामः श्रेयस्करः ।

दाम्पत्यप्रणयस्य विशुद्धमुदात्तं च रूपं संस्कृतरूपकेषु दृश्यते—

"व्यतिषजति पदार्थानान्तरः कोऽपि हेतु
न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥"

(इत्यादिषु पद्येषु पवित्रप्रणयस्य निरवद्या आभा सुस्फुटमेव परिलक्ष्यते । अभिज्ञानशाकुन्तले नाटके प्रेमणः श्रेयसश्च संघर्षं वनिता मधुरं प्रदर्शितम् । शकुन्तला समुपस्थितं श्रेयोऽवज्ञाय दवीयसि प्रेमणि प्रीयते । तदुदर्के च मत्सरं मेव अश्नुते । जनाकीर्णायां सभायां सा अवधूयते । वस्तुतः संस्कृतरूपकस्य दृष्टिः सदैव शुद्धाचारमभिनन्दति । अनेनैव वैशिष्ट्येन नोपलक्षितं तदपि तु

अन्यैरपि वैशिष्ट्यैस्तदलङ्कृतमस्ति। तत् शब्दानां गौरवे, अर्थानां गाम्भीर्ये, भाषाया लालित्ये, वर्णनस्य वैशद्ये, वस्तूनां चारुतया सन्निवेशने, भावानां च अभिव्यञ्जने विषयस्य नाटकेषु श्रेष्ठम्। सर्वविधसुन्दरतास्पदत्वादेव 'काव्येषु नाटकं रम्यं तत्रापि च शाकुन्तला'—इत्येतत् प्रशस्तिश्रीलाभस्य सौभाग्यमुपभुनक्ति।

इत्थं हि संस्कृतनाटकानि स्वसिद्धान्तरक्षणादनवद्यान्येव सिद्ध्यन्ति।)

सुललिताभिनयैः समलङ्कृता
रुचिरभारतसंस्कृतिभूषिता।
स्मृतिपुराणविचारविभाविता
जगति संस्कृतनाटकमञ्जुता॥



## भासो हासः

भरतविहितस्य नाट्यशास्त्रस्याध्ययनेनैतद् विदितं भवति यदस्मदीये भारतवर्षे दृश्यकाव्यानां प्रणयनस्य व्यसनं क्वचित्तु नितान्तं पुरातनमास्ते। परं नाट्यशास्त्रात् दृश्यकाव्यस्य यावती प्राचीनता सिद्ध्यति तदनुसारेण तावन्ति पुरातनानि रूपकाणि साम्प्रतं नोपलब्धानि जायन्ते। नाट्यशास्त्रे यथा सुरविजय-लक्ष्मीस्वयंवरनामधेययोर्नाटकयोरुल्लेखो दृश्यते तन्नाटकद्वयं, पाणिनिकृतायामष्टाध्याय्यां 'पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः', 'कर्मन्दकृशाश्वादिनिः' इत्येताभ्यां पठिताभ्यां सूत्राभ्यां याभ्यां नाट्यसम्बन्धिनीनां कृतीनां सत्त्वेन संलभ्यते ता कृतय; कंसवध बलिबन्धाख्ययोर्ययोर्द्वयो रूपकयोः पतञ्जलिः स्वकीये महाभाष्ये स्मरणं विदधाति प्राप्यते ते रूपके; वात्स्यायनः स्वकीये कामसूत्रे येषां कुशीलवाभिनीतानां नाटकानां निर्देशं विदधाति, तानि नाटकानि, कालिदासकृतस्मरणानां सौमिल्ल-कविपुत्रादीनां च प्रबन्धा कुत सम्प्रति समवाप्यन्ते। अद्य यावदनुसन्धानात्मकात् प्रयत्नात् यानि रूपकाणि अनुसंहितानि सन्ति तेषु प्राचीनतराणि भासस्यैव रूपकाणि गण्यन्ते। तस्मादिदानीन्तनोऽनेहा भासमेव आद्यसंस्कृतनाटककर्तृत्वेनावगच्छति। मालविकाग्निमित्रे कालिदासेन संस्मर्यमाणत्वाद् भासस्य कालिदासात् प्राचीनतरत्वं सिद्ध्यत्येव।

कालिदासात् प्राग् योऽयं भासो भारतभुवं भूषयामास तस्य कालिदासस्येव जीवन-कालमधिकृत्य तु नेदानीं कोऽपि विवादः प्रवर्तते परं यानि त्रयोदश रूपकाणि रूपककारस्यास्य प्रथितानि सन्ति तानि लक्ष्यीकृत्य तु विवादः प्रवर्तमानोऽस्ति। महामहोपाध्यायाः गणपतिशास्त्रिणोऽसन्दिग्धमेव तानि त्रयोदशापि रूपकाणि भासस्यैव कृतित्वेनाभ्युपगच्छन्ति परं सन्दिहानानामभिधानमेतद् यन्नाटकेषु तेषु केवलं स्वप्नवासवदत्तं नाम नाटकं भासप्रणीतं वर्तते। ते स्वपक्षे राजशेखरस्य—

"भासनाटकचक्रेऽपि च्छेकैः क्षिप्ते परीक्षितुम्।
स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः॥"

इत्येतं श्लोकं निधाय स्वमतं परिपुष्णन्ति। स इदमप्याहुर्यत् अभिनवगुप्ताचार्येणापि अभिनवभारत्यां ह्येतस्यैव रूपकस्योल्लेखः कृतो नान्यस्येति।

"तानि त्रयोदशापि रूपकाणि न भासकृतानि सन्ति। तेषां रूपकाणां कतिपय एव अंशास्तद्रचिताः प्रतीयन्ते। श्रूयते यत् कोऽपि केरलवासी कविर्भासप्रणीतान् अंशान् विपर्तितम् डॉक्टर बार्नेटोऽपि भासं त्रयोदशानामपि रूपकाणां कर्तृत्वेन न स्वीकुरुते। सिल्वन लेवी नाम प्रतीच्यः प्रधी स्वप्नवासवदत्तं नाम रूपकमपि भासकृतं न मन्यते। तत्र कारणमिदं यत् सम्प्रति यत्स्वप्नवासवदत्तं नाम रूपकमाप्यते तत्र स श्लोको नोपलभ्यते यं श्लोकमाधारीकृत्य द्वादशशताब्दीसम्भूतो नाट्यदर्पणकारो रामचन्द्रस्तस्य भासकर्तृतामङ्गीकुरुते। एवं संशयारूढानां मध्ये केचन तु विश्वसन्ति यत् 'मत्तविलास' प्रहसनरचयिता युवराजो महेन्द्रविक्रमः किंवा आश्चर्यचूडामणेः प्रणेता शीलभद्र इमानि रूपकाणि रचयाम्बभूव। इत्थं रूपकाण्येतान्युद्दिश्य महद् वैमत्यमेव श्रूयते। परमेवंविधानां वादानां प्रत्याख्यानं ये विदधति तेषामपि संख्या किञ्च युक्तयो हि सन्ति बलीयस्य। इदानीन्तनानां पर्यालोचकानां मध्ये भूयिष्ठाः पर्यालोचकाः त्रयोदशानामपि रूपकाणां कर्ता भास एवेति भाषन्ते। ते तेषां भासकर्तृत्वपक्षे अधोनिर्दिष्टान् विचारान् उपन्यस्यन्ति—

१. नाट्यशास्त्रानुसारनिर्मितनाटकानां प्रारम्भिकभूमिका 'प्रस्तावना' इति कथ्यते परमेषु नाटकेषु 'प्रस्तावना' इत्येतस्य शब्दस्य प्रयोगो न कृतः अपि तु 'आमुखम्' इत्येतत् पदं प्रयुक्तं दृश्यते। न तत्र नाटकस्य न च कवेरेव नाम्नो निर्देशः प्राप्यते—एषा विलक्षणता शास्त्रीयपरम्परायाः प्रचलनात् प्रागवर्तिन्येव वस्तुतोऽस्ति।

२. नाटकेषु प्रारम्भो यादृशेनोपक्रमेण कृतस्तादृशेनैवोपक्रमेण तत्र संवरणमपि कृतं दृश्यते। बहुषु च नाटकेषु आदौ मुद्रालङ्कारेण पात्राणामभिधानं विहितमस्ति। सर्वेषु च नाटकेषु 'इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः' इत्येतदेव किंवा इत्येतस्सदृशं भरतवाक्यं दृष्टं भवति।

३ राजशेखरो भासकृतेषु नाटकेषु स्वप्नवासवदत्तं नाम नाटकं श्रेष्ठमिति यदवोचत तस्य तदभिधानमुपलब्धं नाटकं स्वेन संविधानेन स्पष्टतः परिपुष्णाति।

४. प्राचीना ग्रन्थकाराः क्वचिदेतेषां नाटकानां नामानि सङ्केतयन्तः क्वचिच्च तदीयान् श्लोकान् कांश्चन उद्धरन्तोऽवलोक्यन्ते। आलंकारिको भामहः प्रतिज्ञायौगन्धरायणनाटकस्य मूलकथामेव न सविस्तरमालोचयाञ्चकार अपितु तत्रत्यमेकं प्राकृतपद्यमपि संस्कृतभाषायामुद्धृतञ्चकार। दण्डी 'लिम्पतीव तमोऽङ्गानि' इत्येतस्मिन् श्लोके विद्यमानस्यालंकारस्य मीमांसां सपाण्डित्यं कुर्वाणो दृश्यते। उक्तश्च श्लोको बालचरिते चारुदत्ते च समुपलभ्यते।

५. आचार्योऽभिनवगुप्तः स्वप्नवासवदत्तं नामग्राहं कीर्तयन् किञ्च तस्यैकं पद्यमपि उद्धरन् समन्वाप्यते अभिनवभारत्यां 'क्वचित् क्रीडा यथा स्वप्नवासवदत्तायाम्' इत्यभिधाय निर्देशो य आचरितः स मुद्रितग्रन्थस्याङ्के द्वितीयस्मिन् नाट्यनिर्देशे प्राप्तो भवति। लोचने हि स्वप्नवासवदत्तस्य श्लोक एष उद्धृतो विद्यते—

सञ्चितपक्ष्मकपाटं नयनद्वारं स्वरूपतोऽनेन।
उद्घाट्य सा प्रविष्टा हृदयगृहं मे नृपतनूजा॥

एष श्लोको मुद्रिते ग्रन्थे नावाप्यते परं सम्भवमिदं यदेतत्पद्यमभिनवगुप्तसमये मूलग्रन्थे स्थितं स्यात्।

६. एषु नाटकेषु बहवोऽपाणिनीयाश्च प्रयोगाः प्राप्यन्ते। एतेन एतेषां नाटकानां प्राचीनता सिद्धा जायते। प्राकृतभाषा च या तत्र प्रयुक्तास्ति सापि कालिदास-कालप्राग्वर्तिनी प्रतीयते। //

७. भरतकृतनाट्यशास्त्रस्य सिद्धान्तानां कृत्स्नतया अननुगमनं निषिद्धानामपि दृश्यानां रङ्गमञ्चेऽभिनयनं च तं युगं सङ्केतयतो यदा भरतस्य नाट्यशास्त्रं पूर्णतया प्रतिष्ठां न लब्धुं शशाक।

एवञ्हि सर्वं विवेचनं नाटकानामेतेषां भासकर्तृत्वं प्राचीनतरत्वञ्च प्रथयति।

भासस्य सन्तीमानि रूपकाणि—

१. स्वप्नवासवदत्तम्, २ प्रतिमा, ३ प्रतिज्ञायौगन्धरायणम्, ४ पञ्चरात्रम्, ५ मध्यमव्यायोगम्, ६ दूतवाक्यम्, ७ दूतघटोत्कचम्, ८ कर्णभारम्, ९ ऊरुभङ्गम्, १० अविमारकम्, ११ अभिषेकम्, १२ बालचरितम्, १३ चारुदत्तम्। //

भासः स्वनाटकानां कृते कथावस्तु विविधेभ्यः स्रोतेभ्यः संजग्राह। तदीयेयं प्रवृत्तिस्तस्य प्रतिभायाः मौलिकतामभिव्यनक्ति। तत्र नाट्यकौशलमपि प्रशंसनीयं परं तदीयं तन्नाट्यकौशलं सकलेष्वपि रूपकेषु न समभावेन स्थितमवाप्यते। //

येषां नाटकानां कथावस्तु रामायणाद् गृहीतं वर्तते तेषां कथासंविधानं हि अति-
श्लथं दृश्यते। येषु च रूपकेषु महाभारतीयं कथावस्तु स्वीकृतं विद्यते तत्रत्या
तदीया नाट्यविदग्धता कथाविधानप्रवीणता च वस्तुतः प्रशस्ततरा श्लाघ्यतरा च
शोभते। तत्र तदीयायाः प्रतिभायाः समुज्ज्वलता सम्यग् दृष्टा भवति। इदं
चेदत्राभिहितं भवेत् तदोचितमेव नितान्तं स्यात् यत् स तेषु रूपकेषु श्लाघनीय-
तरामेव सफलतामधिजगाम येषु राज्ञ उदयनस्य कथा गीतास्ति। स्वप्नवासव-
दत्तप्रतिज्ञायौगन्धरायणयोः श्रेष्ठत्वं कारणमुदयनगाथैव। तत्कारणात् भासो
विद्वज्जगति परामेव प्रियतामविन्दत। कवी रामायणकथां परिगृह्य ययोः प्रतिमा-
भिषेकयोः प्रणयनं चकार तत्र कृतानि परिवर्तनानि न सन्ति महत्त्वपूर्णानि,
वालिसुग्रीवयोः सकृदेव युद्धे प्रवर्तनं कारणमन्तरैव रामस्य वालिनिग्रहणं तारा-
विलापस्यानुल्लेखनञ्च वस्तुतस्तु न किमपि कौतूहलं जनयन्ति वर्धयन्ति वा।
प्रतिमायां कृता मौलिक्य उद्भावनाः सन्ति हृदयाकर्षिण्यः। इक्ष्वाकुवंश्यानां
महीपानां येषां दिवङ्गततया देवायतनेषु प्रतिमाः प्रतिष्ठापितास्तेषु भूपस्य दश-
रथस्य प्रतिमायाः प्रतिष्ठापनं, रामस्य कुशलतायाः अवगमनाय सुमन्त्रस्य वनप्रति-
प्रस्थानम्, आश्रमागतस्य दशवदनस्य रामकृतमातिथ्यम्, रावणस्य पौरोहित्ये
रामस्य पितृश्राद्धाचरणम्, राम साहाय्याय भरतस्य लङ्कागमनविनिश्चय, लङ्कातो
निवृत्तस्य सीतालक्ष्मणसहितस्य रामस्य दर्शनाय मातृ पौरादिभिः सह भरतस्य
कान्तारगमनमित्येतानि परिवर्तनानि नूनं कविकल्पनाप्रसूतान्येव सन्ति।
अवश्यमेवैता कल्पना मनोभिरामाः। महाभारतीयकथात्मकेषु रूपकेषु कवी
रुचिविशेषं निदधानोऽवाप्यते। अत एव महाभारतकथाविषयकाणि रूपकाणि
रामायणकथात्मकाभ्यां रूपकाभ्यां रम्यतराणि।

मध्यमव्यायोगे दूतघटोत्कचे च इतिवृत्ते कविः कतिपयनवकल्पनाः समुद्भा-
वयन् वीक्ष्यते। मध्यमव्यायोगे भीमघटोत्कचयोर्द्वन्द्वयुद्धमथ च अनभिज्ञातत्वाद्
घटोत्कचेन भीमस्य हिडिम्बायाः सन्निधे गृह्यमाणत्वं नूनं कौतूहलावहम्। दूत-
घटोत्कचे दुर्योधनघटोत्कचयोः संवादो वीररसमयोऽतश्च मनोहरो नितराम्। दूत
वाक्ये दुर्योधन मानमर्दनपरस्य कृष्णस्य वीरवाणी नाटकीयसंवाददृष्ट्या
महनीया। ऊरुभङ्गे दुर्योधनस्य चरित्रचित्रणे कविः कथनीयामेव सफलतामवा-
प्नुवन् लोचनगोचरीभवति। पञ्चरात्रे कविर्विराटपर्वसम्बन्धिनीं कथां स्वकीयया
कलकल्पनया नूतन एव रूपे परिवर्तयति। तत्र कथायाः निर्वहणेऽपि रुचिविशेषमेव

दर्शयामास। द्रोणेच्छया दुर्योधनस्य पाण्डवान् प्रति अर्धराज्यं प्रदातुं प्रत्याश्रवणम्, कौरवैः साकमभिमन्योः समरार्थमागमनं, भीमस्यायोधनभुवि अभिमन्योर्वन्दीकरणं कवेः कल्पनानां मनोरमाणि निदर्शनानि विभान्ति। यद्यपि कविना नवनवोद्भावाः समुत्पादिताः परं ताभिर्न नाटके तस्मिन् कश्चित् प्रभावो निपतितः।

अविमारकस्य कथावस्तु न रामायणीयं न च महाभारतीयम्। तत्तु कल्पनाप्रसूतं प्रेमाख्यानकम्। मायावेशस्तत्र क्वचित् क्वचित् बलीयान् एव भूत्वा मन्तिष्ठते। चारुदत्तस्यापि कथावस्तु सरसम्। चारुदत्तवसन्तसेनयोः प्रणयबन्धनं यत् कविरवातारयत् तदतितरामेव दर्शकमानसानि प्रीणाति।

प्रतिज्ञायौगन्धरायणे यौगन्धरायणस्य स्वामिभक्तं चरित्रं नितान्तमेव मनो मोदयते। यौगन्धरायणो महासेनस्य बन्दिगृहादुदयनस्योन्मोचनाय उदयनेन सह वासवदत्ताया परिणयनाय च यां नीतिमवलम्बते सा भृशं स्तुत्या। कवेरेतत् सकलं विधानं तु मनोरममस्त्येव परं महासेनस्य राजनिवेशनदृश्यमपि न केनापि प्रकारेण न्यूनम्। तदपि स्वीयेन सौन्दर्येण सर्वेषां चेतांसि चोरयति एवमेव तृतीयस्मिन् अङ्के विदूषकोन्मत्तकयोश्च संलापोऽपि श्रवणीय एव संवृत्तः। स्वप्नवासवदत्ते पूर्णतयैव प्रभावात्मकता परिस्पन्दमानास्ति। तत्र उदयनवासवदत्तापद्मावतीनां यच्चरित्रं चित्रितं तत्तु सर्वथैव सुन्दरम्। वस्तुतः कवेरेतस्य रूपकस्य प्रणयने यादृशीं सफलतां प्रपेदे न तादृशीमन्यत्र। स्वप्नवासवदत्तं न केवलं भासकृतेषु नाटकेष्वेवोत्तममपि तु तत् नाटकजगत्यपि श्रेष्ठेषु नाटकेषु अन्यतमं श्रेष्ठं नाटकम्।

कर्णभारनाटकं यद्यपि साधारणमेव परं तत्र कर्णस्य दानशीलता कविना एतेनैव समारम्भेण समुपस्थापिता।

नाटककारस्य भासस्य वैशिष्ट्यमिदं यत् तदीयं कवित्वं नाटकीयतां भृशमुपकुरुते। तदीयानि पद्यानि नाटकीयं घटनाचक्रं गतिशीलं विधत्ते। नाटकेषु यादृशः संवादोऽपेक्ष्यते तादृश एव संवादस्तत्र कविना कुशलतया प्रतिबद्धः। तत्रत्या भाषा तदनुगुणा सर्वभावेन। श्लोकानां सन्दर्भानुरूपा भावात्मकता नाटकेषु प्रभावस्य सञ्चारणे सफलतापूर्वकं सर्वत्र संघुष्ठित। वस्तुतो हि कवेर्नाट्यप्रणयनचातुरी त्विमपि लोकोत्तरं सौष्ठवमवगाहते। तस्य भावभव्यता हृदयग्राहिणी विषयाभिव्यञ्जनप्रकारो निरतिशयचमत्कारवान्।

> "कामेनोज्जयिनीं गते मयि तदा कामप्यवस्थां गते
> दृष्ट्वा स्वैरमवन्तिराजतनया पञ्चेषवः पातिताः ।
> तैरद्यापि सशल्यमेव हृदयं भूयश्च विद्धा वयं
> पञ्चेषुर्मदनो यदा कथमयं षष्ठः शरः पातितः ॥"

इत्येवंविधा सरलसरला प्रसादप्रसन्ना नाट्यसौन्दर्यसंवर्धनपराः सर्व एव श्लोका भासस्य कृतिषु समोदं क्रीडन्तः प्रेक्ष्यन्ते । श्रवणमात्रेण एते श्लोकाः समस्ता विदितार्था भवन्ति । तदर्थावधारणे न मनागपि प्रत्यूहः समुपस्थितो भवति । दर्शकः श्रोता वा श्रव्यकाव्ये तु अर्थस्यावगमनमार्गे समुपस्थितं प्रत्यवायं सोढुं शक्नुते परं दृश्यकाव्ये न कदापि । दृश्यकाव्यस्य काव्यत्वं तु तदैवोत्तमत्वेन मतं जायते यदविलम्बेनैव तमर्थमवगमयितुं प्रभविष्णु योऽभवीति यो हि अभिनेतुरभिलषितः । कवेर्भासस्य श्लोकाः सर्वत्रैव तद्विधाः प्राप्ता भवन्ति यद्विधा नाटकेषु आकाङ्क्ष्यन्ते । संस्कृतनाटककारेषु कालिदास एव भासमतिशेते । तस्य नाटकेषु कविता नाट्यश्रियं येनावदातेन विधिना परिपुष्णाति स विधिर्नितान्तमेवाभिनन्दनीयस्तस्मात् कारणात् कालिदास इव न कोऽपि कदाचित् श्रेष्ठो नाटककारः । परं नाटकेषु कीदृशी भाषा कीदृशाः श्लोकाः कीदृशाः संवादाः सन्निवेशनीया इत्येतद्विषयिणीं कलां कालिदासः स्वप्राग्वर्तिभ्यो भासप्रभृतिकविभ्य एव परिजग्राहेति प्रतिभाति नः । भवभूतिर्महान् नाटककार इत्यत्र न संशयः परं तदीयं कवित्वं श्रव्यकाव्यानुरूपं यावदस्ति न तावद् दृश्यकाव्यानुकूलमतो भासः स्वकीयैः नाटकस्थितैः श्लोकैः प्राचुर्येण सहृदयानां हृदयानि रमयतीति मन्ये ।

भासस्य तु रूपकाणि विलोक्य स्वान्तं [illegible] प्रत्ययमिमं प्रपद्यते यद् रूपकाणीमानि रूपकाणामेव समुत्पादनाय सृष्टान्यभवन् न चान्येन केनापि प्रयोजनेन । रूपकस्रष्टृत्वात् तस्य, तदीया गद्यमयी पद्यमयी च रचना सर्वत्र मानवमानसमनायासेन नन्दयति ।

> विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्ययाद्,
> वृक्षाः पुष्पफलैः समृद्धविटपाः सर्वे दयारक्षिताः ।
> भूयिष्ठं कपिलानि गोकुलधनान्यक्षेत्रवत्यो दिशो,
> निःसन्दिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः ॥

 

कण्वस्य श्लोकः प्रशान्तस्य तपोवनस्य श्रियमस्मत्पुरः प्रादुर्भावयन् समुपतिष्ठति। निशम्यैव श्लोकमिमं न केवलं तपोवनस्य वर्णनमिदमिति मन्वानो हि पाठको दर्शको वा हृष्टो भवति अपि तु तपोवनस्य सुन्दरतां पावनतां दिव्यताञ्च अनुभवन् शान्तिञ्च ततो विन्दमानः समवाप्तः सन्धायते।

भासस्य गिरा सूक्तिरिव मनः प्रमोदयति। तत्र सत्यं गम्भीरानुभूतिश्च लोकस्य बोधयेते। सा दुरूहमपि भावं सरलतयैव प्रभावशालिन्या रीत्या प्रकटीकर्तुं क्षमते। न तत्र भाषाया प्रवाहः क्वापि प्रतिहतो भवन् सलक्ष्यते। दृश्यताम्—

सुखमर्थो भवेद् दातुं सुखं प्राणाः सुखं तपः।
सुखमन्यद् भवेत् सर्वं दुःखं न्यासस्य रक्षणम्॥
गुणानाञ्च विशालानां सत्काराणां च नित्यशः।
कर्तारः सुलभा लोके विज्ञातारश्च दुर्लभाः॥

भासस्य गद्ये विचित्रमेव वैलक्षण्यं विलसति। सन्ति यद्यपि वाक्यानि लघुलघूनि परं तानि सन्ति मनोज्ञभावार्द्राणि। न तत्र कृत्रिमताया लवोऽपि। सर्वत्र स्वाभाविकता शोभते—

(क) अहमपि नाम उत्सारितव्या भवामि। (ख) परिश्रमः तथा खेदं नोत्पादयति यथाऽयम्। (ग) आर्यपुत्रोऽपि परकीय संवृत्तः। (घ) आर्यपुत्रस्य विश्रामस्थानभूता इयमपि नाम पद्मावती अस्वस्था जाता। (ङ) आर्यपुत्र पक्षपातेन अतिक्रान्तः समुदाचारः। (च) धर्मप्रिया नृपसुता नहि धर्मपीडामिच्छेत्। (छ) तुल्यविपु कुल्यवतमेतदस्या (ज) हला, मा मैव, सदाक्षिण्य एव आर्यपुत्र य इदानीमपि आर्याया गुणान् स्मरति।

अस्थाने न भवति कस्यापि पदार्थस्य शोभा। दार्घदीर्घतरसमासानां प्रयोगस्य चेत् नास्ति नाटकम्। नाटके तु भाषा सुबोधैव भाति। क्लिष्टसमासबहुलभाषा अर्थावधारणे विघ्नमुत्पादयति, वैरस्यञ्च जनयति। तस्मात्कारणाद् भासस्तामेव भाषां प्रयुनक्ति स्वनाटकेषु यया नाटकश्रीः उत्कर्षमापादयति। तदीया समासवती पदावली अपि नाट्यगौरवे स्वदृष्टिं निदधानैव प्राप्यते। दृश्यताम्—

चल विलुलित मौलिः क्रोधताम्रायताक्षो
भ्रमरमुखविदष्टां किञ्चिदाकृष्य मालाम्।
असिततनुविलम्बिस्रस्तवस्त्रानुकर्षी
क्षितितलमवतीर्णः पारिवषीव चन्द्रः॥

अत्र यद्यपि सन्ति समासाः परं न ते अर्थबोधनमार्गे नाटकद्रष्टुः पुरः प्रत्यूहकणमपि उपस्थापयन्ति ।

अधो यः श्लोकः समुद्धियते तत्र प्रयुक्तोपमा कवेर्मनोनिज्ञानविषयिणी ऊहा प्रतिलक्ष्यते किञ्च तदीया मधुरता बिह्लणस्य चौरपञ्चाशिकां स्मारयति—

अद्यापि हरिनखर-शीकर-शीतलाङ्गीं
बालां भयाकुलविलोल-विषादनेत्राम् ।
स्वप्नेषु नित्यमुपलभ्य पुनर्विबोधे
जातिस्मरः प्रथमजातिमिव स्मरामि ॥

( अविमारकम् )

इह चौरपञ्चाशिकातोऽपि श्लोक उद्धियते येनोभयोरपि पद्ययोर्मध्ये समानभावेन निमज्जन्ती मधुरता आस्वादविषया भवेत्—

अद्यापि तामविगणय्य कृतापराधं
या पादमूलपतितं सहसा गलन्तीं
वस्त्राञ्चलं मम कराद्विजमाक्षिपन्तीं
मामेतिरोषपरुषं ब्रुवतीं स्मरामि ॥

व्यासस्य संवादा भवन्ति श्रवणीयाः । नैसर्गिकतालिङ्गितत्वात् प्रवाहपूर्ण-भाषास्थितत्वाच्च तेषां, ते श्रोतॄणां मनांसि भृशं प्रीणन्ति—

दुर्योधनः—कथं कथं दायाद्यमिति,

वने पितृव्यो मृगया-प्रसङ्गतः कृतापराधो मुनिशापमाप्तवान् ।
तदा प्रभृत्येव स दारनि-स्पृहः परात्मजानां पितृतां कथं व्रजेत् ॥

वासुदेवः—पुराविदं भवन्तं पृच्छामि—

विचित्रवीर्यो विषयी विपत्ति क्षयेण यातः पुनरम्बिकायाम् ।
व्यासेन जातो धृतराष्ट्र एष लभेत राज्यं जनकः कथं ते ॥

भासो मानव-हृदय-विकारावबोधने परमप्रवीणतामधिगच्छति । बाह्य-प्रकृतिवर्णनपटुतापि तत्र लक्षिता वीक्षिता भवति । अलङ्कारेषु स उपमायां स्वभावोक्त्याञ्च नितरां स्नेहं निदधानश्च प्रतिलक्ष्यते । चरित्रचित्रणे तस्य कुशलता नितरामेव श्लाघनीया वर्तते । यत इमे सर्वे गुणास्तस्य कृतिषु स्वयमेव विक्रीडिता भवन्ति । पात्राणि तदीयानि न शार्कराक्रीडनका इव । तानि तु सन्ति

अनुमन्ति। तेषां व्यक्तित्वमस्ति अविस्मरणीयं तानि एकैकानि स्वप्रभावं जने जने स्थापयितुमर्हन्ति। को हि जनस्तदीयं—

वनगमननिवृत्तिः पार्थिवस्यैव तावद्
मम पितृपरवत्ता बालभावः स एव।
नवनृपतिविमर्शे नास्ति शङ्का प्रजाना-
मथ च न परिभोगैर्वञ्चिता भ्रातरो मे॥
ताते धनुर्न मयि सत्यमवेक्षमाणे
मुक्तानि मातरि शरं स्वधनं हरन्त्याम्।
दोषेषु बाह्यमनुजं भरतं हनानि
किं रोषणाय रुचिरं त्रिषु पातकेषु॥

इत्येतादृशोदात्तचरित्रचारुं रामं विस्मर्तुं प्रभवति? उदयनश्च स्वगाम्भीर्यतया स्वधीरोदात्ततया च सर्वेषां मनोनिकेते अनायासेनैव प्रविशति। यौगन्धरायणस्य बुद्धिमत्ता लोकचातुरी च न कस्य मानवस्य मानसमावर्जयति। तदीयां स्तांस्तान् गुणान् प्रेक्ष्य को न जनस्तत्र प्रीतिं निबध्नाति? अस्य स्त्रीपात्राण्यपि अद्वितीयान्येव सन्ति। येन सकृदपि स्वप्नस्य वासवदत्ता दृष्टा या पद्मावती प्रेक्षिता न स कदापि द्वे अपि ते विस्मर्तुं शक्नोति। वासवदत्तायां कविना यदौदार्यं यच्च पातिव्रत्यं चित्रितं यश्च तत्र समुदाचारः प्रदर्शितः तत्सकलमपि यैश्चित्रं स्मारं स्मारं मनः परामेव मुदं गच्छति। पद्मावत्याः शालीनता तस्याः शीलं मार्दवं च हृदये स्त्रीयस्याविप्रभावं निपातयन्ति। पति-कल्याणाय वासवदत्ता यस्य हि त्यागस्य परिचयं प्रददाति सः अनुकरणीयः स्पृहणीयश्च वर्तते। तदीयं तद्विधं चरित्रं नारीजगत्या आलम्बनमयति। सा हि वासवदत्ता पद्मावत्यां भगिनीभावं धरति न तत्र सापत्न्यजनिता मत्सरता स्वस्याति। तदीयस्य हृदयस्य क्षेत्रा परमोदारतैव अस्माकं समक्षं तदा साकारा भूयोपतिष्ठते यदा वयं पद्मावती-मुदयनस्य प्रेमसङ्गिनेन पश्यामः। अविमारके कुरङ्गयाश्चरित्रमपि नितान्तमेव मधुरमालिखितमवाप्यते। तत्र या भावुकता-सुधा कविना सर्वतः उद्भासिता तां निपीय को नात्मानं धन्यं मन्यते। चारुदत्तचरित्र-चित्रणे कविर्नाट्यकलाकौशलमद्भुतमेव विदधाति स्म। स तत् प्रेम वर्णयति यत्र शुद्धता विशदता च राजेते। स्वप्न-वासवदत्ते नाटकीयानां घटनानां या सत्ये निरामा सङ्गतिः सा अवलोकयति सा तु सर्वथैव अद्वितीया अपूर्वा च।

✓भासस्य नाटकेषु मानवजीवनस्य विविधानि बहूनि च श्रेयांसि दृश्यानि भवन्ति। तस्मात् तदीयानि नाटकानि मानवलोकस्य कृते नितान्तमेव हितं सम्पादयन्ति। न तत्र वर्णनं प्रचुरमस्ति न च कथावस्त्वेवातिविस्तृतमस्ति अतस्तानि रङ्गमञ्चे सम्यग् अभिनेतुं योग्यानि सन्ति। सर्वत्र च तत्र नानारसानामुन्मीलनं दृश्यते। नाट्यकलादृष्ट्या न तेषु कोऽपि दोषो दृग्गतो भवति। तत्र वस्तु, नेता, रस इत्येतानि त्रीण्यपि तत्त्वानि मञ्जुलानि समुचितान्येव शोभन्ते।//

✓भासं कविः कालिदासः शूद्रकश्च विशेषतोऽनुचक्रतुः। कालिदासस्य भासस्य च रूपकेषु भावसाम्यं संविधानसादृश्यं च पर्याप्तमवाप्यते। शूद्रको मृच्छकटिकं प्रणेतुं भासस्य चारुदत्तमशिश्रियत्। तदीयं मृच्छकटिकं चारुदत्तस्यैव बृहत्तरं रूपमस्ति।

यदा वयं शाकुन्तले चतुर्थेऽङ्के मृगलतादिकं प्रति शकुन्तलायाः कोमलान् भावान् ईक्षामहे तदा स सन्दर्भो भासस्य अभिषेकनाटकीयं तं सन्दर्भं संस्मारयति यो हि मन्दोदरी-भावभङ्गिभिर्विभूष्यमाणोऽस्ति। स्वप्नवासवदत्तस्य 'निस्त्रस्तं हरिणाश्चरन्त्यचकिता देशागतप्रत्ययाः।' इत्येतद्विधाः पङ्क्तयः शाकुन्तलस्य 'विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगाः।' इत्येतादृशीः पङ्क्तीः सानन्दं स्मृतिपथे समारोपयन्ति। इत्थं भास-कालिदासयो रूपकाणि परस्परं भावे संविधाने च सान्द्रं साम्यं निदधानानि प्रायेण दृग्गोचरीभवन्ति।

१२ वस्तुतो भासो रूपककारेषु हि अतितरामेव श्रियं बिभ्राणो शोभतेतराम्। // तमुद्दिश्य सत्यमेवोक्तम्—

"सुविभक्तमुखाद्यङ्गैर्व्यक्तलक्षणवृत्तिभिः।
परेतोऽपि स्थितो भासः शरीरैरिव नाटकैः॥"

## कालिदासः

विदुषां परमात्मनोऽभीप्सयानुरञ्ज्या संस्कृतवाङ्मये साम्प्रतमपि काव्यानां या संख्यावशिष्यते सापि नात्यविशाला। महत्यां विशालायां संख्यायां विद्योतमानानि सर्वाण्यपि काव्यानि रमणीयरमणीयतराणि पर्यवलोक्यन्ते। न तेषु एकतममपि काव्यमेतादृशं यस्य साहित्यिकं महत्त्वं साहित्यसंसारे न स्यात् कस्मिंश्चित् काव्ये चेत् शब्दानां रमणीयता प्राधान्येन परिस्फुरति त्वन्यस्मिन् शब्दार्थयोरुभयोरपि लोकमोहनं पावनं स्वरूपं परिलसति, क्वापि भावानां भव्यता चित्तानि तु क्वापि चारुचमत्कृतरचना मोदयन्ति यदि क्वचित् दुर्बोधानां क्लिष्टक्लिष्टानां पदानां गुम्फनता प्रभवति तु क्वचित् अलङ्काराणां प्रौढप्रभावात्स्फुटा चित्तनुते; कस्मिंश्चिद् यदि गम्भीरा वाग्मिता प्रोल्लसति स्फारस्मेरा तु कस्मिंश्चिदन्यैव कापि दिव्या रूपमाधिरोहति। तदेवं हि सर्वाण्यपि काव्यानि सत्यमनुपमान्यनुल्लङ्घनीयानि च प्रायेण। तेषां सर्वेषामपि काव्यानां मध्ये कालिदासकृतानि काव्यानि स्वकीयानन्यलब्धवैशिष्ट्येन स्वीयसर्वातिशायिना गुणनिकुरम्बमहिम्ना मेदिनीनिखिललोकरञ्जनकुशलत्वेन प्रसादेन च श्रेष्ठानि सन्ति। इदमेव कारणं यत् समग्रमपि जगत् कविकुलशेखरं कालिदासं—

"पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासः।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव॥"

"पुष्पेषु जाती नगरीषु काञ्ची
नारीषु रम्भा पुरुषेषु विष्णुः
नदीषु गङ्गा नृपतिषु रामः
काव्येषु माघः कविकालिदासः॥"

इत्यादिभिरनल्पप्रशंसासम्पन्नैर्वचनैरहर्निशं प्रशंसन्तश्चिरादाकर्ण्यन्ते। यस्मात् कारणात् कालिदासः प्रभूततमां लोकप्रियतां भजते तस्माद् कारणात् न एव काव्यरसानभिज्ञमर्त्यास्तमस्तुत ह्यर्थेनदर्शि विचारणीयमेव। अपि किं यादृक्

कालिदासो विद्वान् आसीत्, न तादृक् दर्षिपु कश्चिदपि विद्वान् आसीत्; किं स एव नानाशास्त्रपारावारीणो बभूव, न कवीनां मध्ये कश्चिदन्यः कविर्नानाशास्त्र-निष्णातः सञ्जातः ? वस्तुस्थितिरियं न, कालिदासादपि विदुषो विद्वत्तराः किञ्च नानाशास्त्रेषु गम्भीरतरां निष्णाततां निदधानाः कवयोऽन्ये बहवो विलोक्यन्ते। ते सर्व एव स्वकीयं वैदुष्यप्रतापमेव लोके आरोपयितुं प्रयतमानाः मन्यन्ते, प्रायेण तेषु भूयिष्ठा जन-समाजे स्वीयं प्रभावमेव विशेषेण संस्थापयितुमुत्सुका लक्ष्यन्ते न ते जनतायाः सविधे प्रयाय तया सह स्थातुं भोक्तुं पातुं गातुं वक्तुं हसितुं विलपितुं शयितुं जागरीतुं च स्वमानसे उत्कटां कामनां निदधानाः अधि-गम्यन्ते। ते सरलायां सुबोधायां गिरायां स्वं भावं जनवृन्दस्य पुरतः स्थापयितुं न चेष्टमाना वीक्ष्यन्ते, तेषां कथनस्याभिव्यक्तिर्न साधारणजनसमुदायं प्रति सम्मानभावनां निदधाति, ते एतादृशीं रचनां समुपन्यस्यन्ति या मानवानां मस्तिष्के तु स्वकीयमाश्चर्यकरं प्रभावं समारोपयति परं न तेषां हृदये स्वीया-त्मीयता-बिन्दुमपि क्षरति; ते लोकस्य तु बुद्धितत्त्वमावर्जयितुमभिलषन्ति परं हृदयतत्त्वं मनागेव अथवा अल्पमेव स्पृशन्ति—इत्यादीनि सन्ति कारणानि बहूनि यद्वशात् न ते तद् यशस्तां श्लाघां तां प्रतिष्ठाञ्च गाहमाना दृष्टा भवन्ति यद् यशो यां श्लाघां याञ्च प्रतिष्ठां कालिदासो विन्दमानो वीक्ष्यते। कालिदासः संसारं सेवितुं जनुर्जग्राह। सः स्वकीयानि काव्यानि सर्वेषामेव कृते—बुधवराणा-मबुधानाञ्च कृते—ससर्ज। सः स्वकीयवैदुष्यस्य प्रतिष्ठापनाय काव्यानि न चकार स तु लोकाराधनाय—लोक-कल्याणाचरणाय—नैजरचनां रचयामास। स तां भाषां प्रयुयोज या जनताया विद्वन्मालायाः—उभयोः—अपि मानसमाव-र्जयति। स जनतायाः सकाशे स्वीयं विद्वत्तेजोऽसह्यं वितनितुं न गतः अपि तु सः "अहं तवैव" इत्येतामात्मीयतां निधातुमुपस्थितोऽभवत्। तस्य भावाभि-व्यक्त्यां मधुरता सरलता निरभिमानभावो हृदयाकर्षणनैपुण्यं च विराजन्ते—इत्यादीन्येतेतानि सन्ति कारणान्येवंविधानि यद्धेतोः सः—

> "अस्पृष्टदोषा नलिनीव दृष्टा हारावलीव ग्रथिता गुणौघैः।
> प्रियाङ्कपालीव विमर्दहृद्या न कालिदासादपरस्य वाणी॥"

इत्यादिप्राज्यप्रशंसानां स्पृहणीयानां समवाप्तेः सौभाग्यमुपभुनक्ति।

वस्तुतो न शब्दानामाडम्बरो, न चित्रता, नालङ्कारप्रचुरता, न वर्णना-नामतिशयविस्तारो न दुर्बोधा वाक्यावली, न समासानां भूयस्कता न कठोरा

उक्ता, न च वाचकवाच्यविपश्चितो प्रतीतैव काव्यत्वमादधाति परं तदाधानस्य कारणमन्यदेव किमपि भवति । अत एव तु ध्वन्यालोककारः प्राह—

"प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत् तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥"

इयमुक्तिः कालिदासमहाकविस्थीन् लक्ष्यीकृत्यैव निगदिता आनन्दवर्धनेन । कालिदासस्य काव्येषु नैतिकतायाः उज्ज्वलतमं रूपं, श्रेयःप्रेयसोः समीचीनः समन्वयः, आन्तरस्य हृदयङ्गमं स्वरूपं, जीवननिर्माणकारिणामाचाराणां दिव्यैव धारणा सर्वत्र उत्तरला भूत्वा प्रवहति । एवंविधवैशिष्ट्यविभूष्यमानत्वात् तेषां, जगती यावन्मात्रायां तत्र रमते न तावन्मात्रायां सा भारविभवभूति-माघश्रीहर्षादीनां कवितायाम् ।)

(अस्मदीयस्यैतस्योद्गिरणस्यायं भावो न कदापि यद् भारविभवभूतिप्रभृतीनां कवीनां काव्येषु सम्पत्तिसौन्दर्याणि क्षीणं शोभते तथापि या सरसतैव विराजते परं तस्या उद्भावनाय यादृशी नैसर्गिकी भाषा कालिदासेन स्वीकृता अभिव्यक्ति-विधा यादृशी तेन शरत्पूर्णेन्दुचन्द्रिकेवाह्लादिनी मधुरोज्ज्वलाऽविर्भाविता, प्रकृते-र्यादृशं समन्वयतामरूपाणिमुपपन्नं निरूपणं तेन विशदीकृतं भारतीयसंस्कृतेरन्त-र्दीप्यमानपारम्पर्यस्य चित्ताकर्षकं यादृशं मधुरमुन्मीलनं तेनाभिनीतं, गुणरीतिरूपालङ्कारादीनां सम्भारो यादृशोचितया सीमया तेनोपात्तः समासेन परिमितेन च वाचानिचयेन यादृशं मनोमेधारञ्जनं सुचिरं वर्णनं तेन कृतं नान्य. कोऽपि कविस्तथाविधं सामर्थ्यं प्रदर्शयन् संलक्ष्यते ।)

कालिदासस्य काव्येषु याः रमणीयाः सुन्दरताः याभिर्विशिष्टताभिः अन्येषां कवीनां काव्यरत्नानि सौन्दर्याणि अतिशेते ता. प्रदर्शयितुमिह प्रयासो विधीयते ।

महाकविः कालिदासो महाकाव्यद्वयं लिलेख कुमारसम्भवम्, रघुवंशञ्च । कुमारसम्भवं कालिदासस्य कलायाः सुन्दरतमं निदर्शनमस्ति । सन्तुलनाऽभिव्यञ्जन-कौशलद्वारा प्रकृतिमानवयोरन्तरगमनलिप्सायाः प्राणस्पन्दनकारिणी भावनायाः चारुं कुमारसम्भवकाव्यनिर्दर्शनं नितान्तं परिदृश्यते । कवेर्यन्मनोरमं रूपं तत्र धारणां भजत् प्रेमस्वरूपं प्रकटयति । कामदहन–पार्वतीतपस्या–शिवपार्वतीपरिणयादिकथा-वस्तुसूत्रे पाठकानामनिशमानन्दप्रदानकं सन्तं दुःख–कर्मोपरतस्य विहाय नान्यत् किमपि । कामवासनानां दमनेन पारमार्थिकप्रेमाधिगमनं न कदापि सम्भवम् ।

तपश्चर्ययैव मनसः शुद्धिर्भवति प्रेम्णि च परिनिष्ठितस्वमुत्पद्यत इत्येषः अमर-सन्देशः कवेः समग्रमपि विश्वप्रति प्रतिष्ठितस्तत्रास्ति ।

महाकाव्ये रघुवंशे दिलीपरघुप्रभृतीनां सूर्यवंशोद्भवानां नृपराजां चरित्राणि चित्रीकृत्य कविर्देवेषु विप्रेषु गुरुजनेषु भक्तिभावं निधातुं गो सेवितुमतिथिं संमानयितुं त्यागार्थं धनं संग्रहीतुं लोकानुरञ्जनाय राज्य-भारं वोढुं विषयेषु स्वामित्वं स्थापयितुं जीवनमुत्तमयितुं योग-साधनयात्मानं द्रष्टुं च मानवसमाजमादिशति स्वरचेदम् ।

(कवि कालिदासो यमपि भावं चित्रयितुमिच्छति स न सः अभिधावृत्तिमाश्रित्य वक्तुमुत्सहते स सदर्थं सततं व्यञ्जनामेव परिपूजयन् दृग्गोचरीभवति गिरिसुतायाः लज्जाशीलतामाभ्यन्तरिकं प्रेम तस्या आनन्दातिरेकगोपनप्रवृत्तिञ्च स न शब्दैः प्रकटीकरोति तद्दिशि सः सूक्ष्मं सङ्केतं विधातुं व्यञ्जनामाश्रयति । 'लीलाकमलपत्राणि गणयामास पार्वती' इत्येषा परिमितशब्दावलिरेव तदीया व्यञ्जनया पार्वतीगतांस्तान्, सर्वानुपरितिर्दिष्टान् गुणान् विशदतया समुपस्थापयति ।

"क्षतात् किल त्रायत इत्युदग्रः..."इत्यादिश्लोकस्थितैः कतिपयैरेव शब्दैः स "एकातपत्रं जगतः प्रभुत्वम्..."; "भूतानुकम्पा तव चेदियं गौः..." इत्यादिश्लोकद्वये यत्किमपि प्रोक्तं तत्सर्वमेव व्यञ्जनया प्रतिवदन् समवाप्तो भवति । )

"वाच्यस्त्वया मद्वचनात् स राजा" इत्यादौ स 'राजा' 'श्रुतस्य', किञ्च 'कुलस्य' इत्यादीनि त्रिचतुराणि परमलघुलघुपदानि एव प्रयुङ्क्ते परं तैरेव पदैः सः "राज्ञः कर्त्तव्यं यत् स न्यायमाचरेत्, न स क्वापि पक्षपातं दर्शयेत्, अहमपि तव प्रजानां मध्येऽस्मि, मयि यो दोष आरोपितः स वस्तुतो युक्तोऽयुक्तो वेति त्वया निश्चेतव्यमतस्त्वया दण्डनीय आरोपितदोषो जनः। त्वं तु जगति ज्ञानिनां विदुषां मध्ये गीयसे, त्वदीयन्तु तु तत्कुलं यस्मिन् सगरभगीरथदिलीपदशरथसदृशा विश्वविदितन्याया नृपालाः समभवन्, एवं स्थिते कस्मात् त्वयाऽहं त्यज्ये किं त्वदीयैषा जनविशेषरञ्जनप्रवृत्तिर्जिनवगोंचारित-इत्यादिक-प्रचुरप्रचुरतरभावान् व्यञ्जनयाभिव्यक्तीकुर्वन् उपलभ्यते । वस्तुत इह द्वित्रोदाहरणानामुपस्थापनं व्यर्थमेव (कवेस्तु काव्यानि सकलान्येव प्रारम्भादन्तपर्यन्तं व्यञ्जनाप्रधानायां भाषायामेव गीतानि सन्ति । )

कालिदासः शृङ्गारी कविः कविप्यस्ति । स प्रेमपर्युपासको महान् भावुकहृदयवान् सौन्दर्यसेविषु शिरोमणिः कविरिति सर्वमपि जगज्जानाति । तस्य

दृष्टि सौन्दर्यस्य कोमलां भावनां सम्यगभिज्ञानात्येव न, तत्प्रकटीकरणेऽपि सा परमप्रवीणा। सौन्दर्यवर्णनेषु तद्वीथेषु तस्य सरस मन सञ्चरमाण केन न प्रेक्ष्यते? ससारे यत् सौन्दर्यं बाह्यप्रकृत्यां रमते तदेवाभ्यन्तरिक्यामपि प्रकृत्यां क्रीडति। न बाह्य सौन्दर्यमाभ्यन्तरसौन्दर्याद् भिन्नम्। स्थान भिन्नतावश्य पर न परमार्थ तत्तत्र द्वैतता—इत्येतज्ज्ञापनार्थं कविना कालिदासेन स्वकीया ऐसनी काव्यरचनायां प्रवर्तिता—

"पुष्प प्रवालोपहित यदि स्याद् मुक्ताफल वा स्फुटविद्रुमस्थम्।
ततोऽनुकुर्याद् विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुच स्मितस्य॥"
'आवर्जिता किञ्चिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम्।
पर्याप्तपुष्पस्तवकावनम्रा सञ्चारिणी पल्लविनी लतेव॥'

इत्यादिश्लोकै कस्य सौन्दर्यभावनायां परिचय सरलतयैव जायते।

'मित च सार च वचो हि वाग्मिता' इत्येष गुण कालिदासे विशेषतया विराजते। माघ भवभूतिप्रभृतिकवय एत गुणं निदधाना अपि उपेक्षन्ते तम्। ते तु वचन विस्तार एव प्रसीदन्ति। पुरसुन्दरीणा वर्णन कविकालिदासेन कृत माघेनापि कृत पर द्वयोरपि वर्णने महान् भेदोऽवगम्यते। कालिदासस्य वर्णने व्यञ्जनाया श्री समवलोक्यते पर माघस्य वर्णने न। माघस्य वर्णन विलासमय सदपि कालिदासस्य विलासविरहितमपि वर्णन न जातु पारयति—

"जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्नां न बबन्ध नीवीम्।
नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वास॥" ( रघौ )
"वल्यासितमहोत्पलप्रभाबहुलीकृतप्रतनुरोमराजिना।
हरिवीक्षणाक्षणिकचक्षुषान्यया करपल्लवेन गलदम्बर दधे॥' ( माघ )

कालिदासस्य गद्य सरल समासाधिक्यरहित स्वाभाविकमाधुर्यश्रिय परिदधद् दृश्यते पर भवभूतेर्गद्ये एषा विशिष्टता न विद्यते, तत् कठिन समासबहुलमस्वाभाविकञ्च भवति। दृश्यतां कालिदासगद्यम्—

"अयि आत्मगुणावमानिनि, क इदानीं शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन वारयति।" ( शाकु० )

सम्प्रति भवभूतेर्गद्यमीक्ष्यताम्—

"अहो दलन्नवनीलोत्पलश्यामलस्निग्धमसृणमांसलेन देहसौभाग्येन विस्मय-

विलसितताण्डवसमानमौग्ध्यसुन्दरस्थौरनादरखण्डितदाडिमरसारास   दिग्धदन्तुर मुखमण्डल आर्यपुत्र आलिखित ।" (उत्तरे)

कालिदासस्य सवादेषु यत् सौष्ठव यत् पाटव यद् आर्जव शोभते न तदन्यत्र प्राप्यते । अत्र कतिपयस्य सवादा निर्धार्यन्ते तान् अधीत्य च अतितरा मनोऽभिराम सौन्दर्यमिति सुधाभिर्निर्णयनीयम्—

सिंह —अथैकधेनोरपराधचण्डाद् गुरो कृशानुप्रतिमाद् बिभेषि ।
शक्योऽस्य मन्युर्भवता विनेतु गा कोटिश स्पर्शयता घटोघ्नी ॥
राजा—कथ नु शक्योऽनुनयो महर्षेर्विश्राणनाच्चान्यपयस्विनीनाम् ।
इमामनूना सुरभेरवेहि रुद्रौजसा तु प्रहृत त्वयास्याम् ॥ (रघौ)
—निरचोत्पलचारुलोचनस्तव चैद्येन पराहुपक्रम ।
यदुपुङ्गवबन्धुसौहृदात् त्वयि पाता ससुरो न वासव ॥
सात्यकि —परितप्यत एव नोत्तम परितप्तोऽप्यपर सुसवृति ।
परवृद्धिभिराहितव्यथ स्फुटनिर्भिन्नदुराशयोऽधम ॥ (माघ)

कालिदासस्य सवादेषु शब्दसञ्चोपयुक्तातिरेकेण दृष्टा भवति । तत्र केवलमर्थैव विशिष्टता न पर तत्र कथास्वपि गतिशील विशेषयते । भासस्यापि नाटकीय-सवादादादिक चेत् तुलनात्मकया दृष्ट्या दृश्यते तदा सोऽपि न कालिदासीय-सवादात् सुन्दरतर सिद्ध्यति । यतो हि भासस्य शब्दयोजनाया न तादृशी सुघटितता, सुमधुरता नादमयता च प्राप्यते यादृशी कालिदासस्य सवादादिषु ।

कालिदासस्य कविता सर्वत्र समासगुणगुम्फिता वैदर्भीरीतिललिता च प्राप्यते, यथैकताम्—

'किमात्मनिर्वादकथामुपेक्षे जायामदोषामुत सन्त्यजामि ।
इत्येकपक्षाश्रयविक्लवत्वादासीत् स दोलाचलचित्तवृत्ति ॥ (रघौ)
निश्चित्य चानन्यनिवृत्तिवाच्य त्यागेन पत्न्या परिमार्ष्टुमैच्छत् ।
अपि स्वदेहात् किमुतेन्द्रियार्थाद् यशोधनाना हि यशो गरीय ॥ (रघौ)
अल विवादेन यथाश्रुतस्त्वया तथाविधस्तावदशेषमस्तु स ।
ममात्र भावैकरस मन स्थित न कामवृत्तिर्वचनीयमीक्षते ॥ (कुमार)
दृश्यकाव्येष्वपि तदीयाया कवितायामेष एव गुण एषैव रीति सलक्ष्यते—
उदेति पूर्व कुसुम तत फल
घनोदय प्राक् तदनन्तर पय ।

निमित्तनैमित्तिकयोरयं क्रम-
स्तव प्रसादस्य पुरस्तु सम्पदः ॥ ( शाकुन्तले )

उन्मत्तानां श्रवणसुभगैः कूजितं कोकिलानां
सानुक्रोशं मनसिजरुचः सह्यतां पृच्छतेव ।
अङ्गे चूतप्रसवसुरभिर्दक्षिणो मारुतो मे
सान्द्रः स्पर्शः करतल इव व्यापृतो माधवो मे ॥ (मालविकाग्निमित्रे)

कालिदासो रससिद्धः कविः । यमपि रसं प्रति सः दृष्टिं क्षिपति तं निपुणेनैव प्रकारेण अभिव्यनक्ति । शृङ्गारः करुणस्तु तस्य कवितायां कामपि अद्भुतामेव विच्छित्तिं बिभ्राणः पर्यवलोक्यते ।

रामाज्ञया लक्ष्मणः सीतां गहने कानने त्यक्तुमागतोऽस्ति । सः सीतां यदा महीपते रामस्य शासनमुक्तवान् तदा सीतायाः सञ्जाता या शोकाकुला दशा तां कविशब्देषु पश्यन्तु—

"ततोऽभिषङ्गानिलविप्रविद्धा प्रभ्रश्यमानाभरणप्रसूना ।
स्वमूर्तिलाभप्रकृतिं धरित्रीं लतेव सीता सहसा जगाम ॥
इक्ष्वाकुवंशप्रभवः कथं त्वां त्यजेदकस्मात् पतिरार्यवृत्तः ।
इति क्षितिः संशयितेव तस्यै ददौ प्रवेशं जननी न तावत् ॥"

शृङ्गारस्य संयोगपक्षो विप्रलम्भपक्षश्चोभौ कविना चारु चित्रितौ । संयोगशृङ्गारस्य मधुरतायां चेतनमपि चेतोहरं वर्ण्यते तदा कुमारसम्भवस्याष्टमः सर्गो विलोकनीयः । संयोगशृङ्गारस्यालम्बनपक्ष उद्दीपनपक्षश्च द्वावपि यथैकत्रैव द्रष्टव्यौ तत्तद्देशस्यैव काव्यस्य समस्तवर्णनाविषयस्तृतीयः सर्गोऽनुशीलनीयः । विप्रलम्भशृङ्गारस्य सौन्दर्यं मनः स्पृहयति तदा मेघदूतकाव्यमेव तद्दर्शनं स्यात् ।

एषा इह संयोगशृङ्गारश्रीः अवलोक्यताम्—

सस्वजे प्रियमुरोनिपीडितं प्रार्थितं मुखमनेन नाहरत् ।
मेखलाप्रणयलोलतां गतं हस्तमस्य शिथिलं रुरोध सा ॥

अत्र च विप्रलम्भशृङ्गारोऽपि दिङ्मात्रं विलोक्यताम्—

अङ्गेनाङ्गं प्रतनु तनुना गाढतप्तेन तप्तं
साश्रेणाश्रुद्रुतमविरतोत्कण्ठमुत्कण्ठितेन ।
उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्ती
सङ्कल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः ॥

संसार विषय विमुखस्यापि कण्वस्य मन शकुन्तला स्वभर्तृगृहं गच्छन्ती वीक्ष्य कियद् दूयते इति दृश्यताम्—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
　　कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः
　　पीड्यन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः ॥

कालिदासस्योपमाना रसात्मकत्वाद्रसरमणीयत्वमतितरामेव च मर्मस्पर्शित्व-मवलोक्यते । औचित्ये सन्दर्भे च शोभायाः समुत्पादनस्य कला तासु नितान्त-मभिनन्दनीयास्ति । द्वित्राण्युपमालङ्कृतान्युदाहरणानि वीक्ष्यन्ताम्—

"तां जानीथाः परिमितकथां जीवितं मे द्वितीयं
　　दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
　　जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ॥"

विधिविधानरूपशापाच्चक्रवाकी निशायां चक्रवाकाद् वियुक्ता भवति यक्षोऽपि स्वप्रभुर्वैश्रवणस्य शापान्निजकान्तात् पृथक् अस्ति—अतस्तदीया कान्ता कान्त-वियोगखिन्नास्ति द्वयोरपि सन्तापस्य समानत्वात् कवेः 'चक्रवाकीमिव' इत्येषोपमा कियती समुचितसन्दर्भशोभासंवर्द्धिका च वर्तते । पद्मिन्युपमितत्वात् यक्ष-प्रेयस्याः, तस्याः सुकोमलत्वं कृशाङ्गत्वं मितत्वस्पर्शसुखत्वादिकञ्च विषयमनोज्ञ-भावेन प्रेक्षकस्य पुरतः समुपस्थितं भूत्वा तन्मनो नन्दयन्तीत्यतोऽपि विलोकनीयं वर्तते ।

"अथ प्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे कुशली गुरुस्ते ।
यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः ॥"

इह मन्त्रकृतामग्रणीर्वसिष्ठ उष्णरश्मिसदृश उक्तस्तेन तस्यामिततेजस्त्वं तस्माल्लब्धज्ञानस्याज्ञानध्वान्तविनाशनसामर्थ्यञ्च प्रकटीभवति । उपमायाः विधमानोपयुक्तता समुचितता च नितरामेव मनः प्रीणाति ।

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
　　र्निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
　　शैलाधिराजतनया न ययौ न तस्थौ ॥

द्वन्द्वानि; वीक्ष्यन्तां तावद् उपमितामननानां कलनिर्ह्रादानां सारसानां पङ्क्तयः; घ्राणविषयीक्रियतां सानन्दं सरसीवीचिविक्षोभशीतलोऽरविन्दामोदः। वस्तुतः कालिदासः प्रकृतेरन्तःस्थलस्य सूक्ष्मद्रष्टास्ति।

कवेः कालिदासस्य प्रतिभाचातुरी चरित्र-चित्रणेऽपि सर्वथैव कुशला। अतः कविर्यस्यापि चरित्रं चित्रयति सः सजीवो भूत्वा हृदयावर्जको भूत्वा समक्षे समुपस्थितो जायते। तस्य पात्रे पात्रे जीवन-शक्तिराचरणचूडं चकास्ति। व्यक्तित्वं प्रतिपात्रस्य सशरीरं भूत्वा नेत्रयोः पुरतोऽवतरति। उमा-सीता-शकुन्तलोर्वशी-मालविकादिकानि स्त्रीपात्राणि तदीयानि को विस्मर्तुं शक्नोति? दिलीप-रघु-राम-दुष्यन्त-पुरूरवःप्रभृतिपुरुषपात्राणि प्रेक्ष्य को न मानवः प्रेरणाविशेष मश्नुते? किं सिंहाय स्वदेहमुपानयन् महाराजो दिलीपः कदापि कस्यचनापि जनस्य हृदयात् स्रस्तो भवितुमर्हति? किं कदापि—

> "बभूव रामः सहसा सबाष्पस्तुषारवर्षीव सहस्यचन्द्रः।
> कौलीनभीतेन गृहान्निरस्ता न तेन वैदेहसुता मनस्तः॥"

इत्येतस्मिन् श्लोके दृश्यमानो रामः सकलामपि मानवजाति स्वदिशि आवर्जयन् न रोदयति? अपि किं दुष्यन्तस्य—

> "येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना।
> स स पापादृते तासां दुष्यन्त इति घुष्यताम्॥"

इत्येषा गिरा मानसाश्वासनदायिनी जगतीतलस्थप्रजाजनस्य युगयुगान्तरं यावत् श्रोत्रेन्द्रियं न प्रीणयिष्यति?

(कालिदासस्य काव्यानां सौन्दर्यमिदमपि विद्यते यत् तत्रानेकशास्त्राणां ज्ञान-गरिमापि स्वकीयया दिव्यया तेजःप्रभया मानवानां मनांसि नितरां रञ्जयन् उज्जृम्भते। कालिदासस्य तत्तद्दर्शनशास्त्रादिसिद्धान्ताः काव्याकारा एव भूत्वा समुपस्थिता भवन्ति। न च तेषां सत्ता तदीयेषु काव्येषु स्वकीयां वैभवश्रियं पृथगेव विधाय स्थातुं प्रभवति—इत्येतदस्ति च कवेः कालिदासस्यान्यदपि विलक्षणं वैदग्ध्यम्। दृश्यताम्—

> "पणबन्धमुखान् गुणानजः षडुपायुङ्क्त समीक्ष्य तत्फलम्।
> रघुरप्यजयद् गुणत्रयं प्रकृतिस्थं समलोष्टकाञ्चनः॥"
> "न नवः प्रभुराफलोदयात् स्थिरकर्मा विरराम कर्मणः।
> न च योगविधेर्नवेतरः स्थिरधीरा परमात्मदर्शनात्॥"

इत्यादिना योगदर्शनस्य सौन्दर्यं कियत्या मनोज्ञया रीत्या,

"अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ॥"

इत्यादिनोपनिषत्प्रतिपाद्यं ब्रह्म कीदृशेन वचनपाटवेन,

"बहुधाऽप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः ।
त्वय्येव निपतन्त्योघा जाह्नवीया इवार्णवे ॥"

इत्यादिना अद्वैतवादस्य निखिलतेजस्तिरस्कारिणं तेजश्छटां कीदृशेन ललितेन सङ्केतेन,

"त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम् ।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥"

इत्यादौ "अजामेकां लोहितशुक्लकृष्णाम्" इत्येतां श्रुतिं कियत्सौष्ठवेन कविः प्रतिपादयन् दृग्गोचरीभवति ।

कालिदासः परमोदारमनाः परमप्रशंसनीयप्रतिभाप्रकाशपेशलो महाकविरासीत् (साम्प्रदायिकताभ्यः स सर्वथैव दूरे समतिष्ठत । सः सर्वमपि विश्वं स्वदेशं मेने । स स्वधर्मं तदेवामंस्त यः श्रुतिस्मृतिमतो वर्तते । तस्य महामानसतां प्रकटयतः श्लोकाविमौ—

"एकैव मूर्तिर्बिभिदे त्रिधा सा सामान्यमेषां प्रथमावरत्वम् ।
विष्णोर्हरस्तस्य हरिः कदाचिद् वेधास्तयोस्तावपि धातुराद्यौ ।" (कुमारे)

"रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते ।
देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः ॥" (रघौ)

धन्या सा गिरा यस्यामेष कविः स्वकाव्यानि ससर्ज, धन्येयञ्च धरा यत्र स जज्ञे

## शाकुन्तला

"उडेस्ट दाउ दी यङ् ईअर्स ब्लोसम्स एण्ड दी फ्रूट्स ओफ इट्स डिक्लाइन, एण्ड ओल बाइ व्हिच दी सोल इस चार्म्ड, इन् रेप्चर्ड फीस्टेड, फेड, उडेस्ट दाउ दी अर्थ एण्ड हेविन इटसेल्फ इनवन सोलनेम कम्बाइन ? आइ नेम दी, ओ शकुन्तला, एण्ड ओल एट्वंस इज सैड ।"

इत्येतस्यां हि चतुष्पद्यां यूरोपीयेन कविरत्नेन 'गोथे' महानुभावेन शकुन्तला-मुद्दिश्य स्वीया दृष्टिः स्फुटतया प्रकटीकृतास्ति नो तदीयेयं चतुष्पदी केवल-चतुष्पदी। वस्तुतः सा प्रकाशस्तम्भ इव प्रतीयते। समग्रमपि नाटकं तदीयेन ज्योतिषा सर्वथा प्रकाशमानं भवति किञ्च नाटकीयाभ्यन्तरिकी प्रकृतिः प्रत्यग्रु-न्मीलनं कृत्स्नतया। (गोथे विश्वसिति यत् शकुन्तला तारुण्यकुसुमाकरस्य सुमनःसौरभं प्रौढतायाः शुचितायाश्च परिपक्वं मधुरं फलमेव प्रत्यक्षं भुवि विनाति। सा स्वर्लोकं भूलोकं च एकीभूतमेव विदधती समुल्लसति नूनम्।)

गोथे कवेरिमामुद्भावनां भावुकतामेव तदीयां मत्वा वयमुपेक्षितुं प्रभवा-मोऽथ चेदमपि वयं विचारयितुमर्हामो यत् सः अभिज्ञानशाकुन्तलमुपलक्ष्य कवितात्वेनाद्रियते परमेतत्तु तथ्यम्। (तस्य श्लोक एष आनन्दावेगवशात् प्रादु-र्भूताश्रुक्तिरिव न। अपि तु अस्ति स सदसद्-व्यक्तिरतुमर्मनीषिणः आलोचकस्य गम्भीरविमर्शनानन्तरप्रकटीकृतो निर्णयोऽभिनवः। विद्वान् आलोचकः स्वकीयैः शब्दैर्निर्देशविशेषमपि कुरुतेऽङ्गितम्। गोथे स्पष्टरूपेणाभिदधाति यद् अभिज्ञानशाकुन्तलं तत् तत्त्वं वर्तते यत्र विकासस्येतिवृत्तं सन्निहितमस्ति, तत्फले परिणमद् विकस्वरं सुमनमस्ति, तद् दिवि विपरिवर्तमाना वसुधास्ति, अस्ति च तत् तत् पार्थिवत्वं यत्राध्यात्मिकं परिस्पन्दते।)

असंशयं हि शाकुन्तले संयोगानां समवायः शोभते। नाटकस्य प्रचुरं रूपकं भौतिकत्वात् आध्यात्मिकत्वात् संविवेशं वर्तते। प्रथमस्याङ्कस्य मध्ये चेद् आदिमा योगा अस्थायिनो रागात्मका मनोभावविभाविता भौतिकाः सन्ति तदा न्यस्याङ्कस्यान्तरालेऽन्तिमा योगा आध्यात्मिकाः सन्ति, ते आनन्दामृत-वर्षिणो विरहानामुदयात् संश्रित्य समुपतिष्ठन्तेऽस्मद्दृष्टिसम्मुखे। (नेदं रूपकं

कस्यचन विशेषस्य भावविशेषकमपि, आहोस्विद् नोत्तमन्तकमपि चरित्र-
विशेषमेवाभिव्याप्य प्रणीतमपि तु पार्थिवसौन्दर्यधरात प्रेमोत्थाप्य नैतिकं
सौन्दर्यस्याविनाशिनीं धरामध्यासयितुं तद् ( प्रेम ), सृष्टम् । )

कालिदास परमसुखपूर्वकं भुवं स्वर्गीयेणैश्वर्येण मण्डयति । तस्य मेदिनी ह्यस्या नैसर्गिकतया नाकेऽन्तर्भवति यत्र च "तपो सन्निधस्थलमेतद्"इत्येतद्-बोधनाय सीमारेखामपि विधातुमीशिमहे ( प्रथमेऽङ्के कविः शकुन्तलाया यौवन-सुलभदुर्बलताया पतनं नैव निगूहति, स स्पष्टमेव तावत् पतनं नायकस्य नायिकायाश्च चरित्रं समानभावेन दर्शयितुमुपक्रमते यावद्धि तादृशे तावति च वयसि सम्भवम् । स तारुण्यस्योद्दामवेगवत्या गत्याश्चञ्चलतामुन्मत्ततां चाटु-भाषणशीलतां च सम्यगेव सर्वाङ्गीणतयाऽऽलिखन् लक्ष्यते । गम्भीरत्रपाया *सुहृत्सम्प्रस्थानस्य च मध्ये स जायमानं संघर्षं समीचीनतयोन्मीलयितु* क्षमोऽवाप्यते । शकुन्तलाया तारुण्यस्य दीप्यमानं प्रमाणमिदं यत् सा दुष्यन्ते समागते न पूर्वं स्वकीयान् भावावेगान् संयमोपेक्षणोन्मुखान् दर्तुं कदापि उत्सहते, *सा नैव जानाति यत् कथं मन्मथं वशीकुर्यात् कथञ्च सा स्वान् भावान् निगूहेत ।* सा क्षणे सर्वथानभिज्ञासीत् न सा स्वान्तं गोपायितुं धैर्यमेव धारयति स्म न चापि सा प्रेम्णो बलीयस्यां दशायामस्यां रक्षते स्म नाथवा चरित्रमेव स्वच्छन्दिनो दुष्यन्तस्य शङ्कते स्म । तपस्विनो दुहिता स्वशरीररक्षणाद् दूरे आसीत् तथैव, यथा मृगो हि वन्यो भयाद् दूरेऽवतिष्ठते । )

दुष्यन्तः शकुन्तलां नितान्तमेव स्वाभाविकभावेन जेतुमवसरमविन्दत् । *यथा स्थविरस्याचरितस्य गम्भीरतरां पावनताम् आलिङ्गितुं न मनागपि शक्नु-*य एभने स्म तथैव स न अन्यूनीभावं गमिता स्वाभाविकीं परिपूर्णतामधिरुह्यन्त्या स्वस्या पावनतामपि प्रदर्शयितुमपि दूरपि क्लिष्टतामनुबभूव । इदमस्ति सदाचारा शकुन्तलाया द्वितीयं प्रमाणम् ।

यत्र पुष्पं स्वस्योपरि निपतति स्म परिमार्ष्टुं न भाग्यमवेक्षते । अस्ति शकुन्तला आश्रुता, स्वस्तदुपरि चित्तं भवति, परं तथापि स्वीयां मनोज्ञां शुचितां सा आगमार्थमेव शान्तिमभीष्ट । स्नो यद्यपि शकुन्तलोपरि *चित्तमनुष* पर न सा तत्र अपेतात् । यथा तरलस्वभाव तुरङ्ग इव गिरिनिर्झरं स्रोत इव सा मदविधा तावदपि निर्मलैव अवस्थत ।

कालिदास रचा तपस्विपालिता नववयस्का नायिका शकुन्तला प्रकृते-रङ्कनीयपर्णोपरि विचरितु सर्वथैव स्वच्छन्दतयोन्मोचयन् समवाप्यते। न स कुत्रापि कदापि च निरर्गलं ता विचरणात्। तादृशेन प्रकारेण प्रदर्शयन् अपि पवित्रितां सयमवन्धुर शोकसहनशीलमाध्यात्मिककठोरानुशासननिष्ठजीवनं चरन्त्यामादर्शपत्न्या पर्यन्तरयन् प्रेक्ष्यमाण सञ्जायते। (प्रारम्भे आरमनात्मनि एव विस्मृता प्रकृतिप्रकर्षादेशाचर विटपवल्लतिगादिव प्रतिभाति सा परमन्ते नितान्तगम्भीरमात्मान विदधती नारीव शोकनिलीना, प्रमादसहिष्णुरसयमो-पवासादितप परायण। धर्मास्मनामीश्वरानुरागपराणामाचरणमाचरन्ती स्वशरीर मनाविधि कठोरैस्तनुता नयन्ती लोचनगोचरीभवति। महासागरस्य सरितश्च, प्रकृते निसर्गभावस्य च शम व्यापारयो सम्मेलनास्पदता नीता कालिदास स्वकीया नायिकामनुपमया कलाकुशलतया कल्पितवानित्यत्र न स्तोकोऽपि सशय। तस्य पितासीत् महर्षिर्माता च तस्या आसीदप्सरा। तस्या जन्मविवाहततपम समजायत पर तस्या भरण पोषण च तस्मिन् हि आश्रमोटजे जनूत्र यत्र प्रकृतिदेव्या आत्मसयमस्य च, सुन्दरताया स्वनिरोधस्य च वसति सुहृद्भावपूर्वक दृग्गतीभवति। असत्यपि तत्र कस्मिश्चिदपि सामाजिके रूढिगते बन्धने नियत सा भूमिर्धर्मसम्बन्धिभि परम्पैर्नियमोपनियमैः परिगृह्यमाणावलो-क्यते। शकुन्तलाया गान्धर्वोद्वाहोऽपि वीक्ष्यते तदनुगुणामेव मुद्रा बिभ्राण। अत एव तत्र प्रकृते स्वतन्त्रता प्राप्यते पर सोपयमस्य समाजाभिमत ग्रन्थि गुप्यते। नूनं नाटकमुपमानविहीन भवत् समग्रेऽपि साहित्ये सशोभते, तत्र स्वतन्त्र तया सहात्मनियन्त्रणस्य विद्यमानत्वात्। उभयोरप्येतयो सरलयोस्तत्त्वयो सम्परायात् तदीया प्रसन्नता अप्रसन्नता सर्वा, सयोगा वियोगाश्च सरला उपस्थिता भवन्ति।)

शकुन्तलाया सरलताया नैसर्गिकता विभाति। न वस्तुतस्तु सा स्वाभाविकी सरलता मिरन्दायामुल्लसति। तयाद्वयोरपि विभिन्नाया परिस्थित्या परिपोषणमत्र तद् भिन्नताया कारण प्रतीयते। शकुन्तलाया सरलताया बाह्यतत्त्वस्य अणी-यानपि भागो न वर्ततेऽनएव मिरन्दाया सरलता न तस्या सरलता सत्रदृति। अस्माभिरनुपद दृश्यते यत् शकुन्तलाया सर्गो तस्यास्तरङ्गिन्या प्रथमकल्लिकाम्य प्रतिपादयन्त्याउपस्थिते भवत। सा ऐश्विनाया कस्मिश्चिदप्यद्रो परिचिता नासीदित्येतश्च वस्तु शनय यतो हि यत्र तपोवने सा वर्धते चक्रे न तदेवागार

गते चतुर्थेऽङ्के यदा शकुन्तला पितुः कण्वस्य शुभाशिषस्तपोवनस्य च सकलस्य शुभाः कामनाः आदाय समुदं स्वभर्तुः सदनं प्रतिष्ठते तदास्मदीयं मन्मानसं तास्ताः प्रियप्रियतराः आशाः निबध्नाति तस्यैवोपरि भविष्यदशनिपातः।

यदा विदूषक आह 'किं दाव गोदीए अवगओ अवसरत्थो ?' तदा राजा सस्मितं प्रावोचत्—"सकृत्कृतप्रणयोऽयं जनः। तस्या देवीं वसुमतीमन्तरेण मदुपालम्भमवगतोऽस्मि।" नृपतेः प्रणयगतायाः एतस्याश्चञ्चलताया स्वरूपमेतत्र वस्तुतोऽस्त्यर्थरहितं पञ्चमस्याङ्कस्य प्रारम्भे कविः आचार्यत्वं प्रपन्नेन पाटवेन प्रदर्शयति यद् दुर्वाससः शापः मानवीयप्रकृतौ किं कीदृशं च बीजं वपति हन्त।

चतुर्थमङ्कं पश्यन्तो यदा वयं पञ्चममङ्कं प्रपद्यामहे तदा वयमकस्मान्नवीन एव वातावरणे प्रविशामः। साधु-महात्मनामादर्शसंसाराद् वयं राज्ञः प्रासादमुपसरामो यत्र दयाविहीनानि हृदयानि कुटिलकुटिलतराश्च प्रेमपथाः सर्वत्र सम्प्रेक्ष्यन्ते। सुवर्णस्वप्नो हि य आश्रमपदे विलोकितोऽभूत् स इह भग्नो भवितुमारभते। शकुन्तलया सार्धमागतौ द्वावपि शिष्यौ तत्क्षणमनुभवतो यत्तौ हि अपरमेव किमपि जगत् समवाप्तौ स्तः। सा हि जगती सर्वतः अग्निना प्रदह्यमानास्तीति तावनुबभूवतुः। पञ्चमस्याङ्कस्यादावेतद्विधैः स्पर्शैः संस्पृश्य कविर्दुष्यन्तकृतशकुन्तलापरित्याग-सहनार्थं नः सज्जयति।

स्वकीयैः सान्द्रशोकैरिमां विशालां रिक्तां पिपर्ति। कण्वस्याश्रमम्प्रति शकुन्तलाया निवर्तनं न कालिदासस्तदानीमुचितं मन्यते। दुष्यन्तेन कृते परित्यागे, न तस्यास्तदाश्रमे शान्त्या स्वस्थतया च सहवासः कदापि सम्भवः। अधुना तु तदीया प्राक्तनी स्थितिः परिवृत्तिमुपेतास्ति, तस्याः सम्बन्धस्तस्मात् समाजात् सम्प्रति किञ्चिद्दूरे नीतो वर्तते। यदि भूयस्तस्याः स्थितिस्तस्मिन्नेव पुराणे वातावरणे कृताभविष्यत् तदा समुपस्थितामवस्थां प्रति वस्तुविरोधस्यैव प्रदर्शनमघटिष्यत। इदानीं तस्या व्यथितायास्तस्य गरीयसः शोकस्य कृते युक्ततरं योग्यतरञ्च नीरवत्वमपेक्षितमासीत्। न कविर्नवे स्थाने तानि पुरातनानि मित्राणि तदीयानि दर्शयति न च तान्याश्वासनान्येव संनिदधाति यानि तद्विधस्थित्यैव जनिततापापनयनाय अपेक्षितानि भवन्ति। कवेर्मौनं हि तद्दिग्विषयकं केवलमस्मदीयायास्ताः शरणरहितता निस्तब्धतासम्बन्धिनी चेतनाञ्च गुर्वी निदधाति या खलु शकुन्तला परिवेष्ट्य संस्थितास्ति। नात्र सन्दीतिश्चेत् पतिं त्यक्त्वा पत्नी कण्वस्याश्रमम्प्रति प्रापिताभविष्यत् तदा नूनं महर्षेराश्रमपदं दिग्व्यापिना क्रन्दनध्वनिना परिपूर्णमभविष्यत। शकुन्तलाया तत्र प्राप्तायां नियतं पादपानां वल्लरीणां च तदीययोरुभयोः सख्योरपि अविरतविलापस्य प्रस्फुटनं सम्भवमासीत्, तस्मादेव कारणात् कविर्नं तां तत्र निनायेत्यस्माभिरूह्यते। परं मारीचाश्रमस्य पर्णशालायामपरिचितायां तु सर्वथैवानुद्वेगोऽनिर्वेदश्च अस्माभिः प्राप्यते। केवलमस्मन्नयनयोः पुरतः परित्यक्तायाः शकुन्तलायाः सा मूर्तिः समुपस्थिता जायते या निःसीमं शोकं वहन्ती ध्यानस्थस्तपस्वीव तपस्यायां निरतास्ति।

सम्प्रति दुष्यन्तः प्रगाढानुशयेनाभिक्षीणतां गतोऽस्ति। एष अनुतापस्तप एव। यावच्छकुन्तला नैतेनानुशयतपःसाधनेन विजिता भवति तावत् तज्जयनं न कामपि महत्तां दधाति। यौवनोद्धततरङ्गस्यास्मादुत्थितस्य वेगः शकुन्तलां नृपाय प्रददौ परं न वस्तुतस्तत् तस्य शकुन्तलोपरि जय इति वक्तुं शक्यते। तस्या अधिगमनं तु यथार्थं समर्पणेन, तपसा वा भवितुं शक्यम्। यत् प्रयासमन्तरेण लभ्यते तत् हस्तात् स्खलनमपि भवति लघुतयैव। तस्मादेव कारणात् कविर्द्वावपि प्रणयिनौ तपश्चर्याग्निना चिरं तापयति येनोभावपि तौ तथान्योन्यं प्रतिगृह्णीयातां यथा भवेतामसम्बन्धसम्बद्धौ। यदि शकुन्तलायाः परिग्रहस्तदैव भूपतिना कृतो भवेत् यदा सा प्रथममेव तद्राजभवनम्प्रति नीताभवत्

तर्हि नियतं तस्यां स्थितायां तया हंसपदिकानामेव मेधया संवर्ध्येत। सापि शोकाकुलमुपेक्षितरमर्थविरहितं जीवनं नयन्ती नूनं दृष्टा स्यात्।

शकुन्तलार्थं तु तद्विधोऽपि प्रपञ्च शुभाशंसैव असिद्ध्यत यद् दुष्यन्तस्तां कठोरदाढर्येन प्रत्याचख्यौ। यदा तस्याः कठोरतायाः क्रूरायाः कुफलं तमेव प्राहरत् तदा न स तस्यामात्मानं विरागं कर्तुमशकत्। अदमनीयस्तस्य स्वल्पतरः शोकस्तस्मानसमद्दीव्वत् शकुन्तलां च स तथा संचस्कार यत् सापि तत्रैव ममौ। अतः प्राक् न कदापि स भूपस्तादृशमनुभवमपातुमयसरमासादयति स्म। नान पूर्वं सः कदापि याथार्थ्येन प्रेमरतादर्शं रूपं धर्मञ्च द्रष्टुमनेहसमेव लब्धवान्। वस्तुतस्तु पुनर्विधानुभूयुपभोगार्थं सम्राज सौभाग्यमेव न निवर्तति। तेषामाकाङ्क्षाः आयासमनन्तरेणैव तोषं तृप्तिं चाश्नुवन्ति तस्मात् ते तत्र कदापि समवाप्तु शक्नुवन्ति यत् केवलं तपसा त्यागेन च सुलभं भवति। नियतिर्दुष्यन्तं तदानीं गभीरतरे परितापे प्राक्षिपत्। तेन स पारमार्थिकप्रेम्णः पात्रमभवत्। शकुन्तलाप्रत्यादेशस्तमामूलममार्जयत्।

इत्थं कालिदासः कलुषितस्य मानसस्य दोषं हि सर्वं साफल्येनाभ्यन्तरानलेन प्रदहन् संलक्षितो जायते। स तथा न चक्रे येन बाह्यदृष्टिर्न तत्सर्वं द्रष्टुमर्हेत्। यदान्तिमेऽङ्के अवस्तारः पतति वयं सर्वाण्यपि दुरितानि निध्वस्ततां गमितानि पश्यामः। अस्मत्पुरतः परिपूर्णपरितोपामितानन्दजनिता हि शान्तिः सर्वत्र समितं विलसन्ती परिस्फुरति। शकुन्तलादुष्यन्तयोर्यदा परस्परं मेलनं घटते तदा तयोस्तस्याः सन्निधौ नैतिकता सर्वाङ्गीणभावेनावदाततां शुभ्रतां पुनीततां गमिता दृष्टिपथेऽवतरति। वस्तुतो गोथे सत्यमाह—'शकुन्तला कम्बाइन्स दी ब्लॉसम्स दी ब्लॉसम्स ऑफ स्प्रिंग विद दी फ्रूट्स ऑफ ऑटम्स, इट कम्बाइन्स हैविन एण्ड अर्थ' इति। निश्चप्रचतया शकुन्तलायामेकः सुरलोको निक्षेपित, परमेपरो इरलमाकृतः। कविना प्रदर्शितं यत् प्रथमेऽङ्के दुष्यन्त- शकुन्तला च प्रणयकौशिरिवेन किंयुतनुच्छतां परिपोषयन्तौ दृश्येते परं सप्तमेऽङ्के तयोर्योगो भरतस्य मातृपितृरूपेण किंपत् सत्यतां विभ्राणः प्राप्तो भवति। प्रथमोऽङ्कः स्फूर्जनेनोल्लेषणेन च दीप्यमानोऽस्ति। तत्र तरलतारापाङ्गे प्लवमाना महर्षेरतनूजां, तस्या सख्यौ चञ्चलतया समुदं धावन्त्यौ, नवाः सुमनोभिर्हसन्ती वनवल्लरीः, नीरभोन्मत्तां भ्रमरावलिं, पादपान्तर्हितस्य मनोहररूपस्य दुष्यन्तस्य सेचनघटैः पादपेभ्यः पय प्रददतीनां तिसृणामपि वयस्यानामनसूयाप्रियंवदाशकुन्तलानां

सविस्मयं पर्यवलोकनञ्च प्रेक्षामहे वयम् । यदेव मङ्गलमयं नन्दनविपिनं दुष्यन्तमानसोन्मादयित्री शकुन्तलाध्यासाच्चेत्रे तत्र एव निर्वासितां च भवन्तीं ता वयमीक्षामहे । अस्माद्धि यापितशाकुन्तलबाल्यादरण्यात् तदरण्यं नितान्तमेव भिन्नमेवाभवत् यद् मङ्गलायतारां भरतस्य जननीं शकुन्तलां प्रति शरण प्रत्यपद्यत । न तत्र पादपान् सिञ्चन्तीनां कन्यकानां दर्शनं भवति, न तत्र ता मतर्तयः एव, या दर्शकानां मनांसि क्लेदयन्ति न च तत्र श्यामाकमुष्टिपरिवर्द्धितको हरिणीशावक एव वीक्षितो भवति । तत्र एक एव बालः समस्तमपि कान्तारसंसारस्य सौहृदं भोजयन् प्रेक्षितो जायते । स एक एव सर्वेषामपि अनोकहानां प्रियतामुपचयोन्मुखीनां लतानां कमनीयतां, पुष्पाणां वृन्तानाञ्च बन्धुरताञ्चात्मन्यभिव्याप्य परिस्फुरति तत्र पर्णशालामधिवसन्त्य. प्रियताप्रोतचिन्तां वहन्त्यः काश्चन स्थविरा सावहिततया चपलं बालमेवैकं लालयन्त्यो दृष्टा भवन्ति । तत्र वयं शकुन्तलामागच्छन्तीं पश्याम । सा परिधूसरे वसने वसाना नियमक्षाममुखी धृतैकवेणि. अतिनिष्करुणभर्तुर्विरहव्रतं दधाना शुद्धशीला दृक्पथेऽवतरति सर्वेषामप्यस्माकम् । तस्याः दीर्घकालाभिव्यापिभिस्तपोभिस्तदीयं तद्घं प्रदग्धं यत् तया रहो दुष्यन्ते कृतात्मसंगतादर्जितमासीत् । साम्प्रतं सा नूतनेनैव गौरवेण मण्डितास्ति, सास्त्यधुनोत्तमम्तुल्मातृभावस्य ललितैव प्रतिमा । इदानीं कस्तां हातु प्रभवेत् ।

इह नाटककारस्तदेव दर्शयन् लक्ष्यते यद्सौ कुमारसम्भवे दर्शयामास। (स मन्यते यत् तदेव प्रेम शश्वद् विजयते तस्यैव प्रेम्ण. सततमभिनन्दनं क्रियते तदेव पुनीतं पेशलं च प्रेम कथ्यते यन्नैतिकादर्शाधिष्ठितं भवति । नैतिकतामवज्ञाय यत् स्वच्छन्दतया निरङ्कुशतया चाचरणे नीयते तदचिरेणैव म्लायति उपरमते च । एष प्राक्तनकालस्य कविस्तत् प्रेम प्रेम न मन्यते यद् बाह्यप्रदर्शनवर्ती निश्छित्तिमाश्रित्य विजृम्भते । प्रेम्णोऽन्तिमं चरमं वा लक्ष्य भवति श्रेय इति तदीय. सुदृढो विचार' । स वदति यत् तत्प्रेम न सुन्दरं न च पावनं न चानन्तं पुरुषस्य नार्याश्च, यदस्ति सङ्कीर्णं व्यष्टिगतं च, यन्नात्मानं समाजे वितनोति न च यत् कुटुम्बे अतिथिषु प्रतिवेशिषु च स्वं विदधाति विस्तीर्णम् । )

भारतस्य कृते प्रवृत्तिरपि प्रिया निवृत्तिरपि प्रिया । तदुभयत्र स्थितिः । भारतं सांसारिकजीवनप्रयोजनेन तु आत्मानं बहुषु प्रतिष्ठापयति तत् तत्र जाग्रुपनाम्यादिकं किमपि नोपेक्षते । तद् भौतिकस्वार्थं विस्तार एव रन्तुमीहते परं

तत्राध्यात्मिकजीवननिमित्तेन रह एव निवासं कामयते। तपोवेदिकायान्तु नर्तक्यथेव भूत्वा निषीदति। प्रवृत्तिनिवृत्तिविषयकयोरनयोर्द्विविधयोः सिद्धान्तयोर्मध्ये वर्तते एकतेति कालिदासो मन्यते। कुमारसम्भवं अभिज्ञानशाकुन्तलं च स इमामेकतामेव दर्शयितुमलेखीत्। सिद्धान्ताविमौ एकतस्तु आत्मानं गार्हस्थ्यजीवने विनिवेशयतोऽपरतश्च विरक्तके जीवने हि सन्निवेशयतः। प्रजापतिर्यं संसारमसृजत् तत्र मानवीयः पुत्रः सिंहशावकैः सार्धं क्रीडन् दृश्यते उटजवासिनः साधोश्च आत्मा गृहजीवनं तपोमयजीवनञ्चोभयमपि बिभ्रत् परिदृश्यते।

वैराग्योन्मुखानां संन्यासिनां पर्णशालामाधारशिलां कृत्वा कालिदासः गृहस्थस्य गृहं प्रतिष्ठापयन् प्राप्यते। कामस्य सम्बन्धमैन्द्रियवासनातो दूरे विधाय स तं विरक्ततायाः पूते शुभे च सिंहासने आसयन् परिलक्ष्यते। भारतीयधर्मग्रन्थेषु कामो धर्मोचित प्रदर्शितोऽस्ति। तस्योपरि पूर्णतया तैर्यम-नियमानां शासनं स्थापितमस्ति। कालिदास सौन्दर्यतत्त्वैरद्भुतमथितं विधाय तं कामसम्बन्धमाकलयति। तदुत्थापितायां सुन्दरतायां निर्मलता मर्यादा श्रेयश्च प्रकाशन्ते। सा स्वै सौन्दर्यैः सकलमपि संसारं परिष्वजते। सा त्यागमयी वर्तते; सा प्रकृत्या न रजसाविला, तस्या अन्तराले न मानवस्य मानन्याश्च धर्माद्पेता असंयता मलिना च प्रीति अणुमात्रमपि स्थानं लब्धुमर्हति। सा शाश्वतिकशान्तिमात्मनि सन्निदधाति। सर्वा अपि चञ्चलता उच्छृङ्खलताश्च तत्र तथैव निगृहीता भूत्वा संकुचिता भवन्ति यथा शुभविधानस्य समुद्रे सकलान्यपि विध्वंसकारीणि स्रोतांसि दासीभूतानि भूत्वा सन्तिष्ठन्ते। तस्मात् ईदृशं प्रेम पाशविकात् अनियन्त्रिताच्च प्रेम्णो ह्युत्कृष्टतरम्। कालिदासः शाकुन्तलं समुपस्थाप्य जनतामिदमेव आदर्शं धर्म्यं पावनं प्रेम परिग्रहीतुं प्रेरयति।



( २७ )

## कालिदासस्य जीवनदर्शनम्

महामहिमशाली कविकुलालङ्कारः कालिदासो भारतवसुन्धराया महतीमेवालौकिकशेमुषीश्रियं परिगृह्य प्रादुर्बभूव। अतिक्रान्ता यद्यपि सहस्रद्वयसमासितिरोहितता गतस्य तस्य ज्योतिष्मतो नक्षत्रस्य, परं समालोकमिलायामसौ वितनुते स्म वसुमतीयं तेनास्मानं चिराद् गौरवगर्भी मन्यमाना सगर्वं नैजमौलिमुन्नमयन्ती समुद् नन्दति साम्प्रतमपि।

महाकवेः कालिदासस्य दृक् प्रालेयनगादपि तुङ्गा पाथोधेरपि गभीरतरा बभूव। तत्र यथा शास्त्राणामखिलानां प्रभासितरा दीप्तिमती भूत्वा निबभौ तथैव तत्र ललितानां सर्वासामपि कलानां समन्ताया कान्तिश्चाचीचकासत। तदीये कविरूपे तस्या[1] धैविध्यविषयिणी धीश्च समस्फुरति, एतावद्वदेव न तत्र तस्य व्यवहारपटीयस्त्वताया आभापि मोमुदीति। स व्यावहारिके हि आदर्शे प्रत्येति स्म न च धार्मिके। तदीयं विपश्चित्त्वं न केवलं विचक्षणवृन्दारकाणां हिताय शोभते-अपितु जगतीतलवर्तिनां समेषामपि पुंसां कृते विराजते। तदीयं काव्यं न नीरसं तत्र प्राणिमनःपरिप्रीणनक्षमा सान्द्रा स्निग्धता समुच्छलति। तस्य कविता यथा भुवमेव नाकं विधातुं प्रयस्यन्त्यवलोक्यते न तथा सा तां दिवं गमयितुं प्रयतमानावाप्यते (तस्य रचनानां विपुलेयमाकाङ्क्षा यन्मानवः स्वकर्तव्यानि स्वधर्मञ्च आचरन् क्षितौ सर्वविधामपि विभूतिं सर्वाणि च सातानि सन्निवेश्य मुपभुञ्जानो भूभुवनमुद्यततरमनुष्ठातुं चेष्टेत। स कविः सांसारिकेषु सौन्दर्येषु[3] पारमार्थिकं सौन्दर्यमवलोकयाञ्चकार।) यद्यप्यसौ प्रकृतेरुत्सङ्ग एव सततं जीवनं नयन् प्रतिभाति परमेतदपि प्रतिलक्ष्यते यदसौ नैजमतिं प्रभूतसम्पदैश्वर्यामितवैभवविलासविश्रामधामेषु नगरेषु चकार। दैवतभावे श्रद्धावानपि तस्य धीरधीयामभिरुचिं मानवमात्रे निबबन्ध। मानवः कः? स क्व वसति, क्व क्रीडति, क्व हसति, क्व रुदति, क्वोपविशति, क्व तिष्ठति, क्व तुष्यति, क्वानुरज्यति, क्व विरज्यति, क्व स्वपिति, क्व च जागर्तीत्यशेषमवं सम्यगज्ञासीत्। स मानवं तेभ्य

---

[1] रघौ ४,८। [2] शाकुन्तले, डॉ० कपिलदेव प्रणीते, पृ० २७०, २११।

[3] रघौ १०, २०।

पदार्थेभ्यो नाराद्दाष्ट्पति येष्विन्द्रियवृन्दं रमते परं तमजस्त्रं त्यागे तपसि यज्ञे च प्रवर्तयन्नेव मंलक्ष्यते। मानवस्यात्मनोऽसीमत्वाद्वाकाङ्क्षति स यदसौ (मानवः) स्त्रीयां महनीयतां स्वकीयं रूपं स्वकीयामसीमाञ्च शक्तिमभिजानीयात्। स न यस्मिन् कस्मिन्नप्येकस्मिन् क्षेत्रे स्वं सीमितं विधाय सन्तिष्ठेत। सः सर्वत्रापि विहरेत्, सर्वत्रापि रुचिं दर्शयेत्, सर्वानपि भोगान् उपभुञ्जीत परं तथा कुर्वाणो न स्वविवेक-प्रयोगं विस्मरेत्। महाकवेः कालिदासस्यैषोपश्लोकनीया दृष्टिर्जीवनम्प्रति तदीयेयमुदारा धीः स्फुटतयैव तस्य तत्तद्वचनानां साहाय्येन सचेतसां पुरः समुपस्थिता सञ्जायते। अतस्तदुक्तीनामिह परिभावनमुद्धरणानाञ्च समुपस्थापनं कृतं स्यात्।

कालिदासो जीवनस्य सौन्दर्यं सार्थकत्वं समुत्कर्षञ्च यत्र यत्र प्रेक्षाञ्चके स्वीयेषु काव्येषु तत् तत् परमपेशलेन वक्रोक्तिवन्धुरेण मार्गेणाभिव्यानक्। स जीवनस्य सुषमापन्नार्ति-प्रशमने विवेद तस्मादसावभिदधौ—

"आपन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम्।" (मे० पू० ५३)

अर्थस्य संग्रहं तमेव सः प्राशंसत् यस्यागायानुष्ठीयते। वक्ति च स.—

"आदानं हि विसर्गाय सतां वारिमुचामिव" (रघौ ४,८६)

स तदेव जीवनं धन्यममंस्त यदस्ति तपःपूतम्। तदीयोऽयं द्रढीयान् विश्वासो यत् तपोऽन्तरेण न सिद्धिः क्वापि सम्भवा; तस्मात् सः सर्वत्रापि तपो-महिमानं गायन् आसाद्यते। शाकुन्तले सः—

"वल्मीकार्धनिमग्नमूर्तिरुरसा सन्दष्टसर्पत्वचा" (७,११) इत्यादिना,

"कृताभिषेकां हुतजातवेदसं त्वगुत्तरासङ्गवतीमधीतिनीं।

दिदृक्षवस्तामृषयोऽभ्युपागमन् न धर्मवृद्धेषु वयः समीक्ष्यते॥" (कु० ५,१६)

कुमारसम्भवे इत्यादिना च स्वपाठकवर्गम्प्रति नैवं भावानुबन्धनं कस्मिन् जीवनेऽस्तीति सोत्कण्ठं प्रकटीकरोति। स. सुहृद्भावेन विश्वासमिमं निदधाति यन्मानवस्य भद्रं पूज्यानां वरिवस्यायामस्ति सन्निहितमतोऽभिदधाति—

"प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः" (रघौ १,७९),

परोपकारेण शून्यं जीवनं न वरं मेने। तद्विधाज्जीवनात्तु स मरणमेव महीय-स्त्वेनावगमयन् स प्राह रघुवंशे—

"किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः।

एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु" ॥ २, ५७ ॥

जीवनस्य विशिष्टोद्देश्यं कविरयं नितान्तमेव सुगुप्तं निदधाति न तु सञ्जी-वनमेव जीवनं मन्यते यत्र नाना सद्गुणाः विभ्राजन्ते तद्-दृष्ट्या जीवनस्या-र्थोऽस्ति—"गुणवत्ता" अतः स शंसति—"पदं हि सर्वत्र गुणैर्निधीयते"। (र० ३, ६२) सत्यमेवेदं जगति प्रतिपदमनुभवगम्यं चेदमेव प्रत्यक्षं दृश्यते। जीवनस्य सार्थक्यं यतेन उपकारकर्मणि। यज्जीवनं परार्थं प्रयुज्यते तदेवास्ति जीवनं श्लाघ्यमित्येषास्ति कवेर्विचारणा। स तामेवेत्थमाकल्पयति—

"पर्यायपीतस्य सुरैर्हिमांशोः कलाक्षयः श्लाघ्यतरो हि वृद्धेः" (र० ५, १६)

न केनापि मानवेन श्रेयसि सृज्यते—इत्येतद् बोधयति यन्मानवः प्रकृत्या श्रेयःशीलोऽस्ति येन आत्मानं श्रेयसि न नियोज्य नियोजयत्यन्यत्र तदा स तथा केनापि दोषेण प्रेर्यमाण एव कुरुते तस्य स्वतः श्रेयस्यवृत्तिशीलत्वात्। तदीयमूलप्रकृतेः श्रेयःप्रियत्वात् सिद्धमिदञ्च यन्मानवस्यान्यथाचरणं यत् प्राप्यते तदुपाधिदोषादेव। इदमेव सर्वं विचिन्त्य कविर्भणति अप्रस्तुतविधाना-श्रितया रीत्या—

"उष्णत्वमग्न्यातपसम्प्रयोगाच्छैत्यं हि यत् सा प्रकृतिर्जलस्य॥"
(र० ५, ५४)

सञ्जीवनमपि न कविः साधु मन्यते येनोपकृतो न प्रत्युपकृतः। अतः स उदीरयति—

"प्रतिप्रियं चेद् भवतो न कुर्यां
वृथा हि मे स्यात् स्वपदोपलब्धिः॥" (र० ५, ५६)

कविः स्वकृतौ स्वकीयमभिमतं यत्तुभावं वा अर्थान्तरन्यासमुखेन प्रस्तौकु-र्वाणः प्रायेण प्राप्यते किं वा स स्वकीयान् विचारान् अप्रस्तुतविधानात्मकेन दृष्टान्ताभिव्यक्त्या प्रायशः विलोकयते। यः पुरुषः स्वेन जीवनेन सर्वेषामन्येषां जीवनमभिभूय सन्तिष्ठते तस्य पुण्यस्य जीवने प्रीतिं निदधानः कविः प्रस्तौति कैरवया वचोभङ्ग्या इत्यनाम्—

"नक्षत्रताराग्रहसङ्कुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः" (र० ६, २२)

विपदि निपत्य मानवस्य अधीरतायाः आश्रयणं नास्ति किमप्याश्चर्यं वा चमत्कारम्। मानवजनस्य तु धर्म एवायं यत् सुखमवाप्य सम्प्रतीयते दुःख-सम्भिताय विषीदति। तस्मात् विचारवान् जनानन्दस्य गतं तं अर्थं विलोकय

कुत्सयेत्। कवेः कालिदासस्य हृदयन्तु एतादृशं विपद्गतं जनम्प्रति नितरामेव समवेदनां निदधाति अत एव तु सः।

"अभितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिषु" (र० ८, ४३)

इत्येतद् ब्रुवाणः श्रूयते। जीवनम्प्रति कवेर्दृष्टिः परामेवोत्कृष्टतां वहति। तदीया दृष्टिस्तज्जीवनमभिनन्दनीयं मन्यते यदस्ति गुम्भितनिष्ठं गुरुजनादेशपालकम्। कवेर्दृष्ट्या गुरोर्गरीयान् न कोऽपि तदितरोऽतः सा (कविदृष्टिः) तदाज्ञां सर्वथैवाविचारणीयामत्रगच्छति। गुरुषु यास्ति तदीयास्था सा दृश्यताम् एकस्मिन् कथासन्दर्भे—

"स शुश्रुवान्मातरि भार्गवेण पितुर्नियोगात् प्रहृतं द्विषद्वत्।
प्रत्यग्रहीदग्रजशासनं तदाज्ञा गुरूणां ह्यविचारणीया ॥" (र० १४, ४६)

कविर्मानवस्य यथार्थमेव जीवनं चित्रितं विधानः सर्वत्र श्राव्यते। परं स इदमिच्छति सदैव, यत् मानवस्तथा प्रयत्नेन येन तदीयं जीवनं भव्यमुदग्रं स्याद् भवेच्च कल्याणदर्शि। जीवनस्य सुन्दरता कल्याणेऽभिनिवेशोऽस्ति न च कदाजनम्। तस्मात् स मानवं महनीयं जीवनम्प्रति नेतुं कामयमानो मानवजीवनस्य प्रवृत्तिः क्वास्तीति ज्ञापयितुं निगदति अग्निवर्णचरित्रवर्णनच्छलेन—

"दृष्टदोषमपि तन्न सोऽत्यजत् सङ्गवस्तु भिषजामनाश्रवः।
स्वादुभिस्तु विषयैर्हृतस्ततो दुःखमिन्द्रियगणो निवार्यते" ॥ (र० १९ ४९)

यतो मानवः स्वमभिलषितं लभते तत एव प्रयाति तत्रैव स रज्यति, तस्मिन्नेव याचते, तस्मिन्नेव च स्वं भावं निबध्नाति। अतस्तेतादृशता मानवीयजीवनस्य विशिष्टता। कवि-दृष्टेरपि विशिष्टता नात्मानं तिरोधातुमर्हति—

"अन्तुगर्भो हि जीमूतश्चातकैरभिनन्द्यते"। (र० १७, ६०)

कविस्तदेव भाषते यदसौ मानव–जीवनस्यान्तराले प्रेक्षते। मानव–जीवनस्य प्रवृत्तेर्जुगुप्सनं किं वा विश्लथनं न कवेरुद्देश्यं, तस्य तु लक्ष्यमस्ति मानवजीवन–धर्म–विश्लेषणम्। सः केवलं मानवजीवनमुपस्थापयति। न च तत्स्तोतुमिच्छति न च निन्दितुम्। इदमवश्यं यत् स सदैव जीवनं मानवीयं स्वकृतिकर्मणा संस्कर्तुमुन्नेतुञ्च कामयते भृशम्। अथ च स यथास्थलमिदमपि दर्शयितुं यतते यत् कीदृशं जीवनं तस्मै रोचते। परमेतद्विषयकमभिधानं तस्य न भवति साक्षात्तयाभिहितं तद् भवति सदैव परोक्षतया निगदितम्।

"अपथे पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः" (र० ९, ७४)

मानवीयं जीवनमपत्याननमालोकयितुमुत्सुकमानसमवाप्यते। अपत्यं मुदितमवाप्य तत् प्रसीदति दुःखितं च तदवलोक्य विषीदति तत्। अपत्यस्य सुखदुःखे जीवनस्य सुखदुःखे स्त इत्येतत्प्रेदयानुभूय च कदाचित् कविर्जीवनस्य प्रियतरं तत् प्रति च नितरामेव नैसर्गिकादुद्गारानुद्गिरन्नवलोकितो भवति—

"आलक्ष्य दन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन्।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति॥ (शा० ७, १७)

अनपत्यता भवति दुःखदेति विचिन्त्य स वक्ति—

"कष्टं खलु अनपत्यता" (पृ० ४००, शा०)

अपत्यतां लक्ष्यीकृत्य कविर्यान् विचारान् निदधाति स्म ते विचारास्तस्याधः स्थितासु पङ्क्तिषु दृष्टा भवन्ति—

"सन्ततिः शुद्धवंश्या हि परत्रेह च शर्मणे" (र० १, ६९)

कविर्मन्यते यत् सन्ततेर्मानवः पैतृकाद् ऋणान्मुक्तो भवति—

"असह्यपीडं भगवन् ऋणमन्त्यमवेहि मे" (र०, १, ७१)

जीवनस्य धर्मशास्त्रानुगामित्वं कवेरभिलषितमस्ति तस्मात् स मन्यते यत् सन्ततिहीनस्य पुरुषस्य पितरोऽतृप्ता एव सन्तः स्वर्गे विषण्णा एवोपविशन्ति—

"अस्मात् परं बत यथाश्रुति संभृतानि
को नः कुले निवपनानि नियच्छतीति।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुशेषमुदकं पितरः पिबन्ति॥ (शा० ६, २५)

इदं सर्वं मन्वानमपि कविं सन्तानस्य श्रुतगामित्वं शक्तिशालित्वं पुष्टगात्रत्वं विनयशालित्वमेव च परिप्रीणाति। अस्यैषा हि दृष्टिर्वस्तुतः कवेः सन्ततिमति जीवने अत एव तु स "श्रुतस्य यायादयमन्तमर्भकः" (र० ३, २१), "...कपाटवक्षाः परिणद्धकन्धरः..." (र० ३, ३४) "नीचैर्विनयाददृश्यत" (र० ३, ३४) इत्यादीन् भावान् अभिव्यनक्ति।

कविमहानुभावोऽयं भवितव्यतायां विश्वसिति परं न मा भवितव्यतावादिता तं प्रीणाति या हि अलसैः पुरुषार्थपराङ्मुखैरभिनन्द्यते। स तु गतजन्मसु कृतानां कर्मणां विपाकमेव 'भवितव्यता' इत्येतेन नाम्ना व्यपदिशति। भवित-

व्यताविषयिकास्तदीया उक्तयस्तत्रैव श्रुता भवन्ति यदा कृतेऽपि प्रयत्ने घटना न विनिवार्या भवति श्रूयताम्—

"न विस्मरामि। किन्तु सर्वं कथयित्वा 'मयापि मृतपिण्डबुद्धिना तथैव गृहीतम्। अथवा भवितव्यता खलु बलवती" (शा० पृ० ३६७) प्रयत्नेऽकृतेऽपि कस्यचन वस्तुनोऽप्राप्तौ कारणं भवितव्यतैवेति मन्यते कविरत आह—

"शान्तमिदम् "भवितव्यानां द्वाराणि भवन्ति सर्वत्र" (शा० १, १६)

अपरीक्ष्यकारिता जीवनस्य, भवति सङ्कटावहा प्रायेण। अतस्तदेव जीवनं कविरेष विचारयति यत्र समग्राण्यपि कार्याणि विमृश्यकारितया विधीयन्ते। रह सङ्गताद्दो तु विशेषतः परीक्षितकृतत्वमादरणीयमित्येव कवेरुपदेशः। तदीयमिदं वचः—

> "अतः परीक्ष्य कर्त्तव्यं विशेषात् सङ्गतं रहः।
> अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम्॥ (शा० ५, २४)

ज्ञापयति यज्जीवने परीक्ष्य कर्त्तव्यत्वमपि कवेरिष्टम्। जीवनमधिकृत्य कवेरयमपि विचारो वर्तते यज्जीवनेन कर्मणि कुशलेन भाव्यम्। तज्जीवनं निन्दनीयमस्ति यत्कृतेन कर्मणा विदुषां मानसं न तुष्यति। जीवनस्यास्यैव शोभा विद्वन्मनःपरितोषणकारिकर्मकारिता। कवितरस्य जीवनमुद्दिश्यैषा दृष्टिरधोलिखिते वाक्ये स्पष्टं प्रतिलभ्यते—

"आपरितोषाद् विदुषां न साधु मन्ये प्रयोगविज्ञानम्" (शा० १, २,) कवेर्दृष्ट्या प्राप्ता लोकप्रतिष्ठा सैव साधु स्तुत्या भवति या भवति स्वसुखे निरभिलाषा लोकसेवनपरायणाश्रितजनपरितापविनिवारिका। जीवनस्य सेवाभावं रतत्वं कविवरः काङ्क्षति। तद्विचारेण जीवनस्यार्थ एवास्ति स्वार्थविहीना लोक-सेवा। स व्याहरति दुष्यन्तकृतलोकसेवाव्याजेन—

> "स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
> प्रतिदिनमथवा ते वृत्तिरेवंविधैव।
> अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
> शमयति परितापं छायया संश्रितानाम्॥" (शा० ५, ७)

कविः कालिदासोऽस्ति परमोच्चविचारवन्धुरः। न तस्मै जीवनस्य कलारहितत्वं रोचते। स जीवनं कलासु कुशलं द्रष्टुमना। जीवनं तदेव तद्विचारेण

यत्र कलाः विलसन्ति । तदीयेषु काव्येषु राजमानाः कलाः स्फुटतयैव बोधयन्तीदं यत् स कलाकलितमेव जीवनमाद्रियते ।

> कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
> पादास्तामभितो निषण्णहरिणा गौरीगुरोः पावनाः ।
> शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः—
> शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् ॥" ( शा० ६,१७ )
> पादन्यासक्वणितरशनास्तत्र लीलावधूतै—
> रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ।
> वेश्यास्त्वत्तो नखपदसुखान् प्राप्य वर्षाग्रबिन्दू-
> नामोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान् कटाक्षान् ॥ ( मे० पू० ३५ )
> "अहो रागपरिवाहिणी गीतिः" ( शा० पृ० २६४ )
> "तवास्मि गीतरागेण हारिणा प्रसभं हृतः" ( शा० १,५ )

इत्यादिषु कवेः संगीत-नृत्यचित्रकलादिप्रियत्वं स्पष्टं दृश्यते । एतेन सिद्ध्यति यदसौ जीवनं कलाकलितं दिदृक्षति । कवि-कालिदासं भारतीयदर्शनधारा अभिव्याप्य शोभमाना पर्यवलोक्यते । तस्मात् स न कस्यामपि दशायां नैसर्गिकीं प्रसादश्रियं मोक्तुमभिवाञ्छति । आत्मन आनन्दमयत्वात् स न क्रन्दनपरं जीवनं जीवनं मन्यते । स तु तत्र सततं विनोदं स्मितत्वं त्रिविधकलाक्रीडानां विलासमवलोकयितुमिच्छति । तद्दृष्ट्या जीवनस्यार्थो नास्ति निवृत्तोदासीनता वा । परमिदमपि न बोधनीयमनेतेन यत् कविर्जीविनस्य तथ्येभ्यो दूरे वस्तुमभिलषते । स देहभृताम्—जीवनस्य—असारतां ( र० ८, ५१ ) सम्यग् वेत्ति । स जानाति यत्—"मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितम्'''" ( र० ८, ८७ ) स इदमपि अवगच्छति भृशं यज्जीवने कदापि सुखमवतरति कदापि च दुःखम्—

> "कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा ।
> नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥" ( मे० उ० ४६ )

परं किं नाम दुःखमिदमित्येतत् साधु वेत्ति ज्ञानवान् कविरयम् । दुःखस्य नास्ति स्थिरा स्थितिः । न तद्विवेक-भानोः पुरः स्थातुमर्हति । ज्ञानानलो निमेषमात्रेण दहति तत् । इदमेव सर्वं विभाव्य कविः कालिदासस्तज्जीवनमेव निष्ठां निदधाति तदेव जीवनं मोऽच्छति तस्मै जीवनायैव स्वश्रद्धां समर्पयति यदस्ति सदैव ज्ञानविभाविभासितमानन्दसागरतरङ्गतरङ्गितं नाना-गुणोल्लासोल्लसितं विविधावदानविधानविभोनितं पुष्कलकलाकोलम् ।

जीवनेऽर्थकामयोरुपादेयता सदैव विद्यत इति स जानाति अतएव तत्कृतिषु प्रतिपादितमिदं यज्जीवनस्य सत्ता अर्थ-कामयोरुपरि स्थितास्ति। परं तयोर्धर्मानुगतत्वं तदभिमतमतस्तस्य जीवनदर्शनं तस्मिन्नेव जीवने स्पृहयति यद् धर्मानुगतमर्थं कामञ्च निषेवते—"*अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः* (र० १, २५)। न जीवनस्य कापुरुषत्वं तदिष्टम्। चेत् तस्य तथाविधत्वमेवाभिलषितं स्यात् तदा स कदापि न शाकुन्तले शकुन्तलां दुर्वाससा, मेघे यक्षं तदधिपतिना कुबेरेणाभिशापयन्, कामदेवं च कुमारसम्भवे त्र्यम्बकेण भस्मनि परिवर्तयन् दृष्टो भवितुमर्हेत्! स जीवने धर्मविरुद्धं कामत्वं तु न देवेषु सहते न यक्षादिदेवयोनिविशेषे न च मानवेष्वपि। कविः कालिदासो यस्मिन् दर्शने प्रीतिं निबध्नाति यत्र स गरिमाणमापादयति तदस्ति सौन्दर्यं दर्शनम्। तदीये हि दर्शने सौन्दर्यमेव मुख्यदैवतमस्ति। अतः स सौन्दर्यसुन्दरमेव जीवनमाद्रियते। तदेव तं तोषयति। *सौन्दर्यप्रियता नास्त्यनाचरणस्य लक्षणम्।* चेत् *कश्चिज्जनः* सुरुचिं परिपुष्णाति तदा किमसौ 'दुराचारवान्' इति वक्तुं शक्यः? एतत् सर्वथा सान्द्यम्।

"*दीर्घापाङ्गविसारि नेत्रयुगलं लीलाञ्चितभ्रूलतं*
दन्तान्त.परिकीर्णहासकिरणज्योत्स्नाविलिप्ताधरम्।
कर्कन्धुद्युतिपाटलोष्ठरुचिरं तस्यास्तदेतन्मुखं
चित्रेऽप्यालपतीव विभ्रमलसत् प्रोद्भिन्नकान्तिद्रवम्॥" (मा० ६, १४)

"तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरशना
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम्।
पदाविद्धं यान्ती स्खलितमभिसन्धाय बहुशो
नदीभावेनेयं ध्रुवमसहना सा परिणता॥" (विक्र० ४, ५२)

इत्यादौ या हि सौन्दर्यानुरागिता सरसं प्रवहन्ती विलोकिता भवति तां को मतिमन्दोऽनाचारं मन्येत। तत्र तु स्पष्टमेव सुरुचे: प्रशस्तं स्वरूपं, सात्त्विकतायाः अनवद्या हि वन्धुरता, कलाया कमनीया विलासच्छटा परिस्फुरन्ती सचेतसाङ्क्षयमतिशयतया परिप्रीणाति।

जीवनम्प्रति कवेः का दृष्टि? कीदृशं जीवनं तस्मै रोचते? जीवनं लक्ष्यीकृत्य *का तदीया भावना?* इत्येतत् सकलं सः रघुवंशकाव्यस्यारम्भ एव समासेन परं सारपूर्णैः परिमितैरेव वचोभि—"सोऽहमाजन्मशुद्धानाम्…"; "यथाविधि

हुताशीनाम्…"; "त्यागाय सम्भृतार्थानाम्…"; "शैशवेऽभ्यस्तविद्यानाम्"; "जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः…"; "ज्ञाने मौनं क्षमा शक्तौ…"; इत्यादिषु श्लोकेषु नितान्तमेव स्फुटभावेन प्रथयन् समवाप्यते ।

यस्मिन् जीवने स्वपनाभ्यवहरणादिकमेव दृग्गोचरी भवति तज्जीवनं मानवस्य जीवनं न, तदस्ति पशोः जीवनम् । मानव-जीवनस्य कृतार्थता न तावतैव । अतः कविः वाञ्छति यन्मानवो मानवीयं जीवनमङ्गीकुर्यात् । मानवीयजीवनं मानसस्य पवित्रतां, पुरुषार्थस्य फलोदयगामितां, विश्वस्य सेवां, विद्यानामर्जनं, धियः शास्त्रानुगत्वं, कर्त्तव्येषु अभिनिवेशं विषयेष्वनासक्तिं गुणेषु प्रणयमपेक्षते तस्मात् कवेः कालिदासस्य दृष्टिस्तद्विधमेव जीवनं जीवनत्वेन स्वीकरोति । केषाञ्चन जनानां कथनमिदं यत् कवि. कालिदास स्वकीयेषु काव्येषु यस्मिन् जीवने प्रीतिं दर्शयति तज्जीवनन्तु आदर्शजीवनमस्ति । न तदस्ति सामान्यं जीवनम् । परमिदं कथनं न समीचीनं प्रतिभाति । समाजस्य कल्याणाय राष्ट्रस्याभ्युत्थानाय विश्वस्य संस्काराय नास्ति सामान्यजीवनस्य कदापि अपेक्षा मनागपि । सामान्यजीवनं दीनतां दरिद्रतां पराधीनतां नानाविपदामवलिञ्चामन्त्रयति । तस्योपरि शासनं भवत्यन्यस्य । तस्सर्वैरपि सदा दासीक्रियते । तज्जीवनं सामान्यं तु पशूनामेव कृते हितकरं न मानवानां कृते । मानव-शरीरमवाप्य चेद् आहार-निद्राभयमैथुनेष्वेव तद् गमितं तदा तेन को लाभो जात । अत. जीवनं तु तदेव यद् एष कविः कालिदासो जीवनत्वेन स्वीकुरुते ।

धन्योऽयं कविर्यो विश्वस्य पुरतो जीवनस्य स्वरूपं तदीयं मर्म्म च समुपस्थापयामास । वस्तुतो जीवनधारिणां समक्षे जीवनप्रतिष्ठापका भूत्वा ये कवयोऽवतरन्ति तैः कविभिर्धरा गौरवशालिनी भवति । प्राणिनश्च आश्वासनमयस्य श्वासस्य च परिग्रहणाय सदवसरं लभन्ते । जयति कविकालिदासो जयति ।



( २८ )

# कालिदासकवितायां राष्ट्रियता

भारतस्य राष्ट्रस्य राष्ट्रियत्वं किमित्येतदवगन्तुमस्माकं पुरो यद्यपि श्रुतयो ब्राह्मणानि आरण्यकानि उपनिषदो वेदाङ्गानि श्रौतगृह्यकल्पधर्मसूत्राणि दर्शनानि पुराणानि रामायणं महाभारतं शिलालेखस्तूपचैत्य-भूखननसंलब्धप्राचीनप्राचीनतरमुद्रादिविविधसामग्र्यः शोभन्ते परमुक्तं हि तत्त्वमवबोद्धुं केवलं महाकवेः कालिदासस्य काव्यान्येव गवेषयिष्यामहे। राष्ट्रियतातत्त्वप्रदर्शनार्थं न तत्रापि तदीयानां सर्वेषामपि काव्यानां साकल्येनोन्मीलनमिह सम्भवम्। तथाचरणेन तु निबन्धस्यास्य कायो ह्यतितरां दीर्घतामासादयेत्। तस्मादत्र तु तत्रत्यानि कानि-*चनैव स्थलान्युपात्तानि स्युः। एतदध्वनोऽभ्युपगमेनास्मदीयं तदुद्देश्यं परमं* सफलतामवाप्तुमर्हेत् यस्याकलनमत्र समभीप्सितमास्ते।

सर्वेषामपि सुधीन्द्राणां विदितचरमेवेदं यत्कालिदासस्य तु समस्तान्यपि काव्यानि प्रारम्भादन्तं यावद् राष्ट्रियताभावभावितानि भूत्वा काव्य-संसारे *संशोभन्ते। अतएव वस्तुतस्तु कविः कालिदासो राष्ट्रियः कविः। सः भारतीय-*तायाः दर्शनाय भारतीयतायाः प्रतिष्ठापनाय भारतीयायाश्च समुन्नमनाय स्वकीयानि सकलान्यपि काव्यानि ससर्ज। अतो नैतादृशमेकमपि स्थलं यत्र स्याद् राष्ट्रियताभावविभूषितम्। कस्यचन राष्ट्रस्याभ्युदयाय तस्य रक्षणाय तस्य *संवर्द्धनाय च जनानां हृदयेषु राष्ट्रियतायाः सञ्चारणं नितान्तमेवापेक्षितं जायते* कालिदासस्य काव्यान्यस्यां दिशि यादृशं सुन्दरतरं महत्तरञ्च कार्यं सम्पादयन्ति न तादृशं कव्यन्तरस्य काव्यं विदधदवलोक्यते। कालिदासस्य कवित्वं हि अधिकतमामाश्रयां समीचीनया रीत्या स्वधर्मं परिपालयत् सम्प्रेक्ष्यैव विद्वांसः कालिदासमेवं श्लाघमाना दृश्यन्ते—

"वयमपि कवयः कवयः कवयोऽपि च कालिदासाद्याः।
दृषदो भवन्ति दृषदश्चिन्तामणयोऽपि हा दृषद्॥"

यजुषि—

"आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम् आराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधीमहारथो जायताम्। दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू

रथेष्ठा । सभेयो युवास्य यजमानस्य वीरो जायताम् । निकामे निकामे पर्जन्यो वर्षतु । फलवत्यो न ओषधय पच्यन्ताम् । योगक्षेमो न कल्पताम् ।"

इत्थंपा हि या राष्ट्रियताभावोन्मेषिणी राष्ट्रप्रार्थनाचरितास्ति सा हि सर्वत्र सर्वत एव कविकालिदासस्य पुनीतासु रचनासु विभासते ।

यत्र यत्र हि पारमेश्वरी आस्था समवेक्ष्यते तत्र तत्र नूनं भारतीय आत्मा विजृम्भत इत्येतद्धि सत्य न कदापि विस्मरणीयम् । भारतराष्ट्रस्य राष्ट्रियता यैर्हेतुभिरुपादानैर्विनिर्मितमस्ति तेषामेकतम तिलकभूतमुपादानमीश्वरवादित्वमस्ति । इदमानन्दमय सत्य कवे कालिदासस्य सर्वास्वपि कृतिषु सर्वत्र नरीनृत्यद् दृग्गोचरीभवति । दृश्यताम्—

(क) "वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये ।
जगत पितरौ वन्दे पार्वतीपरमेश्वरौ ॥" ( रघौ )

(ख) "वेदान्तेषु यमाहुरेकपुरुष व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषय शब्दो यथार्थाक्षर ।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणु स्थिरभक्तियोगसुलभो नि श्रेयसायास्तु व ॥"
( विक्रमोर्वशयाम् )

मानवो विद्यया शोभते विद्या च विनयेन शोभते—इत्येतद् वीक्ष्य राष्ट्रस्नेहिन आत्मा देशं सर्वं विनेतुं समुचितानानुकूलांश्च संस्कारान् प्रयुङ्क्ते स्म । कवि कालिदासो विनयं नाम गुण देशस्य प्रगुणीकर्तुं प्रायतत—

"मन्द कवियश प्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामन ॥" ( रघौ )
"युवा युगव्यायतबाहुरंसल कपाटवक्षा परिणद्धकन्धर ।
वपु प्रकर्षादजयद् गुरु रघुस्तथापि नीचैर्विनयाददृश्यत ॥" ( रघौ )

यत्कार्यं प्रारब्ध तस्समाप्तिर्यावत् न स्यात् न त्याज्यमित्येषा प्रवृत्तिर्भारतस्य चिरायुष्का भवेत्, तस्यातिथिपूजनभावना दिनानुदिन पुष्टिमृच्छेत्, यत्तत्सम्बन्धि तत्त्वं महीयोजगति वृद्धिमुपेयात्, दुष्टानां निग्रहणेन, कर्तव्यानां पालनेन च सुख शान्तिश्च समुत्पद्येते तस्मादिमे वैशिष्ट्ये वाञ्छनीये स्त इत्येतद्देशोल्लेङ्कितयो मद्भाव सतत साधु प्रेक्षित स्याद्—इत्येतद् विमृश्य कविर्देशस्य स्वस्य तान् सर्वान् धर्मान् स्वकाव्येषु विविधकथाप्रकथनव्याजेन कीर्तयति—

(क) "सोऽहमा जन्मशुद्धानामा फलोदयकर्मणाम् ।
आ समुद्रक्षितीशानामा नाकरथवर्त्मनाम् ॥

(ख) यथाविधिहुताग्नीनां यथाकामार्चितार्थिनाम् ।
यथापराधदण्डानां यथाकालप्रबोधिनाम् ॥ (रघौ)

भारतीयराष्ट्रभावना यैः प्रकाशरश्मिभिः समुल्लसति तेषु गुरुभक्तिर्नाम-प्रकाशरश्मिर्नितरामेव ललितामाभां बिभर्ति कविर्भारतस्यैतां विशिष्टतां संरक्षितु-मुपदिशति भारतीयान्नतरुणान्—

(क) "तयोर्जगृहतुः पादान् राजा राज्ञी च मागधी ।
तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः ॥"

(ख) "समाप्तविद्येन मया महर्षिर्विज्ञापितोऽभूद् गुरुदक्षिणायै ।
स मे चिरायास्खलितोपचारां तां भक्तिमेवागणयत् पुरस्तात् ॥"

(रघौ)

भारते सृष्टिप्रारम्भसमयादेव गौर्मातेव मता । तस्या रक्षणं संवर्धनं च देशोऽयं स्वकीयेषु प्रधानेषु कर्त्तव्येषु अवगच्छति । तामन्तरेण नास्य देशस्य देवपूजा न पितृतर्पणं न च अतिथिपरिचर्यैव भवितुमर्हति तस्माद् तद्रक्षणं हि भारतं राष्ट्रियगुणेषु अन्तर्भावयति । कविः कथाव्यपदेशेन गोसेवाम्प्रति देशस्य जनं जनमाह्वयति—

(क) "आस्वादवद्भिः कवलैस्तृणानां कण्डूयनैर्दंशनिवारणैश्च ।
अव्याहतैः स्वैरगतैश्च तस्याः सम्राट् समाराधनतत्परोऽभूत् ॥"

(ग) प्रदक्षिणीकृत्य हुतं हुताश-
मनन्तरं भर्तुररुन्धतीं च ।
धेनुं सवत्सां च नृपः प्रतस्थे
सन्मङ्गलोदग्रतरप्रभावः ॥ (रघौ)

भारतीयराष्ट्रभावना यश प्रियास्ति । सा मरणं वरं मन्यते परं यशोनाशं न कदापि द्रष्टुमिच्छति । सा प्राणान् अपि समर्प्य तदुपार्जयितुं चिरादुत्सुकतरा दृष्टा भवति । सा स्वजीवनमेव धन्यं तेनावगच्छति । भारतराष्ट्रस्य परिस्फुरन्तीमिमां विच्छित्तिं प्रति भारतीयानां हृदयमावर्जयति दिलीपोपाख्यानमुपस्थाप्य—

(क) "क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः ।
राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥"

(ख) किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः।
एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु ॥ (रघौ)

(त्यागो हि भारतराष्ट्रियताया सर्वस्वम्। कविस्तमेव रघुचरित्रकीर्तनव्याजेन निदधाति सहर्षम्—)

(क) "स विश्वजितमाजह्रे यज्ञं सर्वस्वदक्षिणम्।
आदानं हि विसर्गाय सतां वारिमुचामिव ॥"

(ख) "तं भूपतिर्भासुरहेमराशिं लब्धं कुबेरादभियास्यमानात्।
दिदेश कौत्साय समस्तमेव पादं सुमेरोरिव वज्रभिन्नम् ॥" (रघौ)

(ग) जनस्य साकेतनिवासिनस्तौ द्वावप्यभूतामभिनन्द्यसत्त्वौ।
गुरुप्रदेयाधिकनिःस्पृहोऽर्थी नृपोऽर्थिकामादधिकप्रदश्च ॥"

भारतीयैर्यदुक्तं तस्य सदैव पालनमपि कृतम्। ते वचनरक्षायां महान्ति महान्ति कष्टानि सहमाना जगता चिराद्दृश्यन्त। ते सर्वस्वमपि सकलानि सुखान्यपि त्यक्तवन्तः परं वचनमुक्तं न कदापि। वस्तुत एषा विशिष्टता वचनपालनविषयिका तान् बहुषु दुःखेष्वपातयत्। इयं तेषां जीवने नितान्तमेव महामूल्यवती सिद्धाभवत्। ते हि, यतः, सर्वस्वेन स्वेन इमां क्रेतुं प्रबभूवुः। परमेतद्गुणवशात् ते समग्रेऽपि भुवने प्रसिद्धिमगुः। समग्रमपि जगत् तेषु गुणमिमं विलोक्य सर्वथैव तेषु अविचारपूर्वकं विश्वसितिस्म। कविर्भारतस्य स्वस्य विशेषतां स्मारयितुं वचनपालनवीरस्य दशरथस्य कथामुपन्यस्यति।

"सा किलाश्वासिता चण्डी भर्त्रा तत्संश्रुतौ वरौ।
उद्ववामेन्द्रसिक्ता भूर्बिलमग्नाविवोरगौ ॥" (रघौ)

पितुराज्ञापालने हि भारतीयता रज्यति। कविस्तदेव दर्शयति—

"पित्रा दत्तां रुदन् रामः प्राङ्महीं प्रत्यपद्यत।
पश्चाद् वनाय गच्छेति तदाज्ञां मुदितोऽग्रहीत् ॥" (रघौ)

(राज्यतृणापराङ्मुखता भारतीयराष्ट्रियताया विलक्षणैव विशिष्टैका। नात्रत्या राजानः सुखान्युपभोक्तुं राज्यमभ्युपागमन्। अपितु क्षत्रियाणां प्रजापालनं कर्तव्यमस्ति प्रमुखमिति विचार्यैव ते राज्यभारदुर्वहमवाहुः। कविरिमामेव राष्ट्रियतां प्रदर्शयितुं वस्तुत इमाः पङ्क्तीर्निबन्ध—

(क) दृढभक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः।
मातुः पापस्य भरतः प्रायश्चित्तमिवाकरोत् ॥ (रघौ)

( ख ) *अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये*
रक्षायोगादयमपि तपः प्रत्यहं सञ्चिनोति ।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥ ( शाकुन्तले )

( ग ) स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवं विधैव ।
*अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं*
शमयति परितापं छायया संश्रितानाम् ॥ ( शाकुन्तले )

तपोवनानां तपस्विनाञ्च रक्षणं राष्ट्रियत्वमिदं हि निगदितुं कालिदास-प्राह—

( क ) "किं तावद् व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं
धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ।
*आहोस्वित् प्रसवो ममापचरितैर्विष्टम्भितो वीरुधा-*
मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः ॥ ( शाकुन्तले )

( ख ) अप्यग्रणीर्मन्त्रकृतामृषीणां कुशाग्रबुद्धे कुशली गुरुस्ते ।
यतस्त्वया ज्ञानमशेषमाप्तं लोकेन चैतन्यमिवोष्णरश्मेः ( रघौ )

( ग ) आधारबन्धप्रमुखैः प्रयत्नैः संवर्धितानां सुतनिर्विशेषम् ।
कच्चिन्न वाय्वादिरुपप्लवो वः श्रमच्छिदामाश्रमपादपानाम् ॥ (रघौ)

(प्रजायै गृहमेधित्वं भारतीयतायै रोचते न च विषयोपभोगाय इत्येतद्धि प्रकाशं क्षिपन् कविराह—

"भूत्वा चिराय चतुरन्तमही सपत्नी दौष्यन्तिमप्रतिरथं तनयं निवेश्य ।
भर्त्रा तदर्पितकुटुम्बभरेण सार्धं शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ॥"
( शाकु० )

(भारतीयराष्ट्रियतायामियमपि स्पृहणीया विशिष्टता विभाति यत् सा नारी-ष्वादरधियं नियच्छति सा नारीं संसारसागरतारिणीं मन्यते सा त्रिवर्गिणि यत् तां विना न यज्ञ-पूजादिकार्यं पूर्तिमवाप्नुते न च तत्तदनुष्ठानानि फलप्रदाय-कान्येव भवन्ति । कवितामेव राष्ट्रियता कियत्या सुन्दरतया अधः स्थितेषु श्लोकेष्वन्वयति ।

(क) धृतिरस्तमिता रतिश्च्युता विरतं गेयमृतुर्निरुत्सवः ।
गतमाभरणप्रयोजनं परिशून्यं शयनीयमद्य मे ॥

(ख) गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥ (रघौ)

भारतीयराष्ट्रियत्वस्य पतिव्रतं नार्याः पत्ये स्वसत्ताया विलयनञ्च वर्तते। कविकालिदासस्याधः स्थितेषु श्लोकेषु अत्रत्यस्यैतस्य राष्ट्रियत्वस्य स्पष्टमेव दीप्तिमत्तापूर्वकं संस्फुरणं विलोचनपथमुपैति । वीक्ष्यताम्—

"कल्याणबुद्धेरथवा तवायं न कामचारो मयि शङ्कनीयः ।
ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः ॥"
किं वा तवात्यन्तवियोगमोघे कुर्यामुपेक्षां हतजीवितेऽस्मिन् ।
स्याद् रक्षणीयं यदि मे न तेजस्त्वदीयमन्तर्गतमन्तरायः ॥
साऽहं तपः सूर्यनिविष्टदृष्टिरूर्ध्वं प्रसूतेश्चरितुं यतिष्ये ।
भूयस्तथा मे जननान्तरेऽपि त्वमेव भर्ता न च विप्रयोगः ॥" (रघौ)

विना तपसा न भवति मनःशोधनं न चात्मैव भवति बलीयान् । तपो हि किल्बिषं हन्ति । तपो हि मनोभिलषितानि सर्वाण्यपि सफलीकरोति। सर्वाण्यपि शास्त्राणि पुराणानि च एकस्वरेण तपसो गुणानजस्रं गीत्वापि न तृप्यन्ति । मनुराह—

यद् दुष्करं यद् दुरापं यद् दुर्गं यच्च दुस्तरम् ।
तत् सर्वं तपसा प्राप्यं तपो हि दुरतिक्रमम् ॥

भारतं राष्ट्रं सनातनात् कालात् तपसि अतितरां श्रद्धामास्थां च निदधानमवलोक्यते। तपो हि वस्तुतो भारतीयस्य राष्ट्रियत्वस्य परमं भास्वरं रूपं वर्तते। कवि. कालिदासोऽत' स्वकीयेषु सर्वेष्वपि काव्येषु तपोनिहितश्रद्धोऽवेक्ष्यते । सः स्वकीयानि पात्राणि मनोमालिन्यनिरसनोद्देश्येन तपसि प्रवर्तयन् सर्वत्र समवाप्यते ।

सद्रूपसम्पदा चेदात्मानं कोऽपि बलीयांसं मन्यते तदा वस्तुतोऽसौ भ्रम एवात्मानं पातयति । न रूपं न च सम्पद एव काश्चिद् भौतिक्यः पारमार्थिकं हितं सम्पादयितुं शक्नुवन्ति । तदर्थं तु तपोऽपेक्ष्यते । तेनैव मानसिकसुस्थानं सम्भवं तेनैव मनसः शुद्धिः सम्भवा । मनसि जाते शुद्धे सर्वमपि लब्धव्यं मानवो लब्धुं पारयति तस्मात् तप एव श्रेयसां मूलम् । तपः समवाप्तं सौन्दर्यं न

साधनान्तरमनाप्तं सौन्दर्यं नेतुमर्हति—इत्येतस्माद्धेतोः कविः कालिदासः कुमारसम्भवे उमापरिणयचरितगानव्याजेन प्रतीति यत् पार्वत्यामयं प्रेम एव समवर्तत यस्तां स्ववपुःसुन्दरतया भगवन्तं शङ्करं समवाप्तुं प्रेरयामास। तद्वशात् सा प्रथमं स्वोद्देश्ये न सफलतामियाय। असफलतानन्तरं सा तपोऽन्तरेण न तादृशो मनोरथे सिद्धिः सम्भवेति निश्चेतुं शेके—

"तथा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती।
निनिन्द रूपं हृदयेन पार्वती प्रियेषु सौभाग्यफला हि चारुता॥
इयेष सा कर्तुमवन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः।
अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः॥"
"मृणालिकापेलवमेवमादिभिर्व्रतैः स्वमङ्गं ग्लपयन्त्यहर्निशम्।
तपः शरीरैः कठिनैरुपार्जितं तपस्विनां दूरमधश्चकार सा॥" (कुमारसम्भवे)

स्वच्छन्दता न कदाप्युपकारिणी। सा पतनाकूपारे निमज्जयति। शकुन्तला छन्देनान्ववर्तत। अतः सा दुष्यन्त-परित्यागजनितं कष्टमप्युवाह। कविः कालिदासस्तस्मादेव कारणात् शकुन्तलां तपसा शोधयितुं कामयमानस्तामशीशपत् कश्यपाश्रमे च तपश्चरितुं प्रावर्तयत्—

(क) "सुमते, एहि इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयाव"
(शाकु०)

(ख) "वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणिः।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्ति॥" (शाकु०)

यक्षो यदा स्वाधिकारात् प्रमाद्यति स्म तदा तमपि कविरयं गृहाद् दूरीकरोति, तमपि च रामगिर्याश्रमेषु निवासयति येन सः प्रमादाज्जुगुप्सेत; कृते च स्वकीये प्रमादे शोचेत, कदापि न पुनः प्रमादमनुष्ठातुं प्रतिजानीयात्; अनुतापेन च मानसं स्वं नेनिज्यात्; प्रेयसीप्रणये न तथा रज्येत् येन पुनः स्वामिशापो भवेत्। इदमेव कृत्स्नं विमृश्य यक्षमपि वस्तुतोऽसौ तपस्येव नियोजयति तपस्यानन्तरं मेघदूतं च प्रणयति जनसामान्यमुपदेष्टुम्—

"कश्चित् कान्ताविरहगुरुणा स्वाधिकारात् प्रमत्तः
शापेनास्तंगमितमहिमा वर्षभोग्येण भर्तुः।

यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥" ( मेघ० )

महाकविः कालिदासस्तपोमहिमानं सर्वेष्वपि सर्गेषु काव्येषु नाट्या
'भारतस्य राष्ट्रियतायाः प्रमुखमङ्गं तपः' इत्येतद् घोषयति भारतीयां जनताम् ।
भारतीयराष्ट्रियता संस्कारेषु प्रसूते । यथा बालोऽपि गर्भात्समभिजायते
मानुषस्तथैव संस्कारैर्मानवोऽपि पालितराष्ट्र्यां जायते । स संस्कृतो भूयो-
जायते । तस्माद् भारतीयता तेन तेन संस्कारेण नाम मानवं पवित्रीकर्तुं समर्तं
जीवनपर्यन्तं प्रयतमानैव दृश्यते । राष्ट्रियकविः कालिदासो हि संस्कारसम्बन्धिनीं
राष्ट्रियतां स्मारयितुं तामङ्गीकर्तुं च प्रेरयति विविधेन प्रकारेण—

"स जातकर्मण्यखिले तपस्विना
तपोवनादेत्य पुरोधसा कृते
दिलीपसूनुर्मणिराकरोद्भवः
प्रयुक्तसंस्कार इवाधिकं बभौ ॥" ( रघौ )

यानि साधनानि देशं बाह्यम् आभ्यन्तरञ्च सुन्दरं सुसमृद्धं समुन्नतञ्च सर्वविधभावेन कुर्वन्ति तानि साधनान्येव 'राष्ट्रियता' इत्येतेन नाम्नाऽभिधीयन्ते । तेषु हि साधनेषु विद्यास्ति साधनप्रमुखम् । भारतं विद्यां स्वकीयराष्ट्रियताया जीवनं मन्यते । सा तामेव तस्या आधायकत्वेनानुगच्छति । विद्यया राष्ट्रं शुभं पश्यति चिरायुर्भवति स्थिरविचारशीलं भवति, भवति चात्मनिर्भरमिति भारतस्य विश्वासः । तस्यात्मन उद्घोषोऽयमुच्चैः—

"सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ।"

कविः कालिदासो हि स्वकीयं राष्ट्रं विद्यायां रतं विलोकयितुमुत्सुकः । स तादृशं सन्दर्भं समुपन्यस्यति येन देशः प्रेरणामवाप्नुयात्—

( क ) "अथोपनीतं विधिवद् विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम् ।
अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रिया हि वस्तूपहिता प्रसीदति ॥ ( रघौ )

( ख ) निर्बन्धसञ्जातरुषार्थकार्श्यमचिन्तयित्वा गुरुणाहमुक्तः ।
वित्तस्य विद्यापरिसंख्यया मे कोटीश्चतस्रो दश चाहरेति ॥" ( रघौ )

राष्ट्रियताघटकेषु तत्त्वेषु धर्मो नाम तत्त्वमपि प्रमुखम् । अभ्युदयनिःश्रेयसाधकत्वात् सः सर्वेषामपि मानवानां सुहृत् । धृतिक्षमादमादिका एव धर्मस्य अङ्गत्वेन प्रसिद्धाः । धर्मस्य महत्तामुद्दिश्य प्रोक्तम्—

एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति ॥

राष्ट्रस्य धर्मोपेतत्वं सर्वथैव वाञ्छनीयम् । कालिदासकृतिषु धर्मोपेताया राष्ट्रियतायाः प्रतिपदं दर्शनं भवति—

(क) "रेखामात्रमपि क्षुण्णादा मनोर्वर्त्मनः परम् ।
न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः ॥" (रघौ)

(ख) स्थित्यै दण्डयतो दण्ड्यान् परिणेतुः प्रसूतये ।
अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः ॥ (रघौ)

(ग) "कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि ।" (शाकु०)

(घ) "किं कुलस्यर्षेर्द्वेषो धर्मं प्रति विमुखतोचिता राज्ञः ।" (शाकु०)

(ङ) महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चिद् वर्णानामपथमपकृष्टोऽपि भजते ।
तथापीदं शश्वत् परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ॥ (शाकु०)

यज्ञोऽपि भारतीयराष्ट्रियताया महनीयाङ्गत्वेन स्मृतः । न विना यज्ञेन राष्ट्रियत्वस्य निर्वृतिः । यज्ञस्य महिमा श्रुतिमारभ्याधुनिकं साहित्यं यावत् वितत आस्ते । )

(क) "यत् पुरुषेण हविषा देवा यज्ञमतन्वत"
(ख) "देवा यद् यज्ञं तन्वाना अबध्नन् पुरुषं पशुम्"
(ग) "यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः."
(घ) "इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः."
(ङ) "यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः."

इत्येवमादीनि प्रशस्तानि वाक्यानि यज्ञमहिम्नि शास्त्रेषु प्राप्तानि भवन्ति । कविः कालिदासस्तु तमेव यज्ञमुद्दिश्य तत्तत्स्थानिबन्धेषु मधुरं गायन् श्रुतो भवति । स तथैतन्ने यया भारतं नैजमिदं राष्ट्रियत्वमभिजानीयात् । तत्काव्येषु सर्वेषु यज्ञोल्लेखोऽवलोक्यते—

(क) "मखांशभाजां प्रथमो मनीषिभिस्त्वमेव देवेन्द्र सदा निगद्यसे ।
अजस्रदीक्षाप्रयतस्य मद्गुरोः क्रियाविघाताय कथं प्रवर्तसे ॥" (रघौ)

(ख) "मद्दर्शनश्रित्यात् रक्षांसि न इष्टिविघ्नमुत्पादयन्ति ।"

(ग) "सायन्तने सवनकर्मणि संप्रवृत्ते वेदीं हुताशनवतीं परितः प्रयस्ताः ।"
(शाकु०)

(घ) यज्ञाङ्गयोनित्वमवेक्ष्य यस्य
सारं धरित्रीधरणक्षमं च ।
प्रजापतिः कल्पितयज्ञभागं
शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥ (कुमार०)

भारतीयराष्ट्रियत्वस्यान्यतमं वैशिष्ट्यमिदमपि यत् सदाधिभौतिकता-मुपश्लोकयदपि आध्यात्मिकतामुपश्लोकयति । कविः कालिदास आध्यात्मिकतां भारतराष्ट्रस्य गौरवाभरणं मन्यते ।

तत्त्वीयमिदं सुदृढं विश्रम्भणं यदाध्यात्मिकता राष्ट्रस्य जीवनम्प्रति सुधायते । सा तज्जीवनं भरति वर्धयति प्रमोदयति च । एतावदेव न सा हितमाचरति अपि तु सा तस्यामृतत्वाय कल्पते । भारतीयराष्ट्रियता सत्यप्येतावती पुरातनी अद्य जीवति इत्यत्र कारणमस्ति "आध्यात्मिकता ।" अतः कविः कालिदासोऽधः-स्थितेषु श्लोकेषु आध्यात्मिकताधियं वितन्वानो राष्ट्रमुपदिशति स्वकीयाध्या-त्मिकत्वाख्यं राष्ट्रियत्वं स्वीये चरिते परिणमयितुम्—

"अथ वीक्ष्य रघुः प्रतिष्ठितं प्रकृतिष्वात्मजमात्मवत्तया ।
विषयेषु विनाशधर्मसु त्रिदिवस्थेष्वपि निःस्पृहोऽभवत् ॥"
"अकरोदचिरेश्वरः क्षितौ द्विषदारम्भफलानि भस्मसात् ।
इतरो दहने स्वकर्मणां ववृते ज्ञानमयेन वह्निना ॥"
"न नवः प्रभुराफलोदयात् स्थिरकर्मा विरराम कर्मणः ।
न च योगविधेर्नवेतरः स्थिरधीरा परमात्मदर्शनात् ॥" (रघौ)

कलाप्रियता भारतीयाया राष्ट्रियतायाः कमनीयमङ्गमद्भुतम् । एषा कलाप्रि-यता मनोहरत्वात् न केवलं पुरा जननयनानि जनमानसान्यरञ्जयदपि तु सा भारतं समृद्ध्यागाधया अपरिमितया च श्रिया नितरामेव समृद्धमर्थवलितञ्च कुर्वती सर्वस्मिन् अपि भूभुवने च प्रथितञ्चकार । पुरातनं भारतं कलासु प्रीतिं विपुलां विदधौ । वात्स्यायनशास्त्रादिना तस्य कलाप्रियत्वं सम्यग् विदितं जायते । पारतन्त्र्यात् देशस्यास्य विश्वविदिता कलाप्रियताभिधा राष्ट्रियता क्षयं जगाम । भारतं जनाः संसारे यदि चारित्र्यादिना ज्ञातुमशकंस्तदा तत् , ते कलयापि

वृत्तान्तावगमनम्। एतदर्थं स तस्यामवस्थायां यं कमपि प्रयत्नं कर्तुं पारयति तमेवावलम्बते निर्विलम्बम्।

कविः सम्यग् जानाति यन्मानवः प्रकृत्या निर्बलः प्राणभृदस्ति यदपि तत्पक्षे प्रोक्तं भवति किंवा कृतं सञ्जायते तत् तमाश्वासयति प्रीणयति च परमेतावता तु न तस्य कोऽपि जायते लाभः। उचितं दुःखच्छेदं यत् तादृगुपायोऽवलम्ब्येत यथाविधिनं सः प्रीतोऽपि स्यादुपकृतश्च स्यात्। कविर्यत् कर्म आरचयति तदेतादृशमेव भवति। मानवस्तदीयेन कार्येण प्रसन्नतामतिशयामधिगच्छन् उत्तरोत्तरं प्रीतिसीमाभ्यासिकीञ्च समुन्नतिं विन्दति।

कविः कालिदास एतस्मिन् मेघदूतकाव्ये मानवस्य दुर्बलतायाः कोमलहृदयतायाः अधीरतायाश्च पक्षे ब्रुवाणस्तस्याभ्युत्थानञ्च कामयमानस्तं कान्तेवोपदिशति यथोचितेऽवसरे। क्वचित् स तं—

"याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा"

क्वचित्—

"न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्र[illegible]
प्राप्ते मित्रे भवति विमुखः किं [illegible] स्तथोच्चैः"

क्वचित्—

"रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय"

क्वचित्—

"मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः"

क्वचित्—

"आपन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम्"

इत्युपदिशन् श्रुतो भवति।

लोकस्य सर्वाङ्गीणं शुभं भूयादित्येव कवेरभिमतमतः स "तादृशप्रणयसन्देशात्मककथावस्त्वाकर्णनावसरे पाठकानां श्रोतॄणां चेतोऽतितरां ध्यानावस्थितं भवति चेत् तदानीं तदुपकारिणी वार्तोक्ता भवेत्, चेत् तेषां मङ्गलमयोपदेशसुधापायिता स्यात्, चेत् तेषां हिताय सम्मतिः समुपस्थापिता क्रियेत तदा नियतं तोऽस्ते मनोऽधिष्ठितो विधास्यन्ति सद्यो यतः समुचिते ऽवसरे समुदीरिता वाक् प्रायेण सफलैव भवती'ति निश्चित्य स्थाने स्थाने नानाविधान् उपदेशान् न्यस्यन् कथायाः प्रवाहमग्रे समुपसारयति। 'स्वार्थकर्मसु प्रयतमाना नराः

परिभवं प्रयान्ध्यतस्तादृशेभ्यो फलहानिकर्मभ्यः दूर एव संस्थातव्य' ।
वच एवं सः अनवारयति—

"ये संरम्भोत्पतनरभसाः स्वाङ्गभङ्गाय तस्मिन्
मुक्ताध्वानं सपदि शरभा लङ्घयेयुर्भवन्तम् ।
तान् कुर्वीथास्तुमुलकरकावृष्टिपातावकीर्णान्
के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः ॥"

"सुखदुःखानि जीवनेन सार्धमेव संयुतानि सन्ति यद्यप्येतस्य मर्त्योऽपि जनः सततमत्यन्तसुखान्येव निर्विशेत् वा सदैव दुःखान्येव । -
सित् सुखाभिसर्याः ,दुःखाभिसारायाश्च धरायाः—मुभयविधायामपि भूम्यां— ।

## अश्वघोषः—

यानि सुसूक्ष्माणि साधनानि मानवस्य हृदि सुखानुभावात्, तदोपयन्ति तेषु काव्यं नाम साधनं सर्वोत्तमं स्मृतम्। तत्र 'ध्वनिपथे' एवंविधा गुणाः लोभनैः वैशिष्ट्यस्य सकलं प्रागेव सरलतया सुगमपूर्वकञ्च समुपनिपद्यते। एषा हि मदीया महती सत्स्वपि बहुषु मानवहितावहेषु साधनेषु तदुद्गमतरं गौरवात्मनमध्यासयति। लोकहृदयाकर्षणे तस्य प्रशंसनीयं पटीयस्त्वं दृष्ट्वा, स्वात्मप्रभावसंस्थापने तस्य अमोघं सामर्थ्यमवलोक्य धर्मप्रचारणस्य श्रेष्ठं साधनं तदेवेत्य, यशोधियमनस्य लब्धिवान्तरेण ललितमुपायं निरूप्य सर्वेषामपि शास्त्राणां ज्ञानस्य प्रकाशनार्थं प्रतिभाया सदुपयोगार्थं वैदुष्यस्य वर्धनार्थं लोकप्रियतायाश्च लाभार्थं तदेव सुपदं समीचीनं विधानमिति करणं निश्चित्य चेतसि, महान् दर्शनपण्डितो बुद्धधर्मानुगः कविकुलचूडामणिः अश्वघोषः काव्यानि प्रणेतुं प्रचक्रमे—इत्येवमस्मदीयो यो दर्शयान् विचारस्तम्—

> "इत्येषा व्युपशान्तये न रतये मोक्षार्थगर्भा कृतिः
> श्रोतॄणां ग्रहणार्थमन्यमनसां काव्योपचारात् कृता।
> यन्मोक्षात् कृतमन्यदत्र हि मया तत् काव्यधर्मात् कृतम्
> पातुं तिक्तमिवौषधं मधुयुतं हृद्यं कथं स्यादिति॥"

इत्येतास्तदीया सौन्दरनन्दस्या पङ्क्तयः स्फुटं परिपोषयन्ति।

अश्वघोष इतिहासवर्णितस्य महाराजकनिष्कस्य गुरुरासीदिति अनुसन्धातॄणां मतम्। केषाञ्चन जनानामिदमपि कथनं यत् स एव महायानसम्प्रदायस्य माध्यमिकशून्यवादस्य च आद्यः प्रवर्तक आसीत्, परमितरेषामभिप्रायस्तेतद् यन्माध्यमिकशून्यवादस्य प्रवर्तको नागानन्दो नाम विद्वान् बभूव। माध्यमिक-शून्यवादस्य महायानसम्प्रदायाद्भिन्नात् जनश्रुतिरेषाऽप्यस्ति यदसौ माध्यमिकशून्यवादमपि प्रवर्तयामास। परं केचन तु तं महायानसम्प्रदायस्यानुयायिनं नापि वास्तुमपाच्छन्ति। ते प्राहुर्यत् महायानसम्प्रदायस्य तु प्रादुर्भाव एव तदा नासीत्। स तु अश्वघोषकालात् प्रायेण वर्षशतकानन्तरमुदियाय। अस्तु

नैतद् विषयविवेचनमिहाभिमतम् । अत्र तु केवलमेतावदभिधानमिष्टं यत् सः स्वसमयस्य महान् दार्शनिको बौद्धविद्वत्प्रवरो विपश्चिदासीत् । "आर्य सुवर्णाक्षी-पुत्रस्य साकेतस्थ-भिक्षोराचार्यभदन्ताश्वघोषस्य महावादिनः कृतिरियम्" इत्येषा सौन्दरनन्दपुष्पिकास्थिता पङ्क्तिस्तस्य सुवर्णाक्ष्याः पुत्रत्वं साकेतस्य वास्तव्यत्वं प्राप्तभदन्तविरुदत्वञ्च प्रकटीकरोति ।

अश्वघोषो बहून् बौद्धदर्शनसम्बन्धिनः साहित्यिकांश्च ग्रन्थान् असृजत् परं दर्शनविषयकेषु ग्रन्थेषु विदुषां मध्ये महान् विवाद एव श्रूयते । 'महायान-श्रद्धोत्पादसंग्रह.', 'वज्रसूची', 'गण्डीस्तोत्रगाथा' 'सूत्रालङ्कार.' इत्येते तेन अलेखिषत दर्शनग्रन्थाः इत्येषा सुप्रसिद्धिर्वर्तते परं तेषां तत्कृतत्वं नाद्यापि बहुभिरेकमतेनाङ्गीक्रियते । साहित्यसम्बन्धिनीषु तद्रचनासु न परस्परविरोधिन्य उक्तयः श्रूयन्ते । 'बुद्धचरितम्', 'सौन्दरनन्दम्', 'शारिपुत्रप्रकरणम्—इत्येता स्तिस्रोऽपि कृतयः सन्त्यश्वघोषस्येति सर्व एव स्वीकुर्वन्ति । एतास्वाद्ये द्वे काव्ये स्तः अन्यच्च प्रकरणमस्ति । शारिपुत्र-प्रकरणस्यान्वेषणं प्रो० ल्यूडर्सश्चकार । कथ्यते यदुक्तेन प्रकरणेन ( रूपकेण ) सममेव सः अन्यच्च खण्डितं नाटकद्वय-मनुसन्दधौ । खण्डितत्वात् तयोस्तन्नामादिकमविदितमेव विद्यते । परं ते अश्वघोषस्यैवेति प्रतीयेते तयोरश्वघोषीयाया भाषाया भावाभिव्यञ्जन-सरण्याश्च दर्शनात् ।

बुद्धचरितमष्टाविंशतिसर्गनिबद्धं महाकाव्यं कविश्चकार इति विद्वांसो वदन्ति । परमिदानीन्तु तत्र चतुर्दश सर्गा एव प्राप्यन्ते । पञ्चमे ईशवीये शतके धर्मरक्षो नाम कश्चिद् भारतीय. पण्डितः काव्यमिदं दरद ( चीनी ) भाषायाम् अनूदितवान् । अष्टमस्य शतकस्याभ्यर्णे त्रिविष्टपीयभाषायामपि तस्यानुवादोऽभवत् । एता-वुभावनुवादौ साम्प्रतमुपलभ्येते । अनूदितं काव्यमिदं जान्स्टनो नाम आङ्ल-विद्वान् आङ्लभाषायामनुवाद । काव्यस्यास्य हिन्दीभाषायां योऽनुवादोऽधुने लभ्यते स आङ्लभाषात एव कृतो वर्तते । इत्सिंगो नाम यात्री काव्यस्यास्य बृहदाकारत्वं प्रतिपादयति तस्मात् ज्ञायत इव यत् कविरिदं काव्यमवश्य-मेवाष्टाविंशतिसर्गेषु । 'बुद्धचरित'-काव्यस्याधिकतमोंऽशो धार्मिकेण दार्शनिकेन च विषयेणोद्ग्रथित आस्ते । तस्मादत्र तथाविधं लालित्यं काव्यत्वञ्च राजेते ...धै लालित्य-कवित्वे सौन्दरनन्दे भासेते । परं बुद्धचरिते प्रदर्शितं ...शलं 'कवावश्वघोषे हि सरसं प्रसन्नं प्रकृष्टं कवित्वं विलास' इति

तृतीयाङ्केऽवतारिता छायासीताविषयिणी कल्पनापि कवेर्मनोविज्ञानविदं सूचयति। सीताया अपमानजनितवेदनाया स्वाभाविकयैव रीत्या अपनयनकारित्वात् कवेस्तदपि कल्पनाकलितं कार्यं तस्य श्लाघनीयमेव सवृत्तम्। हृदयग्रन्थ्युद्भेदनाय हृदयमर्मभागे स्थितस्य गूढविषादस्य विनोदनाय रामकृत-प्रशंसाया स्वकीयाया आकर्णनेन समुत्पन्नस्य सुखस्यानुभवनाय च न कश्चिदन्य उपाय आसीदत कविकृत स उपायो नितरामेव स्तुत्य।

वस्तुतस्तृतीयोऽङ्क कवेर्नाट्यचातुर्या विलक्षण निदर्शनम्। तमङ्क सयोज्य कविर्नितान्तदुरूहाण्यपि कार्याणि विनैवायास साधयितु क्षम सञ्जात। स तथा कृत्वा राममनिवारणीयमिन्द्रात पाति सीतामपि स तस्मादनलाद् रक्षति य पनिकृतनिकाराद्रुत्पन्न पत्नीं दहति। तृतीयाङ्कस्य प्रण्यनचातुरी कवेरिदमपि मनोज्ञ फल जनयति यत् सप्तमेऽङ्के नैसर्गिकरीत्यैव सीताया पुन सयोगरूप कार्यं सम्पन्नता याति।

कवेर्घटनासयोजनसम्बन्धिन्या निपुणताया अन्यच्च ललित निदर्शनमस्ति सप्तमाङ्कस्थगर्भाङ्क। तद्विषयिणी कल्पना वस्तुतस्तत्रैव सम्भवा भवति यत्रावसान सुखमय घटते। कवेरियमूहा नितान्तनवीना। सा अद्भुत रस सहृदय दर्शकाना चेतांसि कौतूहलेन पूर्यमाणानि करोति तदेव घटनाना सन्निधान सर्वत्र आदितोऽन्त यावत् सुश्रृङ्खल सयत सुश्लिष्टञ्च वर्तते। एवंविधा समीचीनतां नाटके वस्तुतो नाट्यकलानदीष्णो नाटककार एव सञ्चारयितु क्षमते। कवेरेषा कुशलता महावीरचरितेऽपि दृश्यते। प्राचेतसाश्रमपदे कौसल्याजनका दीनां सम्मेलनमपि कविकल्पनाया पेशलप्रसाधनत्वेन नाटके शोभमान भवति।

रूपके कतिपयेषु चरित्रेषु रामस्य सीतायाश्च चरित्रमतितरा सुललितम्। लक्ष्मण जनक चन्द्रकेतु लव कुश वाल्मीकि कौसल्या ऽरुन्धती गङ्गा पृथिवीप्रभृतीना चरित्राणि तत्रावश्यमेव महत्त्व भजन्ते। भवभूती राम गृहाधिपति वन चित्रयति तत्र स तदीय दैहिक नैतिकञ्च तेज सम्यगङ्कते। शम्बूकस्तस्यासुरसहारकत्वात्, त प्रशसति। सीतालालित करभ गोपायितु स मैश्वर्यमुपसरन् वीक्ष्यते। कुशस्त हि "आशसनीयपुण्यदर्शन स महात्मा" इत्यभिधाय श्लाघते। स ब्रह्मराशस्यासीद् गोप्ता। जगद्रक्षण तज्जीवनस्य लक्ष्यमासीत्—"इद विश्व पाल्य विधिवदभियुक्तेन मनसा"। सत्यन्तु इद यत् कर्त्तव्य पालन स मूर्धन्यत्वेन मेने। स कर्त्तव्यपालनोद्देश्येनैव कर्त्तव्यमकरोति स्म न च केनाप्यन्येन

ममारे विरेजे वस्तुत स भुवो भूषणमासीत्। तेन जगदिदं परमेव गरिमाणं जगाम।

यथाविधो रामो मानवतायाः परमरमणीय पावनोऽवतार आसीत् तथापि धामेव भवभूति सीतामपि तच्छ्रेयसीं स्वकीये रूपके परमनिपुणहृदयेन चित्रया माम। नाटके सा पत्नीत्वेन चित्रितास्ति न सा तत्र मातृत्वेन पुत्रीत्वेन चित्रिता वीक्ष्यते। सा रामार्थं सर्वं सेहे। सा तद्विनायैव अजीवत्। सा छायेव तमनुजगाम। निर्वासिते सति रामे सा सर्वाण्यपि सुखानि प्रताड्य चरणेन, राममनुप्रयाता। वस्तुतः सा एका सतीशिरोमणिर्नारी आसीत्। यदा हि निरपराद्धा सा स्वयं रामेण निर्वासनं प्रापिता तदापि न सा रामे एकमपि अपशब्दं प्रयुयोज। सा आत्मानमेव पुरोभागिनीं मेने। आत्मानमेव सा पुनः पुनः आक्रोशत। "एवमपि मन्दभागिन्यहं या पुनरायासकारिणी आर्यपुत्रस्य" "सखि वासन्ति! स्वमेव दारुणा कठोरा च। यैः प्रलपन्तं प्रलापयसि" इत्यादीनि तद्वचांसि रामगतं तत्प्रेम कियत्पवित्रं कियत् निःस्वार्थमासीदिति स्पष्टमेवावगमयन्ति। भर्तुरानाडलाम्प्रति एतादृशमात्मसमर्पणं तत्कृतपरित्यागेऽपि स्वकीयस्य भाग्यस्यैव दोषित्वेन स्वीकरणं सीतायास्तामुदात्ततां तां महत्तां द्योतयति या न कोऽपि मानदण्डो मातुं प्रभवति। नाटकस्य तृतीयोऽङ्कः सीतायाः गम्भीरं पतिविषयकं प्रेम चित्रितङ्कुर्वाणं प्रेक्ष्यते। पतिदुःखं न सह्यमासीत् तस्याः। स्वदुःखयोः एवं-स्वनन्तरमपि सा पतिमेव नितरां सस्मार। न किमप्यनिष्टं तस्य स्यादित्येषा सर्वदान्तिमकामनासीत्। तस्याश्चरित्रस्य शुद्धता तु रामश्रिरादेव अवदत्—

"उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः।
तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः॥"

सीतायां रामस्य प्रेम कियन्महदासीदिति एतत्तु तदा पराकाष्ठां श्रियं गतमीक्ष्यते यदा सीतायाः हिरण्मयीं प्रतिकृतिमश्वमेधयज्ञानुष्ठानाय प्रतिष्ठापयन्तं रामं पश्याम। सा घटना सीतायाः अपरिमेयस्य निर्दोषस्य चरित्रस्य सर्वविजयी विजयः। हन्त, वयमस्मिन् नाटके सकृदेव स्वमातरं सीतां लक्ष्मणम्प्रति "इयमपि अपरा का" इत्येतेन वचनेन उपहारं कुर्वाणां पश्याम। वस्तुतो जगति सा उपमानशून्यैका आदर्शपतिव्रता महिलासीत्। सदाचारमुपदेष्टुं संसारं भारतस्य च भालमुज्ज्वलतमं कर्तुमेव सावततार। लक्ष्मणो नाटके महान् रामाज्ञापालकः स्वार्थविहीनोऽनुज इव गीतः। रामस्याज्ञापालने स आत्मानं

गौरवशालिनममंस्त । स स्वबन्धुवरस्य रामस्य तेषु सर्वेष्वपि कार्येषु महान् सहायको बन्धुर्बभूव यानि रामस्य चरित्रं सम्यगुत्कर्षयितुमनितरां तज्जीवनेऽघटन्त ।

कविनाटकेऽस्मिन् च सर्वाणि पात्राणि समुचिततया कुशलतया च आलङ्क्षि । न कस्यापि पात्रस्य स्वरूपं महाकवि विपरीततया निकृष्टतया वा तच्चरित्राप-कर्षकारिण्या रीत्या व्यक्तं भवेदित्येतद्रूपं स भृशमयतिष्ट । उद्योगे चास्मिन् स सफलतां गतः प्राप्यते ।

कवेः कृतिमिमां विलोक्य तस्य विचारविधा साधु विदिता संजायते। वस्तुतः को जनः कीदृशः इत्येतत् तस्याचारान् विचारान् रचनाश्च विलोक्यैव ज्ञातं भवति । उत्तररामचरिताध्ययनेन भवभूतेः प्रणयशीलभर्तृत्वं वात्सल्यपूर्णपितृत्वं च सिद्ध्यति तस्य प्रिया प्रेम—

"इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥
"अद्वैतं सुखदुःखयोरनुगुणं सर्वास्ववस्थासु यद्
विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।
कालेनावरणात्ययात् परिणते यत् स्नेहसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत् प्राप्यते ॥

इत्येताभ्यां श्लोकाभ्यां स्फुटमेवाभिव्यक्तिमुपैति । अथ च

"अङ्गादङ्गात् सृत इव निजः स्नेहजो देहसारः
प्रादुर्भूय स्थित इव बहिश्चेतनाधातुरेकः ।
सान्द्रानन्दक्षुभितहृदयप्रस्रवेणावसिक्तो
गाढाश्लेषः स हि मम हिमश्च्योतमाशंसतीव ॥"
"अमृताध्मात-जीमूत स्निग्ध-संहननस्य ते ।
परिष्वङ्गाय वात्सल्यादयमुत्कण्ठते जनः ॥"

तदीयं वात्सल्यं विनिर्गताभ्यां श्लोकाभ्यां तनययोः पुरतः परिस्फुटमभिव्यक्तं भवति । सहनिवासवर्णने स तस्याः भीरुतां भृशञ्च रूपं विवृणोति । तस्या-स्सर्वमेव स्वरूपं तस्मै रोचत इव । तस्यां स सम्मानस्य स्थितिमीक्षते न दर्पो-

न्मादस्य। कवेस्ताद्दशवर्णनमालोक्य तस्य प्रकृतेर्निराशास्पदता विपण्णता च प्रतिलक्ष्यते। तदीये रूपके निरूपकस्याभावोऽपि तत्प्रकृतेस्तादृशस्य परिपोषयतीव। निदाघस्य भीषणकठोरता तत्प्रखरप्रतिभा साकारा दृग्गोचरस्थापयति। दृश्यताम्—

'निष्कूजस्तिमिताः क्वचित्क्वचिदपि प्रोच्चण्डसत्त्वस्वना
स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः।
सीमानः प्रदरोदरेषु विरलस्वल्पाम्भसो यास्वयं
तृष्यद्भिः प्रतिसूर्यकैरजगरस्वेदद्रवः पीयते॥"

कौशिकानां पङ्क्तिं, मौकुलीनां कुलम्, कुम्भीनसानाञ्च उद्वेल्लनमिह कियद् भातिमुत्पादयन्तीत्यपि धैर्येण विलोक्यताम्—

"गुञ्जत्कुञ्जकुटीरकौशिकघटाघुत्कारवत्कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चाभिधोऽयं गिरिः।
एतस्मिन् प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणरोहिणतरुस्कन्धेषु कुम्भीनसाः॥"

एतादृशानि वर्णनानि कवेर्गभीरप्रकृतिरवश्यमभिव्यञ्जन्ति। इदन्तु न वक्तुं शक्यं यत् तत्र विनोदप्रियताया ललितपदप्रियताया अभाव एवासीत्। तथात्वे उत्तररामचरितसदृशस्य करुणरसप्रधानस्य रूपकस्य वा मालतीमाधव समस्योन्मुक्तप्रणयस्य प्रणयनमेव कदा सम्भवं स्यात्। कवावस्मिन् विशिष्टता भूयस्येव, स वर्णनीयस्य पदार्थस्य स्वरूपं तद्गताश्च धर्मान् प्रत्यक्षीकृत्य समुपस्थापयति। यदा नदीकलकलं श्रावयितुमिच्छति तदा तासां कलकलध्वनि श्रुतिपथमायाति यदासौ किङ्किणीनां रणत्कारं श्रावयितुमभिलषते तदा स रणत्कारोऽपि स्पष्टं श्रुतो भवति। प्रकृतिपर्यवेक्षणे वस्तुतो हि तस्य दृष्टिः सूक्ष्मा वर्तते। भारवि माघ श्रीहर्षमुरारीणां प्रकृतिवर्णनमप्रस्तुतविधानाभङ्गमेव दृश्यते। एतस्य तु तत्तो मुक्तमेव प्रतिलक्ष्यते।

भवभूतेर्भारती शृङ्गारे करुणे च यदि कोमलकान्तपदावलिपेशला तदा सा वीरे रौद्रे चोत्कटकठोरदीर्घतरसमासलसिता विलसति।

"भूयो भूयः सविधनगरीरथ्यया पर्यटन्तं
दृष्ट्वा दृष्ट्वा भवनवलभीतुङ्गवातायनस्था।

साक्षात्काम नवमिव रतिर्मालतीमाधव यद्
गाढोत्कण्ठालुलितललितैरङ्गकैस्ताम्यतीति" ॥

इत्यत्र तदीया या लेखनी सुकोमलतां चित्रयन्ती समुल्लसति सैव

"उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा—
न्यसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आर्तः पर्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति" ॥

इत्यत्र बीभत्स भयानकञ्च रसं विपत्पादनेन प्रकटयन्ती समुपतिष्ठते ।

भवभूते कलायां वैदुष्यस्य प्रतिभाप्रपुञ्जिताया कल्पनायाश्च मनोहर समन्वयश्चास्ति । स शृङ्गारे करुणे, रौद्रे, वीरे, भयानके च अतएव, सलील सानन्द विचरन् वीक्षितो जायते । श्लेषयमकप्रपञ्चकर्दमे क्वापि निर्लीनो नावाप्यते यत्र कलाया मोह सर्वोऽनु न दशाऽऽ तत्र तदीया भाव सुषमा म्लानतामेव गता दृश्यते । मालतीमाधवे महावीरचरिते च स समासान्तपदावलया शिल्पानुप्रासिचमत्कारे अतितरा रुचिं निदधान अवाप्यते । एवंविधस्याभिनिवेशस्य दर्शनमुत्तररामचरितेऽपि यत्र तत्र भवति ।

भवभूति प्रेमभावस्य बाह्यकारणाश्रितताया न श्रद्दधते । तद्विचारेण प्रेमाभ्यन्तर वस्त्वेव । अत्र तदीया एषा मान्यतास्ति—

'व्यतिषजति पदार्थानान्तर कोऽपि हेतु
न खलु बहिरुपाधीन् प्रीतय संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीक
द्रवति च हिमरश्मावुद्गते चन्द्रकान्त" ॥

कवि करुणरसमेव प्रधान रस मन्यते इत्यतस्तथ्य तस्य गिरय प्रथयति—

एको रस करुण एव निमित्तभेदाद्
भिन्न पृथक् पृथगिवाश्रयते विवर्तान् ।
आवर्तबुद्बुदतरङ्गमयान् विकारा-
नम्भो यथा सलिलमेव तु तत्समग्रम् ॥

भावशबलताया प्रेक्षण तदुपपादनञ्च उभयमपि कविर्भवभूतिर्जानाति । अव्यक्तस्यापि हृदयस्य व्यक्तताया परिणमन य कलाद विदः विदति तच्चक्षतमोऽस्य कवि । पञ्चवट्या तमसया सार्धं प्रयान्ती सीता रामस्य सुमधुरां वाणीं

माकर्ण्य याममनेकभावविभूषिता दशामासाद तद्दर्शने चेत्कौतूहल तदा कवरस्य श्रूयता श्लोकोऽयम्—

'तटस्थ नैराश्यादपि च कलुष विप्रियवशाद्
वियोगे दीर्घऽस्मिन् झगिति घटनोत्तम्भितमिव ।
प्रसन्न सौजन्यादपि च करुणैर्गाढकरुण
द्रवीभूत प्रेम्णा तव हृदयमस्मिन् क्षण इव ॥"

भवभूतिर्भावानामुदरदर्या प्रविशति स मर्मभागोन्मीलननिपुणेन वैदग्ध्येन तानभिव्यनक्ति स तादृशान् एव शब्दान् प्रयुनक्ति यादृशा शब्दा कमपि भाव मनोवग वा दर्शयितु प्रभवन्ति । तदीय लक्ष्यमेवेद यद् गूढातिगूढानि तत्त्वानि प्रकाशमृच्छेयु । न स भावमौन्दर्यकल्पनाय उपमोत्प्रेक्षयोरवलम्बने नितरा मनो निबध्नाति । ते वस्तुतयैव सन्निधातुमीहते स । चित्रदर्शनावसरे समुद् गतान् राम हृद्गतान् हृद्यान् भावान् प्रस्तौति स इत्थम्—

'अय ते बाष्पौघस्त्रुटित इव मुक्तामणिसरो
विसर्पन् धाराभिर्लुठति धरणीं जर्जरकण ।
निरुद्धोऽप्यावेग स्फुरदधरनासापुटतया
परेषामुन्नेयो भवति च भराध्मातहृदय ॥'

सस्कृतभाषाया कव पूर्णाऽधिकारो वर्तते । स अत एव, यस्य पदार्थस्य निरूपणाय यादृशी भाषापेक्ष्यते तस्य पदार्थस्य निरूपण तादृश्यामेव भाषाया कुरुते । उत्कटवैदुष्यवत्तया तीक्ष्णतरप्रतिभाशालितया कल्पनाकलितचित्ततया च तदीयानि सर्वाण्यपि वर्णनानि प्रवाहपूर्णानि प्राञ्जलानि च भूरवोपस्थितानि भवन्ति । युद्धवर्णनकरमिममध स्थित श्लोकमुद्धृत्योपरि निगदित वच प्रमाणित कर्तुमिच्छाम —

'आगर्जद् गिरिकुञ्जकुञ्जर घटानिस्तीर्णकर्णज्वर
ज्यानिर्घोषमम-दुदुन्दुभिरवैराध्मातमुज्जृम्भयन् ।
वल्गद्भैरवरुण्डखण्डनिकरैर्वीरो विधत्ते भुव
तृप्यत्कालकरालवक्त्रविघसव्याकीर्यमाणामिव ॥'

भवभूति र्कविर्यथा अलौकिक्या काव्यशक्त्या नितान्तमनुपमस्तथैव शास्त्रीये पाण्डित्ये चाप्युद्भट एवासीदित्येतत् सत्य तदीयादध स्थिताच्छ्लोकादवगम्यते—

'यद् वेदाध्ययन तथोपनिषदा साङ्ख्यस्य योगस्य च
ज्ञान तत्कथनेन किं ? न हि तत कश्चिद् गुणो नाटके ।

यत्प्रौढत्वमुदारता च वचसां यच्चार्थतो गौरवं
तच्चेदस्ति, ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः ॥

तस्य शास्त्रीय-पाण्डित्य-व्यञ्जकानि कानिचन उदाहरणानीह प्रदर्श्यन्ते—महावीरचरिते कविरयं पुरोध प्रशंसायां 'राष्ट्रगोप पुरोहित.' इत्याद्यारम्भ् ऐतरेयब्राह्मणस्य मन्त्रमुद्धरन् वीक्ष्यते । उत्तररामचरितस्य चतुर्थेऽङ्के जनकमुखादेव 'असुर्या नाम ते लोका.' इत्यादिवाक्यानि निर्गमय्य स ईशावास्योपनिषद्विज्ञतां विज्ञापयन् प्राप्यते । तत्रैव च—

"विद्याकल्पेन मरुता मेघानां भूयसामपि ।
ब्रह्मणीव विवर्तानां क्वापि प्रविलय कृतः ॥"

इत्यनेन श्लोकेन सः अद्वैतवेदान्तवैदुष्यमुद्भासयन् समासाद्यते ।, सौधातकि-दण्डायनसंवादश्रवणेन तस्योच्चा मीमांसाभिज्ञता धर्मशास्त्रपारावारीणता च स्पष्टं सुविदिता भवति । इत्थमापाततो विलोकनेन तस्य नानाशास्त्रनिष्णातता-नायासेनैव ज्ञाता जायते ।

भवभूतिरुत्तररामचरितस्य कृते कथावस्तु वाल्मीकिरामायणाद् जग्राह । स तस्य पल्लवनाय च विशेषेण धर्तते ऋणी कविकालिदासस्य । भासस्य प्रति सोऽस्त्यंशतोऽधमर्ण । विदुषां कथनमिदं यत् तदीयालेख्यदर्शनं कविकालिदासस्य—

'तयोर्यथाप्रार्थितमिन्द्रियार्थानासेदुष सद्मसु चित्रवत्सु ।
प्राप्तानि दुःखान्यपि दण्डकेषु सञ्चिन्त्यमानानि सुखान्यभूवन् ॥'

इत्येतस्या उद्भावनाया एव विस्तरो विभाति ।

सीता वासन्तला च द्वे अपि त्यक्ते अभवतां यदा ते अन्तर्वत्न्यावास्ताम् । कालिदासस्य राम सीता-परित्यागावसरे शोचति—

'राजर्षिवंशस्य रविप्रसूतेरुपस्थितः पश्यत कीदृशोऽयम् ।
मत्तः सदाचारशुचेः कलङ्कः पयोदवातादिव दर्पणस्य ॥'

भवभूते रामोऽपि एवमेव दूयते—

'यत् सावित्रैर्दीपितं भूमिपालैर्लोकश्रेष्ठैः साधु शुद्धं चरित्रम् ।
मत्सम्बन्धात् कश्मला किंवदन्ती स्याच्चेदस्मिन् हन्त धिङ् मामधन्यम् ॥'

सीता शकुन्तला च—द्वे अपि महिष्यौ—सर्वथैव स्वस्वपत्या पर्युज्झिते भवत । सीतायाः पती रामः शकुन्तलायाश्च पतिर्दुष्यन्तो बहुदिनानन्तरं हि

आश्रमे स्वात्मजान् ऋषिपालितान् प्राप्नुतः। द्वावपि राजानौ स्वस्वसुतस्याकृतिं स्वकीयाकृतिसंवादिनीं वीक्ष्य विचारमग्नौ भवतः। कालिदासः अभिज्ञानशाकुन्तले सप्तमेऽङ्के 'अस्य बालकस्य रूपसंवादिनी ते आकृतिः' इति किञ्च भवभूतिरपि उत्तररामचरिते षष्ठेऽङ्के 'अये न केवलमस्मत्संवादिनी आकृतिः' इत्येतद् उपन्यस्यति। कालिदासस्य शकुन्तला भवभूतेश्च सीता द्वे अपि स्वस्वभर्तृविरहदुःखात् नितान्तमेव दूयेते। चिरकालव्यापिविच्छेदसहनानन्तरं यदा शकुन्तला दुष्यन्तं पश्यति तदोद्गिरत्येवं 'न खलु आर्यपुत्र इव' इति; भवभूतेः सीतापि एवमेव तमालोक्य बहुकालानन्तरमाह—'हा कथं प्रभातचन्द्रमण्डलपाण्डुराकृतिः' इति। दुष्यन्तः शकुन्तलामधिकृत्य यदि वक्त्येवं—

'वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणिः।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्ति॥'

तदा उत्तररामचरितेऽपि सीतामुद्दिश्य तमसामनति तद्वैवम्—

'परिपाण्डु दुर्बलकपोलसुन्दरं दधती विलोलकबरीकमाननम्।
करुणस्य मूर्तिरिव वा शरीरिणी विरहव्यथेव वनमेति जानकी॥'

भासस्य स्वप्नवासवदत्तीयात् पञ्चमादङ्काद् भवभूतिः स्वकीयोत्तररामचरितस्य तृतीयाङ्कं प्रणेतुं साहाय्यं लभत इति च विचक्षणानां विचारः। अस्तु तावत् किमपि। कवेर्भवभूते रचनेयमुत्तररामचरिताभिधा श्रेष्ठरचनास्ति। गोवर्द्धनाचार्यस्तस्येमां कृतिमुद्दिश्य सत्यैव सत्यमाह—

'भवभूतेः सम्बन्धाद् भूधरभूरेव भारती भाति।
एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा॥'

वाक्पतिराजश्च 'गउडवहो' काव्ये प्रशंसतिस्म एवं कविवरमिमम्—

भवभूतिजलधिनिर्गतकाव्यामृतरसकणा इव स्फुरन्ति।
यस्य विशेषा अद्यापि विकटेषु कथानिवेशेषु॥ (संस्कृतच्छाया)

धन्यो धन्यो लोकातिशायियशोराशिसमुद्भासितो विश्वविदितमहानुभूतिर्भवभूतिः।

—:०:—

# भारविः

दुर्दैववशाद् भारतवर्षीयार्षज्ञानभास्करे चिरायास्तमुपेतेऽपि तमस्समावृतहृदया भारतीया आर्याः कथमद्यापि विगतानन्दनिकुरम्बं सुरसस्मृतिमात्रसर्वस्वं स्वजीवनं सफलमिव मन्यन्ते इति चेद् विचार्यते केनचिद् विचारवता, तर्हि तन्मानसे एतदेव प्रतिभासते यदेतस्यां विजयवैजयन्तीविभूषितायां वसुधायामिदानीमपि नन्दन्ति केषाञ्चनाखिलभुवनमनआवर्जनकुशलानां नराणां गौरवविभा यामि. प्रमोदितस्वान्ताः सन्तोऽस्मिन्नप्यनेहसि सर्वे एतस्मिन्नेव पुरुषोत्तमाङ्घ्रिपङ्कजपरागपावनीकृते भारते जनुर्ग्रहणेन स्वं कृतार्थीकर्तुं कामयन्ते । देशस्यास्य विशालस्य नैसर्गिकसुषमामहीयसा सनातनधर्ममहिम्ना सुरसरस्वतीश्रिया च साम्प्रतमपि भारतीयग्रामागमनं सर्वोपरि विविदीति ।

समन्तात्सुधांशुधवलीकृतदिगन्तानां सरस्वतीचरणसरसिजचञ्चरीकाणां व्यास-वाल्मीकि-कालिदास-भवभूति-बाण-भिक्कादण्डिव्यासप्रभृतीनां महादेशस्यास्य कविप्रवराणां कविस्वर्गीणाक्रमणं यद्यपि अस्मद्दुर्नियतिविधानाश्चिरेण तिरोहितनामधिजगाम तथाप्यमृतस्यन्दिनो तद्वचनरणनधारानिःस्यन्दयो. स्वां समर्पयन्तीव स्मारयन्तीवातीतगौरवगाथा, उत्पादयन्तीव कौतूहलं वैदेशिकविपश्चित्सन्दोहानां, मज्जयति सुरसपारावारेऽपारे रसिकनिकरम् ।

एतस्मिन् विपुलविपुले वसुधातले न विद्मः कियन्तोऽसुमन्त उत्पद्यन्ते । क्षीयन्ते च दिवानिशम्; परं 'कीर्तिर्यस्य स जीवति' इत्येतामुक्तिमन्वर्थीकर्तुमेवेदानीमपि कविभारवेरर्थगौरवगुरुगिरोपन्यासविदग्धस्य विमलवर्णाभरणाया गम्भीराया सुरवाचाया कान्ता प्रतिमा सुमनसां मानसेऽजस्रं शान्तिसुरसरितं सञ्चारयति ।

यद्यपि महामहिमशाली महाकविर्भारविः कविकुलकलामकालिदासभवभूतिवद् यशोऽधिगन्तुं मानमवाप्तुं वा न शशाक तथापि कठोरतपःसाधनसन्तोषितायाः सकललोकाराध्याया वाग्देवतायाः शुभाशिषा सुधीस्तोमे कविरत्नशतेष्वरमोत्कर्षं महत्त्वं महनीयमनन्यसुलभमासनमलङ्कुरुते इत्यत्र नास्ति कस्यापि

निप्रतिपत्ति.। यथर्तुषु कुसुमाकरस्तथैव कविषु कालिदासोऽपि परीजर्ति इत्येतद् यद्यपि सत्यं परं तथात्वेऽपि भारविकविता रसपिपासूनां सहृदयानां पेयैव।

प्रतिकवेः काव्ये भवति कापि विलक्षणता। वसन्ते विद्योतते कापि कमनीया कान्तिर्नूनं, परं तत्र न सा रमणीयता या नीलाम्बुदघटासु शोभते एवमेव तासु घटास्वपि न राजते सा सुन्दरता या पार्वणशारदेन्दोश्चन्द्रिकायां विलसति। भवति बहुविधा सुन्दरता। कस्मै कापि शोभा रोचते कस्मै च कापि। क्षीरस्य मधुरिमा स्वकीय एव, द्राक्षाया मधुरता स्वीयैव, शर्करायाश्च माधुर्यं नैजमेव। एवमेव प्रतिकवेः कविता स्वां स्वां सरसतां समुपन्यस्यति। रसपिपासवः सर्वेभ्योऽपि सरसेभ्यस्तत्तेभ्योऽनारतं रसं पायं पायमात्मानं परिप्रीणयन्ति तस्माद् भारवेः कवितायां अपि गभीरार्थसौन्दर्यसुन्दरत्वादानन्दाधायकत्वाल्ललितपदपातनत्वात् सतां धीमतां नितरां सा प्रीतिकरी।

भारविः कलापक्षेऽभिनिवेशं निदधानोऽपि माघ इव न शब्देऽर्थे चोभयोर्गम्भीरतामभिलषते न च सः श्रीहर्ष इव प्रौढोक्तीनां दीर्घदीर्घतरोत्प्लवने परीरम्भक्रीडायाश्च प्रीतिविशेषं पुष्णाति। तदीया चित्तवृत्तिर्विशेषतोऽर्थगहीयस्त्वायां रमते। वर्णनात्मके तर्कप्रधाने ओजसि भूयसीं मुदं विन्दते। शब्दक्रीडायामपि सा तृप्तिमश्नुते भृशम्। तस्यास्तद्विधाया रुच्या दर्शनं विशेषतः पञ्चमे पञ्चदशे च सर्गे भवति। सा श्लेषेऽनुरज्यतीति सत्यं परं तद्दीया सानुरक्तिर्न तावतीं सीमामालिङ्गति यावतीं माघस्य श्रीहर्षस्य वा। काव्ये प्रयुक्तेषु पदेषु स्फुटत्वमर्थं गुरुत्वं वचस्यपौनरुक्त्यमथ चार्थसामर्थ्यप्रतिहतगतित्वं स्यादेवेत्येष एव तदीयः कलानुपक्तः सिद्धान्तः प्रतिभासते।

> 'स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम्।
> रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित्॥

' इत्येतेन नैजेन श्लोकेन कविः स्वाभिमतमेतमुद्धावयन् प्रतिलक्ष्यते।

भारवेः कवितायां नैतिकानि तत्त्वानि स्वकीयामाभामादाय मार्गेण सर्वत्रैव दीप्यन्ते। तस्य व्यावहारिकः शास्त्रीयश्चानुभवः परिपक्वः प्रगल्भश्च। पण्डिता अपि तदीयांस्तान् नैतिकान् सिद्धान्तान् अनुभवभावितानि वचांसि च रसनाग्रवर्तीनि विधायात्मानं धन्यं मन्यन्ते।

अनुभवेन स यद् यदर्जितवान् तद् तद् तस्य काव्ये यत्र तत्र विकीर्णं वर्तते। हितकारके हि वचने मनोहारिता दुर्लभा इत्येतमनुभवं स इत्थं प्रकटीकरोति—

'क्रियासु युक्तैर्नृप चारचक्षुषो
न वञ्चनीयाः प्रभवोऽनुजीविभिः ।
अतोऽर्हसि क्षन्तुमसाधु साधु वा
हितं मनोहारि च दुर्लभं वचः ॥

महात्मनि कृतो विरोधोऽपि नाशुभं जनयति । तेनापि विरोधी लाभवान् एव जायते । अत स आह—

तथापि जिह्मः स भवज्जिगीषया
तनोति शुभ्रं गुणसम्पदा यशः ।
समुन्नयन् भूतिमनार्यसङ्गमाद्
वरं विरोधोऽपि समं महात्मभिः ॥

यस्य कोपोऽवन्ध्यो ह्यापदां विनाशने प्रभविष्णुश्च तस्य वशवर्तितायां सर्वमपि जगद्भवति इत्येतद् वीक्ष्य वदति स —

अवन्ध्यकोपस्य विहन्तुरापदां
भवन्ति वश्याः स्वयमेव देहिनः ॥

अविमृश्यकारिता विपदामास्पदमित्येतदनुभूय निगदति स —

सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥

जगति सर्वत्रेदं विलोक्यते यद् यो जनः शठेषु शाठ्यं नाचरति स दूयते तस्मात् स ब्रवीति—

व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान्निशिता इवेषवः ॥

गुणैर्मनुष्य आदरं लभते न च वपुर्विस्तारेण इत्यतः कथयति—

प्रविवेश गामिव कृशस्य नियमसवनाय गच्छतः ।
तस्य पदविनमितो हिमवान् गुरुतां नयन्ति हि गुणा न संहतिः ॥

अधिकारी स्वामिनः सकाशात्सम्मानमवाप्य वर्धिततेजा जायते अत आह—

लेभे परां द्युतिममर्त्यवधूसमूहः
सम्भावना ह्यधिकृतस्य तनोति तेजः ।

वस्तुतो भारवेः काव्ये पदे पदे नैतिकाः सिद्धान्ताश्चरित्रनिर्माणकारिण्यः सूक्तयः समवाप्यन्ते । 'नयवर्त्मगाः प्रभवन्ति हि श्रियः', 'न निहन्ति धैर्यमनु-

भावगुणः', 'मुखरतावसरे हि विराजते'; 'गुणाः प्रियत्वेऽधिकृता न संस्तवः';
'न रम्यमाहार्यमपेक्षते गुणम्', 'वरतुमिच्छति निरापदि सर्वे' इत्यादिविविधाभिः
प्रचुराभिः सूक्तिभिः समग्रमपि काव्यं प्रपूर्यते ।

भारविकविर्यथा स्वकीयेऽमरकाव्ये लोकानुभवान् प्रचुरान् प्रयुञ्जानो
वीक्ष्यते तथैव स हृदयाऽर्पणकारिणी, सामग्रीमपि सुमृदुला भूयसीमुपयुञ्जानो
दृश्यते । सः मृदुलमृदुलतराणां भावानामपि सन्निवेशने क्षमतां निदधाति—

मध्यमोपलनिभे लसदंशौ
एकतश्च्युतिमुपेयुषि भानौ ।
द्यौरवाह परिवृत्तिविलोलां
हारयष्टिमिव वासरलक्ष्मीम् ॥

मानवो निसर्गतो विविधाभरणवसनादिविभवेषु रुचिं प्रदर्शयति । तस्य मानसे
एवंविधा भावाः सदा उद्बुद्धा भूत्वा निवसन्ति ये सुखेषु स्पृहयालवो विनोदेषु
चञ्चलाः क्रीडासु उत्कण्ठिताः कलासु कुतूहलिनो भवन्ति । उपरिस्थितेन श्लोकेन
कविर्मानवस्यालङ्कारप्रियां भावुकतामभिव्यनक्ति ।

अंशुपाणिभिरतीव पिपासुः
पद्मजं मधु भृशं रसयित्वा ।
क्षीबतामिव गतः क्षितिमेष्यं-
ल्लोहितं वपुरुवाह पतङ्गः ॥

इत्येतेन श्लोकेन कविर्मानवहृदयस्यान्तराले सोऽपि भाव उत्तरलितो भूत्वा-
ऽवतिष्ठते येन प्रेर्यमाणः सः ( मानवः ) मधुपानादिनाऽऽत्मानं रमयितुमुत्कण्ठामिच्छां
करोति' इत्येतं भावं प्रकाशयन् समवाप्यते सः ।

मानवस्यायमपि स्वभावो दृश्यते यदसौ नवे नवे प्रीतिं योजयितुमुत्सहते ।
न स एकस्मिन् एव तृप्नोति । स उपभुज्यैकं वस्तु वस्त्वन्तरमुपभोक्तुमीहते ।
कविः कदाचिन्मानवस्यैतादृशीमेव भावुकतामध स्थितेन श्लोकेनाभिव्यनक्ति—

प्राञ्ज्वलावपि जने नतमूर्ध्नि
प्रेम तत् प्रवणचेतसि हित्वा ।
सन्ध्ययाऽनुविदधे विरमन्त्या
चापलेन सुजनेतरमैत्री ॥

मनोरञ्जनं विना न मानवो जीवितुमर्हति । विनोदस्तस्य जीवनधारिमेधयति,

कुसुमचयनादिविविधक्रीडानां पानगोष्ठीसुरतादिकानाञ्च वर्णनं यद्यपि युक्तमिदं-मद्भिधानं न समीचीनम्। कविरेतादृशीः मनश्चमत्कारिणीः वर्ण्यसामग्रीश्चिर्नाः साम्यसंदर्शनपटीयसीः स्थितीः सन्निकृष्य साटोपयुद्धसमरं वर्णयित्वा स्वनायकस्य धीरधुरीणतां दर्शयितुमिच्छति। "विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः" इत्येतद्वचनमर्थयितुं स तत्र सामर्थ्यं जगौ। तादृशेषु प्रत्यूहेषु सत्स्वपि तदीयो नायको न स्वकर्तव्यपथाद् मनागप्यस्खलत्, अप्सरसः सुराङ्गनाः स्वकीयाभिर्योगिजनहृदयहारिणीभिरपि सुन्दरताभिर्विकारोत्पादननिपुणो मनोरमो मधुरो मधुसमयोऽपि स्वकीयया सुषमयापि नार्जुनं चलीकर्तुमीशाते स्म इत्येतत् तथ्यं सर्वेऽपि तत्काव्यपाठकाः सम्यग् जानीयुरित्येतेन प्रयोजनेन कविः स्वीये वीररसप्रधानेऽपि काव्ये तत्सर्वं निबबन्ध। तद्वर्णनस्येदमेवोद्देश्यं नान्यत् किमपि। "कविस्तत्सर्वं निरूप्य स्वीयां काव्यकलानैपुणीं ख्यापयितुमना" इति चेत् तदापि न कथमप्यनुचितम्। काव्ये तस्य सर्वस्यापि वर्णनन्तु नितरामपेक्षितं भवत्येव। न तद्विधं वर्णनमन्तरेण कापि कृतिः काव्यं भवितुमर्हति। काव्यलक्षणे तस्याप्यन्तर्भावः साहित्यशास्त्रिभिः क्रियते। कविकर्म नितान्तं दुरूहम्। तदनिगहनम्। प्रसिद्धौचित्यस्योपनिबन्धनं न यदि कृतं स्यात् तदपि न वरम्। तदनुचितम्। तेन रसो भवति भङ्गोऽतएव सूक्तम्—

"अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा॥"

कविः स्वनायकस्य धीरधुरन्धरतायाः प्रदर्शन-निमित्तेन कलाया उपयोगं विधाय वस्तुतस्तस्याः (कलायाः) उत्कर्षमेव वर्धयामास। अन्ये कवयो बहवो यदा केवलं कलायाः प्रदर्शनाय कलामाश्रयाञ्चक्रुस्तदैव कविर्वर्ण्यमानस्यापि पदार्थस्य मध्ये जीवनं सञ्चारयितुं तां प्रयुञ्जानोऽग्रणी भवति। तस्मात् तद्विधेभ्यः कविभ्यस्त्वयं महीयान्।

भारविः कविरभिलषते यत् तस्य काव्यमधीत्यालोच्य च समाजः समुन्नतः संयमी दृढप्रतिज्ञः कार्यनिष्ठश्च स्यात् भवेच्च स निर्भय उत्साहवांश्च। स्वपाठकानां मानसेऽदम्योत्कटोत्साहोत्पादनार्थं तन्मनसि एतादृशी सुदृढा त्वरा जागर्ति यदसौ प्रथम एव सर्गे द्रौपदीमेवावतारयति प्रथमम्। स तद्द्वारेणौजस्विनीरुत्साहवर्धिनीः शक्तिसञ्चारिणीर्गिरः समुपस्थाप्य तत्कर्तुमुपक्रमते यत् तदीयमिष्टं वर्ततेति। श्रूयन्तामिह तदीयानि कतिपयानि वचांसि वर्चस्वन्ति—

गुणानुरक्तामनुरक्तसाधनः कुलाभिमानी कुलजां नराधिपः ।
परैस्त्वदन्यः क इवापहारयेन्मनोरमामात्मवधूमिव श्रियम् ॥
भवन्तमेतर्हि मनस्विगर्हिते विवर्तमानं नरदेववर्त्मनि ।
कथं न मन्युर्ज्वलयत्युदीरितः शमीतरुं शुष्कमिवाग्निरुच्छिखः ॥
परिभ्रमँल्लोहितचन्दनोचितः पदातिरन्तर्गिरि रेणुरूषितः ।
महारथः सत्यधनस्य मानसं दुनोति नो कच्चिदयं वृकोदरः ॥

अहो कुरून् विजित्य यः प्राज्यं वसु प्रायच्छत् तं वीराग्रणीं धनञ्जयं वल्कवाससि वसानं विलोक्य कथं तव हृदयं न व्यथते? अपि किमेतौ द्वावप्यनुजौ कठोरे प्रस्तरे शयानौ प्रेक्ष्यापि तव मानसं न भिनत्ति? अहह, कीदृशी शोचनीयावस्था तव सञ्जातास्ति। कदापि स समय आसीद् यदा त्वं चारणकृतस्तुतिगीतिमङ्गलैर्बोधितोऽभवः. सम्प्रति हन्त, त्वां क्रोष्टारो जागरयन्ति। अयि नृपेन्द्र! चेत् क्षमामेव सुखसाधनमवगच्छसि तदा—

"विहाय लक्ष्मीपति-लक्ष्म कार्मुकं जटाधरः सञ्जुहुधीह पावकम्" ।

भारविः समुत्तेजनापूर्णमेव काव्यं करणीयत्वेन साधु मेने। स ओजोमयं भावमेव स्वकीये काव्ये सन्निवेशयति स्म येन दुर्बलः सबलतां गच्छेत्, उत्साहविहीन उत्साहं लभेत, मृतस्यापि अभिभूतस्यापि चेतः चेतनां प्रपद्येत। एतन्महोद्देश्यस्य पूर्त्यर्थमसौ स्वीये काव्ये प्रचण्डशक्तिशालिनमुद्धतधीरं भीमं समुद्धतभावप्रवर्तनया द्रौपदीञ्च मानधनां वीरललनामुचितौजस्विवाक्प्रयोग-प्रवीणतया समुपन्यस्यति स्म।

कविर्भारविर्न केवलं वीरतापूर्णानां भावानां प्रकाशने पटीयसीं प्रौढां भारतीं विवेद स राजनीत्यामपि महान् पारावारीण आसीत्। भीमं यत्प्रशस्त-राजनीतिपरसूक्तिजातं रा वाद्यानाम् तत्र तस्य (कवेः) तद्विषयिका सा विदग्धता स्फुटं प्रकटीभवति या राजनीतिप्रकाण्डपण्डितानामपि चेतांसि विस्माययति भृशम्—

"द्विषतामुदयः सुमेधसा गुरुरस्वन्ततरः सुमर्षणः ।
न महानपि भूतिमिच्छता फलसम्पत्प्रवणः परिक्षयः ॥
अचिरेण परस्य भूयसीं विपरीतां विगणय्य चात्मनः ।
क्षययुक्तिमुपेक्षते कृती कुरुते तत्प्रतिकारमन्यथा ॥

प्रभवः खलु कोषदण्डयोः कृतपञ्चाङ्गविनिर्णयो नयः ।
स विधेयपदेषु दक्षतां नियतिं लोक इवानुरुध्यते ॥"

इत्याद्यनेकश्लोकानुपस्थाप्य राजनीत्युपदेशमदात्, स स्वपाठकेषु राजनीत्यभिज्ञतामपि सञ्चारयितुमना अस्ति येन ते छलकपटकुटिलताकुलेऽस्मिन् संसारे स्वकीयं जीवनं नेतुं पारयेयुः शत्रुभ्यो रक्षाञ्च स्वीयां कर्तुमर्हेयुः ।

कस्मिन् अवसरे कीदृशानि वचनानि प्रयोज्यानीत्यत्र पूर्णतया विचार्य वाक्यावलिं कविर्निदधाति । स उत्तेजनाकारिणां वचनानां प्रयोगे यथा प्रवीणस्तथैव सः सान्त्वनाकारिणामपि वचसां निबन्धने निपुणः ।

अपवर्जितविप्लवे शुचौ हृदयग्राहिणि मङ्गलास्पदे ।
विमला तव विस्तरे गिरां मतिरादर्श इवाभिदृश्यते ॥

इत्यादिश्लोकावलौ तस्यैव गुणविशेषोऽपि प्रगुणीभवन् समक्षे स्थितः सञ्जायते ।

भारविकवेर्वाण्यां भूयांसो गुणाः विराजन्ते । तत्र श्रुतिसुखदता शोभते तत्र तद्वैशिष्ट्यं विलसति येन द्विषामपि मानसानि प्रसीदन्ति, तत्रत्येषु वर्णेषु मनोज्ञाच्छटाच्छुरिता भवन्ती सर्वतश्चकास्ति । तत्रत्यानि पदानि गम्भीराणि परं न तानि प्रसन्नतां विजहति वस्तुत एवंविधां वन्दनीयां गिरां कृतपुण्यकर्माण एव विन्दन्ति ।

अयं कविर्यदपि वर्णयति तत्सजीवं विधाय साकारं कृत्वा पुरः पाठकानामुपस्थापयितुमद्भुतामेव कोविदतामधिकरोति ।

शरच्छ्रिय ईक्ष्यन्ताम्—

कृतोर्मिरेखं शिथिलत्वमायता
शनैः शनैः शान्तरयेण वारिणा ।
निरीक्ष्य रेमे स समुद्रयोषितां
तरङ्गितं क्षौमविपाण्डु सैकतम् ॥
ततः स कूजत्कलहंसमेखलां
सपाकसस्याहित-पाण्डुतागुणाम् ।
उपाससादोपजनं जनप्रियः
प्रियामिवासादितयौवनां भुवम् ॥

अस्य कवे काव्येऽलङ्काराणामपि सन्निवेशो दर्शनीयः । तेषां सन्निवेशेन काव्ये यत्र यत्र कृत तत्र तत्र ते द्विगुणामाभां परिगृह्य उत्तिष्ठन्तो दृश्यन्ते ।

"जनैरुपग्राममनिन्द्यकर्मभि मपु पद्मा मनिवर्तरोध" इत्यत्रोपमा । 'विपाण्डुभिर्ग्लानतया पयोधरै

न दिग्वधूना कृशता न राजते ॥" इत्यत्र रूपकम्

"नवविनिद्रजपाकुसुमत्विषां द्युतिमतां निकरेण महाश्मनाम् ।

विहितसान्ध्यमयूखमिव क्वचित् निचितकाननभित्तिषु सानुषु ॥

इत्यत्रोत्प्रेक्षा, 'सनाकवनितं नितम्बरुचिरं

चिरं सुनिनदैर्नदैर्वृतममुम् ।

मता फणवतोऽवतो रसपरा

परास्तवसुधा सुधाधिवसति ॥'

इत्यत्र समासोक्तिर्यमकञ्च स्वशोभाप्रदर्शनपूर्वकमलङ्कार्यस्य च स्वरूपमति तरां स्फुटमुन्मीलयितुं समुद्यन्ते ।

कवेः काव्य स्वयुगस्य भावनानामादर्शो भवति । एतस्मादेव कारणात् काव्येऽस्मिन् चित्रकाव्यस्यापि स्थानं प्रस्फुरति । कविः स्वयुगस्य काव्यरसिकानां चित्रकाव्यचारुतासुधापिपासार्त्तां चेतोवृत्तिं तर्पयितुं याननेकान् श्लोकान् अरचयत् तेषु एष एवात्रोद्ध्रियते—

"न नोननुन्नो नुन्नोनो नाना नानानना ननु ।

नुन्नोऽनुन्नो ननुन्नेनो नानेना नुन्ननुन्ननुत् ॥"

इत्यत्रैकेनैवाक्षरेण नकारेण "अथ तु नैतादृशो न पलायितव्यम्" इत्येत भाव प्रकटीकृतवान् कविः । अहो एतादृश्या रचनया भावोद्भावन कियत् कठिनम् । शास्त्रक्रीडेयमिति अभिधाय न कदाप्येवंविधा रचना उपेक्ष्या वा निन्द्या नतु शक्नुमः । येषां सन्निधौ वैदुषी प्रतिभा चित्रकाव्यप्रणयनचातुरी च भवति त एव स्वरचनायामेतादृशीं कलां दर्शयितुं क्षमन्ते । एषापि कला रसनीय सौन्दर्यं निदधाति ।

भारवेः प्रकृतिवर्णनमुद्दीपनात्मकमालम्बनात्मकं चास्ति । सूर्यास्तवर्णने, रात्रिप्रभातादिशोभानिरूपणे उद्दीपनात्मकता, किन्तु चतुर्थे तथा पञ्चमे च सर्गे आलम्बनात्मकता तदीया दृग्गोचरीभवति । प्रकृतिवर्णनेऽलङ्काराणां प्रयोगस्तत्र स्थानं परम् अप्रस्तुतविधानस्य महत्तापि विभाति—

"उत्फुल्लस्थलनलिनीवनादमुष्मा-
दुद्धूतः सरसिजसम्भवः परागः ।
वात्याभिर्वियति विवर्तितः समन्ता-
दाधत्ते कनकमयातपत्रलक्ष्मीम् ॥

इत्यत्र भारवेरप्रस्तुतविधानमेकान्ततो मौलिकतां गतमास्ते । इयं कल्पना कवेः स्वीया । अतएव तु कविरयम् 'आतपत्रभारवि' इत्येनया प्रशस्त्या प्रथितो विपश्चितां समाजे । अनन्या निदर्शनापि अपूर्वैव ।

कविर्भारविश्छन्दःशास्त्रेऽपि सुधीः । तदीये काव्येऽत्र एव क्षमा-प्रभा-प्रमिताक्षरा रथोद्धता-कान्तोत्पीडा-जलोद्धतगति-शालिनी-वंशपत्रपतितप्रभृतिविविधानि छन्दांसि दृष्टानि भवन्ति ।

काव्येऽस्मिन् न क्वापि समुदाचारस्य विनयस्य चातिक्रमणम् । भीमो महान् उद्धतो भटः क्रोधी च । परं तदीया अपि उक्तयो न क्वचिदपि मर्यादोल्लंघनकारिण्यः प्राप्यन्ते ओजस्विनी भवन्त्यपि वाणी तदीया न परुषा । कवेः पात्राणि स्वविरोधिनां वाचः शान्तस्वान्ततया शृण्वन्ति । तानि स्वपक्षस्य मण्डनं युक्तियुक्तेन तर्केण विदधानानि लक्ष्यन्ते । न तेषूद्वेगः कदापि विलोक्यते । न दैन्यं क्वापि तत्र मनागपि वर्तते । द्रौपदी भारताधीश्वरी अस्ति, अतो यादृशा हृदयभावा यादृशाश्च व्यवहारा उपयुज्यन्ते तादृशा एव कविना तस्या दर्शिताः । सा सम्पत्काले कुसुमपरिपेलवा परं विपद्वेलायां कठोराणि कष्टान्यपि सहमानाऽऽलक्ष्यते । तस्यां समुत्तेजनापूर्णभावानां भव्या भा भासते, तत्र सा वाणी सरलितास्ति या विपक्षविध्वंसाय मन्युमपि समुत्पादयितुं क्षमा । न सा परं परोक्षस्यामसूयावती किन्तु तस्यामात्मीयजनाभ्युदयाभिलाषानलः प्रचण्डतया विजृम्भते । या युधिष्ठिरं यदुवाच तत्र या शालीनता समुन्मीलति यास्ति भारतीयाङ्गनानां भूषणम् । इयं द्रौपद्या एव वाणी याऽऽरातिनिकारजनितं पाण्डवानामतुलापाशुशुचमि दुधुवे राज्ञां तदन्धूत्थ सपत्नानुच्छेत्तु प्रास्फुरचत् कृष्णद्वैपायनस्य च सहकारितयाऽद्रीन्द्रपदं स्थितं धनञ्जयं दिव्यास्त्राधिगमनायानुनुदन् ।

कालिदासादिकविभिः सह कवितामेतदीयां तुलयतोऽन्वयिदं सुस्पष्टमेव तत्—

कालिदासस्य कविता शारदी चन्द्रिकेव कुसुमसम्भारसम्भृता नवीना वल्लरीव निष्कलङ्कालङ्कारान् आदधाना रूपसम्पदा सम्पादिताभिमाना तरुणीव स्वसौन्दर्येणैव स्वयमुन्मादका विदुषां मनाक्पतितैव मनोहारिणी च । भवभूतिकविता तु

गर्वीयसीव महिषी, अभयप्रदायिनी कात्यायनीव स्नेहसुधाप्रस्रवणभूता करुणामयी जननीव शान्तिसम्पर्कमधुरा स्निग्धा च । भारविकविता तु सुगम्भीरसागरप्रतिमा, निराभरणा धूसरकान्तिः । अप्रसूतमातृगर्भस्तनरसा संन्यासिनीव, तमस्विनी-निशीथिनीव गाम्भीर्यवती ।

कविकुलशिरोमणेः कवेः अस्य कवितायाः प्रशंसायां केनापि सत्यमुक्तम्—

प्रकाशं सर्वतो दिव्यं विदधाना सतां मुदे ।
प्रबोधनपरा हृद्या भा रवेरिव भारवेः ॥



# महाकविर्माघः

महाकवेः कालिदासस्य भावतरलता भारवेः कलाकुशलता, भट्टिश्च वैयाकरणता इत्येतास्तिस्रोऽपि विशिष्टता श्रेष्ठा कविकुलतिलकस्य माघस्य कवितायां समवेता भवन्त्यो भान्ति इति सर्वेषां रसिकशिरोमणीनां विदितमेव सम्यक्। तत्रत्य कलापक्षो भारवेः कवितायां विद्योतमानं कलापक्ष यथातिशयानं परिलक्ष्यते तथैव तत्रत्य वैयाकरणत्व भट्टिकाव्ये विभ्राजमानं व्याकरण विषयकं वैदुष्य न्यक्कुर्वाणमिव समवलोक्यते। कलाकल्पनकुशलतायां यद्यपि माघोऽद्भुतमनन्यथितं बुधस्य विभर्ति परं सत्यपि तथात्वे, न तत्र सा भावतरलता विलोक्यते या कालिदासे परिस्फुरति। निश्चप्रचभावेन सत्यमिदं यन्माघस्य भावपक्षो भारवेर्भट्टेश्च भावपक्षाद् गरीयान् परं तदीयोऽसौ भावपक्ष कालिदासस्य भावपक्षेण परिभूयते। उत्तरकालवर्तिषु कविषु ये प्राधान्येन कलामेव अनुरिपत ते सन्ति भारविर्माघ श्रीहर्षश्च तस्मादेतानेव कवीन् दृष्ट्या समक्षे सन्निधाय माघस्य स्थानमिह निर्णेतुं यत्न कृतं स्यात्। कालिदासो न कलापक्षपातिनां कवीनां समुदाये परिगण्यते, भट्टिरपि स्वतन्त्रमेव मार्गमनुसरते। तस्मान्माघं तुलयितुं नेमावुभावप्यपेक्षितौ।

भारविः स्वकीये किरातार्जुनीये काव्ये कलाया यदुज्ज्वलं रूपं दर्शयामास माघ स्वकीये शिशुपालवधे काव्ये तस्या रूपं ततोऽप्युज्ज्वलतरं प्रकाशयामास। यद्यपि श्रीहर्षे कलाकल्पननैपुणी चरमोत्कर्षनिवासिनी दृश्यते तत्र भाव विभावन-चातुरी च विपश्चिन्मनस्तोषिणी परिलक्ष्यते परं माघ एतयोरुभयोरपि क्षेत्रयो क्वचित् क्वचित् श्रीहर्षमपि अतिक्रममाण पर्यवलोक्यते। एतदवश्यं यत् स स्वकीयं माघ नाम काव्यं तादृशीभिः क्लिष्टाभिर्ग्रन्थिभिराकीर्यमाणं न कर्तुमियेष याभिःशोभिजटिलताभिर्थिक्ताभिरदुविध्यमान स्वीयं काव्यं श्रीहर्षश्चकार। प्रकृष्ट-रामकाव्यरचनायकगुणशालित्वात् काव्यमि- श्रीहर्षकृतं नतलज्जाटिल्यजटिलमपि सत् नैषधीयचरितं न जेतुमर्हत्यत एव महाकविर्माघ 'काव्येषु माघ' इत्येतद् यश धियोऽधिगमतसौभाग्यमुपभुञ्जान कवीनां जगति विराजते।

महाकविर्माघ स्वपूर्ववर्तिनां कवीनां प्रभावेण परिगृह्यमाणो दृश्यते तद्यथ-

नायाः क्वापि कालिदासाङ्गीकृतसरणिश्रितत्वात्, क्वापि भट्टिरिव स्वाङ्गतव्याकरण-पाटवप्रदर्शनपरपद्धतिनिष्ठत्वात्, किञ्च सर्वत्रैव प्रायेण भारविगृहीतवर्णनविधि-विलम्बितत्वात्।

माघं कालिदासस्य मनःप्रमोदनपटीयसी पद्धतिः प्रीणाति स्म नु भृशं परं सः स्वपाण्डित्य-प्रकाशनव्यामोहं न संवरीतुं शशाक अतएव तदीयकाव्यस्य एकादशे त्रयोदशे च सर्गे तदनुसृतकालिदासवर्णनविधा अलङ्कारभरनिर्मुक्ता अतिविस्तररहिता च न दृष्टा भवति। कालिदासस्य वर्णनं मितं भवदपि मार्मिकं भवति माघस्य वर्णनं विस्तृतं परं न मार्मिकम्। तद्विस्तीर्णतायामपि तत्सौन्दर्यं न स्प्रष्टुं शक्नोति येन मानसं स्वशिरो धुन्वत् स्मेराननं सम्पद्यते।

द्वाभ्यामप्येताभ्यां वर्णितायां प्रभातशोभायां विद्योतमानं वैशिष्ट्यमीक्ष्यताम्—

निद्रावशेन भवताप्यनवेक्षमाणा
पर्युत्सुकत्वमबला निशि खण्डितेव।
लक्ष्मीर्विनोदयति येन दिगन्तलम्बी
सोऽपि त्वदाननरुचिं विजहाति चन्द्रः॥ ( कालिदासः )

उदयमुदितदीप्तिर्याति यः सङ्गतौ मे
पतति न वरमिन्दुः सोऽपरामेष गत्वा।
स्मितरुचिरिव सद्यः साभ्यसूयं प्रभेति
स्फुरति विशदमेषा पूर्वकाष्ठाङ्गनायाः॥ ( माघ. )

पुरसुन्दरीवर्णनमुभाभ्यामेव विहितं परं तत्रापि भेदोऽवाप्यते। कालिदासकृतं तद् वर्णनं चेत् स्वभावप्रधानमस्ति, तदा माघस्य तद् विलासिताडम्बितमति-तरामालोचयत—

जालान्तरप्रेषितदृष्टिरन्या
प्रस्थानभिन्नां न बबन्ध नीवीम्।
नाभिप्रविष्टाभरणप्रभेण
हस्तेन तस्थाववलम्ब्य वासः॥ ( कालिदासः )

वलयार्पितासितमहोपलप्रभा-
बहुलीकृतप्रतनुरोमराजिना।
हरिवीक्षणाक्षणिकचक्षुषान्यया
करपल्लवेन गलदम्बरं दधे॥ ( माघः )

श्रीहर्षचरित्रसुवर्णेषु पद्येषु यादृशं लालित्यमुपलभ्यं भवति तादृशमेव माघेऽपि बहुत्र सहृदयैरीक्ष्यते—

राजीवराजीवशलोलभृङ्गं मुष्णन्तमुष्णं ततिभिस्तरूणाम् ।
कान्तालकान्ता ललनाः सुराणां रक्षोभिरक्षोभितमुद्वहन्तम् ॥ ( माघ )

सितांशुवर्णैर्वयति स्म तद्गुणैर्महासिवेम्नः सहकृत्वरी बहुम् ।
दिगङ्गनाङ्गाभरणं रणाङ्गणे यशःपटं तद्भटचातुरी तुरी ॥—श्रीहर्ष.

माघः कविः कविरेव न बभूव सः प्रकाण्डपाण्डित्यपेशलोऽखिलशास्त्रपारदृश्वा मेधावान् विद्वान् अपि आसीत् । यथा श्रीहर्षोऽगाधं वैदुष्यं विलसन् नैषधेऽस्मिन् क्वापि निपुणविद्योदयात् उत्तरलितः सन् जगर्ज । नूनमेतदीया विद्वत्ता भारवेः श्रीहर्षस्य च विद्वत्तातोऽप्यधिकतरासीत् । तत्र शास्त्राणामनेकेषां ज्ञानमतितरां सुदृढं ससारं गुरुतरञ्च व्यराजत इत्येतत् तत्काव्यानुशीलनेन स्पष्टमेव सुविदितं सञ्जायते । पदे पदे ह्येतदीयं काव्यमेतस्य महार्थैः गम्भीरतरं वैचक्षण्यं प्रकटीकुर्वत् प्रेक्षितं भवति । टीकाकारेषु श्रीपण्डितमल्लिनाथोऽग्रेसरः । स नानाशास्त्रमर्मवित् विद्वन्मूर्धन्यः सुप्रथितः । तस्य कविमिममुद्दिश्य—

ये शब्दार्थपरीक्षणप्रणयिनो ये वा गुणालङ्क्रिया-
शिक्षाकौतुकिनो विहर्तुमनसो ये च ध्वनेरध्वगाः ।
क्षुभ्यद्भावतरङ्गिते रससुधापूरे मिमङ्क्षन्ति ये
तेषामेव कृते करोति विवृतिं माघस्य सर्वङ्कषाम् ॥
... ... ... ...

धन्यो माघकविर्वयन्तु कृतिनस्तत्सूक्तिसंसेवनात् ॥

इत्येतदुदीरणं विद्वत्तल्लजस्यास्य कवेर्महनीयं परमप्रकृष्टं कवित्वं साहित्यशास्त्रपारावारीणत्वं च विशिष्टमुद्घोषयति ।

महाकविर्माघो यद्यपि उत्कृष्टप्रतिभाशाली कविरासीत् । तदीये काव्ये च अद्भुतः माहिमा श्लाघनीयो दृढबन्धः प्रकृष्टञ्च प्रागल्भ्यं प्रतिपदं समुच्छलति परं प्रबन्धकाव्यं यादृशमैतिवृत्तं निर्वहणमपेक्षते तादृशं तत् तत्र न वीक्ष्यते । कविः कदाचित् तस्योपेक्षामेव चकार । स तु तस्यां दिशायां तावदपि ध्यानं दर्शयन् न दृश्यते यावद् भारविस्तदर्थं स्वध्यानं प्रक्षिपन् प्राप्यते । न तस्य काव्ये सन्तुलितं कथाकलेवरं न च प्रासङ्गिकानि वर्णनान्येव समुचितसौष्ठववन्ति दृष्टानि भवन्ति । प्रबन्धकाव्ये तेषां सन्तुलितताऽतितरामपेक्ष्यते । काव्ये गेयं कथावस्तु न तस्य वर्णनस्य तं विस्तारमाकाङ्क्षति यो विस्तारस्तद्वर्णनविषयक-

स्तत्र चतुर्थात् सर्गात् त्रयोदशसर्गपर्यन्तं कविना व्यतानि। काव्याभिमता मूल-कथा प्रथमे द्वितीये च चतुर्दशात् सर्गात् विंशं सर्गं यावत् समवाप्यते। कवि-रत्रेष्वपि गौणकथेषु सर्गेषु प्रसङ्गप्राप्तेषु गौणेषु वर्णनेषु ध्यानविशेषं निदधानः संलक्ष्यते। प्रबन्धकाव्ये तत्रापि वीररसप्रधाने इतिवृत्ते एवंविधमकाण्डमुपपन्न-मथ च शृङ्गारलीलानां तावान् विस्तृतालापो नात्युचितः प्रतिभाति। काव्यस्यास्य शृङ्गारः प्रबन्धकाव्यानुरूपो न, अपि तु स मुक्तककाव्यकृतेऽतिशयतयोचितः प्रतीयते। भारवेरितिवृत्ते तु अप्सरसां वनविहरणं युक्तं तासां शृङ्गारिका भावाश्च सङ्गता प्रतिलक्ष्यन्ते पर राजसूयं यज्ञं सम्भावयितुं प्रस्थितानां यदूनां रैवतकगिरौ केवलैकद्विदिनाभिव्यापिनो निवेशस्यावसरे तासां विलासमयीनां चेष्टानां तद्विधेन विस्तारेण सन्निवेशनं नाधिकं समीचीनमिव लक्ष्यते। शृङ्गार-रसस्य प्राचुर्यात् वीररसप्रधानमपि काव्यमिदं शृङ्गाररसप्रधानमिव प्रतीयते। शृङ्गाररसेन वीररस इह अभिभूयमान उपमर्द्यमानश्च प्रेक्ष्यते। कवौ यद्यपि सा प्रतिभा परिस्फुरति या सफलतापूर्वकं वीररसमयीं शृङ्गाररसमयीञ्च कवितां स्रष्टुमीष्टे परं हन्त, न कवि स्वां स्पृहणीयां प्रतिभां तदर्थं प्रायुङ्क्त। कवेः प्रसून-वेगवती मनोभावनातरङ्गिणी कामप्यन्यामेवाशां तां निनाय। यद्यपि कविर्न चरितकाव्यं स्रष्टुमात्मानं नियुङ्क्ते स्म परं स कदाचित् तद्रचनानेहसि विस-स्मारैवेदं तथ्यम्। तस्याष्टादशः सर्गः प्रायेण तादृशमेवायोधनीयं वातावरणं स्तृणुते यादृशं चरितकाव्यपरम्परायामवाप्यते। तत्रत्यौ श्लोकौ द्वौ ईक्ष्येताम्—

"आयन्तीनामविरतरयं राजकानीकिनीना-
मित्थं सैन्यैः सममलघुभिः श्रीपतेरूर्मिमद्भिः।
आसीदोघैर्मुहुरिव महद्वारिधेरापगाना
दोलायुद्धं कृतगुरुतरध्वानमौद्धत्यभाजाम्"॥

"ओजोभाजां यद्रणे संस्थितानामादत् तीव्रं सार्धमङ्गेन नूनम्।
ज्वालाव्याजादुद्वमन्ती तदन्तस्तेजस्तारं दीप्तजिह्वा चकाशे"॥

कवेः काव्यस्यास्मिन् सर्गे वर्णिते रणाजिरे भूमौ पर्यस्तानि पूर्णेन्दुप्रभाण्यात-पत्राणि क्वचित्, जनं मृद्नन् मत्तो द्विपेन्द्रः क्वचित्, तूर्यारावः क्वचित्, खड्गा-घातैर्दारितं दन्तिकुम्भस्थलं क्वचित्, विष्वद्रीची सैन्यवीचीर्विक्षिपन् आजावन्तः कोऽपि दूरं भ्रमन् वीरः क्वचित्, शस्त्रौघैर्धौतधारेण चन्द्रहासेन विदारितो भट-

क्वचन क्वचित्, क्वचिद् वाजिनां हेषा, दुन्दुभीनाद्य प्रगाढो दृश्यन्ते श्रूयन्ते च निरन्तरम् ।

प्रथमे सर्गे च केचन श्लोका वीररसात्मका शोभन्ते । सन्ति ते वीररसस्य मनोहराणि चित्राणीव । पदविन्यासस्य धीरा गम्भीराच गतिर्नितान्तमेव हृदयाकर्षिणी प्रभावोत्पादिनी वीररसात्मकस्य तस्य वर्णनस्य सौन्दर्यमेधयन्ती दीव्यते । दीव्यताम्—

"बृहच्छिलानिष्ठुरकण्ठघट्टनाद्विकीर्णलोलाग्निकणं सुरद्विपः ।
जगत्प्रभोरप्रसहिष्णु वैष्णवं न चक्रमस्याक्रमताधिकन्धरम्" ॥

धीरधुरन्धराणां धैर्यस्य निधानमि, उद्भटानामपि भटानां निर्भयेषु मानसेषु च कम्पनोत्पादनकारि लङ्केशस्य शौर्यं कियता ओजस्विना प्रकारेण वर्णयत्यत्र कविः पुनः प्रेक्ष्यतां चागम्—

'विभिन्नशङ्खः कलुषीभवन्मुहुर्मदेन दन्तीव मनुष्यधर्मणः ।
निरस्तगाम्भीर्यमपास्तपुष्पकं प्रकम्पयामास न मानसं न सः" ॥
'रणेषु तस्य प्रहिताः प्रचेतसा सरोषहुङ्कारपराङ्मुखीकृताः ।
प्रहर्तुरेवोरगराजरज्जवो जवेन कण्ठं सभयाः प्रपेदिरे' ॥

कस्यमिद वस्तुतः कविम्प्रति वीररसात्मिकाया रचनाया रचनार्थं प्रभूत सदवसरं प्रायच्छत्, परं कवि स्वमानसस्य शृङ्गारप्रियत्वात् प्राप्तमपि तमवसर मनुकूलं स्वकीयाच्छयादस्त्रसयत् । सोऽपि भारविरिव श्रीहर्ष इव च कामवासनोद्दीपनपरं विलासिताप्रियवृत्तिसंवर्धनरतं शृङ्गारं परमोद्धतेन प्रवाहेण सर्वकषेण वेगेन समुल्लासयन् नितरां पर्यवद्यते । भारवेः शृङ्गार इव अस्यापि शृङ्गारो नर्मनाचित्रकारी वर्तते । न हर्षभारव्योः शृङ्गार इव एतदीयोऽपि शृङ्गारोऽन्तःकरणस्यान्तराले प्रविश्य सहृदयं रञ्जयति भृशम् । यथा कालिदासस्य शृङ्गारो मनः परिप्रीणयन् जीवनसहचरो जायते न तथा अस्य शृङ्गारोऽस्मदीयो जीवनसुहृद् भवति । अस्य शृङ्गारोऽपि हर्षभारव्योः विशृङ्गार इव क्षणं मानसं समुद्दीप्य विरमति । न तस्य प्रभावः कालिदासस्य शृङ्गार इव स्वान्ते शाश्वतिको भूत्वा भवति स्थिरः । परं कलाया महत्त्वं पुरो निधाय चेद् विचारो विधीयते तदा तु अयं कविर्भारविमपि श्रीहर्षमपि क्वचित् क्वचित् अतितरां कम्पयन् दृश्यो चरीभवति । वस्तुतः इमे त्रयोऽपि कवयः कलायाः प्रकर्षं दर्शयितुं तद्विषयिण्याः सुन्दरतायाश्चरमां सीमां समुपस्थापयितुमेव स्वस्वकाव्यमसृजन् । तस्मात्

कालिदासेन सह एषां तुलायामारोपणमुचितं न भवति । कलाया अपि स्वेन सौन्दर्यमस्ति, तस्या अपि स्वकीयं महत्त्वं विद्यते तस्या अपि स्वीयं मूल्यं वर्तते । तस्यास्तत् सौन्दर्यं तस्यास्तन्महत्त्वं तस्यास्तन्महर्घं वैलक्षण्यं येषां कवीनां काव्येषु नितरां समुल्लसद् वीक्षितं जायते ते सन्ति माघ श्रीहर्ष भारवय । एतेषां त्रयाणामपि माघ एव श्रेष्ठ । यतो हि तत्कृतौ कलाया कोविदताया‍श्च द्वयोरपि सार्वभौमसौन्दर्यं परिवीक्ष्यते सार्वदेशिकञ्च कमनीयत्वमवलोक्यते । अस्य कवे कविन्वस्य चतुरस्रतया परिपूर्णत्वात्तैव विद्वांसः पुनरीयं काव्यं शिशुपालवधं काव्यनायकत्वेनोररीकुर्वन्ति ।

माघस्य काव्ये ऋतुवर्णनस्य वनविहारस्य जलक्रीडाया सन्ध्याया प्रभातवेलाया विलासिनीनां शृङ्गारचेष्टायाश्च यानि चारुतराणि चित्राणि चकासति तानि निश्चप्रचभावेन साहित्यसंसारस्य श्रेष्ठनिधित्वेन सहृदयसुधियो मन्यन्ते । कविर्यद् वर्णयितुमुपक्रमते तत्र न केवलं वर्णनीयं पदार्थ एव स्वशोभयानुपमया रसिकानां चेतांसि चोरयत्यपि तु अन्यानि बहूनि सौन्दर्याणि स्वकीयान् अपरान् विलासान् उपायनीकृत्य भावुकान् नितरां रमयन्ति । पश्यन्तु प्रथमं प्रेक्षावन्त ऋतुषु कुसुमाकरस्य लक्ष्मीं ललामाम्—

'मधुरया मधुबोधितमाधवी मधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥
विलुलिताऽलकसंहतिरामृशन्मृगदृशां श्रमवारि ललाटजम् ।
तनुतरङ्गततिं सरसां दलत् कुवलयं वलयन्मरुदाववौ ॥'

इत्येताभि पेशलपदपङ्क्तिभिर्वसन्तस्य कवि यच्चित्रं चित्रयितुं प्रयतमानस्तत्र न केवलं वसन्तस्यैव दर्शनं भवति, लुलितालकानां ललनाललामानामपि परमानन्दकरं दर्शनमपि समवाप्नुते, पुनरत्रैव न मधुरमधुरतरपदविन्यासस्य विभाया अनुप्रासयमकयो कमनीयायाश्छटाया वैदर्भ्याश्च विलासश्रियोऽत्यन्तमेव मनोमोदविधायकं दर्शनं समुपलभ्यते ।

वनविहारं वीक्ष्य सम्प्रति मोदन्ताम्—

'अनुवनमसितभ्रुव सखीभि सह पदवीमपर पुरोगताया ।
उरसि सुरसरागपादलेखा प्रतिमतयानुययावसंशयान ॥'

एतद् वनविहारस्य चित्रमसितभ्रुवमनुगच्छन्तं कामिनन्तु दर्शयत्येव परं तत्र सन्देहालङ्कारमध्यनिगतो वस्तुध्वनिरपि स्वीयं प्रभावं सर्वत्र प्रसारयन् प्राप्यते ।

तद्वेनोर्यत् सौन्दर्यं रमिरामा पुर उपतिष्ठते तदपि प्राग्यतया प्रमोदयति प्रधीमसमाजम्।

इमां प्रेक्षन्तां सलिले क्रीडन्तीं युवतीम्। इयं स्वसौन्दर्येण देवानामपि चेतांसि विस्माययति। एतदीयौ सुकोमलौ करौ कमलविभूषितौ स्तः। इयं सलिलात् उत्तरन्ती समुद्रा-मथ्यमानात् प्रादुर्भवन्ती लक्ष्मी इव अहो, प्रतीयते इत्येवंविध बन्धुरं दृश्यं येषु मनोज्ञेषु पदेषु कविः अलङ्कारध्वनिसुषमापुरस्सरं-पूर्वकं दर्शयति तान्यपि प्रेक्षन्ताम्—

'दिव्यानामपि कृतविस्मयां पुरस्ता
दम्भस्तः स्फुरदरविन्दचारुहस्ताम्।
उद्वीक्ष्य श्रियमिव काचिदुत्तरन्ती-
मस्मार्षीज्जलनिधिमन्थनस्य शौरिः॥'

अहह, अत्यासक्ता अपि कामिनो घनानुरागिणीभिर्वारयुवतीभिरवधूयन्ते। अवधूताश्च ते हन्त, कथञ्चन मुञ्चन्ति ता इत्येतद् बोधयितुं कविना कीदृशी सुमुद्री शब्दपरम्परानुसृता सा ध्यानपूर्वकं विलोकनीया—

"आर्द्रत्वादतिशयिनीमुपेयिवद्भिः ससक्तिं भृशमपि भूरिशोऽवधूतैः।
अङ्गेभ्यः कथमपि वामलोचनानां विश्लेषो बत नवरक्तकैः प्रपेदे"॥

कवय स्व भावमाविर्भावयितुं न शब्दं न च अर्थमेव अपि तु द्वावेव अवलम्बन्ते। द्वयोरपि समाश्रयणमात्रेण न ते तोषं गच्छन्त प्राप्यन्ते ते नु तावदल ममाना सहृदयहृदयसहितमामानं नन्दयितुं ध्वननव्यापारमपि सश्रयन्ति। अस्मादेव कारणात् इहोपर्युक्तं भावमभिव्यङ्क्तुं माघः कविः शब्दशक्तिमूलध्वनि मुद्भावयन् पर्यवलोक्यते।

सूर्यास्तवेलामनोहरताधुना निभालनीया—

"प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि"॥

जीवने न केवलं सुखसम्पद एव तत्र दुःखविपदोऽपि वर्तन्ते। आयान्ति तत्र विविधानि विचित्रतराणि परिवर्तनानि हाहाकारमयानि उत्स्रोल्लासमयानि च। समारोऽय सुखे भवति सुहृत् न च दुःखे-इत्येतदुपदिशन् कृपालुः कविः अस्ताचलं गतस्य सूर्यस्य स्मरणीयं दृश्यमर्थान्तर-न्यासालङ्कारालङ्कृतं विधाय प्रस्तौति।

वर्णनं तु सर्व एव कुर्वन्ति । मूर्खा अपि कुर्वन्ति पण्डिता अपि, वैज्ञानिका अपि इतिहासकारा अपि राजनीतिज्ञा अपि अर्थशास्त्रिणोऽपि नीतिशास्त्रिणश्च अन्येऽपि सर्वे । परं कवीनां वर्णनपद्धति. सर्वेभ्योऽपि विलक्षणा भवति । कवि-भणिति: न श्रवणयोरेव अपि तु मनस आत्मनश्च उपरि स्वकीयं प्रभावं समुपस्थापयति । अन्येषां कथनं न चिरस्थायि भवति कवेः कथनं तु मानव आजीवनं न विस्मरति । तत् शाश्वतिकं भूत्वा मानवस्य अन्तःकरणं स्वकीयं किङ्करं कृत्वा तत्र स्वकीयं जनमान्तरव्याप्यैश्वर्यं प्रतिष्ठापयति । इदमस्ति कवि-कविताया अनन्यगं वैशिष्ट्यम् । सः कदापि स्वं वक्तव्यं समासोक्त्या, कदापि अप्रस्तुतप्रशंसया, कदापि पर्यायोक्तेन, कदापि परिसंख्यया, कदापि श्लेषेण, कदापि विरोधाभासेन, कदापि उत्प्रेक्षया, कदापि च अलङ्कारान्तरेण प्रकटीकरोति, कदापि स सहस्राणामपि ध्वनिभेदानां मध्येऽन्यतमेन ध्वनिभेदेन व्यक्तीकरोति, स्वां विवक्षां कदापि च शब्दार्थमाधुर्येणैव । माघोऽपि कवि· स्वकीयेऽस्मिन् महाकाव्ये सर्वान् अपि ललिततमान् मार्गान् स्वीकुर्वाणः सर्वत्र वीक्ष्यते । तदीयं प्रतिवचनं सौन्दर्येणानुप्राणितं भवति ।

अस्य कवेर्लेखन्या अद्भुत· प्रभावोऽयं यत् निराकारमपि भावं साकारं कृत्वा श्रोतु· पाठकस्य च पुरः सा सफलतापूर्वकं निधातुं क्षमते । सा निर्जीवमपि सजीवं विदधाति, दु:खितमपि सुखितं, नीरागमपि सरागं कुरुते । को हि जन-

एतादृश्य —

"पानधौतनवयावकरागं सुभ्रुवो निभृतचुम्बनदक्षाः ।
प्रेयसामधररागरसेन स्वं क्रियाधरमुपाहि ररञ्जु" ॥
"अंशुकं हृतवता तनुबाहुस्वस्तिकापिहितमुग्धकुचाग्रा ।
भिन्नशङ्खवलयं परिणेत्रा पर्यरम्भि रभसाद्चिरोढा" ॥

इत्येतद्विधानि सरससरसानि पद्यानि निशम्य तां दशां न गच्छेत् यां हि दशां कविरत्नमेतादृशै· श्लोकैः प्रापयितुमभिलषते ।

अस्य कवेः प्रकृतिवर्णनं कल्पनाभिराकीर्णं यमकैः परिपूरितं च सत् यथा मनो रमयति सर्वेषामनितरां तथैव तदीयम् अप्रस्तुतविधानेन आवृतं सदपि नितरां मन· प्रीणयति प्रभातादिवर्णनम् । क्वचित् तु कवेः प्रकृतिर्यमकैरलङ्कृता, क्वचित् शृङ्गारिणा अप्रस्तुतेन विधानेन क्वचिच्च सा अन्यविधेन अप्रस्तुतविधानेन विभूषिता दृश्यते । कविः सर्वत्र मानवोचिता· शृङ्गारसमुच्छ्वसितचेष्टा. प्रकृत्या-

मारोपयन् प्राप्यते। अप्रस्तुतविधानेषु च स्वकीयं श्रृङ्गारप्रियं पाण्डित्यं च विनिगमयन् स संलभ्यते। सर्वत्रैव तदीयमप्रस्तुतविधानं हि तस्य विलासिता-नुरागिणीं प्रकृतिं सूचयति। एतदर्थं षष्ठ-सप्तमनवमैकादशसर्गास्तु देदीप्यमानानि प्रमाणानि सन्ति।

माघ स्वभावोक्तेश्च कुशलाधिकारो वर्तते। स्वभावोक्तिमाचार्या अलङ्कारेषु गणयन्ति परं राजानककुन्तकस्तु तस्या अलङ्कार्यत्वमेव मन्यते। स्वभावोक्ते-रुत्कृष्टतमा सफलता तदा मता भवति यदा वर्ण्यस्य विषयस्य चित्रं पाठकस्य मानसपटले यथायथतया अवतरितुमर्हति। अस्य कवे स्वभावोक्तिषु राजते द्वयमेव विशिष्टता, नैतादृशी विशिष्टता अन्येषु कलाकारेषु कविषु दृश्यते। स्वभावोक्त्या द्वावेव कवी विश्रुतौ। प्रथमः कालिदासस्तत्र द्वितीयोऽयं माघः। पञ्चमे, एकादशे, द्वादशे, अष्टादशे च सर्गे स्वभावोक्तेः कतिपयानि चित्राणि तु अतिसुन्दराणि दृश्यन्ते। दृश्यतामिह तस्याः श्री—

'गण्डूषमुज्झितवता पयसः सरोषं नागेन लब्धपरवारणमारुतेन।
अम्भोधिरोधसि पृथुप्रतिमानभागरुद्धोरुदन्तमुसलप्रसरं निपेते॥'
'प्रहरकमपनीय स्वं विनिद्रासतोच्चैः प्रतिपदमुपहूतः केनचिज्जागृहीति।
मुहुरविशदवर्णां निद्रया शून्यशून्यां दददपि गिरमन्तर्बुध्यते नो मनुष्यः॥'

संवादाश्च माघस्य अतिसरला ओजःपूर्णाश्च भवन्ति—

उदाहरणत्वेन तस्यैकः श्लोक इह निधीयते—

'अनृतां गिरं न गदसीति जगति पटहैर्विघुष्यते।
निन्द्यमथ च हरिमर्चयतस्तव कर्मणैव विकसत्यसत्यता॥'

छन्दसां प्रयोगे सुकविमाघो भारविं कालिदासमपि अतिक्रमते। अयं विविधानि भूयिष्ठानि च छन्दांसि प्रयुञ्जानः प्राप्यते। सर्वेषामपि छन्दसामत्युत्तं सफलश्च प्रयोगं विदधाति। पञ्चमे सर्गे प्रयुक्ता वसन्ततिलका किञ्च एकादशे मालिनी नितरामेव सुन्दरता वहत।

पदविन्यासे यद्यप्येतदीये निरुद्धरन्ध्रवाक्यनिरुद्धा गौडी विजृम्भते परं तत्र परमप्रियम् आकर्षणं दृश्यते। वस्तुतो यादृशी सुन्दरपदशय्या अस्य कवेः पर्यवलोक्यते न तादृशी अन्यस्य कवेः काव्ये वा प्राप्यते। रत्नाकर-हरिश्चन्द्र-प्रभृतयो बहुशः कवयः एतदीयपदविन्याससौन्दर्यस्य पुरतः स्वकीयं भाल

सादरं नमयन्ति। नवनवशब्दप्रयोगे नितरामभिरुचिं विलोक्य च तत्र विद्वांसः कविमिममेवं प्रशंसन्ति च 'नवसर्गगते माघे नवशब्दो न विद्यते' इति।

इदानीमेतस्य महाकवेः काव्यात् त्रिचतुराणि तानि उद्धरणानि निधीयन्ते यैः अस्य नानाशास्त्रनिष्णाततावगम्येत—

'प्रतिशरणमशीर्णज्योतिरग्न्याहितानां विधिविहितविरिब्धैः सामिधेनीरधीत्य।
कृतगुरुदुरितौघध्वंसमध्वर्युवर्यैर्हुतमयमुपलीढे साधु सांनाय्यमग्निः॥'

एतेन वेदवैदुष्यं किञ्च—

'संशयाय दधतोः सरूपतां दूरभिन्नफलयोः क्रियाम्प्रति।
शब्दशासनविदः समासयोर्विग्रहं व्यवससुः स्वरेण ते॥'

एतेन तस्य वैदिकस्वराभिज्ञत्वमथ च चतुर्दशे सर्गे कृतं क्रतुवर्णनं तदीयं तस्य श्रोत्रियत्वं ज्ञापयति।

अयं सांख्ययोगशास्त्रे स्वीयमधिकारं निदधौ—

तस्य सांख्यपुरुषेण तुल्यतां बिभ्रतः स्वयमकुर्वतः क्रियाः।
कर्तृता तदुपलम्भतोऽभवद् वृत्तिभाजि करणे यथर्त्विजि॥'

'मैत्र्यादिचित्तपरिकर्मविदो विधाय क्लेशप्रहाणमिह लब्धसबीजयोगाः।
ख्यातिं च सत्त्वपुरुषान्यतयाधिगम्य वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम्॥

मीमांसायाञ्च स गम्भीरं पाण्डित्यमवाप—

'शब्दितामनपशब्दमुच्चकैर्वाक्यलक्षणविदोऽनुवाक्यया।
याज्यया यजनकर्मिणोऽत्यजन्द्रव्यजातमपदिश्य देवताम्॥'

आस्तिकेषु दर्शनेषु यथा स प्रावीण्यमधिजगाम तथैवासौ नास्तिकदर्शनेष्वपि उच्चज्ञानमविन्दत्—

'सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम्।
सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम्॥'
इत्यादिश्लोका अस्यां दिशि सङ्केतं कुर्वाणाः मान्यन्ते।

काव्यस्यास्य द्वितीयः सर्गो राजनीतिविशारदतां च कवेः प्रख्यापयति स्थले

मारोपयन् प्राप्यते। अप्रस्तुतविधानेषु च स्वकीयं शृङ्गारप्रियं पाण्डित्यं च विनिगमयन् स लभ्यते। सर्वत्रैव तदीयमप्रस्तुतविधानं हि तस्य विलासिना नुरागिणीं प्रवृत्तिं सूचयति। एतदर्थं षष्ठ सप्तमनवमैकादशसर्गास्तु देदीप्यमानानि प्रमाणानि सन्ति।

माघ स्वभावोक्तेश्च कुशलश्चित्रकारो वर्तते। स्वभावोक्तिमाचार्या अलङ्कारेषु गणयन्ति परं राजानककुन्तकस्तु तस्या अलङ्कार्यत्वमेव मन्यते। स्वभावोक्ते रत्कृष्टतमा सफलता तदा मता भवति यदा वर्ण्यस्य विषयस्य चित्रं पाठकस्य मानसपटले यथायथतया अवतरितुमर्हति। अस्य कवे स्वभावोक्तिषु राजते इयमेव विशिष्टता, नैतादृशी विशिष्टता अन्येषु कलावादिषु कविषु दृश्यते। स्वभावोक्त्या द्वावेव कवी विश्रुतौ। प्रथमः कालिदासस्ततश्च द्वितीयोऽयं माघः। पञ्चमे, एकादशे, द्वादशे, अष्टादशे च सर्गे स्वभावोक्ते कतिपयानि चित्राणि नु अतिसुन्दराणि दृश्यन्ते। दृश्यतामिह तस्या श्री—

'गण्डूषमुज्झितवता पयसः सरोष नागेन लब्धपरवारणमारुतेन।
अम्भोधिरोधसि पृथुप्रतिमानभागरुद्धोरुदन्तमुसलप्रसरं निपेते॥'
'प्रहरकमपनीय स्वं विनिद्रासतोच्चै प्रतिपदमुपहूत केनचिज्जागृहीति।
मुहुरविशदवर्णां निद्रया शून्यशून्यां दददपि गिरमन्तर्बुध्यते नो मनुष्य॥'

सवादाश्च माघस्य अतिसरला ओज पूर्णाश्च भवन्ति—

उदाहरणत्वेन तस्यैकः श्लोक इह निधीयते—

'अनृता गिर न गदसीति जगति पटहैर्विघुष्यते।
निन्द्यमथ च हरिमर्चयतस्तव कर्मणैव विकसत्यसत्यता॥

छन्दसां प्रयोगे सुकविर्माघो भारविं कालिदासमपि अतिक्रमते। अयं विविधानि भूयिष्ठानि च छन्दांसि प्रयुञ्जानः प्राप्यते। सर्वेषामपि छन्दसामद्भुत सफलञ्च प्रयोगं विदधाति। पञ्चमे सर्गे प्रयुक्ता वसन्ततिलका किञ्च एकादशे मालिनी नितरामेव सुन्दरतां वहतः।

पदविन्यासे यद्यप्येतदीये विकल्प-घटानिबद्धा गौडी विजृम्भते परं तत्र परमप्रियम् आकर्षणं दृश्यते। वस्तुतो यादृशी सुन्दरपदशय्या अस्य कवे पर्यालोक्यते न तादृशी अन्यस्य कवे काव्ये सा प्राप्यते। रत्नाकर हरिश्चन्द्र-प्रभृतयो बहुतरा कवयः एतदीयपदविन्याससौन्दर्यस्य पुरतः स्वकीयं भालं

सादरं नमयन्ति । नवनवशब्दप्रयोगे नितरामभिरुचिं विलोक्य च तत्र विद्वांसः कविमिममेवं प्रशंसन्ति च 'नवसर्गगते माघे नवशब्दो न विद्यते' इति ।

इदानीमेतस्य महाकवेः काव्यात् त्रिचतुराणि तानि उद्धरणानि निधीयन्ते यैः अस्य नानाशास्त्रनिष्णाततावगम्येत—

'प्रतिशरणमशीर्णज्योतिरग्न्याहितानां विधिविहितविरिब्धैः सामिधेनीरधीत्य।
कृतगुरुदुरितौघध्वंसमध्वर्युवर्यैर्हुतमयमुपलीढे साधु सांनाय्यमग्निः ॥'

एतेन वेदवैदुष्यं किञ्च—

'संशयाय दधतोः सरूपतां दूरभिन्नफलयोः क्रियाम्प्रति ।
शब्दशासनविदः समासयोर्विग्रहं व्यवससुः स्वरेण ते ॥'

एतेन तस्य वैदिकस्वराभिज्ञत्वमथ च चतुर्दशे सर्गे कृतं क्रतुवर्णनं तदीयं तस्य श्रोत्रियत्वं ज्ञापयति ।

अयं सांख्ययोगशास्त्रे स्वीयमधिकारं निदधौ—

तस्य सांख्यपुरुषेण तुल्यतां बिभ्रतः स्वयमकुर्वतः क्रियाः ।
कर्तृता तदुपलम्भतोऽभवद् वृत्तिभाजि करणे यथर्त्विजि ॥'

'मैत्र्यादिचित्तपरिकर्मविदो विधाय क्लेशप्रहाणमिह लब्धसबीजयोगाः ।
ख्यातिं च सत्त्वपुरुषान्यतयाधिगम्य वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम् ॥

मीमांसायाञ्च स गम्भीरं पाण्डित्यमवाप—

'शब्दितामनपशब्दमुच्चकैर्वाक्यलक्षणविदोऽनुवाक्यया ।
याज्यया यजनकर्मिणोऽत्यजन् द्रव्यजातमपदिश्य देवताम् ॥'

आस्तिकेषु दर्शनेषु यथा स प्रावीण्यमधिजगाम तथैवासौ नास्तिकदर्शनेष्वपि उच्चज्ञानमविन्दत्—

'सर्वकार्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम् ।
सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम् ॥'
इत्यादिश्लोका अस्यां दिशि सङ्केतं कुर्वाणाः प्राप्यन्ते ।

काव्यस्यास्य द्वितीयः सर्गो राजनीतिविशारदतां च कवेः प्रख्यापयति स्थले

स्थले व्याकरणशास्त्रस्य सूक्ष्मसूक्ष्मतरान् अपि प्रयोगान् प्रयुञ्जानोऽयं कविः प्रेक्ष्यते किञ्च भावेमं सुजिघ्येवानुगच्छन्ती सर्वत्र समनाप्यते।

यादृशं प्रकृष्टतमं शास्त्रेष्वयं कविः पाण्डित्यं निदधौ भगवदनुकम्पया तादृशीमेव कवित्वशक्तिमपि निदधाति स्म तस्मात् काव्यमस्य महाकवेः काव्यत्वदृष्ट्या पाण्डित्यदृष्ट्या च उभयविधया दृष्ट्या श्रेष्ठं काव्यं मतम्। एतादृशविलक्षणकाव्यस्य स्रष्टारं प्रति विद्वद्धीराणामिमाः उक्तयः सर्वथैव युक्ताः—

कृत्स्नप्रबोधकृद् वाणी भा रवेरिव भारवेः।
माघेन चाथ माघेन कम्पः कस्य न जायते॥
माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे।
भा रवेरिव स्मरन्त. कवयः कपयो यथा॥



## ( ३५ )

# कविर्दण्डी

कस्यचनापि देशस्य साहित्यं तदीयराष्ट्रियगरिमगो भवति दोधूयमानं देदीप्यमानं च धनम्। तद्भवति समाजस्य दर्पणं। समाजस्य सर्वासामपि भावनानां किञ्च परिवर्तनशीलानां विचारधाराणां तत्र प्रतिबिम्बितत्वात्। तस्माच्चेत् कश्चित् भारतीय समाज भावना धारणा विचारधारा संस्कृति-सभ्यता रीति नीतिकलापं ज्ञातुं कामयते तदा स संस्कृत साहित्यमनुशीलयेत्। तत्रै-कतोऽस्मद्दृष्टिपथे पुरातनतमस्य वैदिककालस्य हृदयाभिरामा सरलावदाता महनीया सात्विकी नैसर्गिकी श्री अवतरति, एकतश्च रामायण महाभारत जातक मेघदूत नैषधीयचरित–गीतगोविन्द–भामिनीविलास–सप्तशतीगीतादिकालस्वरूप-प्रदर्शकानि नयनचारूणि ललितानि चित्राणि च दृग्गोचराणि जायन्ते।

संस्कृतसाहित्ये यत्रोत्कृष्टोत्कृष्टतराणि महाकाव्यानि, रूपकाणि, गीतिकाव्यानि च शोभन्ते, तत्रानवद्या रमणीया गद्यरचनाश्च भूयस्य परिस्फुरन्ति। साम्प्रतिकेऽनेहस्युपलभ्यमानस्य गद्य प्रगिरद्धस्य कथा साहित्यस्य ग्रन्थानामवलो-कनेन स्फुटतयैव प्रतीयत इदं यत् संस्कृतगद्यसाहित्यस्यैव कथात्मको विकासो भिन्न रूपद्वयमादाय अचरत्। कथा साहित्यं वस्तुजातं तु परिगृह्णाति लोकक-थाभ्य, परं तत्र प्रभावो महाकाव्यानां पद्धते पर्यवलोक्यते। इमानि कथावस्तूनि कानिचन तु ऐतिहासिकी घटना आश्रयन्तिकानि चन च कवि-कल्पना। एवंविधानामपि कथानकानां सद्भावोऽवाप्यते यत्रैतिहासिक्यो घटना कविकल्पनाश्च द्वे अपि समुल्लसन्। अत्र सर्वत्रापि वर्णनविधि स एव विलसति यो महाका-व्येषु। पाठको वर्णनानि सर्वत्र समासप्रधानानि अलङ्कारबहुलानि श्लेष गुम्फितानि च समवाप्नोति। तत्रापि स सरसा श्रियामृतूनां छटां गिरिसरिदादीनां लक्ष्मीं वन विहारजलकेल्यादिसम्बन्धिनीमाभां पर्यवलोकयितुं सदवसरमश्नुते। एतद्विध सकल सर्वाङ्गशुभ्रञ्च सौन्दर्यं वासवदत्ता हर्षचरित कादम्बर्यादिषु परिस्पन्दमानं केन न बोध्यते? अस्मद्वर्ण्यमानस्य दण्डिकविकुलललामस्य रचना

कोटिमिमामारोक्मानापि न तमलङ्कृत-परिवेषं परिष्वजते यं सुबन्धु-बाणप्रभृतीनां रचनाः। सुबन्धोः बाणस्य च रचनासु दृश्यमानं गद्यं काव्यगद्यमस्ति न च गद्यं केवलम्। परं दण्डिनो रचना केवलगद्यमयी भवन्ती अस्माकं पुरतः समुपस्थिता जायते। स्वकालवर्तिन्या गद्यलेखनपद्धत्या आवर्जितो भवन्नपि दण्डी नात्मानं शास्त्रीं क्रीडायामरीरमत्।

संस्कृतगद्यसाहित्यस्य द्वितीयं रूपं पञ्चतन्त्र-हितोपदेशादिनामितासु नीतिकथासु दृश्यते। इमा गद्यकाव्य-परिवेषाद्दूरे स्थिता भवन्त्यः स्वाभाविकेनैव प्रकारेण चित्तकारिके। आसां नीतिकथानां गद्यमेव नैसर्गिकत्वात् सर्वसामान्यबोधगम्यमस्ति। दण्डिनो गद्यं गद्यस्योपर्यभिहितयोर्द्वयोरपि रूपयोर्मध्ये पृथक्तरमपि नावलम्बते। तदस्ति मध्यममार्गस्य निदर्शनम्। गद्य-काव्येषु कथावस्तु भवति अल्पीयः परं तद्-वर्णनं भवति भूयः शाब्दिकश्रमस्तारश्च गरीयान्। परं नैसर्गिकयां रीत्यां प्रणीतेषु गद्य-ग्रन्थेषु न वर्णनस्यानवधिको विस्तारो न च शाब्दिकस्यैव चमत्कारस्य गुरुतरबहुलत्वैव भवति। कथावस्तुनः प्रवाहस्तत्र स्वाभाविकीं गतिं निदधानः प्रवहति। दण्डिमहाकवेर्दशकुमारचरिते कथावस्तु कुत्रापि वर्णनवैपुल्योद्ग्रथितं नास्ति। न तत्र क्वापि श्लथतास्ति न च तद् दुर्बोधमेव वर्तते। भाषास्ति तत्र प्रवाहमयी स्वाभाविकी च। यदपि स्थलं समासातिशयवद्विद्यते तत्रापि नास्वाभाविकतास्ति।

संस्कृतगद्यलेखकेषु दण्डी एव ईदृग् गद्य-लेखकोऽस्ति येन न कृत्रिमतापूर्णं गद्यं भृशमादृतं न च पञ्चतन्त्रादिप्रयुक्ता सरला सुबोधा च गद्यशैली अत्यन्तमुपेक्षिता। तस्याभिरुचिर्द्विविधयोरपि गद्य-सौन्दर्ययोरासीदतः स तं मार्गं परिजग्राह यतः पाठक उभयोरपि गद्य-सौन्दर्ययोः सुखमास्वादयितुं शक्नुयात्। सः अस्मिन् प्रयासे नितरां साफल्यमपि अधिजगाम। सुबन्धुर्बाणश्च स्वस्वरचनायां यद् गद्यं श्लेष-विरोधाभास-परिसंख्यादिनालङ्कारालङ्कृतं दीर्घदीर्घतरसमाससमाकुलं शब्दचमत्कारचारुतरम् निहितवन्तौ तदपि तद्विधानां कल्पनालोकवर्तीनां कथानां कृते युक्तं समीचीनं च वर्तते। यदा च तस्मिन् महनीये उद्देश्ये दृष्टिः क्षिप्यते यदुद्देश्येन सुबन्धुबाणादयस्तादृशं गद्यं निबबन्धुस्तदा तु तासु तासु कृतिषु प्रयुक्तस्य तद्विधस्य गद्यस्योपयुक्ततोपादेयता ततोऽप्यधिकतरं प्रसादो समायाता जायते। दण्डिनः पुरः कथावस्तु उद्देश्यञ्च अन्यविधमेवासीत्। आदर्शसंसारसम्बन्धिनी कथा न तस्य समक्षे स्थितासीत् तस्य स्वप्ने यथार्थस्य लोकस्य कथा

सन्निष्टमानाभवत्। जीवनस्य कटूनां मध्यानां समुपस्थापनं स इयेष। तत्समयवर्तिनः सामाजिकस्य जीवनस्य रहस्यानि तथ्यानि च स्युरुद्घटितानीत्येतदुद्देश्यं हृदि निधाय स सर्वां कृतिमसृजत्। अतस्तद्विधानां स्थितीनां तत्त्वानां च प्रकाशनाय किञ्च तादृशस्योद्देश्यस्य पूर्त्यर्थं सैव भाषा तदेव गद्यञ्च सर्वथैवोचिततरं सङ्गततरञ्चासीद् यां भाषां यच्च गद्यं तत्त्व-मर्मज्ञो विद्वान् दण्डी प्रायुङ्क्त।

संस्कृतकथासाहित्ये दण्डी एव एको यथार्थवादी कविः प्रतीयते। तस्य दशकुमारचरितं तत्कालगामिनः समाजस्य जीवितमुद्बुद्धं प्रज्वलचित्रं प्रस्तवीति। हन्त, दण्डिनोऽनन्तरं नान्यो गद्यलेखकस्तद्विधस्य यथार्थवादिनश्चित्रस्य चित्रणे सफलतामुपलब्धुमशकच्च कोऽपि तदङ्गीकृताया गद्यविधायाः स्वाभाविकतामेवानुसर्तुं शशाक। अत्र कारणमिदं प्रतिभाति—बाणस्य रचनाः संस्कृतसमाजे निरवधिकमूर्जस्वलञ्च स्वं प्रभावमस्थिरन्। संस्कृतसंसारो न तदीयं मोहं परित्यक्तुमशक्नोत्। तस्मात् उत्तरकालयायिनो लेखका बाणमेवानुगन्तुं प्रायतन्त न ते दण्डिगृहीतमध्वानं जग्मु। एतस्या मोहनिमग्नतायाः प्रदर्शनाय नान्यत्र कुत्रापि गमनस्यापेक्षास्ति दशकुमारचरितस्यैव पूर्वपीठिकोत्तरपीठिका च तामस्मत्पुरतः सन्निधातुमलम्। उभयत्र महान् भेदो दृश्यते। द्वयोरपि लेखको नैकः। पूर्वपीठिकायाः कवि' कलायामतितरामभिरुचि निदधान' प्रतिलक्ष्यते। तस्योपरि बाणस्य प्रभावः स्पष्टं पर्यवलोक्यते। न तस्य गद्ये स प्रवाहो वीक्ष्यते य उत्तरपीठिकाया प्राप्यते। वस्तुतस्तु द्वे अपि पीठिके मूलग्रन्थकर्तुर्दण्डिनो नानुहरन्त्यौ प्रतीयेते। रूपकेषु यथा मृच्छकटिके सामाजिकी दशा याथार्थ्येन चित्रितास्ति तथैव दशकुमारचरितमेव कथाक्षेत्रे सा रचनास्ति या यथार्थवादिनीषु रचनासु अन्तर्भवितुमर्हति।

सत्स्वप्यन्येषु कविषु बहुसंख्यकेषु आदर्शवादिषु दण्डिनो यथार्थवादित्वं तस्य स्वतन्त्रप्रकृतित्वमभिव्यनक्ति। यथा दशकुमारचरिते तस्य प्रकृते स्वातन्त्र्यप्रियत्वं विलोक्यते तथैव तत्कृतास्वन्यासु कृतिषु तस्य सा विशिष्टता दृग्गोचरीभवति। नासौ संस्कृतजगति प्रचलितानां सर्वासामपि मान्यतानां परम्पराणाञ्चाविवेकपुरस्सरमनुसरणं विदधौ।

दण्डी दाक्षिणात्य आसीत्। स विदर्भान् निवासेन स्वेन गुरुतां निनाय। काञ्च्याः पल्लवनरेशस्य राजसभां स स्वकीयया महिममय्या स्थित्या विभूषया-

स्वभूव। तस्य तत्र स्थितिं प्रति काव्यादर्श-प्राचीनटीकाकार-तरुणवाचस्पतिसु-धियोऽध स्थित पद्यमिद्दिल कुरुते—

> नासिक्यमध्या परितश्चतुर्वर्णविभूषिता।
> अस्ति काचित् पुरी यस्यामष्टवर्णाह्वया नृपा॥

इतिहासकाराणां प्रथममभिधानमिदमासीद् यद् दण्डिन प्रपितामहो भारविरासीत् पर सम्प्रति—

> स मेधावी कविर्विद्वान् भारवि प्रभवं गिराम्।
> अनुरुध्याकरोन्मैत्रीं नरेन्द्रे विष्णुवर्धने॥

इत्येत द्वितीयविभक्तियुक्तभारविपदवन्त श्लोकमाश्रित्य तेषामिदं मतं यत् तस्य प्रपितामहो दामोदर आसीत्। एष विषयो वस्तुतोऽधुनापि सन्दिग्ध एव।

काव्यादर्शोल्लिखितो राजवर्मा ( रातवर्मा ) एव नरसिंहवर्मा द्वितीय इति मन्वानौ प्रो० र० नरसिंहाचार्य—डॉ० बेल्वल्करौ द्वावपि "दण्डिन समय सप्तमशतकोत्तरार्धभाग" इत्याचक्षाते। प्रो० बल्देव उपाध्यायश्च स्वकीये 'संस्कृतसाहित्येतिहासे' तस्य विद्यमानता सप्तमशतकस्यान्तिमे किंवा अष्टमशताब्द्या प्रारम्भे मन्यते।

दण्डिनस्त्रयो ग्रन्था परम्परया सन्ति प्रख्याता। तत्र काव्यादर्श दशकुमारचरिताभिधानौ ग्रन्थौ तु निःसन्दिग्धतया तदीयौ मतौ स्त। केचन छन्दोविचितिमपि तस्य रचना मन्यन्ते। पर छन्दोविचितेरुल्लेख सुबन्धोर्वासवदत्तायामपि प्राप्यते। द्वयोरपि विभिन्नकालत्वात् छन्दोविचितेर्न दण्डिकर्तृत्वं सिद्ध्यति। डॉ० कीथस्यापि मतेन छन्दोविचिते पृथग् ग्रन्थत्वं नोपपद्यते। "लिम्पतीव तमोऽङ्गानी"त्येत श्लोक काव्यादर्शेऽपि प्राप्य पिशेलो मृच्छकटिकं दण्डिरचित मन्यते। परमन्वेषणपरा नात्र श्रद्दधते। श्रीचन्द्रबली-पाण्डेयप्रभृतिभिस्तस्य ( मृच्छकटिकस्य ) पुष्टे प्रमाणे शूद्रककर्तृत्वमुपपादित-मस्ति। अवन्तिसुन्दरीसञ्ज्ञिकाया रचनाया प्राप्ताया नाधिक कालो जात। सापि रचना दण्डिकृतैव विद्वद्भिर्मतास्ति। एषा कथा गद्ये पद्ये च समवाप्यते। गद्या-त्मिकावन्तिसुन्दरी दशकुमारचरितस्य पूर्वपीठिकाया प्रारम्भिक रूप प्रतीयते। यद्यपि डॉ० अगासे 'काव्यादर्श दशकुमारचरित'यो प्रणेता दण्डी एव न, अपि तु

द्वयोरपि ग्रन्थयोर्विरचयिता भिन्न-भिन्नोऽस्ति' इति भणति परं विदुषामधिकतरा संख्या न तत्पक्षेऽस्ति। अतः काव्यादर्श-दशकुमारचरितावन्तिसुन्दरीत्येतन्नामधेयाः कृतयो दण्डिन एव सन्ति।

केचन विद्वांसो दण्डिन उपरि गुणाढ्यस्य प्रभावं पश्यन्ति। तेषां मतेन दण्डी गुणाढ्यरचितबृहत्कथावर्णितघटनाधार एव दशकुमारचरितं प्रणिनाय। अस्तु नाम किमपि। दण्डिनो दशकुमारचरितं तस्योत्कृष्टप्रतिभात्त्वमुच्चैः प्रमाणीकरोति। कवि स्वकीयेन प्रतिभाकौशलेन कल्पनाचातुर्येण च तद्रचनां तथा कृतवान् यथा तत् लोकप्रियतामासादयेत्। कविर्निजेऽस्मिन् प्रयासे पूर्णां सफलतां प्रयातोऽस्ति।

दशकुमारचरिताध्ययनेन विदितं सञ्जायते यद् दण्डी समवाप्तपर्याप्तलोकाचार-विचारानुभवो गुणाढ्यो मेधावी विद्वान् आसीत्। तस्य दशकुमारचरिते विराजमानाभिर्नानाविधाभिरुल्लासपरिपूर्णाभी रोमाञ्चकारिणीभिर्घटनाभिस्तस्यानुभवशालित्वप्रतिभात्वादिगुणाः स्फुटतयैव प्रकटीक्रियन्ते। रोमाञ्च-साहसविस्मयगर्भाभिर्घटनाभिः समुल्लसितत्वाद् दशकुमारचरितस्य जगन्नाधुनिकाज्जगतो भिन्नम्। छल-कपट हिंसा-प्रताडनाडम्बरालीकानलीकत्वादिभिस्तद् वस्तुतस्तु मानवलोकोपस्थापन परम्। घटनानां यथार्थत्वे प्रणेतुः प्रतिभायाश्चरितार्थत्वंप्रति पृष्टं संलक्ष्यते। मुख्या कथानेकावान्तरकथाभिरुद्ग्रथिता वर्तते। तत्रापहारवर्म्मणश्चरितमतितरां हृदयाह्लादकं विद्यते। तेन सार्धं तपस्विनो मारीचस्य हृदयविहीनाया गणिकारामञ्जर्या जैनभिक्षोश्चाऽवान्तरकथा कविना समुपस्थापितास्ति। न केवलं तच्चरितेन साकमन्यान्यकुमाराणां कथाभिश्च सहापि कतिपयावान्तरकथाः विदुषा लेखकेन प्रस्तुतीकृताः सन्ति। सर्वत्रापि तासु तासु कथासु तथ्यवादिवातावरणं वीक्ष्यते। न दण्डिनो लक्ष्यं नीति शिक्षणं न च सचेतोजनहृदयरञ्जनमेव। तस्य तूद्देश्यमस्ति स्वसमयसम्बन्धिन्या शताब्द्या भारतीयसमाजस्य यथार्थचित्रसमुपस्थापनम्। तस्य लेखनी समाजगतान् दोषान् उन्मीलयति तानननुकूल्यास्मत्पुरतः सन्निदधाति। सुबन्धोर्बाणस्य च दृष्टिरस्यादर्शमात्रप्रेक्षिणी; परं दण्डिनो दृष्टिर्न तादृशी। सास्ति याथार्थ्यावलोकनशीला। तस्मात् सा समाजस्य सर्वविधानां दोषाणां समुपस्थापनाय विविधानि पात्राणि सङ्कलयन्ती समुपलभ्यते। सा कलानुरागिणी चास्ति परं कलापरकः सोऽनुरागस्तस्या उपरि

नैव स्वच्छन्द शासन न कुरुतेऽपि तु सैव त स्वेच्छया शास्ति। अत एव तद्वा-धार्या तद्विधस्थिति चित्रणापेक्षी प्रवाह सर्वत्र समुदीर्यते।

दण्डिकवेर्विशिष्टतेयमस्ति यदसौ सुरम्भु किन्तु धाण इव न दिव्यशक्ती-रुपयुनक्ति। न तस्य कथावस्तुनि गन्धर्व विद्याधरसामवतारणा कृतास्ति। न तत्र मायान्यजनबुद्धयसम्याश्रमत्कारचारसा प्रदर्शिता सन्ति। तस्यास्था न दैवेऽपि तु पौरुषेऽस्ति। पूर्वपीठिकाया दैवस्य महत्वे दैवे च बले विश्वासोऽस्ति दर्शित, मालवेश्वर शिवप्रसादाल्लब्धया वीरारातितादनानिपुणया गदया मगधेश्वर पराभवति, *मगधेश्वरश्च ऋषि वचने विश्वस्य भाविनो निजसूनोर्जल पौरुषयो-रान्मुख्य दधान कान्तार एव दिनानि व्ययेनि,* पर नैषा हि पूर्वपीठिका दण्डि-प्रणीतेति प्रोक्तमेवानुपदम्। दण्डिन प्रणीते कथाभागे तु ईदृश्यो नियत्यधीना घटना न सुष्ठु प्राप्यन्ते। सर्वं एव कुमारा किन्तु सर्वाण्यप्यथान्यकथागतानि पात्राणि स्वपुरुषार्थमवलम्ब्यैव शत्रून् जयन्ति। मैजाभिप्रेतसाधने ते नूनमुचित-मनुचितमुपायञ्चावलम्बन्ते। पर तत *सर्व प्रदर्शन कवरभिमतमेव*। न केवल पुरुष पात्राणा चित्रण तत्र, प्राणवत् कृत्वा विहित नारी पात्राणि चासुमन्ति विधाय चित्रितानि सन्ति। गणिका कुल्टाद्विवनिताना, कलहप्रागा धूर्ताना, दम्भरतानाञ्च मनुष्याणा चरित्राणि समुपन्यस्य दण्डी स्वकृत्या ता योग्यताम् स्वादयितुं प्रयतते स्म यया पाठकस्तत्समयवर्तिन समाजस्य सर्वा अपि दशा सम्यग् निरीक्षयितु प्रभवेत्।

दण्डी नोच्चतरवर्गस्य वृत्तमालिखितुमभिलषते स तु मध्यमवर्गस्य जीवन गाढ़ बलीयसीमुत्सुकता निदधाति। अत एव तस्य रचनायां क्षपणका, ऐन्द्रजालिका, भ्रष्टासनपरिवनो, राज्यच्युता राजानो, राजतनया, वाराङ्गना, कुट्टिन्यो, नर्मव्यापारसहायका धूर्ता, दूती कर्म प्रवीणा मिथ्याचर्य, निद्धहस्ताश्चौरा, द्यूत क्रीडानिरताश्चरित्रभ्रष्टा भिक्षव —सर्वविधा एव जना—द्रष्टु शक्या सन्ति। नृपाणामादर्शमयानि चरित्राणि प्रति किञ्च त्रिकालदर्शिना महर्षीणा दैव्या दण्डेश्वरस्यार प्रदर्शनप्रति दण्डिनोऽभिरुचिर्मनागपि न प्रतीयते। स न भूलोक स्वरस्या विहायस्युत्पतितुमाकाङ्क्षति। तदीया तु दृष्टि सर्वथैव सद्धान्तिकी व्यावहारिकी च विद्यते। येन्मात्रो युगपदव धर्मार्थकामान् न निषेवितु पारयत् तदा तेन एको द्वौ वा, क्रियन्ति दिनानि, हाम्यौ, तथाचरणेन न काऽपि स्याद् हानि। अतिश्चेद् यत्नेन पुरुषार्थ या न जितो भवत् तदा भ्रंदण्डादिपरा कापि

नीतिरनुसरणीया। प्रयोक्तव्या च सा। अपहारवर्मविश्रुतादिकानां चरित्राणि इदमेव तथ्यं सङ्केतयन्ति। एतावदेव न, दण्डिना तु अलौकिकशक्तीनामप्युपयोग एतादृशानामेव दुष्कर्मणां कृते कृतः। दण्डी गणिकया मारीचं वशङ्गतं कारयित्वा तपस्विनां क्षपणकानां साधूनां भिक्षाचराणाञ्च दुर्बलताः समीचीनतया समुपन्यस्यति। न स सामाजिक-दोष-निगूहनपक्षे आसीत्। वस्तुतोऽन्यत्रैतद्विधा याथार्थ्यप्रियता दुर्लभैव वर्तते।

दण्डी नारी-हृदयाभिज्ञाने परामेव पटुतां गाहते। तद्रचनायां क्वापि पतिवञ्चिकाया नृशंसमानसाया नार्या जघन्यं चित्रं दृश्यते, क्वापि च पतिप्राणायाः मृदुलस्वान्तायाः पतिव्रताया मनोरमा चेतःपावनकरी दिव्या आभा विभाति। 'धूमिनी' नारी-हृदयस्य निर्दयताया अस्ति गर्हितः प्रतीको यदि, तदा 'गोमिनी' पतिप्राणायाः पतिव्रतायाः सुगृहिण्या अवदाता प्रतिमा भाति।

आसां कथानां कौतुकोत्पादकाश्चर्यकारकघटनान्वितत्वात् तत्राद्भुतरसस्य प्रभूतता सन्ततमेवावलोक्यते। नाना-विधानेकशास्त्रविशारदत्वाद् दण्डिनस्तस्य रचनायां राजनीतेर्निशिताच्छटा, कामशास्त्रस्य निगूढानां तथ्यानां प्रभा, चौरशास्त्रस्य विचित्रविचित्राणामुदन्तानां बहुलता दृष्टा भवन्ति। तत्स्थितिर्दण्डिनो विचित्रपाण्डित्यवत्त्वं प्रकटीकरोति। पल्लवपृथ्वीपतीनां छत्रच्छायासुखान्युपभुञ्जानोऽपि दण्डी वस्तुतो जनतायाः कविरस्ति। यदि सुधियः स्वसमकालवर्तिन्या भारतभुवो जनताया हर्षविषादौ, सुख-दुःखे, आमोद-प्रमोदौ, कूर्दन-गूर्दने, आचार-विचारौ च ज्ञातुं कामयन्ते तदा ते दण्डिनो दशकुमारचरितं परिशीलयितुं कल्पन्ते।

श्रेष्ठस्य कवेः काव्ये तत्समयवर्तिनः संसारस्य सर्वाङ्गीणं दर्शनं भवतीत्येतत्कथनं दण्डिनः कृत्यां सर्वथैव चरितार्थीभवति। तस्मिन् काले समाजस्याभिरुचिस्ताम्रचूड-युद्धदर्शनेऽदृश्यत—"मार्गे च महति निगमे नैगमानां ताम्रचूडयुद्धकोलाहलो महानासीत्।" तदा जनेषु व्याघ्रचर्मणो दन्तैश्च व्यवहारो भृशमासीदतो हट्टे तद्विक्रयो घोषितोऽभूत्—"असावापट तत्र व्याघ्रचर्म दन्ताश्च विक्रीयार्थं-चागताः, किं न जानासि।" कृपाजलोद्धरणार्थं तदानीं घटनाम्नाः प्रयोगः कृतोऽभवत्—"...सं च घाटं घटनालीमुखोद्गतजलधाराभिः...तं जलयन्त्रम्।" तस्मिन् युगेऽपि जना उत्सवप्रिया अवालोक्यन्त। उत्सवेषु कामोत्सवः प्रमुखो

मत आसीत्—"मदनमहोत्सवाय रसिकमनांसि समुल्लासयन्"; "अभूच्च घोषणाश्च कामोत्सवः।" द्यूतप्रथा प्रचलितासीद् भृशम्—"अनुप्रविश्य च द्यूतसभामक्षधूर्तैः समगंसि।" वासताम्बूलवीटिकानां नितरां निषेवणमदृश्यत—"हिमकरपङ्काच्च, वासताम्बूलवीटिकां कर्पूरस्फुटिकां···निष्ठीवम्।" क्रीडासु विविधासु च तदा जनतानुरागोऽवाप्यत—"तस्मिन् कन्दुकोत्सवे पुनः···समाश्वासितास्मि।" नृत्य-गीतचित्रादिकलासु प्रेम प्रतिगृहं व्यालोक्यत—"बुद्धिश्च निसर्गपट्वी कलासु नृत्यगीतादिषु चित्रेषु च काव्यविस्तरेषु।"

दण्डिनो दशकुमारचरितं, साहित्यिकदृष्ट्या, वस्तुत एका परमप्रशंसनीया रचनास्ति। सा हि रचना-व्याख्यानकयोरुज्ज्वलं निदर्शनमस्ति। तस्याख्यानस्य समाणानां पात्राणां चित्रणं शिष्टहास्यसुविलसितमधुरव्यङ्ग्यभुव उपरि कुशलेन लेखकेन प्रस्तुतीकृतमस्ति। आख्यानस्योक्तं सौन्दर्यं खलु अर्थस्य विशदतया, रसस्य मनोज्ञाभिव्यक्त्या, प्रतिपदरमणीया ललिततया, व्यवहारक्षमया ग्राहपेशलया च भाषया नितरां कमनीयतरतां नीतमस्ति। अतः सुवर्णमिह ससौरभं भवत् सकलमपि लोकं परिप्रीणयत् समवाप्यते।

नानागुण-सुन्दराया रसपारिप्लवावारतस्या रचनाया इह काश्चन पङ्क्तयो भिन्न भिन्नस्थलगताः समुद्ध्रियन्ते सचेतसा चेतांसि नन्दयितुम्—

(क) 'अम्ब किं ब्रवीमि दौर्भाग्यं नाम जीवन्मरणमेवाङ्गनानाम्, विशेषतश्च कुलवधूनाम्। तस्याहमस्म्युदाहरणभूता। मातृप्रमुखोऽपि ज्ञातिवर्गो मामवज्ञयैव पश्यति। तेन सुदृष्टां मां कुरु। न चेत् त्यजेयमद्यैव निष्प्रयोजनान् प्राणान्। अविरामाच्च मे रहस्यं नाश्राव्यम्' इति पादयोः पपात।

(पृ० २२६ नि० प्रे०)

(ख) विभावरी च व्यभासीत्। अभूच्च मे मनसि 'किमयं स्वप्नः, किं विप्रलम्भो वा किमियमासुरी दैवी वा कापि माया। यद् भावि तद् भवतु। मादृशमिदं तावतो नावबुध्य मोदयामि भूमिमस्याम्। यावदायुरस्यायै देवतायै प्रतिश्राविलो भवामि' इति निश्चितमतिरतिष्ठम्। (पृ० १२४, नि० प्रे०)

यत्र वस्तुनो, दृश्यस्य, स्थितेर्वा प्रकर्षं विना दीर्घदीर्घतराणि वाक्यानि किं वा अन्तरेण समासावलीं न प्रस्फुटीभवितुं शक्यस्तत्र कविना तद्विध-सौन्दर्याविर्भावनप्रयोजनानुरोधेनैव सदाश्रयश्च कृतः। दृश्यताम्—

( ग ) प्रथमनेककरणमधुरं विहरन्ती'''श्वासानिलवेगान्दोलितैर्दन्तच्छद-रश्मिजालैर्लीलापल्लवैरिव मुखकमलपरिमलग्रहणलोलानलिनस्ताडयन्ती'''गोमूत्रिकाप्रचारेषु घनदर्शितरागविभ्रमा विद्युल्लतामिव विडम्बयन्ती,'''अवपतनोत्पतन-निर्व्यवस्थमुक्ताहारम्, अङ्कुरितघर्मसलिलदूषितकपोलपत्रभङ्गशोषणाधिकृतश्रवण-पल्लवानिलम्, आगलितस्तनतटांशुकनियमनव्यापृतैकपाणिपल्लवं च निपत्योत्थाय निमील्योन्मील्य स्थित्वा गत्वा चैवातिचित्रं पर्यक्रीडत राजकन्या ।

( पृ० २०९–२११, नि० प्रे० )

दशकुमारचरिते कविना व्यावहारिकशैल्यनुगुणान्येव पदानि प्रायशिचतानि सन्ति। कानिचन तु पदान्येतादृशान्यपि शोभन्ते यानि प्रयुञ्जानः कविरेतेषु व्यवहरणीयतानुरूपं बलमपि सञ्चारयति। उपहसितका-मलमल्लोड्डमनीयोद्यान-किंशारु-काल्दीय-मद्गु-पद्मनीरगोष्ठादिकानि पदानि बहूनि यानि पदानि कविना प्रयुक्तानि तेषां प्रयोगस्येदमेव प्रयोजनं यत् तानि व्यवहारे समागतानि स्युः । तत्र—"गृहिण प्रियहिताय दारगुणा."; "दुष्करसाधनं प्रज्ञा"; "इह जगति हि न निरीहं देहिनं श्रियः संश्रयन्ते"—इत्यादिकाः सूक्तयोऽपि च—

"''''''आगमदीपदृष्टेन खल्वध्वना सुखेन वर्तते लोकयात्रा । दिव्यं हि चक्षुर्भूतभवद्भविष्यत्सु व्यवहितविप्रकृष्टादिषु च विषयेषु शास्त्रं नामाप्रतिहतवृत्ति। तेन हीनः सतोरप्यायतविशालयोर्लोचनयोरन्ध एव जन्तुरर्थदर्शनेष्वसामर्थ्यात्'''''''" इत्यादिकाः ( पृ० २५४, नि० प्रे० ) राजनीतिविषयका उपदेशाश्च पाठकान् मधुरमुपदिशन्तः समुल्लसन्ति ।

दण्डिनो रचना-शैली वस्तुतोऽनुपमा प्रभावशालिनी ओजस्विनी च वर्तते नितराम् । यापि रचना तेन सृष्टा सा तैस्तैर्नैजैर्गुणैः परामेवोत्कृष्टतामुपेतास्ति । काव्यादर्शस्तदीयोऽलङ्कारशास्त्रस्य महान् ग्रन्थः, दशकुमारचरितं गद्यकाव्येषु अद्भुतं ग्रन्थरत्नम्, किञ्च मत्यावन्तिसुन्दरी, या अपूर्णैव प्राप्यते, च अतिनरामेव सहृदयहृदयाभिरामा रचनास्तीति को न सचेता वेत्ति । प्राचीनानामालोचकानामस्य कविकुलशिरोमणेर्दण्डिनो विषये तु सम्मतिरियम्—

"जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत् ।
कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि ॥"

—:o:—

## ( ३६ )

# वेणीसंहारम्

अमरवाणीपर्युपासकैर्नाट्यशास्त्र-पारावारीणैः स्वसिद्धान्तानां प्रतिपादनार्थं येभ्यो रूपकेभ्यो हि उदाहरणान्यचीयन्त तेषु वेणीसंहारं नाम नाटकमुल्लेखनार्हमस्ति प्रामुख्येण। वेणीसंहारं भट्टनारायणो रचयाञ्चभूव। आसीत् सः कान्यकुब्ज-( कन्नौज )-वास्तव्यः। न सः स्वरचनायां नैजजीवन-परिचयं स्तोकमपि प्रददौ अतस्तस्य जीवनविषयक उदन्तस्तमोगर्भ एव लीयते। वङ्गनरेश आदिशूरस्तं दुर्भिक्षजनितामापदं विनिवारयितुं यज्ञार्थमाजुहावेति केषाञ्चनेतिहासविदां मतम्। वदन्ति च ते यदसौ महीपतिः सप्तमेशवीयाब्दे समजनि। यद्येतत्कथनं युक्तं तदा भट्टनारायणस्य स्थितिकाल ईशवीयं सप्तमं शतकं सिद्ध्यति किञ्च तस्यैव वङ्गाधिराजस्य छायायां स वसतिञ्चक्रे—इत्येतदप्यनुमितं भवति। मन्ये स एव विद्वत्प्रियो राजा 'मृगराजलक्ष्मे'त्येतेनोपाधिना तं कविकुलमूर्द्धन्यं विभूषयाञ्चकार। केचित् कथयन्ति स गुप्तराज्यानेहसि चतुर्थे खिष्टीयशतके प्रादुर्बभूव। अन्ये वदन्ति यद् बहिरङ्गेभ्यः प्रमाणेभ्यस्तस्य काव्यालङ्कारसूत्रवृत्तिकारात् वामनात् प्राक्तनत्वं निष्पद्यतेऽतस्तस्य समयो निश्चप्रचतया सप्तमशतकवर्ती प्रतीयते। वामनः स्वकीये ग्रन्थे भट्टनारायणकृताद् वेणीसंहारादुद्धरणमेकमुद्धरन् प्राप्यते तस्मात् सः अष्टमशतके सञ्जाताद् वामनान्नूनं प्राचीनतर इति नः प्रतिभाति।

•

वर्तीतर्ति वेणीसंहारस्य कथावस्तुन आधारो महाभारतम्। द्रौपदी-वेणी-बन्धनसम्बन्धिनी घटना या महाभारते वर्णितास्ति तामेवादाय नाटककारो नाटकं स्वकीयं प्रणिनाय। परं नाटकीयां सुन्दरतां सञ्चारयितुं स तत्र यथेष्टं परिवर्तनमपि चकार।

सन्ध्यवस्थार्थप्रकृतीनां प्रतिष्ठापनं नाटके यथास्थानं विधातव्यमिति यन्नाट्यशास्त्राभिमतं तस्य पालनं वेणीसंहारे पूर्णतयास्ति विहितम्। सन्ध्यङ्गयोजनाया-

कला विधानदृष्ट्या न निर्दोषं सिद्ध्यति । नाटकस्य वेणीसंयमनरूपा प्रधान-घटनात्मान भीम प्रतिज्ञया सार्धं निबध्नाति । पर नाटककारो न महाभारतस्य समस्तस्यापि कथावस्तुन समावेशनविषयक लोभ संवरीतु पारयति तस्मात् सोऽसम्बद्धा अपि घटना संयोजयितुमीहते । एष तदीयोऽभिनिवेश कथा गतिं प्रति बाधक सञ्जात । वीररसप्रधाने रूपके दुर्योधन भानुमत्यो प्रणयचित्रण नितान्तमनुपयुक्त वर्तते । काव्यप्रकाशकार साहित्यदर्पणकारश्चोभौ भृशमुपक्रोशन्तौ विलोक्येते प्रवृत्तिं ताम् प्रतीच्य प्रधी डॉ० कीथोऽपि न सङ्गता मन्यते । ये खलु नाटकस्यास्य नायक दुर्योधन मन्यन्ते ते प्रणयचित्रणस्यास्यौचित्य प्रतिपादयन्ति । पर सत्यपि नायकत्वेन दुर्योधनेऽङ्गीकृते नेद प्रणयदृश्यमुचितं प्रतिभाति । न तेन हि कथावस्तुनो गति प्रकर्ष वा प्रौढतामुपैति न च दुर्योधनस्यैव चरित्रमुच्छ्रितत्वमासादयति । एवमेव तृतीयाङ्कस्थित कर्णाश्वत्थाम्नोर्वाग्युद्धमतितरा प्रभावपूर्णं सदपि न किमपि नाटकीय प्रयोजनमुद्दीपयति अतस्तदपि नापेक्षायै कल्पते । अथ चात्र शस्त्रत्यागानेहसि भीमकर्तृक दु शासन वधचित्रणेन तत्र च दु शासन रक्षणविषयिकायाश्चेष्टाया अश्वत्थाम्नो विरतत्वस्याङ्कनेन न भीमस्य महत्त्वोपचयमृच्छति । अश्वत्थाम्नि दु शासन गोपायितु प्रक्रान्ते सति यदि भीमस्तदुर शोणितपाने साफल्यमध्यगमिष्यत् तदा भीमस्य गौरवमवर्धत् । षष्ठे अङ्के चार्वाकराक्षसमवतार्य कथागावर्तयितु विधीयमान प्रयासोऽपि नापेक्ष्यते । तद्घटनायोजनया तु धीरोदात्तनायको युधिष्ठिर उपहास गमित इव प्रतीयते । तामवस्था नीतस्य तस्य तत्कालिक चित्रण न कमपि प्रभाव जनयति । तत्त्वस्वाभाविकमेव प्रतिलक्ष्यते ।

नाटकेऽस्मिन्नाटककारेण महाभारतीयानां बहुलाना घटनाना समुपस्थाप नार्थमीहा तु कृतास्ति पर न स तत्सकलघटनामुक्ता एकस्मिन् सूत्रे प्रोतुमलमत । न यावन्नाटकीया कथा विकासमनु धावत् न च यावत् सा धारेव गतिशीला स्यात् तावन्नाटक कला न गरिमाण गन्तुमर्हेत् । नाटकेऽत्रैतद्विधमपि वैशिष्ट्य नोपलभ्यते । नाटककारो वर्णनेन तु यथा विनान्वान सलक्ष्यते पर स तत्र ( कथायाम् ) व्यापारेण गतिं प्रददान समवाप्यते । चतुर्थेऽङ्के सुन्दरककृत रणावनिवर्णनमस्ति तु कवित्वकलित पर तत् कथावस्तुनो गतिं श्लथयति । अस्ति च तत् विगलितप्रभावम् । एवमेव भानुमतीकृत स्वप्नवर्णनमपि न तावन्त विस्तारमपेक्षते यावान् स तत्र वीक्षितो भवति । इत्थ वणीसंहारस्य

निमिता घटना स्वल्पा तु सति प्रभावशालिन्यः रसाप्लुता मर्मस्पर्शिन्यश्च परं समष्ट्यां ता नाटकगतिं वर्धमाना नाटकीयां प्रभविष्णुतां मन्दीकुर्वन्ति ।

नाटककारेण कथावस्तुनि क्वचित् क्वचिद् भाविनीनां घटनानां सूचनापि प्रदत्तास्ति किन्तु सोऽपि भवभूतिरिव पताकास्थानकं गच्छन् प्रयुञ्जानः प्राप्यते । आंग्लीयेषु रूपकेषु तद् 'ड्रामेटिकआइरनी' ति व्याह्रियते । द्वितीयस्मिन्नङ्के दुर्योधनो यदैव रुग्णां महिषीं भानुमतीं स्वकीयोरुस्थलमध्यासयितुं निवेदयति तदैव कञ्चुकी आगत्य 'भग्नमि'ति भणति । अनेन स्वशिरेण दर्शको दुर्योधनोरुभङ्ग-विषयिण्या भाविन्या घटनायाः सङ्केतमधियाति । दर्शकोऽपि तदाज्ञया भग्न-मित्येतस्य ऊरुयुग्मेन सहान्वेति । क्षणान्तरं भयावहेन मरुता रथकेतनं भग्नमिति यवनं जायते । *अत्र नाटकस्य पद्यम् उद्धियन्ते—*

"राजा—तन्निमित्यनास्तीर्णं कठिनशिलातलमध्यास्ते देवी ।

यत—लोलांशुकस्य पवनाकुलितांशुकान्तं

त्वद्दृष्टिहारि मम लोचनबान्धवस्य ।

अध्यासितुं तव चिरं जघनस्थलस्य

पर्याप्तमेव करभोरु ममोरुयुग्मम् ॥

( प्रविश्य पटाक्षेपेण सम्भ्रान्त )

निधनाधमतेनैतादृशी योजना 'पताकास्थानकं तृतीय'मस्ति । अन्यत्रापि अहितननकुलादिपदप्रयोगस्थले नाटककारः कौतूहलोत्पादनस्य कृते प्रयतमानोऽवाप्यते । वस्तुतो नाटकस्य कथावस्तुरचनमेव रुचिरं परं नाटकीया कला न तत्र समुचितां सज्जां श्रयन्ती दृग्गोचरीभवति ।

नाटकस्यास्य नायको दुर्योधन इति केचन, तदपरे भीमो नायक इति, तदितरे नायको नाटकस्यास्य युधिष्ठिर इति मन्यन्ते । ये दुर्योधनं नायकं मन्यन्ते; तेषां कथनमेतत्—

(क) दुर्योधनस्य चरित्र-चित्रणे परिवर्तनं विशिष्टतया विधाय नाटककारस्तं (दुर्योधनम्) चारित्र्येणोच्चैरस्थापयितुं यतमानो दृश्यते । इदं ज्ञापयति यत् कवेर्दुर्योधनस्य नायकत्वमभिलषितम् ।

(ख) प्रथममङ्कं विहायावशिष्टेषु सर्वेष्वप्यङ्केषु दुर्योधनो रङ्गमञ्चे दृश्यते । प्रथमेऽङ्केऽपि सः स्वकार्यकलापमनि प्रेक्षकाणां दृष्टिमावर्जयन् विलोक्यते ।

(ग) दुर्योधनगता शूरतात्मसम्मानभावना च तमस्मदादरभाजनतां प्रापयति । अस्ति स उत्कटो भटो विश्वसनीयः सुहृत् स्नेहार्द्रश्च भ्राता । न स भीम इव विकत्थनाप्रियः । सहीयांसि दीर्घदुःखानि अस्मदीयां समवेदनां तदर्थं जागरयन्ति । मानवतायां स भीमान्महीयान् । सः पराजितोऽपि विजेतुर्भीमाद् गरीयान् ।

(घ) नाटकीया कथा तु दुर्योधनहेतोरुपात्तिमत्ता मनोग्राहिणी हृदयाकर्षकारिणी च ।

नाटकस्य नायको भीम इत्यभिमानिनां मतमेतत्—

"कृष्टा येन शिरोरुहे नृपशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः॥"

चतुर्थेऽङ्के सुन्दरको भीम-पराक्रममुपस्थापयन् भाष्यते। इत्थं भीमो वेणीसंहारीय-कथावस्तुनो मूलाधार एव सिद्ध्यति। वेणीसंयमनाख्या घटनैव प्राधान्येन भीममवलम्बते। वेणी संहारहेतोर्भीमस्य—

"मथ्नामि कौरवशतं समरे न कोपाद् दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
सञ्चूर्णयामि गदया न सुयोधनोरू सन्धिं करोतु भवतां नृपतिः पणेन॥"

इत्येषा प्रतिज्ञैव बीजं प्रतीयते। भीम प्रतिज्ञामेतां पूरयितुमादितोऽन्तपर्यन्तं यत्नशीलः समासाद्यते। तत्कोपेन तु ज्ञातं भवतीदं यत् स आज्ञामवज्ञायापि स्वप्रतिज्ञा-पूरणाय समुद्यत आसीत्। चेन्नाटकाद् भीमस्य व्यक्तित्वं पृथक् कृतं स्यात् तदा तन्नाटशिल्पेन एव किम्? नाटकस्य नामापि वस्तुनो भीमस्य प्राधान्यं साधयति। अतो भीम एव नाटकस्यास्य नायको मन्तव्यः।

एतस्य नाटकस्य नायकत्वं हि युधिष्ठिरे समुल्लसतीत्येतद् अभिदधतां विचारा इमे—युधिष्ठिरो नायक-गुणान् निदधाति। स महासत्त्वो गम्भीरोऽविकत्थनः स्थिरो निगूढाहङ्कारो दृढव्रतोऽस्ति। स सर्वं पातुं कुल-क्षयाशङ्कया शान्ति-मभिस्थापनप्रयोजनेन युद्धाद् दूरीभवितुं सन्धिञ्च कर्तुं नितान्तमेव प्रयत्नं कृतवान्। शान्तिप्रियता तस्मिंस्तां सीमां गतासीद् यत् सा न तस्य भ्रातृभ्योऽरोचत। सः न कदापि मनागप्यविमृश्यकारितायां मतिं बबन्ध। नितरामयतत यद् दुर्योधनो नैजं दुरभिनिवेशं परित्यजेत्; कृतेऽपि महति प्रयासे यदा सः (दुर्योधनः) कतिपयामपि सन्धिं कर्तुं नोद्यत सञ्जातस्तदा बाधित एव भूत्वा युधिष्ठिरो युद्धमभ्युपगत्। आसीदसौ परमसौम्यः परमोदात्तस्वभाव औदार्योद्दामानसः। स्वपरकारस्तस्य यं क्रोधमस्मात्पुरतो निदधाति तत्र सौम्यता तेजस्विता च द्वयेते द्वे अपि विशिष्टे शोभेते—

"यत् सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता।
तद्द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत् कुरुवने यौधिष्ठिरं जृम्भते॥"

अरयोऽपि युधिष्ठिरस्य क्षमाशीलता श्लाघन्ते । तेऽपि विश्वसन्ति यद्युधिष्ठिरस्तेष्वपि न द्वेषधियं निदधाति । शालीनत्वात् सर्वशुभचिन्तनकारित्वात् तस्य, तेऽपि तस्मिन् श्रद्दधते । धृतराष्ट्रस्तमधिकृत्य वक्ति दुर्योधनमाश्वासयन्— "राज्ये एव गतेऽपि साम्प्रार्थनया किं करोति युधिष्ठिरः ? अन्यच्च सर्वमेतापट्टन नानुमन्यते ।" युधिष्ठिरस्य भ्रातृप्रेमाप्यनुकरणीयम् । भीमस्यानुज–निधनवार्ता-मात्रेण स स्वयमपि प्राणान् हातुं चिन्तायां, मज्जयते स्म । तस्य युद्धजनितजय पराजयस्पर्शाभावात् च नाटकान्ते "प्रीततरश्चेद् भगवान्दिदम-स्त्वि'ति भरत वाक्याभिधानकारित्वात्, स एव नाटकस्यास्य नायक इति ।

नाटके यादृशमुज्ज्वलतरं चरित्रं नायकस्य युधिष्ठिरस्य दर्शितं न तादृशं तत् स न भीमे न च दुर्योधने दर्शयन् समर्थो भवति तस्मात् सर्वथापि युधिष्ठिरस्य नायकत्वमिष्टमिति प्रतीयते ।

नात्र सन्देहो भट्टनारायणेन पात्राणां चरित्रचित्रणे प्रशंसनीयं साफल्यं सम्लब्धमस्ति तच्चित्रितेषु चरित्रेषु न क्वापि कृत्रिमत्वं दृश्यते। सर्वत्रैव तत्र स्वाभाविकत्वमुपलभ्यते। अत एव तु नाटकमेतच्चरित्रप्रधानेषु नाटकेषु गण्यते।

यद्यपि रूपके रसस्तृतीयतत्त्वेन मतस्तथापि तत्राभिनेयत्वस्य स्थानं प्रमुखम्। अतस्तत्सर्वमप्यतिशय्य सन्तिष्ठते। वेणीसंहारनाटकमभिनयदृष्ट्या न सफलं नाटकम्। न केवलं तत्राभिनयनैपुण्याः कुशलत्वमपि तु तत्र कथावस्त्वपि गतिशीलं न वीक्ष्यते। व्यापाराणां च संयोजनमपि न प्रशस्तम्। न तस्य दृश्यकाव्यत्वनिकषे शुद्धं सिध्यति। रसपरिपक्वत्वदृष्ट्या तु नाटकमिदमेकं सफलं सुन्दरं प्रभावोत्पादकं नाटकं वर्तते। नाटकेऽत्र प्रधानो रसोऽस्ति वीरः। तस्य रसस्य प्रवाहः प्रथमाङ्कादेवानवच्छिन्नया गत्या प्रवहन्ननुभूयते। स रसान्तराणाञ्च स्रोतांस्यात्मनि सन्निदधानो नाटकभूभागमाप्लावयन्नन्ते आनन्दे परिणमते।

वीरभावभावितस्य भीमस्य तु—

(क) "मथ्नामि कौरवशतं समरे न कोपाद्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः।"

(ख) "मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः,
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः॥"

(ग) "अन्योन्यास्फालभिन्नद्विपरुधिरवसामांसमस्तिष्कपङ्के।
मग्नानां स्यन्दनानामुपरिकृतपदन्यासविक्रान्तपत्तौ॥"

इत्यादिकाः पुष्कला वीरोक्तयस्तु ह्लादिनं परं श्रुतिगता भवन्त्येव अन्यत्रापि दुर्योधनाश्वत्थामप्रभृतीनां वीरपुङ्गवानामुक्तयो नितरां वीरभावमुत्साहञ्च हृदये सञ्चारयन्ति सर्वेषामपि मानवानाम्।

द्वितीयस्मिन्नङ्के पार्थस्य जयद्रथवधप्रतिज्ञया भीतां जयद्रथमातरं दुःशलां सान्त्वयता दुर्योधनेन कृतं स्वचमूवर्णनं वीररसस्यातिमनोज्ञं निदर्शनमस्ति—

"कोदण्डज्याकिणाङ्कैरगणितरिपुभिः कङ्कटोन्मुक्तदेहैः,
श्लिष्टान्योन्यातपत्रैः सितकमलवनभ्रान्तिमुत्पादयद्भिः।
रेणुध्वस्तार्कभासां प्रचलदसिलतादन्तुराणां बलानां
आक्रान्ता भ्रातृभिर्मे दिशि दिशि समरे कोटयः सम्पतन्ति॥

स्वपितृनिधनवृत्तं निशम्याश्वत्थाम्नो हृदयं शोकसन्तप्तं शत्रुं प्रति रुष्टं क्रुद्ध

तद्विधयत्नप्रेरणया प्रेरित न जायते। तदानीं भवति तन्मानस वीरोत्साहयुत्। तदुत्साहाभिव्यञ्जना विलोक्यतामस्मिन् श्लोके —

'पितुर्मूर्ध्नि स्पृष्टे ज्वलदनलभास्वत्परशुना
कृत यद्रामेण श्रुतिमुपगतं तन्नभवताम्।
किमद्याश्वत्थामा तदरिरुधिरासार विषय
न कर्म क्रोधान्ध प्रभवति विधातु रणमुखे॥"

अर्जुन वृषसेनयोर्मध्ये युद्ध यद् वर्णित तदपि वर्तते महोत्साहमय्यारम्भ। अर्जुनस्य युद्ध कौशल विलोक्य को न भवत्युत्साहवान्? यथा नाटके वीररसस्य परिपाकोऽवलोक्यते तथैव रौद्ररसस्यापि। भीमदुर्योधनयो क्रोधोद्गारास्तु नाटके भूयन्त एव पर रौद्ररसपरिपूर्यमाणा गर्जनाश्च यतस्तत आकर्ण्यन्ते। अथवास्मिन् एतस्मिन् वचने रौद्रस्य स्वादो गृह्यताम् —

"यो य शस्त्र बिभर्ति स्वभुजगुरुमद पाण्डवीना चमूना
यो य पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्या गतो वा।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीप
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम्॥"

यद्यपि नाट्यशास्त्रनियमात्र रङ्गमञ्चे युद्धदृश्यमुपस्थापयितुमस्ति शक्य परमत्र नाटके यत्र यत्र समरक्षेत्र वर्णित तत्र बीभत्सरसस्य सञ्चार सर्वत्रैव दृग्गोचरी-भवति। दृश्यताम्—

"हदमाणुशमशशोणिदहिं कुम्भशहश्शं वशाहिं शञ्चिदम्।
अणिशं अ पिवामि शोणिअं वलिशशदं शमले हुवीअदु॥"

यद्यपि नाटकस्य प्रधानवीररसत्वान्नाटके वीर रौद्र बीभत्सरसाना प्राचुर्यमस्ति पर तत्र द्वितीयाङ्के शृङ्गाररसोऽपि आस्वाद्यते। भीम निधनस्य वृत्तान्त श्रुत्वा द्रौपदी युधिष्ठिरयो कृते करुणविलाप करुणरस आस्वाद्यतां याति।

"आत्मारामा विहितरतयो निर्विकल्पे समाधौ
ज्ञानोद्रेकाद् विघटिततमोग्रन्थय सत्त्वनिष्ठा।
य वीक्षन्ते कमपि तमसा ज्योतिषा वा परस्तात्
त मोहान्ध कथमयममु वेत्तु देव पुराणम्॥"

नाटकेऽस्मिन् अनुप्रास-यमकादिशब्दालङ्काराणां प्रयोगस्त्वस्त्येव परम् "आत्मग्रहणात्-( २, २ )" इत्यादौ विशेषोक्ति विभावनयो, "निशितधनवदीर्घात् ( २, १६ )" इत्यादौ कारकदीपकस्य, "किं नो व्याप्तदिशाम्" ( २, १७ )" इत्यादावुपमारूपकयो, "दुर्नयवाता हतानाम्"'( ५, ३६ )" इत्यादौ सहोक्ते सौन्दर्यमेवमेवान्यत्रान्येषामलङ्काराणां नाट्यालङ्काराणां च सुषमा कविना साधु दर्शितास्ति। अलङ्कारा इव नाटके अनेकेषां छन्दसां प्रयोगो दृश्यते। तत्र शौरसेनी मागधीप्रभृतिप्राकृतभाषाः अपि सम्यक् प्रयुक्ता. प्राप्यन्ते वचनस्य सारोऽयं नाटकमेतन्नाट्यकलादृष्ट्या यद्यपि नोत्तमं परं काव्यकलादृष्ट्योत्तममत एव विदुषां संसारे सम्मानं लभते।



# रत्नावली

शास्त्रीयपद्धतिमाश्रित्य विरचितेषु दृश्यकाव्येषु महाकवेः हर्षवर्द्धनस्य 'रत्नावली' नाम दृश्यकाव्यमेकं श्रेष्ठं दृश्यकाव्यमस्ति। तत्कृतिगतायाः कारणमिदमस्ति यत् तत्र तेषामुदाहरणानां संख्याधिकतमा वर्तते यानि नाट्यशास्त्रं कस्यचन रूपकस्य विशिष्टतायाः प्रदर्शनाय अपेक्षते।

रत्नावली नाट्यशास्त्रदृष्ट्यैव नोत्तमा अपि तु सा दृश्यकाव्यदृष्ट्यापि एकाभिनन्दनीया कृतिर्वर्तते। नाटिकाकारेण तत्प्रणयने तदद्भुतं कौशलमभ्युपागामि येन तत्र शास्त्रीयपद्धतिविषयकं सौन्दर्यं कलात्मकञ्च मृदुलं लालित्यमुभयमपि नितरां मनोऽभिरामं भूत्वात्मानमुपस्थापयितुं क्षमे सञ्जाते स्तः। कुशलकलाकारस्य तूलिका मनःप्रीतिकरैरङ्गैः वर्णरालेख्यस्य रूपे नैसर्गिकीमाभां निरन्तरी प्राणान् प्रवाहयति। न कलाकारः शास्त्रीयान् सिद्धान्तानुपेक्षते। स तेषु रमते। ते च तस्मिन् रमन्ते। कलाकारस्यैतद्धि निखिलं वैशिष्ट्यं दृग्गोचरीभवति हर्षे। अत एव शास्त्रप्रतिपादितं सन्ध्यङ्गक्रम-विधानं स रत्नावल्यां यथाविधि संरक्षन् समवाप्यते। मुखसन्धेर्द्वादशस्वङ्गेषु करणमेकादशमङ्गं वर्तते विलोभनञ्च चतुर्थं परं रत्नावल्यां प्रथमं करणमङ्कितम् :—"नमस्ते भगवन् कुसुमायुध अमोघदर्शनो मे इदानीं त्वं भविष्यसि" इति। ततश्च तत्र विलोभनम् :—

> "अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवा-
> वास्थानीं समये समं नृपजनः सायन्तने सम्पतन्।
> सम्प्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितुं
> प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते॥" इति।

अत्र विलोभनेन सहोद्भेदाभिधमपि सन्ध्यङ्गं विभाति। भवति कलाकारः स्वतन्त्रः। तत्र राजमाना स्वातन्त्र्यप्रियता वस्तुतः कलां धवलयति प्रसाधयति च ताम्। असंशयं हर्षे कलाकारत्वमन्वर्थतां याति।

अर्थप्रकृतयः, कार्यावस्थाः, सन्धयश्च सन्ति वस्तुविन्यासस्य साधनानि। हर्षो रत्नावल्यां तत्-तत्साधनानि सम्यक् प्रयुञ्जानः प्राप्यते। रत्नावल्याः

कथावस्तुनः प्रधानं ध्येयमस्ति रत्नावल्युदयनयोरुद्वाहः । कविना विष्कम्भके यौगन्धरायणस्य—

"द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥"

इत्येतयोक्त्या साध्यस्य बीजं स्पष्टमेव निर्दिष्टम् । एतस्मादुपरितनाच्छ्लोकात्—

"प्रारम्भेऽस्मिन् स्वामिनो वृद्धिहेतौ दैवेनेत्थं दत्तहस्तावलम्बे ।
सिद्धेर्भ्रान्तिर्नास्ति सत्यं तथापि स्वेच्छाचारी भीत एवास्मि भर्तुः ॥"

इत्येतच्छ्लोकं यावद् बीजमेवोपस्थापयति कविः । यौगन्धरायणस्यैवोक्तिरेवारम्भावस्थां समुपन्यस्यति । बीजाभिधाया अर्थप्रकृतेः आरम्भावस्थायाश्चान्वयो विधीयते मुखसन्धिनैव । अथ च मुखसन्धावेव बीजस्योद्भव उद्देश्याना संस्तव-फलप्रोत्साहनादिकञ्च निरूप्यन्ते । एतेषां सद्भावो रत्नावल्याः प्रथमेऽङ्के विद्यते तस्मात् तत्र मुखसन्धिरेव परिस्फुरति ।

"अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवा-
वास्थानीं समये समं नृपजनः सायन्तने संपतन् ।
संप्रत्येष सरोरुहद्युतिमुषः पादास्तवासेवितुम् ।"

इत्यादिका वैतालीया गिरामाकर्ण्य सागरिका "कहं अअं सो राआ उदअणो जस्स अहं तादेण दिण्णा" इत्यादिकं यदभिदधाति तत् तन्मानसे प्रादुर्भूतं प्रेमाभिव्यनक्ति कथाविकासने च तज्जायते साहाय्यकृत् । कविरित्थमिह अर्थप्रकृतिं बिन्दुमुपक्षिपति । सागरिकोदयनमालिलिखिषु यद् यतते तदेव प्रयत्नाख्या कार्यावस्थास्ति बिन्दुप्रयत्नयोः संगतिः प्रतिमुखसन्धिमध्ये भवति । रत्नावल्या द्वितीयाङ्के प्रतिमुखसन्धिरेवातो विद्यते । रत्नावल्या नाटिकात्वात् तत्र पताकाप्रकर्योः सन्निवेशो नापेक्ष्यत इत्येतद् विमृश्य न कविना ते प्रदर्शिते । ते विना शास्त्रीयतापि नापकर्षमभ्युपैति तस्मात तदनुपस्थापनं न कामपि हानिं जनयति । तृतीयाङ्के रत्नावली ( सागरिका ) वेषं परिवर्त्य राजानं संगन्तुमभिसरणोपायमवलम्बते परं न वर्तते स उपक्रमो निरापद् । वासवदत्ता तमुपायं व्याहन्तुं शक्नोति । भवति च स उपायो व्याहतः । राजा यद्यपि तत्रारम्भादेव सागरिकामवाप्नुते परं तदवाप्तिसमये "भो एवं णेदं जदि अआला वादावली भविअ ण आअदि देवीवासवदत्ता" इत्येतदभिधाय विदूषको हि वासवदत्ताया आगमनाशङ्कामप्युत्पादयति इत्येतद्विधाया. स्थितेर्विद्यमानत्वात्, तृतीयाङ्कः प्राप्त्याशाभिधावस्थां भजते । तथाविधत्वात्, तत्र गर्भसन्धिः समुपतिष्ठते । "देवीप्रसादनं मुक्त्वा नान्यमत्रोपायं पश्यामि"…इत्यादिकानि वचनानि फल-प्राप्तिं सङ्केत-

यन्ति । कविना नियताप्त्यवस्थामेव दर्शयितुं हि तद्विषयकः प्रयासः समुपन्यस्तः । चतुर्थेऽङ्के हि अनिवार्या यावद् रत्नावल्याः प्राप्तिः सम्भवतीव प्रदर्शितास्ति परमन्तं तद्वाप्त्यवसरो विघ्नविहीनश्च समुपस्थापितः । एतत् सर्वं चतुर्थस्याङ्कस्यावमर्श-सन्धिमयं प्रथयति । तस्मिन्नेव चतुर्थेऽङ्के सिंहलेश्वरस्य सचिवो वसुभूतिः साग-रिकां निर्वर्ण्य साश्चर्यं "सदृशीयं राजपुत्र्या भावण्य" इति यद् व्याहरति तस्य तद्व्याहरणान्निर्वहणसन्धिः समारब्धा भवति । यौगन्धरायणकृते सर्वरहस्यो-न्मीलने रत्नावलीं परिग्रहीतुमुदयनम्प्रति वासवदत्ताविहितेऽभ्यर्थने च फलप्राप्तिः स्फुटतयैव दर्शकानां समक्षेऽवतरति । अतश्चतुर्थोऽङ्कः उपसंहृतिसन्धि जुषते । यथावस्तुनि चमत्कारमवतारयितुं नाटिकाकारेण पताकास्थानकानामपि प्रयो-गोऽस्ति कृतः । धनञ्जयेन अन्योक्तिरूपं पताकास्थानकमथ च समासोक्तिरूपं पताकास्थानकमित्येतद् द्वयमेव प्रतिपादितम् । कविनानयोर्द्वयोरपि सन्निवेशो विहितः स्वरचनायाम् । "यातोऽस्मि पद्मनयने" इत्यादौ अन्योक्तिरूपं पताका-स्थानकं किञ्च "उद्दामोत्कलिकां विपाण्डुररुचम्" इत्यादौ समासोक्तिरूपं पताका-स्थानकं शोभमानं पश्यन्त्येव भावुकाः । इदं सर्वं नाटिकाया अस्याः शास्त्रीयप-द्धत्यनुगामित्वं बोधयति ।

नाटिकाकारः प्रस्तावनानन्तरं विष्कम्भकद्वारेण नाटिकास्थायाः कथायाः पूर्व-वर्तिनोऽशस्याभासमात्र प्रददाति । स च अंशोऽयम्—'सिंहलेश्वरस्य सुतां रत्नावलीं यः परिणेष्यति सः चक्रवर्तित्वमवाप्स्यति' इत्येतज्ज्योतिर्विद्भ्यो कौशाम्बीश्वरस्यो-दयनस्य मन्त्री यौगन्धरायणो रत्नावलीमुदयनार्थं सिंहलेश्वरं याचते परं सिंहलेश्वर उदयनस्य वासवदत्तारागित्वात् तस्य तां प्रार्थनां प्रत्यादिशति । ततो यौगन्ध-रायणो "लावाणके ग्रामेऽग्निना वासवदत्ताऽदह्यत"—इत्येतमनृतमुदन्तं वितत्यो-दयनस्य कृते सिंहलेश्वराद् रत्नावल्या अधिगमनेऽधिगच्छति साफल्यम् । परं दैवाद् रत्नावलीवाही पोतोऽर्णवे निमज्जति । फलकेनैकेन सांयात्रिका उद्धरन्ति-रत्नावलीम् । आनीता च सा यौगन्धरायणस्य सविधे भवति । यौगन्धरायणस्तां 'सागरिके'त्येतन्नाम्ना प्रख्याप्योदयनस्यावरोधे देव्याः वासवदत्तायाः सेवायां नियुनक्ति येनोदयनः स्यादावर्जितस्तां प्रति । रत्नावलीकथैषैतद्दशानन्तर-मारब्धा भवति ।

नाटिकायाः प्रथमेऽङ्के मदनमहोत्सवस्य दर्शनीयं दृश्यं समुपस्थितं भवति । सागरिका तस्मिन्नेव कमनीये सदवसरे उदयन-दर्शनस्य समवाप्तेः पुण्यमर्था

वेलामश्नुते प्रच्छन्नायां दशायाम् । तद्धृदये प्रणय-बीजमुप्त्वा प्रथमोऽङ्को भवत्यवसितः ।

द्वितीयस्मिन्नङ्के उदयन-विरहताप-तप्ता सागरिका स्वमनोविनोदनाय राजानमालिखन्ती वीक्ष्यते तत्सखी सुसंगतोदयनवियोगदह्यमानां तामुपचरन्ती समुपलभ्यते । राज्ञ उदयनस्यापि दृक्-पथे सागरिकाऽऽलिखितचित्रं, यत्र सुसङ्गतया सागरिकापि आलिखितासीत्, अवतरति । चित्रं वीक्ष्य नृपः सागरिकायामनुरज्यति । सुसङ्गतायाः प्रयत्नेन सागरिकोदयनयोः सान्निध्यमपि सञ्जायते । संयोगवशात् तच्चित्रं वासवदत्तादृष्टिगतं भवति । नृपः चित्रं विलोक्य वासवदत्ता कुप्येदिति विचार्य चिन्तां प्रतिपद्यते—इत्येतदायचितं प्रदर्श्य द्वितीयाङ्कोऽपि संवृततामुपैति ।

सागरिकोदयनयोर्मेलनार्थं सुसङ्गता-विदूषकायोजितयोजनाया वासवदत्तावगतत्वात् सर्वमपि समीहितं वैयर्थ्यं याति । राजा वासवदत्तायाः पुरस्ताद् भृशं जिह्रेति । राजानुनयति तां परं न तस्या रोषो दूरीभवति । यदैषा सर्वापि स्थितिः सागरिकाश्रुतिमापद्यते तदा सात्यन्तं दूयते भवति च सा आत्मानं व्यापादयितुमुद्यता परं भगवदनुकम्पया न सा दुर्घटना भवितुं पारयति । वासवदत्ताकोपे उभावपि सागरिका विदूषकवसन्तकौ स्वदारस्थानं नयति । राज्ञो वेदनां चिन्तां च वर्धयन्नङ्कस्तृतीयः समाप्तिमेति ।

राज्ञी वासवदत्ता सागरिकां बन्दिनीं विधाय निगूहयति च क्वापि ताम्, अथ च प्रचारयति यत् सा उज्जयिनीं प्रस्थापिता । तदीया रत्नमाला धर्मसेवन भूदेवाय देया इत्यादिश्यैतां तत्कालमाकाङ्क्षां ज्ञात्वापि सुसंगता तां ( रत्नमालाम् ) विदूषकायैव प्रयच्छति । विदूषकस्तया रत्नमालया राजानं रञ्जयितुमीहते । ततो राजानं विजयवर्मा 'रुमण्वता मन्त्रिणा कोशलेषु विजयो लब्ध' इत्येतेन शुभेन वृत्तान्तेन प्रीणयति । पुनरस्मिन्नेवान्तराले काञ्चनमालाऽऽगतः कश्चन ऐन्द्रजालिकः स्वकीयेन्द्रजालविद्यया कौतुकं वितनोति । वासवदत्तासहितो भूपतिः सदा तत्कौतुकजनितमानन्दं गाहमानो राजभवनमध्यास्ते स्म तदैव बाभ्रव्यो नाम कञ्चुकी यो रत्नावलीमानेतुं सिंहलद्वीपं गत आसीत् सिंहलेश्वरस्य मन्त्री वसुभूतिर्यो रत्नावल्या सार्धमागच्छन् पोतस्य निमज्जनात्पृथग्भावपातितोऽभूत्, आगतौ । तौ विदूषकस्य ग्रीवां सागरिकाया रत्नमालयालङ्कृतां प्रेक्ष्य 'इयन्तु रत्नमाला रत्नावल्या' प्रतीयते' इति शङ्केते । वसुभूतिर्बाभ्रव्यदत्ता-

दहनसम्बन्धिघटनोद्गतमारभ्य जलयान-निमग्नता-रत्नावलीप्राप्तनादिविषयकं सकल-मपि व्यतिकरं श्रावयति राजानम्। राजापि यदा तत् सर्वं शृण्वन्नासीत् तदैवान्तः-पुरेऽग्निज्वालाः प्रसरन्त्यो दृष्टा भवन्ति। विलोक्याग्निना दह्यमानमन्तःपुरं वासवदत्ता भीता भवन्ती तत्र बन्दिनीत्वेन स्थितां सागरिकामग्नेः पातुं सोद्वेगं नृपं प्रार्थयते। राजाऽपि तत्क्षणं सागरिकाजीवनरक्षार्थमग्नावेव प्रविशति। वासवदत्ता-विदूषक-बाभ्रव्य-वसुभूतयश्च महीपमनुधावन्ति। परं सागरिकोद्धारेणैव सह अग्निरपि शाम्यत्यकस्मात्। वस्तुतः स अग्निरैन्द्रजालिककौतुकमेवासीत्। नासीत् परमार्थतोऽग्निः। वसुभूति-बाभ्रव्यौ 'सा सागरिका तु तत्रत्यो रत्नावल्ये-वे'ति विज्ञाय नितरां प्रीयेते। तस्मिन्नेवानेहसि यौगन्धरायणः सर्वमपि रहस्यमुन्मीलयति। राजा सर्वमपि तन्निशम्य विस्मयं हर्षञ्च विन्दति। वासवदत्तायाः कृतेन सविनयेनानुरोधेन च नृपो रत्नावलीं पत्नीत्वेन परिगृह्णाति—इत्येतत् सर्वमपि वस्तुजातं निधाय भरतवाक्येन सह नाटिका भवत्युपसंहृता।

निःसंशयं नाटिकायाः कथावस्तु नितान्तं सुघटितं सत् युक्तियुक्तया रीत्या विकासमभ्युपैति। नाटिकाकारेण हर्षेण स्वकीयया निशितया प्रतिभया मनोभिरामया च कल्पनया तासां ललितललिततराणां घटनानां योजनास्ति विहिता या नैसर्गिकतां चमत्कारितां च परिष्वजमानाः कथायां कामपि रुचिरां तूर्णां गतिं सञ्चारयन्ति। सारिकया सागरिका-सुसंगतयोरालापस्य पुनरावर्तनं यत् कविना कारितं तेन च उदयनस्य स्वान्ते सागरिकापरकप्रेमा-विर्भावनस्य या प्रभावपेशला कान्तभावनोद्भाविता तत् पुनरावर्तनं सा च भावना भव्या नाटिकामतितरां गतिमतीं विदधाते। एवमेव नाटिकायां सागरिकाभिसारसम्बन्धिनी किञ्च तदभिसरणोद्भेदविषयिका च या घटना समुल्ल-सति ते द्वे अपि घटने हर्षस्य हृद्यायाः कल्पनायाः परमसङ्कुलनिदर्शनत्वेन विभासेते। ऐन्द्रजालिकयुद्भावना तु आनन्दपूर्णमद्भुतं वातावरणं सृजन्ती अनिर्वचनीयायामुल्लासवत्यां भासुरायां भूमिकायां नाटिकां संवृणुते।

अस्ति नाटिकाया नायक उदयनो धीरललितनायकः। तस्य चरित्रे विला-सिता, प्रेमपरता, कलाप्रियता, प्रणयपरायणता च दृश्यन्ते। प्रकृत्यास्ति स शिष्टः सुकोमलश्च। परिजनेषु च तस्य सहृदयभावो विद्यते। यद्यपि नाटिकानियमपा-रतन्त्र्यान्नाटिकाकारेणोदयनस्य विलाससमुल्लसितं प्रणयप्रवणमेव रूपं प्राधान्येन प्रदर्शितं परं सापि घटना नाटिकायां कविना सङ्केतितास्ति यया तस्य राजनी-

तितिक्षानन्तरं विलक्षणं च शौर्यमनुगतं जायते। इदमपि सम्यग् विदितं भवति यत् सः प्रणयलीलानां मधुरमधुरतरासु वेलासु विरहवेदनातुरेषु क्षणेषु च न राजकार्येभ्यो भवत्युदासीनः। विजयवर्मणः कोशलविजयवृत्तान्तमाकर्ण्य स रुमण्वन्तम्प्रति स्वकीयहार्दिकधन्यवादान् सहर्षं व्याहरन् कोशलनरेशस्य च शूरतां श्लाघते—"साधु कोशलपते साधु, मृत्युरपि ते श्लाघनीयो यस्य शत्रवोऽप्येवं पुरुषकारं वर्णयन्ति" इति। तदाज्ञामन्तरेण सागरिकाऽऽनयनाच्चसमायाद् यौगन्धरायणस्य शङ्कितहृदयता किञ्च 'कथमसौ मामनिवेद्य किञ्चित् करिष्यति।' इत्येतत् तद्वचस्तदीयं राजनीतिंप्रति सततं जागरूकत्वमभिव्यनक्ति।

वसन्तकविदूषकस्य च चरित्रचित्रणे कविना श्लाघ्या सफलताधिगम्यते। तेन तेन पाटवेन तस्य चरित्रमालिखितं येन विदूषकापेक्षिता सर्वेऽपि गुणाः लोचनगोचरतां गच्छेयुः। नर्मसाचिव्यपटुत्वरहस्यरक्षणकुशलत्व–मनोविनोदनविचक्षणत्व–सुख–दुःखसहचरत्व–हास्यप्रवीणत्वादिसद्गुणाः कुशलेन कलाकारेण यथोचितेषु स्थलेषु अस्माकं समक्षं निधीयन्ते। वाचि विदूषकस्य प्रमादभङ्गिरमणीयता च वर्तते। स नृपमानसप्रसादनाय वासवदत्ताप्रदत्तं निग्रहं सस्मितं सहते; अनल–प्रविष्टे सति भूपतौ सोऽपि समनुद्रवति। "भोदि गच्छं गच्छम्। सरामि चरदसुत्तेण जइ ईदिसो कदावि अवरेहि दिट्ठपुव्वा"; किञ्च "सहत्थदिण्णेहिं मोदएहिं चिरस्स दाव कालस्स उदरं मे सुपूरिदं किदम्"; अथच "भो वअस्स ण एदे महुअरा णेउरसद्दं अणुहरन्ति। णेउरसद्दो क्खु एसो देवीए परिअणस्स…" इत्यादिकतदुदीरितवाक्येभ्यस्तस्योपरिभणितानामनेकेषां गुणानां संस्तवः स्फुटतया समवाप्यते। 'द्विपदीखण्डं' स 'चर्चरी' इति निगद्य तु स्वविदूषकत्वं नितरामेव विशदं विधाय समुपन्यस्यति।

रत्नावल्याः मुग्धात्वं विभाति। उदयनप्रथमसाक्षात्कारकाले सञ्जाता सहसा तस्याः मुग्धता व्यनक्ति—"एदं पेक्खिअ अदिसज्झसेण ण सक्कुणोमि पदादो पदं वि गन्तुम्"। तस्यामनिन्द्यं पुनीतमेव सौन्दर्यं समुल्लसदवलोक्यते। नूनं दृग-नस्य दर्पणे स सागरोद्विग्नेयदर्थमध्यरसिनः प्रयत्नोऽपि तस्या अनुपमसुन्दरतां प्रकटीकरोति। राजा—

"दृशः पृथुतरीकृता जितनिजाब्जपत्रत्विष-
श्चतुर्भिरपि साधु साध्विति मुखैः समं व्याहृतम्॥

शिराणि चलितानि विस्मयवशाद् ध्रुवं चेतसा
विधाय ललना जगत्त्रयललामभूताभिमाम् ॥"

इत्येषा तामधिकृत्योक्तिरपि तस्या अलौकिकसौन्दर्यवत्त्वं वेदयति। अस्ति सा कलापारगता सुन्दरी। चित्रकलायां सा नैपुण्यविशेषं निदधाति। तच्चित्रकला प्रशंसति पुनः पुनस्तत्सखी सुसंगता। राजा तत्रालिखितचित्रं विलोक्य तस्यामनुरक्तः सञ्जायते। परिस्थितिवशात् सा भवन्त्यपि राजतनया दासीभावेनोदयनान्तःपुरेऽह्नानि गमयति पुनर्द्वेनोऽस्तस्या मनो न जातु ग्लानिमुपैति। तां दशां नीतापि सा स्वपितृकुलमर्यादारक्षायामस्ति सावधाना। प्रश्ने पृष्टा सा सुसंगतया वा पार्श्वनयना भवति। तूष्णीं भूत्वैव सा स्वव्यथां वशस्योद्गमनां च युगपदेव प्रकटीकुरुते। तादृशं तज्जीवनं न तस्यै रोचते क्षणमपि, परमुदयनगतं प्रेम जीवनं धारयितुं तां सनिर्बन्धमनुरुणद्धि। शंसति च सा—"ता परप्पेसणदूसिदंपि मे जीविदं एदस्स दंसणेण दाणिं बहुमतं संवुत्तम्"। नैजान्वयाभिमानशालिन्या तस्यामात्मसम्मानभावना बलीयसी भूत्वा स्फुरति। सा अपमानं सहमाना न स्वजीवनं वोढुकामा। तदभिसारगरहस्ये सति ज्ञाते वासवदत्तया सा अपमानाद् वरं मृत्युरिति विमृश्य लतापाशेनात्मानं पिपासते। न तस्याः प्रेम औचित्यमतिक्रमते। सुसंगता तत्प्रेमैवमभिनन्दति—'न कमलाकरं वर्जयित्वा राजहंस्यन्यत्राभिरमते"।

अस्ति वासवदत्ता राज्ञ उदयनस्य प्रधानमहिषी। तत्स्पृहणीयप्रेमहेतो राजोदयनः सर्वथा तदधीन एव। न कोऽपि क्षण एतादृक् यस्मिन् सा राज्ञः प्रेमपारावारे न निलीना प्राप्येत। तज्जीवनमेव तज्जीवनं तदानुकूल्यमेव तत्सुखावासस्तस्माद् राजा न कदापि तस्या प्रमाद्यति। अत्र—

'प्रिया मुञ्चत्यद्य स्फुटमसहना जीवितमसौ।
प्रकृष्टस्य प्रेम्णः स्खलितमविषह्यं हि भवति॥"

इत्येतदादिकं नृपवचः प्रमाणम्। वासवदत्तायाः परमोदारहृदयता तस्याः सदयमनस्कता च तदातिनराभेव स्फुटतया प्रकाशमुपैति यदा राजप्रासादमपि गृहीत प्राप्य सा तत्पाशं बन्दिनीव नीतां सागरिकामग्नं पातुमवनीन्द्रं प्रार्थयते—"एसा वत्तु सद् जिविदणाद् इव तिअडेण सअमिदा सा अरिआ चिन्तदि। ता तं परित्तादु अज्जउत्ता"। परिणतेषु तस्या दाक्षिण्यं मदयानलोकिनि भवति। विदूषकं निगृहमपि सा सम्मानपुरस्सरं मोचयति।

नारीपात्रेषु सुसंगताया अपि चरित्रमनुकरणीयम्। अस्ति सागरिकायाः सखी। सख्युः मन्त्रित्वं सति गुप्ते तु सहचरत्वमधिवसति। अस्यां सुसंगतायां स गुणः संशोभते। विरहतापसन्तप्तायां सख्यां सागरिकायां, सा तां परमस्नेहेन परिचरन्ती प्राप्यते। सापि चित्ररचनायां दक्षत्वं निदधाति। सागरिकाऽऽलिखितो-दयनचित्रफलके सा निर्विलम्बं सागरिकामपि तत्राऽऽलिख्य चित्रं तामपि प्रसंग-नीयां शोभां प्रापयति। तस्याः वाक्पटुत्वं तदा सम्यग् विदितं भवति यदा सा उदयनेन सह संलपति। सा स्वसख्याः सागरिकाया हिताय तत्सर्वमप्यनुष्ठानु-मुचनते यद् विदूषकः प्रस्तौति। वस्तुतः सास्ति आदर्शसखी।

नाट्यशास्त्रस्य विधानमिदं यन्नाटिकायां नायको धीरललित आलिख्येत। तत्र प्रणयलीलाः प्रदर्श्येरन्। एतद्विधानान्नाटिकायां प्राधान्यं शृङ्गारस्य भवति। रत्नावल्यामतएव हर्षेण तत्सर्वमनुसृतं यन्नाट्यशास्त्रमादिशति। प्रथमाङ्के कवि-र्वसन्तोत्सवस्य कन्दर्पस्यार्चायाश्च प्रियं दृश्यं शृङ्गाररसानुगुणवातावरणप्रतिष्ठापन-पूर्वकमारचयति। वासवदत्तोदयनयोः स्पृहणीयं प्रेम तु तस्मिन् रमणीयोपक्रमे जीवनमेव सञ्चारयति। कविर्नाटिकां सागरिकायाः उदयनस्य च प्रणयावने-रुपरि प्रतिष्ठापयति। तत्र शृङ्गारस्य संयोग-विप्रलम्भाभिधौ द्वावपि पक्षौ साफल्यपूर्वकं चित्रितौ दृश्येते। प्रेमोदयो गुण-श्रवण-चित्रदर्शनादिना जायते-इत्येतच्छास्त्रगतं तत्सर्वमपि नाटिकायां कुशलः कलाकारः समीचीनतया निब-ध्नाति। शृङ्गारे हास्यस्यास्ति मैत्रं सहायम्। नायकं परकीयाया वा अभिसारि-काया हावा भृशं प्रीणन्ति। परमेतस्यां नाटिकायामभिसरणस्य प्रत्यक्षतयोपस्था-पितत्वात् हावा नात्मानमभिनेयतायां परिणमयितुं क्षमन्ते। तथापरेऽपि उदयन-स्यानयोरभ्यान्तरस्य ते आस्वादविषयं नीताः सन्ति—

> "प्रणयविशदां दृष्टिं वक्त्रे ददाति न शङ्किता
> घटयति घनं कण्ठाश्लेषे रसान्न पयोधरौ।
> वदति बहुशो गच्छामीति प्रयत्नधृताप्यहो
> रमयतितरां सङ्केतस्था तथापि हि कामिनी॥"

सन्तीमाश्चेष्टाः परकीयायाः हावान्तर्गता एव। प्रियतम-सान्निध्येन सङ्कटता अपि भयस्थानन्दप्रदाः। परकीयायाः प्रेमणि तु सङ्कटाः प्रेमपरस्य कृते वरदानमिव सम्पद्यते। रत्नावल्यामेवंविधस्याप्यनेहसो योजना कृतास्ति। अन्तःपुरे सम्यग्निगृहीते यदोदयनः सागरिकामन्वेष्टुं याति तदा तत्पदा-

भट्टनारायणयोः शैलीव कृत्रिमा । तस्य शैल्या विशिष्टतेयं यत् तत्र चित्रात्मकानां ध्वन्यात्मकानाञ्च पदानां प्रयोगोऽभ्युपगतः । मधुरभावनाभिव्यक्त्यर्थं वैदर्भी ह्यपेक्ष्यते । कविना सापि स्वकृतावङ्गीकृतास्ति । कवेर्भाषाया वैशिष्ट्यमेतदपि वर्तते यत् तत्रालङ्काराः स्वाभाविकतयैव समागताः सन्ति । तत्रोपमोत्प्रेक्षाप्रतीपातिशयोक्तिविभावना-समासोक्त्यादीनामलङ्काराणां श्रीमूर्ध्नि सचेतसां चेतो हरति । शब्दालङ्कारेषु श्लेषोऽपि कवये रोचते । नाटिकायां नाट्यकलायाः काव्यकलायाश्चोभयोर्मञ्जुलतया समन्वयः सञ्जातोऽस्ति तस्माद्रत्नावली सर्वथैवैकान्यतमा सफला कृतिरिति शम् ।



## शूद्रकस्तस्य मृच्छकटिकश्च

संस्कृतसाहित्ये शूद्रकस्य यशः सर्वत्र प्रसृतं प्राप्यते । सोमदेवस्य कथासरित्सागरे[1], दण्डिनो दशकुमारचरिते, बाणस्य हर्षचरिते, कादम्बर्यां[2] च, शिवदासस्य वेतालपञ्चविंशतिकायां, कल्हणस्य राजतरङ्गिण्यां, स्कन्दपुराणे[3] च श्यामस्य, मेधाविनोऽस्य वेदविदांवरस्य सिंहोरुसत्त्वस्य नृपस्य नाम सादरं कीर्त्यते । अन्ये[4] चानेके स्वस्वरचनासु अनवद्यं चरितं चरित्रं च चारुतयास्य चित्रयन्तः प्रेक्ष्यन्ते । मृच्छकटिकस्य आमुखे चास्य प्रशस्तिमीक्षामहे वयम् । भूयसां विदुषां गीतामेतदीयां प्रशस्ततामधीत्य चेतः सप्रश्नभमिमं प्रत्ययं प्रयाति यन्नूनमसौ मेदिन्या अधिनश्रीर्निरुद्धतशक्ति-मति-सम्पन्नो विचक्षणमूर्धन्यो विशांपतिश्चमगीर्बभूव । तस्यामपि तत्रीयायां सत्तायां विवादास्पदीभूतायामनासादितस्फुटेतिहासप्रमाणायां, तस्य बुधबहुलपरिवृतत्वात् नर्तितलोकमनापुण्यश्लोकत्वाच्च सोऽवश्यमेव कस्मिन्नपि सौभाग्यवत्यनेहसि भुवनमिदं स्वगरिम्णामुद्भमयाम्बभूवेति निर्धार्यते ।

एतावत्कालपर्यन्तमपि निश्चयपूर्वकमेतन्नाभिधातुं पार्यते यच्छूद्रकः क आसीत् कस्मिंश्च काले इमां भारतवसुन्धरां गौरवगिरेरुन्नततरे शृङ्गे समारोपयामास । विद्वद्धौरेयः श्रीचन्द्रवली[5] पाण्डेय आह यद् वासिष्ठीपुत्रः पुलुमाविरेव

---

[1] तस्माच्च शूद्रकाख्योऽभूद् भूपतिः प्राज्यविक्रमः ।

(कथासरित्सागरे ११शे तरङ्गे, पृ० ४१४)

[2] 'राजा शूद्रको नाम' (कादम्बर्याम्, पृ० ९, नि० प्रे०)

[3] स्कन्दपुराणे, कुमारिकाखण्डे ।

(शूद्रकः कलिवर्षेषु ३२९० वर्षेष्वतीतेषु सम्बभूव)

[4] (अ) राजशेखर-सङ्केतित-रामिल-सौमिलकृता शूद्रककथा ।

(आ) भोजकीर्तितनामधेया पञ्चशिखप्रणीता प्राकृतकाव्यरूपा शूद्रककथा ।

(इ) भोजेनाभिनवगुप्तेन चानुस्मृतं विक्रान्तशूद्रकं नाम नाटकम् ।

(ई) काव्यादर्शटीकाया वादिघङ्घेनोल्लिखितं शूद्रक-चरितम् ।

[5] श्रीचन्द्रवली पाण्डेयः शूद्रक, पृ० ३८ ।

शूद्रक आसीत् । डॉ० स्मिथ[1] आन्ध्रवंशसम्भवं सिमुकमेव शूद्रकं निर्धारयति । प्रो० स्टेनकोनो वक्ते यत् २४८तमे खैस्ताब्दे सम्भूत' शिवदत्ताख्यः क्षितीश एव शूद्रक आसीत् । दशकुमारचरितरचयिता दण्डी एव शूद्रक इति 'थीपिशैलोऽनुमिमीते । कश्चन इस्तलिपय'स्तु वदन्ति यच्छाक्तिराहननृपतेर्मन्त्री एव शूद्रक इत्येतां संज्ञां जुजुपे । स एव, गच्छतानेहसा, प्रतिष्ठानस्य नृपतिर्जज्ञे । इत्थं शूद्रकीयव्यक्तित्वमधिकृत्य महान् विवादः श्रूयते यथा, तथैव तस्य समयजुद्दिश्यापि सन्ति नैका उहाः ।

कवि' कल्हणः शूद्रकं विक्रमादित्यात् प्राग्भवमवगच्छति, परं कल्हणाभिमतकतमोऽयं विक्रमादित्य इति न स्पष्टम् । चेदयं स विक्रमादित्यो यो डॉ० राजबलीपाण्डेयकृतानुसन्धानानुसारं कालिदासस्वैराश्रयदाता मालवगणप्रमुखो विक्रमसंवत्सरप्रवर्तकस्तदा शूद्रक ईशवीयात्प्रवर्तनकालात् प्राग्वर्ती सिद्ध्यति । यदि डॉ०स्मिथ-विचारोपरि ध्यानं प्रदीयते तदैतद्भ्युपगममनुचितं प्रतिभाति यदसावीशवीयाब्दात् प्राग् गामिन्यां तृतीयस्यां शताब्द्यां समभवत् । मार्सेमेनाख्यप्रतीच्यपण्डितप्रणीतभारतेतिहासानुसारं मगधशासक' शिवस्कनामा राजमन्त्री १९१तमेशवीयेऽब्दे शूद्रकेण व्यापादित इत्येतेन शूद्रक ईशवीयद्वितीयशतकवर्ती बभूवेति ज्ञायते । डॉ० फ्लीटो विमृश्यति यच्छूद्रकसूनुरीश्वरसेन आन्ध्रान् पराभूय २४८–४९तमेशवीयाब्दे चेदिसंवत्सरं प्रावीवृतत् इत्येतेन-तदीया विद्यमानता तृतीयशतकयायिनी निष्पद्यते । स्कन्दपुराणोक्तौ यदि श्रद्धा निधीयते तदा सः सहस्रैकत्मेशवीयाब्दादूर्ध्वमर्थेव नर्किनो जायते यतो हि पुराणाना[3] रचनापरिनिर्दिष्टेतरीयं शतकं यावदेव समपद्यत । अवन्तिसुन्दरीकथायां वर्णितस्य शिवस्वातिमहीपस्य समयेऽयमजनीति केषाञ्चन कोविदाना मतमित्थमेव एकाशीतितमे खैस्ताब्दाभ्वर्णेऽजनिष्टेति प्रमाणीभवति । (परं पुराणोक्ततिथिमाश्रित्य तु शिवस्वाते: कालः खैस्तात्प्राग्वर्तिनि चतुर्थे पञ्चमे वा शतके निर्णीयते ) श्रीजैसोवीमहाभागस्तु प्राह यत् स खैस्तचतुर्थशतकात् प्राक्तनः ।

---

[1] स्टेनोकोनो : इण्डियन ड्रामा पृ० ५७ ।

[2] ए० ए० मेकडानल, ए हिस्ट्री ऑफ स० लि० पृ० ३६१ ।

[3] हिन्दी विश्वभारती, पृ० २८९९ ।

[4] दी हिस्ट्री एण्ड कल्चर ऑफ दी इण्डियन पीपुल, सं० ३, परि० १५, पृ० २९८ ।

मृच्छकटिकस्य सामाजिकया स्थितेरुपरि दृष्टिं निदधानो डॉ० भोलाशङ्करव्यास आचष्टे[1] यत् तथाविधावस्था भारते गुप्तशासनानन्तरं सञ्जाता। तस्मान्मृच्छकटिककारः शूद्रक ईशवीयस्य पञ्चमस्य शतकस्योत्तरार्द्धे वा षष्ठस्य शतकस्य प्रारम्भेऽभूदिति। श्रीमताम् एम० ए० महन्दाले महाभागानां लेखेऽयं विचारः स्पष्टीकृतो यत् सामान्यतस्तदीया स्थितिः कालिदासात् पूर्ववर्तिनीति।[2]

शूद्रको मृच्छकटिके नवमेऽङ्के[3] बृहस्पतेर्मङ्गलविरोधित्वमवोचत् परं वराहमिहिरेणानयोर्ग्रहयोर्मित्रत्वं प्रतिपादितम्। बृहज्जातकादवगम्यते यत् तादृशी भावना वराहमिहिरात् पूर्वमवर्तत। एषा विवृतिः शूद्रकस्य वराहमिहिरात् पूर्ववर्तित्वमभिव्यनक्ति। वराहमिहिरो गुप्तकाले[4] सञ्जातः। तेनेदमेवायातं यच्छूद्रको गुप्तशासनोदयात् प्रागेवेशवीये द्वितीये किं वा तृतीयस्मिन्शतके प्रादुरभूत्। आचार्यबलदेवोपाध्यायस्य[5] विचारोऽयं यत् तस्य स्थितिरीशवीयात् पञ्चमाच्छतकात्र कदापि पश्चाद्वर्तिनीति।

मृच्छकटिके वर्णितां सामाजिकावस्थामधीत्य, तत्र प्रयुक्ता विविधा प्राकृतभाषाः शौरसेनी मागधी शाकारी चाण्डाली प्राच्यावन्तिकादिका अवलोक्य, तत्र च समागतानि 'नाणक प्रावारक कार्षापण सुवर्णादीनि' पदानि समवाप्य, वसन्तसेनाया भवनविवरणम्, अधिकरणस्थितिं, चारुदत्तस्य सार्थवाहकतादिकं च सम्प्रेक्ष्य शूद्रकस्य वा मृच्छकटिकस्य पुरातनतरता निःसन्दिग्धतया सिद्ध्यति। गुप्तकालात् प्राक् किञ्च मौर्यसाम्राज्यपतनानन्तरं भारतस्य राजनीतिकी स्थितिर्न[6] सोपानहासघटितेत्यत्र भारतीयेतिहासं साक्षी। प्रायेण २५०वर्षाणि यावदत्र राजशक्तिः श्लथैव व्यालोक्यत। शासकानां बाहुल्येन, केन्द्रीयशक्तेरभावाद् वा क्षीणत्वात् सर्वत्र स्वाच्छन्द्यमेव प्रासरत्। मृच्छकटिके एवंविधाया स्थिते

[1] संस्कृतकविदर्शन, पृ० २८४।

दी हिस्ट्री एण्ड कल्चर ऑफ दी इण्डियन पीपुल, ख० २, परि० १६, पृ० २६४।

[3] 'अङ्गारकविरुद्धस्य प्रक्षीणस्य बृहस्पते'। (मृच्छ०, ९, ३३)

[4] दी हिस्ट्री एण्ड कल्चर ऑफ दी इण्डियन पीपुल, ख० ३, परि० १५, पृ० ३२१।

[5] संस्कृतसुकविसमीक्षा, पृ० १५९।

[6] लूनिया भारतीयसभ्यता तथा संस्कृति का विकास, पृ० २०५।

स्पष्टमेव दर्शनमाप्यते । अतो विश्वासोऽयं भवति यत् शूद्रकः सातवाहनयुगे—ईशवीयद्वितीयशतकस्याहोस्वित् तृतीयस्यान्तराले समभूव ।

मृच्छकटिकस्य कर्तृत्वमधिकृत्यापि तर्काः श्रूयन्तेऽनेके । विदुषां मध्ये बहवो मृच्छकटिकं शूद्रककर्तृकमभ्युपयन्तु नोत्सुका दृश्यन्ते । श्री डॉ० पिशेलो[1] नाम सुधीः मृच्छकटिकस्य कर्ता दण्डीति मन्यते । श्री डॉ० सिल्वां लेवी[2] च मृच्छकटिकं न शूद्रकस्य कृति मनुते । तन्मतेन कश्चिदन्य एव कविः शूद्रकनाम्ना तत्प्रकरणं प्रथयामास । श्री डॉ० कीथोऽपि[3] मृच्छकटिकं शूद्रक-प्रणीतं नावगच्छति । तद्विचारानुसारं कश्चित् कविर्भासकृते चारुदत्तनाटके आर्यकविद्रोहकथां समावेश्य निबध्य च तन्मृच्छकटिकनाम्ना ख्यापयामास । तदेवं मृच्छकटिकस्य कर्तरि नानाविवादाः श्रूयन्ते ।

यत्तु पूर्वमुक्तं सिमुकः शूद्रको, वा शिवदत्तः शूद्रको, वा पुलुमावी शूद्रक इत्यादि-तद् यदि सत्यत्वेन सम्भाव्यमस्ति तदा लोकवाद-परम्परात. समागता जनश्रुति. अपि—अवितथो भवितुं शक्य । पौराणिकमाख्यानमपि कमप्याधारमेवादाय समुत्थितं प्रचलितं च जायते । परकीयसाहित्यासहिष्णवः साहित्यं महत्तुं शक्नुवन्ति यद् वा कश्चिज्जनः कस्यचन साहित्यमाग्रयामन्यत् किमपि अयथार्थं तत्त्वं प्रभवत्यन्तर्भावयितुं परं कोऽपि कस्यचन देशस्य जनताया मध्ये प्रचलितां दन्तकथां ध्वंसयितुं समूलं न कदापि शक्नोति-इत्येतस्मात् कारणादथ च धैर्यं विशालः कालश्चानन्तस्तस्मात् कस्मिन्नपि काले क्वापि विपुल विद्या-गुण-बल-भाज समरव्यसनिनो वेदविद्वरेण्यस्य तपोधनस्य शूद्रकस्य भूपतेः समुत्पत्तिरपि सम्भवा । तेषु तेषु ग्रन्थेषु तस्य चर्चा या कृताप्यते न सा सर्वथैवालीकैव सम्भवा। परमेतेनेदं न देयं यद् ये सज्जनास्तत्र तत्र जने शूद्रकत्वं तर्कयन्ति तेषां तर्कणं प्रत्याख्यायते । भारतीयं पुरातनतरं यत् साहित्यमिदानीमुपलभ्यते तत्र मूलं कालप्रभावात् प्रतरात् स्वकीये शुद्धे रूपेऽवस्थितं सदात्मान स्थापयितुं न शशाक; अतो निश्चप्रचतया किमपि इदीय. प्रमाणमन्तरेण न वक्तुं शक्यते । तस्मान्मृच्छकटिकस्य कर्ता शूद्रक एव प्रतीयते । यदा हि वामनाचार्यो नैजकाव्या-

[1] मैकडानल : ए हिस्ट्री ऑफ संस्कृत लि० पृ० ३६१ ।

[2] लीथियेटर इण्डियन, १८९०, पेरिस ।

[3] डॉ० कीथ · संस्कृतड्रामा, पृ० १२८–१२९ ।

लङ्कारवृत्तौ मृच्छकटिकस्य श्लोकद्वयमुद्धृत्य शूद्रकमेवोक्तस्य रूपकस्य प्रणेतृत्वेनाङ्गीकरोति; यदा हि—

"शूद्रकेणासकृज्जित्वा स्वेच्छया खड्गधारया।
जगद् भूयोऽप्यवष्टब्धं वाचा स्वचरितार्थया॥"

इत्यनेन श्लोकेन दण्डी शूद्रकमुपवर्णयन् प्राप्यते तदा सम्भावनैषा दृढत्वमुपैति यच्छूद्रक इत्येतन्नामधारयिता व्यक्तिविशेषोऽवश्यमभूत्। स मृच्छकटिकं नाम रूपकं चारुदत्तं नाम भासकृतं रूपकमाश्रित्य आर्यक-पालकादिवृत्तेन संवर्ध्य प्राणैषीत्। चारुदत्तस्य चरित्रं सम्भवतः शूद्रकमतितरामप्रीणादतः स तस्य कलेवरं संवर्धयामास विश्वं चारुदत्तस्योदारं पावनं महनीयं च चरित्रमुद्गीयासमानं च समनूनुपत्।

काव्य-प्रतिभाया दृष्ट्या वामं शूद्रक उच्चतरेषु कविषु नान्तर्भूतो भवेत् परं तत्र काव्य-प्रतिभावश्यमेव विलसति। अन्यथा तत्तत्स्थले सः सः रसः कथं हि आस्वाद्यमानो भवितुमर्हेत्। मृच्छकटिकस्य लोकप्रियतायाः प्रचुरं कारणं तस्य नानारसपेशलत्वमपि। प्रस्तावनायामेव द्रष्टा हास्यरसस्य पुटमनुभवति। शृङ्गारस्तु तस्य प्रधानो रसोऽस्त्येव। प्रथमाङ्कस्य चतुर्थाद् दृश्यादेव तदुदयच्छटाभिरामा दृग्गोचरीभवति। पञ्चमाङ्कस्य चतुर्थे दृश्ये सम्भोगशृङ्गारः कुल्मनयास्वाद्यते सचेतोभिः—

एतैः पिष्टतमालवर्णकनिभैरालिप्तमम्भोधरैः
संसक्तैरुपवीजितं सुरभिभिः शीतैः प्रदोषानिलैः।
एषाम्भोदसमागमप्रणयिनी स्वच्छन्दसम्यागता
रक्ता कान्तमिवाम्बरं प्रियतमा विद्युत् समालिङ्गति॥ ५।४६

चतुर्थेऽङ्के दृश्ये चतुर्थे विदूषको रत्नावलीं वसन्तसेनायाः समर्पयति यदा, तदाभीमद्भुत-हास्ययोः सद्भावो युगपदेव क्रियत् सुखं न सञ्चारयति सहृदय-हृदये। नवमेऽङ्के—

"मैत्रेय भोः! किमिदमद्य ममोपघातो
हा ब्राह्मणि! द्विजकुले विमले प्रसूता।
हा रोहसेन! नहि पश्यसि मे विपत्तिं
मिथ्यैव नन्दसि परव्यसनेन नित्यम्॥" ९।२९

इत्यादावथ च दशमेऽङ्के—

उत्तिष्ट भो.! पतित–साधुजनानुकम्पिन्
निष्कारणोपगतबान्धव! धर्मशील!।
यत्न कृतोऽपि सुमहान् मम मोक्षणाय
दैवं न संवदति किं न कृतं त्वयाद्य ॥ १०।३१

रोह०—अले चाण्डाल। मं मालेध, मुञ्चध आवुकं। ' किं मए गदेण कादव्वं?
इत्यादिषु च करुणरससागर उच्चैस्तरङ्गभिन्न् केन न दृश्यते? कस्य न
हृदयं शोकेनाप्लावितं सञ्जायते, को न मन्दन् श्रुतो भवति। अष्टमेऽङ्के—
'चिट्ठ ऐ दुट्ठसमणका! चिट्ठ' इत्यादीनि वाक्यानि भयमुत्पादयन्ति, "अज्ज चि
दे हिअअदं तुमं च शमं उजेव मोडेमि" इत्यादिवाक्यानि च बीभत्सं जनयन्ति
केन नानुभूयन्ते? किञ्च चतुर्थेऽङ्के—"एसा उण का? फुल्लपावारअ–पाउदा
उवाणह–जुअलणिक्खित्त–तेल्ल–चिक्कणेहिं पादेहिं उच्चासणे उवविट्ठा चिट्ठदि"
......"ह्यहो! से अपवित्तदाइणीए पोट्टवित्थारो। ता किं एदं पवेसिअ महात्तेवं
विअ दुआरसोहाइध घरे णिम्मिदा?" इत्यादीनि विदूषकवचांसि श्रुतं हृदये
हास्यानन्दं सञ्चारयन्ति सज्जनान् नितरां रञ्जयन्ति। शर्विलकार्यकयोस्त्विष्य-
क्वचित् क्वचिद् वीररसस्यापि सम्यग् वर्णनं प्रतिफलिता भवति। चिन्ता—
निर्वेदग्लानिप्रभृतिसञ्चारिभावा यथावसरं रसिकेभ्यः स्वां सेवां समर्पयन्त.
समवाप्यन्ते। एतेन विवेचनेन शूद्रकस्य कविप्रतिभावत्त्वं साधु विदितं जायते।
गद्यीयादेतस्माद् गुणात् तस्य रचनायां कमनीयमेव रमण्यत्वरत्नं प्रस्फुरति।

कविर्यदपि वर्णयति तस्य दृश्यं समक्षे साकारं भवत् समुपतिष्ठते। यदायं—

"दारिद्र्यात् पुरुषस्य बान्धवजनो वाक्ये न सन्तिष्ठते
सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः।
सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते
पापं कर्म च यत् परैरपि कृतं तत्तस्य सम्भाव्यते॥" १।३६

इत्यादिना दारिद्र्यं,

"चिन्तासक्त निमग्न मन्त्रि-सलिलं दूतोर्मिशङ्खाकुलं
पर्यन्त स्थित-चार-नक्र मकरं नागाश्वहिंसाश्रयम्।
नानावाशक-कङ्क-पक्षिरुचिरं कायस्थ-सर्पास्पदं
नीतिक्षुण्णतटञ्च राज-करणं हिंस्रैः समुद्रायते॥" ९, १४

इत्यादिना राजाधिकरणं,—

"महावानाध्मातैर्मदिरकुलनीलैर्जलधरै-
श्चलैर्विद्युत्पक्षैर्जलधिभिरिवान्त प्रचलितैः ।
इयं गन्धोद्दामा नवहरितशष्पाङ्कुरवती
धरा धारापातैर्मणिमयशरैर्भिद्यत इव ॥" ५, २२

इत्यादिना च वर्षां वर्णयितुमुपक्रमते तदा तत्तद्वस्तुनो दृश्यं पाठस्तदनुभूति-प्रीतिमास्वादयन् पश्यति ।

यन्मृच्छकटिकमुत्तमां कोटिं नयति तदस्ति तस्य कथावस्तु । तदीया यथा-तितरामेव प्रस्फुरता घटनाचक्रेण पूर्यमाणास्ति । अत एव प्रकरणमिदं नितरां लोकप्रियतामुपेतमस्ति । रूपकस्यास्य प्रशंसनीया विशिष्टतेयमपि विभातितमां यत् तत्र स्वसमयवर्तिनो देशस्यावस्थोपरि सम्यक् प्रकाशं क्षिपति । तदवलोक्य ज्ञायते इदं यत् तदानीन्तनेऽपि युगे समाजे ब्राह्मणानां महत् सम्मानमासीत् । 'विद्याविशेषालङ्कृतः किं कोऽपि ब्राह्मणः क्षाम्यते,' 'पूजनीयो मे ब्राह्मणजनः' इत्यादिपंक्तिभिर्ब्राह्मणानां विद्यावत्त्वमथ च तेषां समाजे प्राप्तप्रतिष्ठत्वं ज्ञातं जायते । परं ते नानादुर्व्यसनेष्वपि निलीना अदृश्यन्त-इत्यत्र प्रमाणं शर्विल-कोऽस्ति । तेऽध्ययनाध्यापनादि स्वकर्म विहाय व्यापारादिकमप्याचरन्ति स्मेत्यत्र तु चारुदत्त एव निदर्शनम् । स सार्थवाह आसीदिति रूपकृता लिख्यत एव । जातिवादस्तदा प्रचण्डतर आसीदिति 'अरे ! तुमं पि वीरे' ? 'अरे का मह जादी ?' इत्यादिवानि वाक्यानि स्पष्टमेव तथ्यमिदं निदिशन्ति । नगरे तत्तद्-वृत्तिजादिना पृथक् पृथग् वसनमं आसन् । द्वितीयाङ्के चारुदत्तस्य संस्तवं प्रददानः संवाहकः कथयति—'स खलु श्रेष्ठिचत्वरे प्रतिवसति । नगराणि राजमार्गैं सुशोभितान्यवालोक्यन्त । रथिनामपि व्यवस्थासीत् । परं रात्रौ दीपस्तम्भाना सम्यक् प्रबन्धो नासाद्यत अतो राजमार्गा अपि अन्धकाराक्रान्ता अदृश्यन्त । तमसि-पिट-चेटादिना भ्रमन्त रासभ्यन्त । रात्रौ मार्गोऽटनमापन्नकमासीत्[1] । धन्दापथे निर्भयं जनाः कलहायन्तो मिथः प्रसादयन्तः प्रायेणावाप्यन्त । यानार्थं गृहवारटिकाश्वादिका[3] प्रायुज्यन्त । धनवन्तो वाहनरचेन राजानपि[2] प्रायुञ्जन ।

---

[1] प्रथमोऽङ्कः । [2] 'पवहण चिट्ठति' अ० ६ ।

[3] अज्ज आए गन्धगब्भ-अ०—२ ।

पत्नीत्वेन सवर्णा स्त्री पर्यगृह्यत परमसवर्णाया ग्रहणमपि प्रतिषिद्धं नासीत्। ब्राह्मणाः कस्यापि वर्णस्य नारीं परिगृह्णन्तश्च अदृश्यन्त। सतीप्रथाया[1] अपि प्रचार आसीत्। समाजे द्यूतस्य प्रचलनं, दास-प्रथा वेश्यापरता च अदृश्यन्त। 'द्यूतं हि नाम पुरुषस्य असिंहासनं राज्यम्'; 'सुवृत्त, अदासो भवतु'; 'दरिद्र-पुरुषसंक्रान्तमनाः खलु गणिका लोके अवचनीया भवती'त्यादीनि वचांस्यत्र प्रमाणम्। तस्मिन् काले कलानामवस्थाऽत्युन्नतासीत्। जनानां संगीते महती रुचिरदृश्यत—

> तं तस्य स्वरसंक्रमं मृदुगिरः श्लिष्टञ्च तन्त्री-स्वनं,
> वर्णानामपि मूर्च्छनान्तरगतं तारं विरामे मृदुम्।
> हेलासंयमितं पुनश्च ललितं रागद्विरुच्चारितं
> *यत्सत्यं विरतेऽपि गीतसमये गच्छामि शृण्वन्निव* ॥ ३, ५ ॥

चित्रकलायाश्च सर्वत्र प्रचार आसीत्—"चित्रफलअ-णिसण्णदिट्ठी मदणिआए" (अं०-४) प्रतिमा-निर्माणकलायामपि जना दक्षा आसन् (अ० २), देशस्या-र्थिकावस्था नितरामेव चरमासीत्। शिशवस्तदा सुवर्णघटितक्रीडनकैरक्रीडन्—हृत्यस्मिन् विषयेऽपि सङ्केतो लभ्यते। वैदिकधर्मस्य बौद्धधर्मस्य चोभयस्य प्रचार आसीत्—'यासां बलिः सपदि मद्गृहदेहलीनाम्'—अ० १; 'शाक्य श्रमणके संवुत्तेति अ, २। रूपकस्याध्ययनेन स्फुटतयैव तस्मिन् काले राजनीतिकी दशा शोचनीयतां गतासीदिति ज्ञायते। देशो लघु-लघुराज्येषु विभक्त आसीत्। शासन-प्रबन्धोऽतिश्लथोऽप्राप्यत। अपराधिनोऽतिकठोरतया-दण्ड्यन्त च।

संस्कृतरूपकेषु वस्तुतो, मृच्छकटिकमत्यद्भुतमनुपमञ्च रूपकम्। तत्र रूपककारेणातिवैदग्ध्येन प्रेमकथा राजनीतिकघटनाभिः सह निबध्य गीतानि। संस्कृतसाहित्ये चरित्र चित्रणप्रधानेषु रूपकेष्वन्यतमं रूपकमिदम्। तत्र सर्वविधा-नामपि पात्राणां सन्निवेशः कृतो रूपककारेण तस्मात् तत्र समाजस्य यथार्थं सजीवं च चित्रं दृग्गतं सञ्जायते। तत्र जीवन-घटनानां च विविधानां समुपस्थितत्वात्, तदुपक्रमञ्च-कृते नितान्तमेवोपयुक्तं वर्तते। प्रकरणस्यास्यैवैषोऽङ्ग- स्वरूप-विशिष्टतां बिभ्रति। नास्यैकोऽप्यङ्कः पुनरीक्ष्य यो न स्यात् वैलक्षण्यभाक्।

[1] अं० १०।

क्वचिद् द्यूतकरस्य संवाहकस्य वर्णनं दर्शकमनो रञ्जयति, क्वचिद् ब्राह्मण चौरः शर्विलकः स्वप्रणयिन्याः कारणेन सन्धिमनुतिष्ठति, क्वचित् प्रवहणानां विपर्ययो भवति क्वचिदुद्याने वसन्तसेनाया व्यापादनाय कुयत्नं शकार आचरति, क्वचिदधिकरणस्य दृश्यमस्ति तु क्वचिद् वधस्थलस्य। यद्येकत्र पतिभक्तिः, करुणा, गुणेषु आसक्तिः, उदारता च स्वाः दिव्याभाभाः विकिरन्त्यो दीव्यन्ते तद्धकृत कपट दम्भ चौर्यं मौर्ख्यादिविषयिण्यास्तामिस्राया घोरं तमः प्रसृतं दृश्यते।

मृच्छकटिके नवनवा भावा, रमणीया उपमा, सरसाश्च कल्पनाः प्रतिपदं समुपलभ्यन्ते। भाषा तत्र सरला प्रवाहमयी च विद्यते। अस्ति सा पूर्णतया कथावस्त्वनुगुणा। तस्यां कालिदासस्य चारुता भवभूतेश्चोदात्तता न, न च नीतिमत्त्य महत्ता सत्यानामपि चित्रणपरं भावानां मार्मिकं चित्रणं यादृशं तत्र चकास्ति तादृशमन्यत्र न।

चरित्रचित्रणेऽपि शूद्रकस्य प्रतिभाऽप्रतिमा। तस्य रचनायां सर्वाण्यपि पात्राणि दर्शकस्य मानसपटले नैजं प्रभावं स्थापयन्ति। न सचेतनास्तेष्वेकतम मपि विस्मर्तुं शक्नोति। येनापि गुणानुरागिणी उदारस्वभावा शरणागतवत्सला दयामयमानसा उपकाररता नानाकलासु कुशला अनाविलचरिता लोकोत्तर-लावण्यवती वसन्तसेना सकृदपि दृष्टा स स्वदेवं सम्भरं यत् तां स्वमनोमन्दिरे प्रतिष्ठाप्य नात्मानं धन्यं मन्यत।

स चारुदत्तः कस्य न प्रियः स्यात्, यः सदाचारस्य परमोज्ज्वलं निदर्शनमासीत् यो याचकानां प्रणयैर्दरिद्रीकृतः, यत्र मित्रैर्न कोऽपि विमानितः, येन स्वचरित्रेण धैर्यं गरिमाणं नीतम्, यः स्वयशोविनाशमेव मृत्युं मेने, यं हि जगदेवमुपश्लोकयाञ्चकार—

> दीनानां कल्पवृक्षः स्वगुणफलनतः सज्जनानां कुटुम्बी
> आदर्शः शिक्षितानां सुचरितनिकषः शीलवेलासमुद्रः।
> सत्कर्ता नावमन्ता पुरुषगुणनिधिर्दक्षिणोदारसत्त्वो
> ह्येकः श्लाघ्यः स जीवत्यधिकगुणतया चोच्छ्वसन्तीव चान्ये ॥१।४८॥

अहह, सुहृदेकप्राणस्य मैत्रेयस्य—

(क) 'किं भणसि, ण हि गदुअ गेहं हिरसदि। णिअत्तीअदु णिविआत्तप सद्दादीति'। पृ० २५३, (चौखम्बा प्र०)

( ग ) "भण भण समागतः, य इदानीं मम प्रियवयस्य' कुसुमितां माधवी-लतामप्याकृष्य कुसुमावचयं न करोति'''स कथमीदृशमकार्यमुभयलोकविरुद्धं करोति'''मस्तकं ते शतखण्डं करोमि । पृ० ५०४ ;

( घ ) "युक्तं ण्णेदं'''ता वसन्तसेणीए दारअं'''पिअवअस्सं अणुगमिस्सं" । पृ० ५५५

इत्यादीनि वचनानि स्मारं स्मारं को न मानवो भवति चिरं विस्मृतस्वकल-व्यापार. । वस्तुतः शकार-शर्विलक-संवाहक-स्थावरक-चन्दनकार्यक-धूतादिकानां सकलानामपि पात्राणां चरित्रस्य चित्रणे कविना स्वप्रतिभाया आश्चर्यकरं कौशल-माकलितम् । मानवस्याल्पज्ञत्वात् तत्रार्थे दोषस्तु सम्भव एव । अत एव क्वापि चरित्र-चित्रणे अज्ञाता कापि न्यूनता नो मनो मनागपि स्पृशति । केषाञ्चन मति-मतां मतानि रूपकस्यास्याधोलिखितास्त्रुटयो व्यथयन्ति—

१. प्रकृतिवर्णनस्य न्यूनता, प्राप्तस्यापि प्रकृतिवर्णनावसरस्योपेक्षणम् ।

२. पष्ठाङ्कस्थदशस्य पञ्चमाङ्कपर्यन्तगामिन्याः कथाया. अग्रवर्तिन्या कथया सह संयोजनेऽक्षमता ।

३. वसन्तसेनां सुप्तां विहाय चारुदत्तस्य पुष्पकरण्डकजीर्णोद्यानगमनम्—इत्येतस्या घटनाया अस्वाभाविकता ।

४. "सुट्टु ण णिद्दाइदो राचीए, ता अज्ज पच्चक्खं पेक्खिस्सं" । इत्ये-तस्मिन् वाक्ये कथाया उपसंहारणेऽसमर्थता ।

५. 'सम्पदं अधिअलणं गच्छिअ ववहालं लिहावेमि' इत्युक्त्वापि शकारस्या-धिकरणमप्रति परस्मिन्नहनि गमनम्—इत्यादिभिर्वार्ताभिः कथाया अप-कर्षणम् ।

६. सत्यामपि वसन्तसेनायामादर्शगणिकायां, तस्या असार्वकालिकत्वादं-देशिकत्वम् ।

७. पञ्चमाङ्कस्यान्तिमदृश्यं विना न अस्मिन्नपि दृश्ये कस्यापि रसस्य पूर्ण-तया परिपाकत्वम् ।

अस्मिन् रूपके शूद्रकेण मानवस्य प्रेम चित्रयता सन्दिष्टमिदम्—सत्यस्य प्रेम्णस्त्यागस्य च फलं भवति परम् । एतेषां गुणानां सद्भावे संसारेऽपि सुख-मवाप्तुं शक्यम् ।

रूपकमिदमधिकृत्य विद्वान् डेऽभिदधाति—

"दी ड्रामा इज आल्मो सिंगुलर इन कन्टेनिंग ए लार्ज नम्बर ऑफ इण्टरेस्टिंग करैक्टर्स, ड्रॉन फ्रॉम ऑल ग्रेड्स ऑफ सोसाइटी, फ्रॉम दी हाइ सोल्ड ब्राह्मण टू दी स्नीकिंग थीफ, दे आर प्रजेण्टेड नॉट एज टाइप्स, बट एज इंडिविजुअल्स आफ डिवर्सिफाइड इण्टरेस्ट, एण्ड इट इन्क्लूड्स इन इट्स स्कोप, फार्स एण्ड ट्रेजेडी, सॅटायर एण्ड पथोज, पोइट्री एण्ड विज्डम काइण्डलीनेस एण्ड ह्यूमेनीटी।"

## नलचम्पूः

संस्कृतवाङ्मये 'चम्पू' रित्येनामभिधां भजमानस्य काव्यस्य अवतारणा गद्यकाव्यानन्तरं संवृत्ता। चम्पूकाव्यं, वस्तुतः, गद्यकाव्यस्यैव उपबृंहणं प्रतीयते। तस्मात् तस्य जन्मगद्यकाव्यस्यानन्तरं स्वाभाविकतया च सिद्ध्यति। दशमात् शतकात् प्राक् चम्पूकाव्यस्य न भवति दर्शनम्। यद्यपि वैदिकसंहितासु— कृष्णयजुर्वेदीयसंहितासु—गद्यपद्ययोर्मिश्रणं दृश्यते परं न स गद्य-पद्ययोर्योग-स्तादृशो, यादृशो हि चम्पूकाव्येऽभिमतः। चम्पूकाव्ये गद्य-पद्ययोर्मिश्रणाय अन्यामेव विधामभिलषते। न सा विधा वैदिके साहित्येऽवाप्यते न च पालीभा-षारचितेषु गद्यपद्यमिश्रेषु जातकेषु। आर्यशूरस्य जातकमालायामपि गद्य-पद्ययोर्निधानं येन विधिनानुष्ठितं स विधिरपि न चम्पूकाव्यलक्षणकृतामिष्ट। इदमवश्यं जातकमालायामङ्गीकृता गद्य-पद्यमेलनपद्धतिः किञ्च हरिषेणकृतायां प्रयागप्रशस्त्यां स्वीकृता गद्य-पद्यमिश्रणात्मिका रीतिश्चम्पूकाव्यस्य स्वरूपाधान-कर्मणि साहाय्यं प्रादत्ताम्। चम्पूकाव्यस्यान्तर्भावं आख्यायिकायामपि न भवति। आख्यायिकायां नायकः स्वयं वक्ता भवति किञ्च तत्र वक्त्रापरवक्त्रच्छ-न्दसोः प्रयोगोऽभीष्टो भवति अत्र तु न। चम्पूकाव्यस्य लक्षणं 'गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते' इत्येतद् विहितं यत्, तत्र लक्षणकारैरभिलष्यते यच्चम्पूकाव्ये भावात्मकानां विषयाणां वर्णनं पद्येषु स्यात् किञ्च वर्णनात्मकानां विषयाणां विवरणं गद्येषु। सम्भवत एतद्विधस्यैव सौन्दर्यस्य चम्पूषु वाञ्छित-त्वाद् भोजराज —

> "गद्यानुबन्धरसमिश्रितपद्यसूक्ति-
> र्हृद्यापि वाद्यकलया कलितेव गीतिः।"

इत्याचख्यौ।

साम्प्रतं यानि चम्पूकाव्यान्युपलभ्यन्ते तानि सन्ति दशमशतकार्वाक्काल-सामीनि। परं षष्ठे शतके सम्भूतो हि काव्यादर्शकारो दण्डिकविश्चम्पूकाव्यस्य लक्षणं लिखन् दृश्यते। एतेन तु चम्पूकाव्यानां रचना तस्मिन् काले वा तत्कालात् प्रागपि सञ्जातेति सिद्ध्यति।

पुरातनतमं यच्चम्पूकाव्यमद्योपलभ्यते तदस्त्यस्मदीयं प्रस्तुतमिदं 'नलचम्पूकाव्यम्'। नलचम्पूकाव्यस्य प्रणेता त्रिविक्रमभट्ट पञ्चदशाधिकनवमशततमेशवीये संवत्सरे शाण्डिल्यान्वयं संवर्धयामास। नौसारीस्थशिलालेखात् तस्य नेमादित्यसूनुत्वं सिद्ध्यति। स हैदराबादान्तर्गतस्य राष्ट्रकूटकुलचूडामणेरिन्द्रराजस्य तृतीयस्य राजसभायां प्रमुखपण्डित आसीत्। नलचम्प्वा रचनायाः कालोऽन्तरङ्गं बहिरङ्गं च प्रमाणमवलम्ब्य निश्चितो भवितुमर्हति। नलचम्प्वाः प्रथमे उच्छ्वासे त्रिविक्रमो बाणभट्टस्य नाम निर्दिशति—

> शश्वद् बाणद्वितीयेन नमदाकारधारिणा।
> धनुषेव गुणाढ्येन निःशेषो रञ्जितो जनः॥

एतेन तस्य बाणादर्वाग्वर्तित्वमथ च—

> पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतं गहनम्।
> हरिमिव हरिमिव हरिमिव वहति पयः पश्यत पयोष्णी॥

नलचम्प्वा श्लोकस्यास्योपरिस्थितस्य भोजराजकृतसरस्वतीकण्ठाभरणे दृष्टत्वात् तस्य स्थितिर्भोजराजात् प्राग्वर्तिनी सिद्धयति। इदमस्त्यन्तरङ्गं प्रमाणम्। मान्यखेट( हैदराबादमण्डलान्तर्गत ) गद्दीमिन्द्रराजतृतीयस्याभिषेकावसरे ( पञ्चदशाधिकनवमशततमेशवीयाब्दे ) कुरण्डकताम्रलेखोऽनेनैव कविना त्रिविक्रमेण लिखितः। स ताम्रलेखश्च बहिरङ्गं प्रमाणमस्ति। एताभ्यां बहिरङ्गान्तरङ्गाभ्याञ्च प्रमाणाभ्यां नलचम्पूप्रणेतुस्त्रिविक्रमस्य दशमशतकवर्तित्वं स्पष्टमेव विदितं जायते।

त्रिविक्रमस्य द्वे कृती स्तः—मदालसाचम्पू, नलचम्पूश्च।

संस्कृतसाहित्ये त्रिविक्रमस्य ख्यातौ कारणमस्ति तदीया श्लेषनिबन्धननैपुणी। श्लेषस्य प्रयोगस्तु वासवदत्तायां तेन सुबन्धुनापि कृतो यः स्वयमात्मानं 'प्रत्यक्षरश्लेषमयप्रबन्धविन्यासवैदग्ध्यनिधि'रिति घोषयति। वस्तुतो घोषणायामस्यां तदीयायामणुमात्रमपि नास्त्यनृतम्। आसीदपि स प्रत्यक्षरश्लेषमयप्रबन्धविन्यासवैदग्ध्यनिधि। अतएव तु तद्रचनां वासवदत्तामुद्दिश्य बाणः शंसति—

> कवीनामगलद्दर्पो नूनं वासवदत्तया।
> शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम्॥

परं सुबन्धोः श्लेषयोजनायां त्रिदूषणं आपतिद्वयं विद्वांसस्त दर्शयन्ते। 'सुबन्धोः श्लेषा दुरारोहा भवन्ती'त्येषा प्रथमा त्रिधा 'श्लेषयोजनायां प्रायः अभङ्गश्लेषस्यैव चमत्कारो भवती'त्येषापास्ति द्वितीयापत्तिः। परं त्रिविक्रमस्य श्लेषयोजना सरला-

सभङ्गा च भवति । सभङ्गश्लेषस्य योजनायां यादृशं मारल्यं त्रिविक्रमो दर्शयति न तादृशमस्य कोऽपि कवि प्रयुञ्जान प्राप्यते । सभङ्गश्लेषस्य प्रयोगो यद्यपि कतिपयैः कविभि कृत परमर्थप्रतीत्यर्थं तत्र पदानामेतावदामर्दनं करणीयं भवति यच्छ्लेषयोजनं तद् सचेतसामपि चेतसि अरुचिं जनयति क्लिष्टार्थप्रतीतिनिमित्तेन सहृदयाना तु साध्यश्रमाचरणमपेक्षणीयं सञ्जायते । त्रिविक्रमस्य सभङ्गश्लेषा न सन्त्येवंविधा । पाठतोऽल्पेनैव श्रमेणोभयपक्षस्यार्थबोधने क्षमो भवति । त्रिविक्रमस्य श्लेषे मनोऽतितरां रमते, तन्मतेन पुण्यशालिन कस्यचिदेव वाणीं विविध श्लेषविलासैर्विभूषयितु भवन्ति समर्था —

> "प्रसन्ना कान्तिहारिण्यो नानाश्लेषविचक्षणा ।
> भवन्ति कस्यचित्पुण्यैर्मुखे वाचो गृहे स्त्रिय ॥"

लघुलघुषु अनुष्टुब्वृत्तेषु सरलसभङ्गश्लेषयोजने नि संशयं त्रिविक्रमस्य वाणी महतीं विदग्धता विभर्ति—

> "अप्रगल्भा पदन्यासे जननीरागहेतव ।
> सन्त्यके बहुलालापा कवयो बालका इव ॥"

अत्र श्लोके समागतानि 'पदन्यासे', 'जननीरागहेतव', 'बहुलालापा' इत्येतानि पदानि श्लेषवशादेव चमत्कारचारुता वहन्ति ।

शाब्द्या क्रीडाया निहितमनस्कत्वात् त्रिविक्रमस्य, तस्य कथाया प्रवाहे न युक्ततर निर्वहण समवाप्त भवति । वस्तुत कथानिर्वहणस्य चिन्तैव न तन्मानसे विद्यते । श्लेष विनिबन्धनाय शब्दाना चयनमेव स सर्वस्व मन्यमा नस्तत्रैवात्मान रमयति । प्रथमोच्छ्वासे मृगयाया किञ्च षष्ठोच्छ्वासे विन्ध्याटव्या वर्णनस्य विपुलता कथा प्रवाह नितरा निरुध्य विजृम्भते । कवि स्वस्य कवित्वस्य प्रयोग श्लेषयोजनाया वर्णनायाञ्च विधायैव परा तृप्तिं गतोऽस्ति । न कवित्व मेतावदेव । येन स आत्मान कृतकृत्य मेने तत् तु तदीय बाह्यमेव रूपमिव यत्र स स्तोकमपि चिन्तनमुचित न अमरत । सप्तमोच्छ्वास एव कथाया यदसौ संवरण चकार तदपि इदमेव व्याहरत् प्रतीयते । यथा कवि शाब्द्या क्रीडायां कुशलोऽस्ति तथैव स आर्थ्यामपि दक्ष । अहो यदा तदीया कल्पना उड्डयन्ते तदा तु गङ्गायमुने द्वे अपि व्योम्नि प्रवहन्त्यौ दृश्यपथेऽवतीर्णे जायेते । तद्विचित्र दृश्य कवेस्सामर्थ्यमिरर्चि प्रगाढां प्रसदीस्त्रोति या आर्थ्या क्रीडया प्रीयते । वस्तुत

कवीना सृष्टिर्निलयनैव भवति । ब्रह्मणो गङ्गा यमुना च यदि भूलोके प्रवहतस्तर्हि कवेर्गङ्गायमुने गगने प्रवाह्य स्वकीय नितल्य जनवृन्द परिप्रीणयत —

उदयगिरिगतायां प्राक् प्रभापाण्डुतायां-
मनुसरति निशीथे शृङ्गमस्ताचलस्य ।
जयति किमपि तेजः साम्प्रतं व्योममध्ये
सलिलमिव विभिन्नं जाह्नवं यामुनं च ॥

एतस्या एव नव्याया ऊहाया हेतो कविरयं त्रिविक्रमः 'यमुनात्रिविक्रम' इत्येतया प्रशस्त्या विश्रुतोऽस्ति बुधमण्डले । चण्डपाल कवेरस्यानया यमुनाविषयिकया कल्पनया परां प्रीतिं विन्दन् कविमिममेवं स्तवीति स्म—

प्राच्याद् विष्णुपदीहेतोरपूर्वोऽयं त्रिविक्रमः ।
निर्ममे विमले व्योम्नि तत्पदं यमुनामपि ॥

भावात्मकेष्वपि स्थलेषु त्रिविक्रमः श्लेषं प्रयुञ्जानः प्रेक्ष्यते । नलं प्रति दमयन्त्या हृदयेऽनुरागः समुत्पद्यते, तस्या अङ्गेषु रतिभावोद्बोधकानां सात्त्विकभावानामाभा वीक्ष्यते । त्रिविक्रमो भैम्या एतस्या स्थितेर्वर्णनाय प्रौढोक्ति श्लेषोक्तिञ्चाश्रित्य या विचित्रां चमत्कृतिमातनुते पश्यन्तु प्रेक्षावन्तस्ताम्—"अथ विश्रान्तवाचि वाचस्पतावितिवृत्तावेदितानवद्यविस्पष्टवर्णे वर्णितनिषधराजे राजहंसे 'अहं मेऽनार्थी' इत्यभिधायोपरुध्यमाना कृतोत्तरासङ्गेन द्विजन्मना श्रुतानुरागेण । वत्से, चिरान्मिलितासि' इत्युक्त्वैवाश्लिष्टा हृदये प्रवृद्धया चिन्तया । 'पुत्रि कथं कथमपि दृष्टासि' इति सभाव्येवालिङ्गिता सर्वाङ्गेषूत्कम्पजनन्या रोमाञ्चावस्थया । 'तरुणि, त्यज्यतामिदानीं शैशवव्यवहारः' इत्यभिधायेव मुग्धे स्पृष्टा प्रमुखेण मुखे वैवर्ण्येन । 'मुग्धे मुच्यतां स्वच्छन्दभावः' इत्यनुशास्येव ग्राहिता निजाज्ञां गुरुणा मकरध्वजेन दमयन्ती ।"

एतस्मिन् अवतरणे तत्तत्सभङ्गश्लेषैः कविना दमयन्त्या अनुरागजनिताऽवस्था वर्णयता तद्गतस्वर-रोमाञ्च वैवर्ण्यादिसात्त्विकभावानां, चाञ्चल्यादिरूप सन्धिगतानुभावानां, चिन्तादिसञ्चारिभावानाञ्च दिशि मधुरः सङ्केतः कृतोऽस्ति, परं कविसमुत्थापितोऽनेकोऽपि चमत्कारः आत्मानं स्वाभ्यां सुन्दरतायां परिवेषः एव विरमयति, तस्मात्कारणात् सचेता दमयन्त्या औत्सुक्यजनितायाः आद्यायाः रागोद्बोधावस्थायाः अनुभूतिमेव विधातुं न पारयति । उक्ते सकलमपि सौन्दर्यं सभङ्गश्लेषेण हेतूत्प्रेक्षया च स्वनिबन्धने कृतमस्ति ।

दमयन्त्या शरीरसौन्दर्यवर्णनेऽपि कवे प्रधान एव तस्या सौन्दर्यनिर्भो-क्षापन न मृषा साधर्म्यमूलकार्थालङ्कारमालोपस्थापनमेव दृष्ट भवति। दमयन्तीगुण रूप माधुर्यचित्रणे कवे सममपि चमता नाधिकसफलतामधिगच्छति। किञ्च कवेर्भणितेश्चमत्कारचारुतापि उत्प्रेक्षापर्यन्तमेव परिस्पन्दते—

'इतस्ततो निपतन्मण्डलमणिमयूखमञ्जरीजालच्छलेनामान्तमिव कान्तिरस निम्नरमुत्सृजन्तीम्, अशेषाङ्गावयवेषु प्रतिबिम्बितैरामन्त्रचित्रभित्तिरूपकैर्भाग्यादिभि सुरासुरैरिव निर्पीयमानाश्लेषाम्, अप्रस्थिते पद्मरागमणिदर्पणे कन्दर्पातुरे रागिणि शशिनीव करुणार्पितच्छायाम्, अशेषजगद्विजयाश्चमालामिव मन्मथस्य, सङ्केतवसतिमिव समस्तसौन्दर्यगुणानाम्, अधिदेवतामिव सौभाग्यस्य, निपतिमिव लावण्यस्य, शिल्पसर्जस्वपरिणामरेखामिव विधातु, अनन्तससाररोहणैकरवकन्दलीं दमयन्तीमद्राक्षम्।'

*त्रिविक्रमस्य प्रकृतिवर्णनमपि एवमेव श्लेषेण प्रौढोक्त्या चाक्रान्तमस्ति।* तदीय प्रकृतिवर्णन प्रायेणोद्दीपनरूप विश्राण्यमेव समुपलभ्यते। सरलमपि ससार भ्रमे निपातयन्त्या परिहसितदुग्धफेनधावल्यायाश्चन्द्रिकाया वर्णन यद् भ्रान्तिमदलङ्कारेण कृतमस्ति तदस्ति मनोज्ञम्। पर तदीय सौन्दर्यं कवि प्रतिभोत्तम्भितस्य भ्रान्तिमदलङ्कारालोक परिधेरभ्यन्तर्गतमेव वर्तते न ततोऽग्रे—

> मुक्ताहारमनोरथेन वनिता गृह्णन्ति वातायने
> गोष्ठे गोपवधूर्दधीनि मथितु कुम्भीगतान् वाञ्छति।
> उच्चिन्वन्ति च मालतीषु कुसुमश्रद्धालवो मालिका
> शुभ्रान् विभ्रमकारिण शशिकरान् पश्यन्न को मुह्यति॥

*त्रिविक्रमस्य कलाया पाण्डित्यस्य प्रतिभायाश्च हृदयहारी समन्वयो विभ्राजते।* तत्र समासाभङ्गपदसघटनाया आभा अनुप्रासविचमत्कार प्रकृष्टगौडिमाटीकमानागौडीरीतिश्च विलक्षणामेव लक्ष्मी सृजन्ती पर्यवलोकिता भवति। इह विन्ध्यस्थलीवर्णनात् द्विनिस्थलानि उद्ध्रियन्ते। तान्यवलोक्यास्य कवेरुपरि निर्दिष्टा विशिष्टता तु भवेदेव ज्ञाता प्रकृतेरपि सौन्दर्यस्योपस्थापने भवभूतिरिवायमपि कवि परमनिष्णात इत्येतदपि विदित स्यात्—

> "माद्यद्दन्तिकपोलपालिविगलद्दानाम्बुसिक्तद्रुमा
> क्रीडत्क्रोडकुलार्धचर्वितपतन्मुस्तारसामोदिता।

परिपोषिणी स्वरलहरी च समुच्छलन्ति । यदपि कविर्वर्णयति तत् साकारं भवत् नेत्रयोः पुरस्तान्नरीनृत्यति । यदा तत्कृतं मृगयावर्णनं स्मृतमेव भवति तदास्माकमग्रे कार्दमिककर्पटावनद्धमूर्धजा दण्डखण्डपाणय. क्रूरकर्मोचिताकारा वागुरावाहिनोऽनन्ताः पाशहस्ताः पापर्द्धिका' समुपस्थिताः सञ्जायन्ते; भयादुन्नमितकन्धरा ऊर्ध्वकर्णसम्पुटा अकाण्डोड्डीनप्राणा वनप्राणिनः सर्वत्र सन्तिष्ठमाना लोचनगोचरीभवन्ति, हयानां हेषारवं श्रोत्रेन्द्रियं श्रोतुमारभते; शकुनिकुलस्य कोलाहलेनास्मन्निकेतनमपि पूर्यमाणं जायते, भयङ्कराः सारमेयाः हृदये भीतिमुत्पादयितुमारभन्ते, गज-केशरिभल्लूकसमाकुलानि निबिडानि वनानि शरीरस्य सकलामपि रोमावलिं वेपयितुञ्चोपक्रमन्ते ।

चेन्मनसि कृतसर्वर्तुनिवासस्य विपिनस्य दर्शनाकाङ्क्षा जागर्ति, चेत् षड्रसेष्वाहारेषू सुकता वर्धते, चेन्नाट्यपरिपाटीपटूनां नटानां नृत्येषु दृष्टिं प्रीतिं निबध्नाति, चेदमृतस्रुतां कविवाचामाकर्णने चित्तवृत्तिस्त्वरते, चेद्वीणाप्रवीणकिन्नरमिथुनगीतानि श्रोतुं कामनातितरामेधते, चेल्लोचनोत्सवकराणां विलासिनीलास्यविलासानां विलोकनार्थं नयनानि समुत्कण्ठितानि, चेन्मृदुवाद्य-विशेषशब्दश्रवणेऽभिलाषो बलीयांस्तदापि त्रिविक्रमस्य कृतिं नलचम्पूं निषेवन्तां सचेतस. ।

अहो, त्रिविक्रमकृतं नलचम्पूकाव्यं केन प्रकारेण उपश्लोकयेत । काव्यकला स्वयमेव नलचम्पू भूत्वा भूम्यामवतीर्णेव प्रतिभाति । अत्र यदा पाठका विलासविहगानां मञ्जुवलभीं स्मरराजस्य राजधानीं शृङ्गारस्य रङ्गशालां दमयन्तीं निभालयन्ति तदा तु ते ब्रह्मानन्दसहोदरमथवा ब्रह्मानन्दादपि गरीयांसमानन्दमनुभवन्ति पुन' पुनः ।

अमृतद्रवनिर्गरैरिव चित्रितावयवा मोहनमणिशिलायामिवोत्कीर्णाम् , आनन्दकन्दलैरिव घटिताम् शृङ्गारदारुणि इवोत्कुट्टिताम् वशीकरणपरमाणुभिरिव विनिर्मिताम् , मदनमृत्पिण्डेनेव निष्पादिताम् , वज्रलेपपुत्रिकामिव दृशोः, आकर्षणमणिशलाकामिव हृदयस्य, जीवनौषधिमिवानुरागस्य, जयपताकामिव मदनस्य, सङ्केतवसतिमिव समस्तसौन्दर्यगुणानाम् , अधिदेवतामिव सौभाग्यस्य विपणिमिव लावण्यस्य, शिल्पसर्वस्वपरिणामरेखामिव विधातु , अनन्तसंसाररोहणैकरत्नकन्दलीं दमयन्तीमालोक्य सतां मनो विस्मृतसकलव्यापारं भवति न चन्द्रे, न कमले, न मृणाले, न रम्भायाम् , न इन्द्रधनुषि, न सरिद्वीचिषु, न कोकिलालापे, न शिखिनां नृत्ये, न हंसगत्यां, न सरसि, नोद्याने, न भजने, न

चान्यत्रापि कुत्रापि तत् तादृशी रुचिमनुबध्नाति यादृशी त्रिविक्रमस्य सृष्टौ नल-चम्प्वाम् समुद्दिष्टाया दमयन्त्याम् ।

चतुर्थे उच्छ्वासे मालङ्कायनो नलं यद् यद् उपदिदेश तत् सर्वं तेषां कृते परमहितकारक येषां कल्याणेऽभिनिवेश । तदधीत्य निशम्य च चेतसो मलिन तापहता भवति, आदर्शमार्गे समवाप्तो जायते, अज्ञानं विध्वस्ततां गच्छति, ज्ञानज्योति प्रादुर्भवति, विपदो विनश्यन्ति, सम्पदश्च सर्वविधा समुन्मीलन्ति । स्वपाल्यान् प्रति त्रिविक्रमस्य मनसि कियती महती हितचिकीर्षा राजते-इत्यप विचारस्तत्काल एव हृदये समुत्थितो भवति यदा तत्र च स्थल मालङ्कायनकृतो-पदेशविषयक दृगत जायते । पाठका —

'तत् तात, सुविषमेषु वर्तिनि विद्युद्विलास इवास्थिरे स्थितस्तारुण्ये मास्म विस्मर स्मयेन विनयम् ।

आवर्जय गुणान् । निर्गुणे धनुषीव सुवंशेऽपि कस्याग्रहो भवति । अभ्यस्य कला । नि कलो वीणाध्वनिरिव प्रशस्यते न पुरुष । मा गा स्त्रिया श्रियो वा विश्वासम् । अधिकमलवसतिरनार्यसंगता स्त्री श्रीश्च क न प्रतारयति ।

किं तेन जातु जातेन मातुर्यौवनहारिणा ।
आरोहति न य स्वस्य वंशस्याग्रे ध्वजो यथा ॥

इत्यादिना शिक्षाप्रदानि सन्मार्गप्रदर्शकानि चारित्र्यसमुत्थापकानि कर्वेसि विक्रमस्य वचांसि संसारयात्राया स्वजीवनस्य पाथेयत्वेनागच्छन्ति । अथ च नलचम्प्वा —

"जयत्यमलधावनानततलोककल्पद्रुम
पुरन्दरपुरस्सरत्रिदशवृन्दचूडामणि ।
अरातिकुलकन्दलीवननिनाशदावानल
समस्तमुनिमानसप्रवरराजहंसो हरि ॥"

इत्येवविधहरिस्तुतिपरकानेकश्लोकसमन्वितत्वात् सुधियो मोक्षप्रदत्वं तस्य विभावयन्ति ।

नलचम्प्वाम् श्लेष सुन्दरत्वस्यैव तत्रान्ते च परिसंख्या विरोधोत्प्रेक्षा-दीनामलङ्काराणामपि नितरामेव स्थ सन्निवेश समवाप्यते । अधस्तनेऽवतरणे परिसंख्या पश्यन्तु प्रबोधपरा—

"यस्मिंश्च राजनि जनितजनानन्द नन्दयति मेदिनीम्, गीतेषु जातिसङ्करा,

तालेषु नानालयभङ्गा, नृत्येषु विषमकरणप्रयोगा, वाद्येषु दण्डकरप्रहारा पुण्यकर्मारम्भेषु प्रबन्धा, सारिद्यूतेषु पाशप्रयोगा, पुष्पितकेतकीषु हस्तच्छेदा, न्यग्रोधेषु पादकल्पना, कन्दुकमण्डनेषु नेत्रविकर्तनानि आसन् न प्रजासु।"

विरोधविधावपि त्रिविक्रमस्य विपश्चिद्धि —

"पुण्यजनाश्च न च ये लङ्कापुरपा, सगुत्राश्च न च ये लम्पटा, प्रसिद्धाश्च न च ये लम्पाका, कामपराश्च न च ये लड्डना सन्मार्गस्थ, नववयसोऽपि न च ये लम्पालका, महाभारतिकाश्च न च ये रङ्गोपजीविन, सेवितास्मरसोऽपि न च रम्भयान्विता।"

चणमुत्प्रेक्षायामपि मनो रमयन्तु मनीषिणो दमयन्ती सौन्दर्यसुधा पिबन्त —

"आत्मनिस्स्कठोरकाष्ठप्रहारव्यथामिवानुभवन्ती, छिन्दतु वीणाक्वणो माधुर्यमितीव प्रतिपक्षमौनवदना, लभेता कर्णोत्पले परभागमितीव मुकुलितनयना प्राप्नोतु शोभा मुक्तावली दीप्तिहासमितीव मुक्तस्मिता, गच्छतु छाया कण्ठावलम्बिनी चम्पकमालेयमितीवाङ्गीकृतवैवर्ण्या, लभता लीलाकमलमिद सौभाग्यमितीवोच्छ्वसितवदना, सा चणमभूत्।"

त्रिविक्रमस्य एषा कृतिर्नलचम्पूरुत्तरकालवर्तिना कवीनां मानसानि भृशमावर्जयामास। कवय स्वकीये गद्ये तामेव श्रिय तामेव शब्दच्छटा लब्धुम निश प्रयासमाचरितुमारेभिरे। विद्वज्जगति चम्पूग्रन्थप्रणयनस्य महती प्रगाढोत्सुकता समुदपद्यत। अयमस्य कवस्त्रिविक्रमस्यैव प्रभावोऽवगमनीयो यद् धनपालादयस्तिलकमञ्जरीप्रभृतिगद्यकाव्याना, सोमदेवसूरि हरिश्चन्द्रादयश्च यशस्तिलकचम्पू जीवधरचम्पूप्रभृतीना चम्पूकाव्यानां प्रणयनस्य प्रेरणां लब्धवन्त।

त्रिविक्रम प्रशसन् सत्यमेवेदमाह चण्डपाल —

शक्तिस्त्रिविक्रमस्येव जीयाल्लोकातिलङ्घिनी।
दमयन्तीप्रबन्धेन सदा बलिमतोदिता॥



## विक्रमाङ्कदेवचरितम्

पुरातने भारते वेद शास्त्र दर्शन स्मृति कथा पुराण काव्यायुर्वेदज्योतिर्विद्या-ऽऽयायिकाधनुर्विद्यादिका शतशो विषया यथा शिक्षणालयेषु प्रचलिता आसन् तथैव इतिहासनामको विषयोऽप्यत्र पठन पाठनगत आसीत्। तस्यापि प्रचार इह आसीत्। सोऽपि अत्रत्यानां विपश्चिद्वराणां लेखनीभिरनुगृहीत आसीत्। न स पुराणेष्वन्तर्भूत आसीत्, न स महाभारत रामायणयोरेव अगण्यत। तस्य गणना तु एतेभ्य सर्वेभ्य एव पृथगप्यवर्तत। तस्य पार्थक्ये प्रमाणं प्रथमं कोष एव वर्तते। कोषे यत्रान्येषां शास्त्राणामुल्लेखो लभ्यते तत्र तस्यापि चर्चा पृथगेव विहितास्ति। अमरकोष आह—"इतिहास पुरावृत्तम्" इति। एतेनेद स्पष्ट सिद्ध्यति यद् इतिहासाभिधो विषय सर्वथैव भारताभिज्ञातो विषय आसीत्। भारते तस्य लेखनादिकञ्च तथैव प्रावर्तत यथाऽन्येषां विषयाणां लेखनादिकं प्रचलितमासीत्। भारतीये समाजे इतिहास प्रियतरेषु रुचिकरेषु विषयेषु मतो बभूव। जना इहत्या उत्सुकतापूर्वक तत्र स्वकीयां प्रगाढामभिरुचिं निदधु। अत एव तु कविकालिदासबाणादिकास्त सादर स्मरन्तोऽत्रा प्यन्ते। महाकवि कालिदास अभिज्ञानशाकुन्तले लिखति—"किन्तु यादृशी-तिहासनिबन्धेषु कामयमानानामवस्था श्रूयते तादृशीं तव पश्यामि।" महाकविर्बाणो लिखति यत्—"चन्द्रापीड ' कथासु, नाटकेषु, आख्यायिकासु, काव्येषु, महाभारतपुराणेतिहासरामायणेषु ' कौशलमवाप।" महाभारतेऽस-कृदितिहास इति पद प्रयुक्तमवाप्यते। वक्ष्यमाणासु पङ्क्तिषु प्रयुक्तम् 'इतिहास' इति पद पश्यन्तु—

"भारतस्येतिहासस्य पुण्यां ग्रन्थार्थसंयुताम्" आदिप, १, १९

"इतिहासा सवैयाख्या विविधा श्रुतयोऽपि च" आदिप, १, ५०

"इतिहासपुराणानामुन्मेष निर्मित च यत्" आदिप, १, ६३

एतेन दिङ्मात्रप्रदर्शितेनापि विवरणेन भारतस्येतिहासविषयस्य सिद्ध्यति। इ त स्पष्टतो ज्ञायते यद्भारतेतिहासस्य लेखनपाठनादिसम्बन्धिनी पद्धतिर्भूशमना रतञ्च प्रसृताऽऽसीत्। एतस्मिन् मत स्थितेऽपि अद्य प्रतीच्येषु प्रधीषु केचन

कथयन्ति यद् भारते इतिहासलेखकानाम् ऐतिहासिकबुद्धेश्च अभाव एव अदृश्यत। इतिहासस्तस्मिन्नेव देशे जनुर्ग्रहीतुं शक्नोति यत्र वक्तृत्वकला समृद्धिमश्नुते; राजनीतिकस्वतन्त्रता न कदापि भारते दृष्टाऽभवत् तस्मात् तत्र वक्तृत्वकलापि नैजजन्मग्रहणस्याप्यवसरं न लब्धुं शशाक। भारते इतिहासानुत्पत्तेः कारणमिदमपि वर्तते यद् भारते न कदापि राष्ट्रियभावना स्वस्य भरणस्य पोषणस्य चानुकूलान्येव साधनानि अधिगन्तुं समर्थाऽभवत्। इतिहासानुद्भवे हेतुरयमपि विज्ञेयो यद् राजनीतिविषयिण्यो घटनाः भारतीयानां जनानां प्रतिनिध्यास्तस्मिन्नर्थे नोद्बोधयितुं प्रबभूवुर्यस्मिन्नर्थे यवन ( ग्रीस ) देशोपरि कृतानां पर्शियनीयानामाक्रमणानां प्रतिघातेन हेरोडोटसस्य इतिहासः समुद्भावितः।

इतिहासमाश्रित्य एतादृश आक्षेपान् विदधाना भारतोपरि, कीथादिका विद्वांसः श्रूयन्ते। नैतेष्वाक्षेपेषु वर्तते सत्यता वस्तुतः। भारते न कदापीतिहासानां न चैतिहासिकबुद्धेरेवाभावोऽभवदित्युपरिष्टान्निहितैः प्रमाणैः साधितमेव। स्वस्य स्वस्य देशस्य समयस्य च दृष्ट्यो भिन्ना अपि भवन्ति। एतद्दृष्टिभेदादेव अस्मदीये भारते तस्मिंस्तस्मिन्ननेहसि लिखितानामितिहासानां पद्धतिरपि न देशान्तरीयेतिहासपद्धत्यनुगुणा संवीक्षिता जायते। देशान्तरीया विद्वांसो हि अद्यतना अमद्यतनाश्च इतिहासलेखनस्य तदुद्देश्यं प्रयोजनं वा अनुमन्यमाना न समाप्यन्ते यदुद्देश्यं प्रयोजनं वा भारतीया मेधाविनोऽनुमेनिरे। भारतीयाः पण्डितास्तिथीनां घटनावलीनाञ्च वर्णनं न इतिहासस्य उद्देश्यमज्ञासिषुः अपितु जीवनस्य शाश्वतानां सिद्धान्तानां समुपस्थापनं किञ्च राष्ट्रियसंस्कृतेः समुन्नयनमेव ते इतिहासस्य आदर्शमवजग्मुः। इममादर्शमेव पुरोनिधाय ते इतिहासान् प्राणैषुः। दुर्दैवाद् रामायण-महाभारतादयो ये केऽपि इतिहासा अस्माकं पार्श्वमवतस्थेषु निर्दिष्टोद्देश्यं स्फुटतया परिवीक्षितं भवति। भारतीयानां प्राचामितिहासरचनां दृष्टिराधुनिकैतिहासरचनां लेखनसरणिं वस्माद्यत्प्रकृततयीत्यत्र सन्त्यनेकानि कारणानि—( १ ) भारतीया दार्शनिकविचारधारा न ऐहिकसुखानां यथार्थसुखानं मन्यते। मद्दृष्टौ संसृतिर्निस्सारास्ति, नास्ति तत्र वस्तुता। सांसारिकाणां विषयाणां विचारणं मायाकृते श्रमानाय एव निपातनमस्ति। ( २ ) पारलौकिकेषु विषयेषु भारतीया स्वां श्रद्धामतिचिरादेव गरीयसीमेव निदधानाः प्रेक्ष्यन्ते। ( ३ ) भारतीयानां धर्मसिद्धान्तो, यन्मतेन मानवजीवने कोऽपि अचिन्तनीया घटना घटितुं शक्नोति, ऐतिहासिकघटनानां

सञ्चयने समर्थने च न मनागपि रुचिमदीदृशत्। (४) भारतीया जातीयेतिहासस्य प्रतिनिधित्वेन राम-कृष्ण नल युधिष्ठिरादीन् एव अमंसत।

आश्चर्यमिदं, भारतीयवाङ्मयस्य गम्भीरतया प्रीत्या च अनुशीलने कृतेऽपि सति प्रतीच्या प्राच्यो भारतीयानां प्रकृतिं प्रवृत्तिं च ज्ञातुं नाशक्नुवन्। "भारतीयेषु इतिहासकाराणामभावस्तथैतिह्याभिमतधियोऽभावश्च दृश्येते" इत्येतत् तेषामभिधानं तु तद्विषये इममेव सन्देहं जनयति। अस्तु। भारतमप्यवश्यमेव स्वदृष्ट्यनुरूपाणामितिहासानां सृष्टिं चकार। साम्प्रतं प्रामाणिकानामितिहासानां रचना न यदि प्राप्यते तदा तत्र कारणमस्ति विध्वंसकानामाक्रमणानां बहुलता।

"राजनीतिकस्वतन्त्रता न भारते कदापि दृष्टाऽभवदिति यदुच्यते तदपि न सत्यम्। पुरातनतमे काले तु भारते पूर्णतया राजनीतिकं स्वातन्त्र्यमवर्तत। अस्मिन् विषये—

> ध्रुवोऽच्युत प्रमृणीहि शत्रून्
> शत्रूयतोऽधरान् पादयस्व।
> सर्वा दिशः समनसः सध्रीची
> ध्रुवायते समितिः कल्पतामिह॥ (ऋक्, १०।१७३)

त्वां विशो वृणतां राज्याय त्वामिमाः प्रदिशः पञ्चदेवीः।
वर्ष्मन् राष्ट्रस्य ककुदि श्रयस्व ततो न उग्रो विभजा वसूनि॥ (अथर्व०, ३।४।२)

इत्यादिका मन्त्राः सन्ति प्रमाणभूताः। वैदिके युगे गणतन्त्र राज्यतन्त्रयोरुभयोरपि दर्शनाच्चेदं सिद्ध्यति यद् भारते राजनीतिकं स्वातन्त्र्यं प्रारम्भादेव वर्तिनमभूत्। आकरेषु भौज्य स्वाराज्य वैराज्य साम्राज्यादिशासनपद्धतीनां य एष उल्लेखो लभ्यते, क्वचित् तस्योल्लेखस्य स्वायमेवार्थो भवति यद् भारते राजनीतिकी स्वतन्त्रता नासीत्। भारतस्य यदा दुर्भाग्यमुदितमभवत् तदावश्यमेव बहवो दोषाः समुद्भवन्। परं तत्पतनकालमवलोक्यैव राजनीतिकस्वात न्त्र्याभावविषये दोषारोपणं तु नोचितं प्रतिभाति।

यस्मिन् देशे मनु याज्ञवल्क्य गार्गी जनक वशिष्ठ बृहस्पतिसदृशा वाग्मिनोऽजनिषत पुरातनतमे काले, कृष्ण सदृशा गीतोपदेशकाः महाभारतकाले समुदपद्यन्त, अथ च साम्प्रतिकेऽपि भारते शङ्कराचार्यलोकमान्यतिलकसुरेन्द्रनाथ मदनमोहनमालवीय सदृशाः महावक्तारः समभवन् तद् भारतदेशमधिकृत्य

'वक्तृत्वकलाया अत्र अभाव आसीत्' इत्येतत्कथनं कियदनुचितम्। एवमेव राष्ट्रियभावनाया राहित्यमपि यदुक्तं तदपि नानृताद् रहितम्।

यस्य देशस्य श्रुतयः —

"भद्रमिच्छन्त ऋषयस्स्वर्विदस्तपोदीक्षामुपनिषेदुरग्रे।
ततो राष्ट्रं बलमोजश्च जातं तदस्मै देवा उपसंनमन्तु॥"

(अथर्व० १९।४१।१)

"आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम् आराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम् ... कल्पताम्।" (यजुषि)

इत्यादिभिर्मन्त्रैः समग्रमपि विश्वं राष्ट्रियभावनामुपदिदिशुस्तदेव भारतं लक्ष्यीकृत्य "न भारते राष्ट्रियभावनानुकूलानि साधनानि समवाप" इत्येतद् भणनं किं युक्तम्?

अस्तु नाम किमपि वैदेशिका वदन्तु। अस्मद्देशे इतिहासानां प्रणयनमितिहासकारा स्वसंस्कृतिनिर्दिष्टमार्गेणैव अकार्षुः। संस्कृतसाहित्ये न केवलमितिहासा अलिख्यन्त इतिहासप्रधानानि काव्यानि च लिखितान्यभूवन्। बाणभट्टस्य "हर्षचरितम्", वाक्पतिराजस्य "गौडवहो", पद्मगुप्तस्य "नवसाहसाङ्कचरितम्", कल्हणस्य "राजतरङ्गिणी" किञ्च बिल्हणस्य "विक्रमाङ्कदेवचरितम्" इतिहासप्रधानकाव्यत्वेन सन्ति सर्वत्र प्रथितानि। एतेषु ऐतिहासिकेषु काव्येषु अत्र केवलं बिल्हणस्य 'विक्रमाङ्कदेवचरितम्' गृह्यते यतो ह्यत्र तस्यैवैकस्य विमर्शनमिष्टम्।

कश्मीरप्रदेशवास्तव्यज्येष्ठकलशाख्यमनीषात्प्रादुर्भूत—महाकविबिल्हणप्रणीतमहाकाव्यं विक्रमाङ्कदेवचरितमस्मद्दृशे चालुक्यवंशावतंसस्य वसुधाधिपस्य विक्रमादित्यषष्ठस्य चरित्रं प्रस्तौति। तत्र तच्चरितं व्यतिरिच्य विक्रमादित्यषष्ठस्य पितुः आहवमल्लस्य निधनं, राजकुमारीचन्द्रलेखोद्वाहः, विक्रमादित्यस्य सोमेश्वर-जयसिंहाभिधानयोर्भ्रात्रोर्व्यतिकरः, ... लानां पराजयः किञ्च अन्याः कतिपयविविधा घटनाः सन्ति कविवरमुखनिःसृतायां मनोऽभिरामायां गिरायां गीताः। काव्ये चालुक्यवंशस्यादिपुरुषो विधातुश्चुलुकादुद्भूत इत्येतदादौ वर्णितम्। काव्यनिर्माणारम्भानन्तरं परम्परामनुसृत्येदोऽप्यान्यते महान्। बिल्हणः प्रथमं तैलप नाम नृपतिमवतारयति तद्गतं राष्ट्रकूटविजयञ्च गायति। अन्येषामनेकेषां भूपालानां तु वर्णनं कृत्वैव परं विक्रमादित्यपितुः आहवम-

स्वस्य विशिष्टतयोल्लेखम् कुर्वाणं स दृश्यते । यद्यपि कविना बहुलास्तादृश्यो घटना स्वकाव्ये वर्णिता यादृश्यो हि पुरावृत्तोपरि प्रकाश क्षेपणे नितान्त सहायका भवन्ति पर यत्र कवि स्वनायकगुण गौरवानुरागामितवशात् तस्योत्कर्ष प्रदर्शन एव पूर्ण मनोयोग प्रददाति, तत्र एवविधाया घटनाया घटनमप्यलोक्यते या न केचन इतिहासा परिपोषयन्ति । पर साम्प्रतिके समये बहव इतिहासलेखका देश-जाति सम्प्रदायादिपक्षपातहेतो स्व स्वेतिहासे अतीताना घटनाना वर्णनमतिविपर्यासपूर्वक विदधाना दृष्टा भवन्ति एतादृश्या स्थितावदमपि मुक्तकण्ठतया कथन न समीचीन प्रतिभासते यत् कविरयमसत्यघटनामसत्यामेव वर्णयामास ।

अस्ति विक्रमाङ्कदेवचरिते वीररस अङ्गी । तत्र सर्वत्रैव बहूना युद्धाना वर्णन विलोकित भवति । यद्यपि कविना काव्ये सर्वत्र वैदर्भी रीतिरवलम्बितास्ति पर यत्र यत्र श्लोके वीरताया, सेनाया, समरस्य च दृश्य कविना आलिखित तत्र तत्र श्लोके वीररसानुकूला पदावली वीक्ष्यते, सैन्यसमूहस्य वर्णनाय कवि लेखनी यत्कौशलमभ्युपगच्छति तत्कौशलसामर्थ्यात् पाठका स्वसमक्षे सैन्य सन्तिष्ठमानमिव प्रेक्षन्ते । तेषा श्रोत्रेन्द्रिय दुन्दुभि ध्वनि श्रोतुमारभते, कुञ्जराणा भारेण नीचैर्गच्छन्ती पृथिवी तेषा नयनेन्द्रिय विलोकयितु सुखमयमश्नुते, तुरङ्गखुरोत्थापित क्षमा रजोदिग्भागान् आवृण्वत्, गजमदाम्बुभिर्धरामार्द्रां भवन्ती च ते लोचनगोचरीं कर्तुमवसर लभन्ते । सैनिकाना प्रमाथ, शस्त्रास्त्राणा भीषणशब्दप्रकम्पनपूर्वक विद्युत्प्रभानुकारी प्रस्फुरत्प्रकाश, समन्तादुपमर्दत्तुमुलहेला कोलाहल, झणझणेति शब्द कुर्वता रथाना पङ्क्तय, हयाना गजाना पदातीना परमभयोत्पादिनी श्रेणी च पाठकस्य श्रोतुर्वा पुरो युगपदवतीर्णा जायन्ते ।

राजा आहवमल्ल कीदृशो महानुद्भटो योद्धासीत् इत्येतत्—तथ्य कवि कियद्वीरतोद्ग्रथितायामुत्साहादस्योत्पादिकया कातरस्यापि शोणिते उष्णताया सञ्चारिण्या भाषया सन्निदधातीति विलोक्यता क्षणम्—

> कौक्षेयक क्षमानिलयस्य यस्य पीत्वातिमात्र द्विषता प्रतापम् ।
> आलोक्य बाष्पाम्बुभिराचचाम चोलीकपोलस्थलचन्दनानि ॥ ११९० ॥
> दीप्रप्रतापानलसन्निधानाद् बिभ्रत् पिपासामिव यत्कृपाण ।
> प्रमारपृथ्वीपतिकीर्तिधारां धारागुदारां कवलीचकार ॥ ११९१ ॥
> नि शेषनिर्वासितराजहस धड्गेन धालाम्बुदमेचकेन ।
> भोजक्षमाभृद्भुजपञ्जरेऽपि य कीर्तिहसीं विरसीचकार ॥ ११९२ ॥

सूर्यनरेशस्य जयसिंहदेवस्य प्रचण्डारातीनामपि मानसे सन्तापसमुत्पादकं प्रतापं कविरेवं वर्णयति—

प्रतापभानौ भजति प्रतिष्ठां यस्य प्रभातेष्विव संयुगेषु ।
मूर्धोपदानामिव पार्थिवानां येषां न तापः प्रकटीबभूव ॥ ११८१ ॥
यात्रासु यस्य ध्वजिनीभरेण दोलायमाना सकला धरित्री ।
आर्द्रीकृताधिष्ठित - पृष्ठपीठमकर्मठं कूर्मपतिं चकार ॥ ११८२ ॥

चान्द्रावस्यां स्थितदोऽत्र स्थिती निरता स्थितीश्च दाक्षो रसो निभाति । सम्प्रति समराङ्गणे हतानां भूपानां हाकम्पनकृद् दृश्यं दृश्यतां किन्तु कविना तद् दृश्यं कियद् विलक्षणचातुर्येण प्रदर्शितं तदपि विलोक्यताम्—

किरीटमाणिक्य-मरीचिवीचिप्रच्छादिता यस्य विपक्षभूपाः ।
चिताग्निभीत्या समराङ्गणेषु न संगृहीताः सहसा शिवाभिः ॥ ११८३ ॥

काव्यनायको विक्रमाङ्कदेवः शैशवादेव समरोत्सवोत्कण्ठो दृष्टो बभूव । आहवमल्लदेवस्तदीयः पिता अद्भुतसाहसाङ्कमेकवीरं तमेव सिंहासने प्रतिष्ठापयितुं मनसाचकाङ्क्ष । स राजलक्ष्म्याः संरक्षणं तस्यैवातुलसत्त्वस्य भूभारधारणक्षमयोर्भुजयोर्विशश्वास—

"अलङ्करोत्वद्भुतसाहसाङ्कः सिंहासनं चेदयमेकवीरः ।
एतस्य सिंहीमिव राजलक्ष्मीमङ्कस्थितां कः क्षमतेऽभियोक्तुम् ॥" ३।२७ ॥

विक्रमाङ्कदेवो बहुसंख्याकान् महासमरान् जितवान् । आसीदसौ त्रिलोकवीरः—

"त्रिलोकवीरः कियतो विजिग्ये न दुर्दमानां प्रतिपार्थिवानाम् ।
दोर्विक्रमेणाद्भुतसाहसेन महाहवानाहवमल्लसूनुः ॥ ३।६८ ॥

महोद्धुराणां महेभानां रणप्रचण्डानां तुरङ्गमानां जितनानासम्परायाणां महाभटानामपि पराङ्मुखकारिणः शत्रुप्रलयपवनस्य सम्मुखे गन्तुं विक्रमाङ्कदेव एव शक्तिं निदधौ—

"उदतिष्ठदपारपौरुषः स्वयमुद्दाममदेन दन्तिना ।" १५।१८
"असिना विशिखैः सतोमरैः सहसा कुञ्जरधावनेन च ।
स सहस्रमिवोद्वहन् करान् प्रतिपक्षक्षयदीक्षितोऽभवत्" ॥१५।६४॥

महाकवौ बिल्हणे अद्भुतैव भयङ्करसमरवर्णनपटीयस्ता समुच्छलति । तस्य लेखन्यां तदमोघं बलं सञ्चरते यत् सर्वत्र शोणितापगानां रोमाञ्चकृत् तद्दृश्यमुत्पादयितुं प्रभवति यदवलोक्य कालस्यापि हृदये हठाद् भीतिः प्रवेष्टु प्रभावति

इह कविनाऽनुस्यूतराजमौलिरत्नेषु शरेषु गृहीतदीपकत्वमुत्प्रेक्षितम् ।

यद्वैरिसामन्तनितम्बिनीनामश्रान्तसन्तापकदर्थ्यमाने ।

पराङ्मुखं शोषविशङ्कयेव कुचस्थले कुङ्कुमपङ्कमासीत् ॥ ११०५ ॥

अत्र कुचस्थले कुङ्कुमलेपस्य पराङ्मुखत्वं स्तनयोः शोषशङ्काया हेतुत्वेनोत्प्रेक्षितम् ।

यं वीक्ष्य पाथोधिरविजयचापं शोणाश्मभिः शोणितशोणदेहैः ।

क्षोभादभीक्ष्णं रघुराजबाणजीर्णव्रणस्फोटमिवाचचक्षे ॥ ११०९ ॥

अत्र रक्तपाषाणेषु जीर्णव्रणस्फोटत्वमुत्प्रेक्षितम् ।

एवंविधाभिर्मधुरमधुराभिरुत्प्रेक्षाभिः काव्यमेतन्नितरां विभूषितं सद् भृशं सचेतसां चेतांसि चोरयति ।

सम्प्रति अन्येषां च त्रिचतुराणामलङ्काराणां छविं प्रेक्षन्ताम्—

"भोजक्षमापालविमुक्तधारानिपातमात्रेण रणेषु यस्य ।

कल्पान्तकालानलचण्डमूर्तिश्चित्रं प्रकोपाग्निरवाप शान्तिम्" ॥ ११९४ ॥

अत्र विरोधाभासः;

"ध्रुवं रणे यस्य जयामृतेन क्षीवः क्षमाभर्तुरभूत् कृपाणः ।

एका गृहीता यदनेन धारा धारासहस्रं यदमोऽवकीर्णम्" ॥ ११९६ ॥

इह परिवृत्तिः श्लेषश्च;

"अन्यायमेकं कृतवान् कृती यश्चातुर्यगाम्भीर्यगुणाश्रयो यः ।

यत्पूर्वभूपालगुणान् प्रजानां निरमारयामास निजैश्चरित्रैः ॥ ११०१ ॥

इह व्याजस्तुतिश्च सहृदयान् प्रीणयन्ती स्वशोभां सर्वतो विकिरति । साम्प्रतं ध्वनि-रमणीयतापि विलोकनीया—

"सोऽयं रणे नर्मयिता कबन्धान् मदान्धभूपालसहस्रमेभ्यः ।

विलोक्यतां सुन्दरि चेदिराजरत्नावस्तु दृष्टिः स्मरवैजयन्ती" ॥ ११९९ ॥

अत्र कबन्धनर्तनकारित्वेन शौर्यातिशयस्य ध्वनितम्;

"उत्तम्भयामास पयोनिधेर्यत्र्गम्भीरे पयस्तम्भमदभ्रवीरः ।

अमूर्षितं वैरिविदारणशीलैरालानभङ्ग्या जलवारणेन्द्रैः" ॥ ११११ ॥

इह जयस्तम्भे समुद्रगजानामालानस्य भ्रान्त्याऽभूदिति प्रतीत्या भ्रान्तिमानलङ्कारो व्यङ्ग्यः ।

"उत्थाय मन्दुवसनश्चलितुं प्रवृत्ता
कर्णं गते झटिति कुक्कुटकण्ठनादे ।
निद्रारसात्तिनिभमात्रमुदार्यनार्यं
प्राणेश्वरैर्निशयनेषु पुनः पतन्ति ॥ ११।९२ ॥

इत्येवंविधेषु श्लोकेषु अधरीकृतसुधं रसं निपीय परामेव तृप्तिमवाप्नुवन्ति भावुकाः ।
अन्ये—"आलवालवलयस्थितिभाजां बन्धनं सरसरागलतानाम् ।
हेमपात्रनिवहप्रणयिन्यः पाटलाः शुशुभिरे मधुधाराः ॥" ११।५६
"यामिनीदयित यामपि कान्ता दुर्लभामभिलषन् भ्रमसेऽपि ।
तानव स्मिमपि तन्तुसमानं मानदीननिदितं परमार्थं ॥" ११।५९

इत्येतादृशा अनेके श्लोकाः माधुर्यगुणमुद्वहन्तः समवाप्यन्ते । कविर्माधुर्यं प्रसादं च गुणे प्रतिपदं महाकविं कालिदासं स्मारयति । एतावदेव न तत्रापि क्वचिद् दण्डिनः, क्वापि च जयदेवस्य, क्वापि च श्रीहर्षस्य लालित्यमपि जयदिव प्रति-लक्ष्यते । वसन्तादिऋतूनां वर्णनस्यैतदीयं माघादिरचितवर्णनेऽपि क्वचित् क्वचिद्रुचिमुत्पादयन् किं वा रुचिं परिवर्धयन् प्रतीयते—

"उन्मादनमधुना पुष्पमधुना केलीभुजङ्ग पङ्क्ति
सर्वं मन्मथ दिशन्ति कुसुमप्राग्भारतः पादपाः ।

काव्ये कविः स्थाने स्थाने सन्निवेशिताभिः सूक्तिभिः स्वकीयान् पाठकान् प्रति न केवलं सन्मार्गं प्रदर्शयत्यपि स्वसौ स्वप्रकृतिपरिचयमपि प्रददाति, स पुनरपि ज्ञापयति यत्स तेषु तेषु भावेषु विचारेषु वा अभिरुचिं निदधाति। कविनिहितानां सूक्तीनां महोपकारत्वादिहापि त्रिचतुरा एव सूक्तयो निधीयन्ते—

( क ) "इयं हि लक्ष्मीर्धुरि पांसुलानां केषां न चेतः कलुषीकरोति" ३, ४२

( ख ) "न कृच्छ्रेऽपि महाभागास्त्यागव्रतपराङ्मुखाः" ४, ६७

( ग ) "यशसि रतिर्महतां न देहपिण्डे" ६, ७१

( घ ) "प्रायेण देहविरहादपि दुःसहोऽयं
सर्वाङ्गसंज्वरकरः प्रियविप्रयोगः" १६, ४०

अस्य कवेर्नवमसर्गस्थे स्वयंवरवर्णने कालिदासवर्णितेन्दुमतीस्वयंवरस्य तु संवादस्येव अन्या अपि एतदीया उत्कृष्टतरकाव्यसूक्तयः संवदन्त्यः प्राप्यन्ते। तथाहि—

"लोकान्तरसुखं पुण्यं तपोदानसमुद्भवम्।
सन्ततिः शुद्धवंश्या हि परत्रेह च शर्मणे॥" ( रघु०, १, ६९ )

"त्रिमखमेधप्रभृतिक्रियाक्रमैः सुतोऽस्ति चेत्सोभयलोकबान्धवः।
ऋणं पितॄणामपनेतुमक्षमा कथं लभन्ते गृहमेधिनः शुभम्॥" (नि० २, ३४)

"अब्धिषु स्थलपथीकृतेषु नः पूर्यते जवविधौ कुतूहलम्।
इत्यधुर्येण दिगन्तगोचरं नूनमस्य तुरगाः क्षमारजः॥" ( नि०, १४, ६२ )

"प्रयातुमस्माकमियं कियत्पदं धरा तदम्भोधिरपि स्थलायताम्।
इतीव वाहैर्निजवेगगर्वितैः पयोधिरोधक्षममुद्धितं रजः॥" (नै०, १, ६९)

वस्तुत इदं काव्यं संस्कृतकाव्येषु नैजं विशिष्टं महत्त्वं निदधाति। यस्यापि दृष्टिपथे काव्यमेतत्समागच्छति स काव्यमिदमधीत्यातितरां प्रीयते। पाठकस्याग्रे काव्यमेतदेकतमस्यैतिहासिकी घटना सविस्तरं धारयत्परं कविरचनीमत काव्यस्यास्य कर्त्ता विदग्धः स्वपाठकं यथा परिप्रीणाति न तथाऽन्ये कवयः। पुनरस्कृतार्थीरपआशिका स्वर्गसुन्दरी विश्वमाङ्गल्युदयाख्यचम्पूत्तमयश्च रसिकानां मानसेषु हर्षममितं सञ्चारयन्ति। सुभाषितसंग्रहग्रन्थेऽपि एतद्रचिता अनेके श्लोकाः सम्लभ्यन्ते। तत्रयुक्तम्—

"विदग्धस्य वने प्राप्तप्रसादैव सरस्वती।
नीयते जातु कातुर्यं दुर्जनैर्न घनैरपि॥"

# नैषधं विद्वदौषधम्

अमरवाणीसाहित्यसुधीशिरोरत्नविश्वविदितयशा नैषधीयचरितमहाकाव्यरचयिता कविचक्रचूडामणिस्तार्किकजगदलङ्कारो लोकोत्तरप्रतिभापावनः श्रीहर्षो महाकविर्ललितपदनिबन्धनायासनिचितचातुरीकचमत्कारचारुताचुम्बितार्थप्रकाशनपण्डितो वैदुष्यातुलविभावितनिबन्धप्रणयननिपुणः शास्त्रीयस्य पाण्डित्यस्य कवित्वस्य चानुपम एव रत्नाकरो बभूव ।

स यथा मानसमञ्जरीसमुन्मीलनविधायिन्याः प्रकृतिपेशलायाः कवितायाविरचने परां प्रवीणतामगाहत तथैव पण्डितप्रकाण्डमदचूर्णनचतुरायास्तर्ककार्कश्यकर्कशाया गिराया गुम्फनेऽपि अद्भुतामेव निपुणतां बभाज । यो हि श्रीहर्षकविता-कामिनीकरलीलाकमलभूतं नैषधीयचरितमरचयत् स एव श्रीहर्षः प्रगाढपाण्डित्यभुजदण्डखड्गभूतं खण्डनखण्डखाद्यमपि अजग्रन्थत् । यः श्रीहर्षो मनोऽभिरामया कान्तकवितया कश्मीरेषु स्वीयां विमलां समज्ञावैजयन्तीमुदतूतुलत् स एव जयचन्द्रकान्यकुब्जनरेन्द्रसंसदि स्वपितृपादपराजेतुस्तार्किकतल्लजस्योदयनस्यापि वैदुष्यजनितमदमपि अचुचूर्णत् । कविकुलपारावारपौर्णमासीन्दोः श्रीहर्षस्येयमुक्तिर्नितान्तमवितथैव—

> "साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले
> तर्के वा मयि संविधातरि समं लीलायते भारती ।
> शय्या वास्तुमृदूत्तरच्छदवती दर्भाङ्कुरैरास्तृता
> भूमिर्वा हृदयङ्गमो यदि पतिस्तुल्या रतिर्योषिताम् ॥"

श्रीहर्षो न केवलं कविर्दार्शनिको वा बभूव स महान् साधको योगी च भूत्वा भुवि बभौ । चिन्तामणिमन्त्रसिद्धिः सरस्वतीमातृवरसमवाप्तिश्च तस्य साधकत्वे योगित्वे च समुज्ज्वलं प्रमाणम् । संस्कृतकवीनां मध्ये हि एवंविधाः कवयो नाधिका यत्र कवित्वयोगित्वयोर्मञ्जुलो योगः परिस्फुरन् प्रेक्ष्येत ।

अद्वैतसिद्धान्तनिहितरुचिविशेषो महाकविर्दार्शनिकसिद्धान्तप्रतिपादने स्वकाव्यवर्त्मसरणिं संश्रित्य दर्शनविदां संसारेऽमितां मुदं वितन्वानो राजते । तदीयो हि नैषधीयचरितस्य सप्तदशः सर्गो दर्शनशास्त्रविषयकवैदुष्यस्य

निरूपोपेत सन् शोभते। चार्वाकमतस्य तत्र मण्डन खण्डनञ्च एतादृश्या प्रौढत-रतयानुष्ठितं यदसौ सर्वो दर्शनशास्त्रमिव प्रतीयते। चार्वाकाननेन ये विचारास्तत्र कविना प्रतिष्ठापितास्तेऽद्यतनानामपि भौतिकवादिनां तर्कान् सिद्धान्तांश्च परिहसन्त: प्रतिलक्ष्यन्ते। चार्वाकमतानुगामिन सन्ति प्रत्यक्षप्रमाणमात्रसभाजनपरा। न तेषु अनुमानस्य सम्मानं न च शब्दस्य। तन्मतेन चैतन्यविशिष्टं संहननमेव आत्मा, मरणमेव मोक्ष:, न क्वापि स्वर्गो न च क्वापि परमेश्वर:।

"यावज्जीवेत् सुखं जीवेदृणं कृत्वा घृतं पिबेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुत:॥"

इत्येव तेषामुद्घोषो लोकविदित एव। कवि: श्रीहर्ष एतान् एव नास्तिकदर्शनस-म्बन्धित: सिद्धान्तान् कीदृश्या प्राञ्जलया मनोविनोदिन्या रीत्या समुपस्थापय-तीति प्रेक्ष्यताम्—

"क: शम: क्रियतां प्राज्ञा: प्रियाप्रीतौ परिश्रम:।
भस्मीभूतस्य देहस्य पुनरागमनं कुत:॥
स्वं च ब्रह्म च संसारे मुक्तौ तु ब्रह्म केवलम्।
इति स्वोच्छित्तिमुक्त्युक्तिर्वैदग्धी वेदवादिनाम्॥
अग्निहोत्रं त्रयी तन्त्रं त्रिदण्डं भस्म पुण्ड्रकम्।
प्रज्ञापौरुषनिःस्वानां जीवो जल्पति जीविका॥"

मोक्षे मुक्तस्याभाव इत्येतत्प्रतिपादकं गौतमं कवि: कीदृश्या वक्रोक्त्योपहसतीति वीक्ष्यताम्—

"मुक्तये य: शिलात्वाय शास्त्रमूचे सचेतसाम्।
गोतमं तमवेक्ष्यैव यथा वित्थ तथैव स:॥"

नैयायिकानामीश्वर[illegible] कविवरस्य[illegible] विलोक्यताम्—

"देवश्चेदस्ति सर्वज्ञ: करुणाभागवन्ध्यवाक्।
तत् किं वाग्व्ययमात्रान्न: कृतार्थयति नार्थिन:॥"

दानधर्मस्य वैयर्थ्यप्रतिपादनपरायां कवेरुक्तौ [illegible] विलोक्यताम्—

"[illegible] शुद्धेश्च [illegible]।
दारा [illegible] धर्मं [illegible]॥"

दर्शने [illegible] मन्द[illegible] [illegible]।
[illegible] दर्शन [illegible]।

अद्वैतवादिवेदान्तदर्शनं तु वादचतुष्टयादपि भिन्नां पञ्चमीं कोटिमवलम्बते। कविस्तामेवाध स्थिते श्लोके प्रस्तवीति—

"साधु प्रयच्छति न पक्षचतुष्टये तां
तल्लाभशंसिनि न पञ्चमकोटिमात्रे।
श्रद्धां दधे निषधराड्विमतौ मताना-
मद्वैततत्त्व इव सत्यतरेऽपि लोकः॥"

कवेर्भवत्युपहासोऽतितरामेव मनो मर्मभागस्पृक्। प्रियोपहासस्य तस्य रुचेर्लक्ष्यं किन्त्वास्ते गम्भीरा शास्त्रचर्चा। स्वकीययानया प्रक्रियया रहस्यमेवोद्घाटयितुमीहते सततम्। दृश्यताम्—

"भङ्क्त्वा प्रभुर्व्याकरणस्य दर्पं
पदप्रयोगाध्वनि लोक एष।
शशो यदस्यास्ति शशी ततोऽय-
मेवं मृगोऽस्यास्ति मृगीति नोक्तः॥"

अत्र व्याकरणाज्जगद्व्यवहारस्य गरीयस्कता कविर्विलक्षणेनैव विधिनोपपाद्य वैयाकरणान् कीदृश्या ललितया व्यंग्यगिरया परिहसति।

सकलेष्वपि दर्शनेषु कवेर्गतिरप्रतिहतैव अदृश्यत। साङ्ख्ययोगदर्शनपाटवं प्रति तदीय श्लोक एव सङ्केतयति—

"गगनीरजया यया निशि श्रितवप्रावलियोगपट्टया।
मणिवेश्ममयं स्म निर्मलं किमपि ज्योतिरबाह्यमिज्यते॥"

इत्यत्र 'योगी आश्रितयोगपट्टोऽविद्यादिदोषरहितं किमपि वाङ्मनसयोरविषयमात्मलक्षणं ज्योती रात्रावुपास्त' इति साङ्ख्ययोगविषयिणीं वार्तां नगरीवर्णनव्याजेनाभिव्यनक्ति कविः। स्वकीयाया मीमांसाभिज्ञताया दिशि कविरध स्थितेन श्लोकेन सचेतश्चेत आवर्जयितुमभिलषते—

"दृष्टं नः प्रति ते प्रतिश्रुतिरभूद् यावत् स्वराह्लादिनी
धर्मार्थी सृजता श्रुतिप्रतिभटी कृत्यान्विताख्यापदाम्।
स्वःकीर्तिं पुनती पुनस्त्रिभुवनं शुभ्राद्वयादेशनाद्
द्रष्टारः शिशिरीनलैर्हितादरिभ्रान्त्ययं लुम्पतु॥"

इत्यत्र धर्मप्रतिपादिका श्रुतिर्योगमुद्दिश्य प्रवर्तते। सा विधिरूपेण यत् प्रतिपादयति तदेव धर्म इत्युच्यते। मीमांसा श्रुत्युक्तं धर्ममेव विविनक्ति। सा तदेव

धर्मं धर्मत्वेनानुमन्यते यदस्ति श्रुतिसम्मतम् । तस्मात् सा 'धीदृगात्मधर्मार्थी धर्मः' इत्यनेन सूत्रेण धर्मं लक्षयन्ती जगती धर्माचरितुं नुदति । 'अत्रीदृशं सुकृतिनः परिपालयन्ती'त्येवमस्य धर्मीयं कथनं च मीमांसादर्शनसिद्धान्तप्रदर्शनपुरस्सरं कविः प्रदर्शयाञ्चकार । एवं चमत्कारचारुता इह दर्शिता भवति सम्यक् ।

> “त्रयेति रत्नत्रितयं जिनेन यः
> स धर्मचिन्तामणिरुज्झितो यया ।
> कपालिकोपानलभस्मनः कृते
> तदेव भस्म स्वकुले स्तृतं तया” ॥

इत्येतस्मिन् श्लोके 'रत्नत्रितयेन' इत्यनेनाशयेन कविः स्वस्य बुद्धदर्शनमार्मिक्यं प्रदर्शयति । वक्ति च स यद् बुद्धोपदिष्टं सम्यग्दर्शन–सम्यग्ज्ञान–सम्यक्चारित्र-लक्षणरत्नत्रितयं न हेयम् । कलिनाशनदमयन्तीसन्दर्शनापदेशेन नानाविधं नैजं ज्ञानमाकलय्य स्वकाव्यास्वादनपरायणान् जनान् अपि सद्दार्शनिकज्ञानेन परिप्रीणयितुमुत्सहते ।

> “ध्वान्तस्य वामोरु विचारणायां
> वैशेषिकं चारुमतं मतं मे ।
> औलूकमाहुः खलु दर्शनं तत्
> क्षमं तमस्तत्त्वनिरूपणाय ॥

इत्येतेन श्लोकेन कविरयमस्तु स्वीयं वैशेषिकदर्शननैपुण्यं निर्धारयत्यतोऽसौ 'औलूक'मित्येतेन पदेन वैशेषिकदर्शनमप्युपहसति मनोरञ्जनपूर्वकम् ।

महाकवेः श्रीहर्षस्य नैषधीयं चरितं कलापक्षपातिनां काव्यानां शिरोमुकुट-मणिः । परं कलालीलाविलासानां केलिकुञ्जत्वे सत्यपि तस्य कलावादिकाव्यान्त-रमिव न सौकर्येण तत् सहृदयबुधबोधगम्यम् । तदीयं रसं सौन्दर्यञ्च स एवो-पभोक्तुं क्षमते यो भावुकः सन् शास्त्रार्थतत्त्वावगमसम्मनिशितप्रतिभावान् महान् मेधाव्यपि वरीवर्ति । स्वकाव्यस्य काव्यान्तरात् वैशिष्ट्यं स्वयमेव कविरा-मनति—

> यथा यूनस्तद्वत् परमरमणीयापि रमणी
> कुमाराणामन्तःकरणहरणं नैव कुरुते ।
> मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः
> किमस्या नाम स्यादरसपुरुषानादरभरैः ॥

आदिमारभ्य अन्तं यावद् यावन्तोऽपि श्लोकाः अत्र उल्लसन्ति तावत्सु सर्वेष्वपि ललितानां पदानां रमणीयं निबन्धनं विभाति। परं तेषु ललितपदावल्येव न तत्र विलक्षणं पाण्डित्यमपि वितनुते। नानाशास्त्रतत्त्वतरलत्वात् धीप्रवाहस्फारितशब्द-परिपूर्यमाणत्वाच्च ते ललिता अपि श्लोकाः प्रतिभाशालिनां शास्त्रिणां समुदायमेव नितरां प्रीणयन्ति। सामान्यधियः पुमांसो न तत्र सर्वाङ्गीणतया पूर्णमानन्दमा-स्वादयितुमर्हन्ति। पद-लालित्यशोभा अस्य काव्यस्य प्रथममवलोक्यताम्—

"तत्रावनीन्द्रचयचन्दनचन्द्रलेप-
नेपथ्यगन्धवहगन्धवहप्रवाहम्।
आलीभिरापतदनङ्गशरानुसारी
सञ्चारि सौरभमगाहत भृङ्गवर्गः॥"

"देवी पवित्रितचतुर्भुजवामभागा
वागालपत् पुनरिमां गरिमाभिरामाम्।
अस्यारिनिष्कृपकृपाणसनाथपाणेः
पाणिग्रहादनुगृहाण गणं गुणानाम्॥"

यथैतस्मिन् चारुणि काव्ये प्रतिपदं ललितं तथैव काव्यस्यास्य प्रतिष्ठापकमलङ्काराणां सुषमा विलोकिता भवति परं तथा तेषामलङ्काराणां सौरस्यमपि पातुं प्रधीरत्वमपेक्ष्यते। द्वित्राः श्लोकाः काव्यस्यास्यालङ्कारप्रियत्वं ज्ञापयितुं निधीयन्ते—

"कलशे निजहेतुदण्डजः किमु चक्रभ्रमकारितागुणः।
स तदुच्चकुचौ भवन् प्रभाझरचक्रभ्रममातनोति यत्॥"

इत्येष श्लोकोऽनुमानरूपकभ्रान्तिमदुत्प्रेक्षाविरोधाभासालङ्कारैरलङ्क्रियमाणोऽस्ति। परं यावदेतस्य श्लोकस्यार्थावधारणं न भवति तावत् तत्तदलङ्कारच्छटाचमत्कारो न हृदयनयनं प्रमोदयितुमलम्।

"अपि लोकयुगं दृशावपि श्रुतदृष्टा रमणीगुणा अपि।
श्रुतिगामितया दमस्वसुर्व्यतिभाते सुतरां धरापते॥"

इत्यत्र वचनश्लेषक्रियाकारकदीपकतुल्ययोगितालङ्काराणां रुचिरता प्रस्फुरति नितराम्। परमत्रापि अलङ्कारतास्वरूपस्य सूक्ष्मज्ञानमन्तरेणालङ्कारजनितं माधुर्यं न सुलभमत्र मेवेह परिप्रसङ्गात् 'व्यतिभाते' इत्येतस्मात् पदाद् व्याकरणविषयकं सौन्दर्यमपि स एवास्वादयितुं क्षमेत योऽस्ति वैयाकरणः।

अथ स्थिते श्लोके समासोक्तिश्रियं प्रेक्षन्ताम्—

> नवा लता गन्धवहेन चुम्बिता
> करम्बिताङ्गी मकरन्दशीकरैः ।
> दृशा नृपेण स्मितशोभिकुड्मला
> दरादराभ्यां दरकम्पिनी पपे ॥

कवेः काव्यमिदं परमरमणीयम् । तत्र साहित्यिकानां सर्वस्वं ध्वनिः स्वेन गुणालङ्कारादिजित्वरेण अधरीकृतामृतमाधुर्येण माधुर्येण रसिकानां निकरं मुहुर्मुहुर्धिन्वन् विद्योततेतराम् ।

> "एतं नलं तं दमयन्ति पश्य त्यजातिमित्यालिकुलप्रबोधान् ।
> श्रुत्वा स नारीकरवर्तिसारीमुखात् स्वमाशङ्कत यत्र दृष्टम् ॥"

इत्येतादृशानां श्लोकानां बाहुल्यं तत्र विभाति यद् अलङ्कारध्वनेः शङ्काप्रभृति विविधभाव-सम्फुरणस्य श्रिया सुधीसमाजं प्रीणाति भृशम् । प्रकृते श्लोके इह सारीवाक्ये नारीवाक्यभ्रमाद् वस्तुना भ्रान्तिमदलङ्कारो व्यज्यते ।

वस्तुध्वनेः सौन्दर्यं दर्शयितुं कविवरेण्यस्य श्लोकोऽयमीक्ष्यताम्—

> "अपि तद्वपुषि प्रसर्पतोर्गमिते कान्तिझरैरगाधताम् ।
> स्मरयौवनयोः खलु द्वयोः प्लवकुम्भौ भवतः कुचावुभौ ॥"

अत्र हि कुचयोः स्मरयौवनप्लवनकुम्भत्वोत्प्रेक्षया तयोरौन्नत्यं कुचयोश्चातिवृद्धिर्व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ।

श्लेषे कवेर्मनोवृत्तिर्नितरां प्रायेण सर्वत्रैव रममाणा वीक्ष्यते परं त्रयोदशे सर्गे सा वृत्तिः स्वकीयं श्लेषविषयकमनुरागं प्रकृष्टतरतां नयन्ती पर्यवसिता भवति ।

> "देव पतिर्विदुषि नैषधराजगत्या
> निर्णीयते न किमु न व्रियते भवत्या ।
> नायं नलः खलु तवातिमहानलाभो
> यद्येनमुज्झसि वरः कतरः परस्ते ॥"

इत्यनेनैकेनैव श्लोकेन स्वल्पानुरागी कविरिन्द्राग्नियमवरुणनलान् पञ्चापि वर्णयन् अहो, वीक्ष्यमाणो भवति ।

महाकवीनां रचनासु निसर्गतयैवानुप्रासयमकादीनां शब्दालङ्काराणां छटा आपतिता भवति । सा नैषधकाव्यगगनमारोहतु स्थल एव सातिशयवेगं धावन्ती वीक्ष्यते । न तदर्थं ते स्वल्पतमेऽपि प्रयासे प्रवर्तन्ते । अस्मादेव कारणात् अस्य

महाकवेः काव्ये ते सर्वत्रैव विजृम्भमाणा प्राप्यन्ते। अत्र तु केवलं तच्छ्रिया श्लेषेऽनन्या एव सौभाग्यं वर्धयितुमुदाहरणत्वेन श्लोकद्वितयं निधीयते—

यमकस्य भव्या विभा विभाव्या—

"अनलम्भ्य दिदृक्षयाम्बरे क्षणमाश्चर्यरसालसंगतम्।
स विलासवनेऽवनीभृतः फलमैक्षिष्ट रसालसंगतम्॥"

अनुप्रासस्य पेशलतया नन्दयन्त्वधुना—

स्वलकलः स तत्रालिजनानना-
दुदलसद्विपुलस्वरितैरितैः।
यमधिगम्य सुतालयमीयिवान्
धनदरः स विदर्भपुरन्दरः॥

अप्रस्तुतविधानेऽपि कविरयमद्वितीयः। तदीयैषा विशिष्टता क्वापि शास्त्रीयकल्पनाकलिता सती, क्वापि शृङ्गारिणीभिरूहाभिरुच्छ्वसिता सती, क्वापि च लोकव्यवहारबन्धुरतया बन्धुरा सती दृक्पथेऽवतरति।

अप्रस्तुतविधानं शास्त्रीयकल्पनाकलितम्—

"अजस्रभूमीतटकुट्टनोत्थितैरुपास्यमानं चरणेषु रेणुभिः।
रयप्रकर्षाध्ययनार्थमागतैर्जनस्य चेतोभिरिवाणिमाङ्कितैः॥"

अप्रस्तुतविधानं शृङ्गारिकल्पनालोलम्—

"अधुना यद् विरहोष्मणि मज्जितं मनसिजेन तदूरुयुगं तदा।
स्पृशति सस्पन्दनं कदलीतरुर्यदि मरुज्ज्वलदूषरदूषितः॥"

अप्रस्तुतविधानं लोकव्यवहारबन्धुरम्—

"पचेलिमं दाडिममर्कबिम्बमुत्तार्य सन्ध्यात्वगिवोज्झितास्य।
तारामयं बीजभुजादमीयं कालेन निष्ठ्यूतमिवास्थियूथम्॥"

कविरप्रस्तुतानां चयनं व्याकरण-दर्शन-कामशास्त्रादिभ्योऽपि विदधानो दृग्गोचरीभवति। एतादृशानि पद्यान्यतिदुरवगाहानि सन्ति। कालिदासमाघादिकविभिरपि एष पन्था अनुसृतः परमस्मिन् नैषधकारे स्वैषा प्रवृत्तिर्नितरां प्रौढतामुपेतावाप्यते। दर्शनव्याकरणादिभ्य एवोपमानान्याहृतानि कविनेत्येतदपि न, साहित्य नाट्यशास्त्रतोऽपि तानि गृहीतानि दृश्यन्ते।

"न वर्तते मन्मथनाटिका कथं प्रकाशरोमावलिसूत्रधारिणी।

तवाङ्गहारे रचिमेति नायक शिखामणिश्च द्विजराड विदूषक ॥"

इत्येतस्मिन् श्लोके उपमानस्यादान नाट्यशास्त्रतो विहितमास्ते ।

विदुषामिह केषाञ्चनोदीरणमिद यदेवविधा प्रयोगा पाण्डित्यप्रदर्शनदक्षा काम वर स्यु पर न भवन्ति ते काव्यश्रीपरिपोषका । न भवन्ति तेऽलङ्कार्यभावानुभूत्या सहायका मनागपि ।

नैषधीयचरिते पाञ्चालीरीतिर्विशेषेण विभ्राजते पर वैदर्भ्या अपि विभ्रमो बहुलमेवावदातता वितन्वन् विद्योतते । क्वचित् क्वचिद् गौडी च राजतेतराम् । छन्दास्यपीह काव्ये भूयासि विविधानि च कवि प्रयुञ्जान प्रेक्ष्यते । वस्तुत श्रीहर्षसदृशाना प्रतिभावच्चमानाना किमपि न दुरासदम् ।

श्रीहर्षस्य काव्यमिद शृङ्गाररसप्रधानम् । पर तत्र वीरकरुणहास्यादीनामपि रसाना मधुरिमाणमास्वादयितु सचेतस सदवसरमश्नुवन्ति । एकादश–द्वादश–त्रयोदशसु सर्गेषु वीररसस्य स्रोतस्विनी सरय प्रवहन्ती सम्यग् दृष्टा भवति पर कवे स वीररसो न मानसे वीरभावान् जनयति न तत्र सा शक्तिर्यया मन उत्साहेन उत्फुल्लति स तु सन् अपि वीर शृङ्गारीव प्रतिभाति । तत्रातिशयोक्तेर्विलास शब्दानाञ्च श्रीर्नृत्यन्ती समवतरति । दृश्यताम्—

"द्वेष्याकीर्तिकलिन्दशैलतनयानद्यास्य यद्दोर्द्वयी-
कीर्तिश्रेणिमयी समागममगाद् गङ्गा रणप्राङ्गणे ।
तत् तस्मिन् विनिमज्ज्य बाहुजभटैरारम्भि रम्भापरी
रम्भानन्दनिकेतनन्दनवनक्रीडादराडम्बर ॥"

षोडशे सर्गे हास्यरसच्छटापि स्मेराननः समवलोक्यते—

"स किञ्चिदूच रचयन्तु तेमनो
पहारमत्राद्य रुचेर्यथोचितम् ।
पिपासत काञ्चन सर्वतोमुरा
तयार्पयन्तामपि काममोदनम् ॥"

यमधिकृत्य 'एको रस करुण एव निमित्तभेदादि' ति भवभूतिर्बभाण तेनापि कृतार्थीक्रियतामिदानीम्—

"मदर्थसन्देशमृणालमन्थर
प्रिय कियद्दूर इति त्वयोदिते ।
विलोकयन्त्या रुदताऽथ पक्षिण
प्रिय स कीदृग् भविता तव क्षण ॥"

## गद्य-विकासः

गीर्वाणवाण्याः गद्यसाहित्यं परमकलितं पाण्डित्यपेशलं चिरन्तनञ्च । वैदिक-संहितानामुदयो यस्मिन् पूततमे पुरातनतमे युगे बभूव तस्मिन्नेव युगे गद्यमप्यभिव्यक्तिमगमत् । कृष्णयजुर्वेदस्य तैत्तिरीयसंहितायां यस्य गद्यस्य दर्शनं भवति तदस्ति गद्यस्याद्यं स्वरूपम् । तस्यां संहितायां किञ्च तस्यैव वेदस्य काठकमैत्रायण्यादिसंहितास्वपि गद्यं तावत्यामेव मात्रायां परिलक्ष्यते यावत्यां मात्रायां तत्र पद्यानि शोभन्ते । ततश्च गद्यस्य प्रतिष्ठा अथर्ववेदे वीक्ष्यते । अथर्वणः षष्ठो भागो गद्यात्मक एव समग्रः समवाप्यते । ब्राह्मणग्रन्थेषु तु सर्वत्र गद्यमेव विद्योतते । आरण्यकं साहित्यमपि गद्यमयं भवद् विभाति । उपनिषत्सु प्राचीनतमोपनिषदपि गद्यात्मिकैव भूत्वा विभ्राजते । तदेवं वैदिकसाहित्ये गद्यस्य प्रयोगोऽतिव्यापकत्वेनोदात्तत्वेन च कृतो दृश्यते । आवेदोपनिषदन्तानां ग्रन्थानां गद्यं पर्यालोच्य ज्ञायते यद् गद्यस्य विकासः शनैः शनैः समजायत । यथा यथा समयो व्यतीयाय तथा तथा तत् पर्यपुष्यत् । वेदप्रयुक्ताद् गद्याद् ब्राह्मणारण्यकेषु प्रयुक्तं गद्यं परिष्कृततरं विलोक्यते । उपनिषत्कालवर्तिनि गद्ये तु रमणीय उत्कर्षः परिस्फुरति । वस्तुतो वैदिकवाङ्मये समुन्मीलिता गद्यपरम्परा स्फुटमेवेदं ज्ञापयति यदस्मदीयो देशो गद्यस्याविर्भावने चिरात् सान्द्रस्नेहमदर्शयत् ।

अत्र वैदिकसाहित्याद् गद्यस्य विचतुराण्युद्धरणान्युद्ध्रियन्ते येनोपरिकथितं कथनं पुष्टिमासादितं स्यात्—

"भृगुर्वै वारुणिः वरुणपितरमुपससार अधीहि भगवो ब्रह्मेति । तस्मा एतत् प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति । तꣳ होवाच । यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति । यत् प्रयन्त्यभिसंविशन्ति । तद् विजिज्ञासस्व ।" ( तैत्तिरीय० )

"स एतया पृष्टो दशभिः प्रत्युवाच । अथैनमुवाच—'वरुणं राजानमुपधाव पुत्रो मे जायतां तेन त्वां यजै' इति । 'तथा' इति स वरुणं राजानमुपससार— 'पुत्रो मे जायतां, तेन त्वां यजै' इति । तथेति ।" ( ऐतरेयब्रा० )

"मूर्धाऽहं रयीणाम्, मूर्धा समानानां भूयासम्, रुजश्च मा वेनश्च मा हासि-ष्टाम् । मूर्धा च मा विधर्मा च मा हासिष्टाम् ।" ( अथर्ववेदः )

वैदिकसाहित्यस्य भाषा विषयप्रधानास्ति । न तत्र सौन्दर्यं प्राप्यते । तत्र समास-प्रयोगोऽपि न दृश्यते । तत्रत्यानामाख्यानानां भाषायां रोचिष्णुता सरलता स्वाभाविकता च वीक्ष्यन्ते । न तत्र प्रौढत्वं न च सान्द्रश्लिष्टलम्बितानि पदान्येव प्राप्तानि भवन्ति । परं प्रासादिकतायाः कुत्राप्यभावो नास्ति । एषा हि तदीया प्रसन्ना पदावली किमपि विचित्रमेव माधुर्यं वर्षति । यो हि मधुरिमा— "सत्यं वद, धर्मञ्चर; स्वाध्यायान्मा प्रमदः; तमसो मा ज्योतिर्गमय; तेजोऽसि तेजो मयि धेहि" इत्यादिकायां सरलतां परिष्वजमानायां पदपङ्क्त्यां सुखं प्रीतिञ्च ददाति न तादृशं सुखं प्रसन्नतां वा तादृशीं, कृत्रिमताकलिता पदश्रेणी प्रयच्छति ।

आरण्यकस्य गद्यस्य सौन्दर्यं वीक्ष्यताम्—

"एतमेव विदित्वा मुनिर्भवति । एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति । एतद्ध स्म वै तत् पूर्वे विद्वांसः प्रजां न कामयन्ते ।"

वैदिकयुगे यादृश्यां गद्य निबन्धनशैल्यां विपश्चितां मनोऽनुरागः प्रावर्तत न तादृश्यां शैल्यां तदुत्तरकालवर्तिनो विद्वांसो रुचिं दर्शयन्तो लोचनगोचरीभवन्ति । अत एव तद्विधस्य गद्यस्य विकासः प्रसारश्च निरुद्धोऽभवत् । वैदिकयुगस्य गद्यं सामान्यं वर्तते । तत्र सैव भाषा प्राधान्येन प्रयुक्तास्ति या दैनिकव्यवहारे व्यवह्रियते । दैनिकव्यवहाराहृता भाषा न प्रायेण सुरक्षायोग्या मता भवति अतस्तस्यां दिशि लोके विदुषां चेत उपसरति । गीतिषु पद्येषु स्वर-लयविशिष्टायां वाक्यावल्यां भवत्याकर्षणम् । मनस्तत्र विशेषेणानुरज्यति । अशिक्षिता अपि जातपरच्छन्दोबद्धया गिरया अनायासेन आवर्जिता भवन्ति, सा छन्दोमयी वाणी झटिति हृदयं स्पृशति भवति च सा सत्वरं कण्ठगता । अतः साहित्ये पद्यमेव स्थायि सम्मानं लभते । संस्कृतभाषाया वैदिककालवर्तिनो गद्यस्य विरोधे क्षेत्रापि लोकभावना कारणमभवत् । गद्यस्य प्रयोगः शनैः शनैः कृशतामेव ययौ प्रायेण यादृशगद्यस्य स्वरूपमुपनिषदां वा ब्राह्मणानां वा संहितानां समये पर्यवेक्ष्यते तादृशमेव महाभारतीयमपि गद्यं वीक्ष्यते । वीक्ष्यताम्—"स मधु-स्वरया तमथमधिरूढ प्रत्याजगामोपाध्यायकुलमुपाध्यायानी च आसना केशाना-यास्यमनुप्रविष्टो सङ्को नागध्वनिं नापापास्य मनो दधे ।"

गद्यंप्रति विदुषामनुरागः परं सदैव न्यूनतायां वाधिक्यतायां प्रवर्तमानोऽदृश्यत । इदमेव कारणं यद् यास्को निरुक्तं गद्ये निबध्नन् तस्मिन् कालेऽपि दृष्टो भवति यस्य कालस्यातीतस्य सप्तविंशतिशतकानि यातानि ।

गच्छता कालेन गद्यस्योपयोगः प्रधानतया टीकासु व्याकरण–ज्योतिषायुर्वेदादिविषयकेषु ग्रन्थेषु विद्वद्भिः प्रारब्धः । यादृशा विषया आसंस्तादृशं सौन्दर्यमपि तत्रत्ये गद्ये स्थानमलभत । महर्षिपतञ्जलेर्महाभाष्ये गद्यश्रियं पश्यन्तु—

"एवं हि श्रूयते । बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच । नान्तं जगाम । बृहस्पतिश्च प्रवक्तेन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनकालो न चान्तं जगाम ।"

इदमपि गद्यमनलङ्कृतमेव । परं भाषा शिष्टजनानामस्ति । तत्र प्राञ्जलता विद्यते । सा भावाभिव्यञ्जने क्षमा च ।

बुद्धाविर्भावात् प्रागेव वैदिकसाहित्यं परमविस्तारं प्रपेदे तदीया समृद्धिर्विपुलताञ्च प्रापद्यत । तद्रक्षाया अपेक्षा विद्वज्जनैरन्वभूयत । अतः नवसाहित्यस्य निर्माणमारब्धमभूत् । एतद्भूतं साहित्यमपि गद्ये प्रणीतमजायत । तद् गद्यं सूत्ररूपमादाय प्रादुरभूत् । वैदिककर्मकाण्डसम्बन्धि साहित्यं सूत्रशैल्यात्मके गद्ये यद्रूपमादायोन्मीलितमभवत् पाणिनेः अष्टाध्याय्यां तद्रूपं विकस्वरतां जगाम । सूत्रस्वरूपस्य गद्यस्यास्योपयोगः षट्स्वपि दर्शनेषु कृतोऽवाप्यते ।

सूत्रग्रन्थप्रणयनकारिणा मेधाविना दृष्टिर्गद्यस्य परिष्करणे तस्य संवर्द्धने पल्लवने वा नासीत् । सा तु शास्त्रीयसमृद्धिरक्षणप्रयोजनेनैव उपससार । तदीयमुद्देश्यमिदमेवासीत् यत् तत्त्वस्य समुपस्थानमतिपरिमितशब्देषु कृतं स्यात् । येन सद्भावमन्तरेण हृदयङ्गमं भवेत् किञ्च सुरक्षामपि उपेयात् ।

लौकिकसंस्कृतकाले गणितज्योतिषायुर्वेदव्याकरणदर्शनप्रभृतिविषयान् अपि यद्यपि पद्यमय्यां वाण्यां प्रणेतुं प्रेक्षावन्तः सन्नद्धा अजायन्त परं समये समये तान् अपि विषयान् प्रतिभाशालिनो लेखका गद्य एव रचयाम्बभूवुः । चाणक्येन अर्थशास्त्रे गद्यं प्रयुक्तमवाप्यते । तद्गद्यस्वरूपमवलोकयताम्—

"दर्शने प्रमोदते । वाक्ये प्रतिगृह्णाति । आसनं ददाति । विविक्तो दर्शयते । शङ्कास्थाने नातिशङ्कते । कथायां रमते । परिज्ञाप्येष्वपेक्षते । पथ्यमुक्तं सहते । स्मयमानो नियुङ्क्ते । हस्तेन स्पृशति । श्लाघ्ये नोपहसति ।"

कौटल्यानि लघुलघुवाक्यानि गद्येऽस्मिन् शोभन्ते ।

सम्प्रति चरकस्य चरकसंहितायां गद्यस्याभा वीक्ष्यताम्—"नारत्नपाणिर्नास्नातो नोपहतवासा नाजपित्वा नाहुत्वा देवताभ्यो नानिरूप्य पितृभ्यो नादत्त्वा गुरुभ्यो नातिथिभ्यो नोपाश्रितेभ्यो नापुण्यगन्धो नामाली नाप्रक्षालितपाणिपादवदनो नाशुद्धमुखो नोदङ्मुखो न विमना''''''न प्रतिकूलोपहितमन्नमाददीत।"

बौद्धविद्वांस स्वसमयेऽनेकान् ग्रन्थान् गद्येऽपि अरचयन्। तेषु बहवो लोकप्रियाणि महात्मनो बुद्धस्याख्यानानि गद्ये लिलिखुः। आर्यशूरो जातकमालां नाम सुप्रथितां कृतिं गद्य एव लिलेख। तत्रत्यं गद्यं पश्यन्तु विज्ञाः—

"अथ कदाचित् तस्य महासत्त्वस्य भोजनकाले स्नानानुलिप्तगात्रस्य कुशलोदारसूदोपकल्पिते समुपस्थिते वर्णगन्धरसस्पर्शादिगुणसमुदिते विचित्रे भक्ष्यभोज्यादिविधौ तत्पुण्यसम्भाराभिवृद्धिकामो ज्ञानाग्निनिर्दग्धसर्वक्लेशेन्धनः प्रत्येकबुद्धस्तद्गृहमभिजगाम भिक्षार्थी।"

अस्मिन् गद्ये समासानामपि प्रयोगेण सह कथावस्तुवर्णनं प्रवाहशीलभाषायां कृतमीक्ष्यते।

लौकिकसंस्कृतग्रन्थानां यस्मिन् काले प्रणयनमभूत् तदा गद्यस्य त्रीणि रूपाणि दृष्टान्यभवन्—(१) पौराणिकम् (२) शास्त्रीयम् (३) साहित्यिकम्। पौराणिके गद्ये वैदिककालस्य कतिपये आर्षा अपि शब्दाः प्रयुक्ताः प्राप्यन्ते। श्रीमद्भागवत-विष्णुपुराणादिषु व्यवहृते गद्य उक्ता विशिष्टता स्पष्टमेवाधिगता जायते। इदं हि गद्यं वैदिकं गद्यं लौकिकञ्च गद्यं परस्परं संयोजयतीव। पौराणिकं गद्यमलङ्कृतं गुम्फितञ्च। श्रीमद्भागवते तु गद्ये प्रौढता भावाभिव्यञ्जनदक्षता चातितरामीक्षिता भवति। दृश्यताम्—

"तेषां विशीर्यमाणानामतिमधुरसुरभिसुगन्धिबहुलारुणरसोदेनारुणोदा नाम नदी मन्दरगिरिशिखरान्निपतन्ती पूर्वेणेलावृतमुपप्लावयति। यदुपजोषणाद् भवान्या अनुचरीणां पुण्यजनवधूनामवयवस्पर्शसुगन्धवातो दशयोजनं समन्तादनुवासयति।

विष्णुपुराणस्य च गद्यश्रीरियम्—

"यथैव व्योम्नि वह्निपिण्डोपमं त्वामहमपश्यं तथैवाद्याग्रतो गतमप्यत्र भगवता किञ्चिन्न प्रसादीकृतं विशेषमुपलक्षयामीत्युक्तेन भगवता सूर्येण निजकण्ठादुन्मुच्य स्यमन्तकनाम महामणिवरमवतार्य एकान्ते न्यस्तम्।"

शास्त्रीयस्य गद्यस्योदाहरणत्वेन सन्ति दर्शनग्रन्थाः। षड्दर्शनेषु विद्वांस-

आचार्या यानि भाष्याणि कृतवन्तस्तेषु भाष्येषु च यस्य गद्यस्य दर्शनं सञ्जायते तन्निर्मलं गभीरं गहनञ्च वर्तते। मीमांसासूत्रेषु शाबरस्वामिनो, न्यायसूत्रेषु वात्स्यायनस्य, वेदान्तसूत्रेषु च शङ्कराचार्यस्य भाष्यं दार्शनिकस्य गद्यस्य विशिष्टोदाहरणत्वेन विभाति। अत्र वा तेभ्यो द्वित्राण्युद्धरणानि निधीयन्ते—

"दृष्ट्वात्मानमुपलभामहे। कथमिति? उपलब्धपूर्वे ह्यभिप्रेते भवतीच्छा। यथा मेरुमुत्तरेण यान्यस्मज्जातीयैरनुपलब्धपूर्वाणि स्वादूनि वृक्षफलानि न तानि प्रत्यस्माकमिच्छा भवति।" (शा० भा०)

एतद् गद्यं कियत् सरलं रुचिरं च विद्यते।

"सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यवस्यति, युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि। उच्यते—न तावदयमेकान्तेनाविषय, अस्मत्प्रत्ययविषयत्वात्। न चायमस्ति नियमः पुरोऽवस्थित एव विषये विषयान्तरमध्यवसितव्यमिति।"

आचार्यस्य शङ्करस्य गद्ये यद्यपि प्रौढता परिस्फुरति पर न सा प्रसादमुज्झति। न्यायमञ्जरीकारस्यापि जयन्तभट्टस्य गद्य ललितं दृश्यते। स्वभावकर्कशमपि न्यायमाचार्यः स्वकीयया शैल्या हृदयङ्गमं कुरुते। तदीये गद्ये व्यङ्ग्योक्तीनामामारवर्षा समवाप्ता भवति। अधोनिहितेनोद्धरणेन तदीयाया गद्यसुषमाया दर्शनं भवितुमर्हति।

"आ क्षुद्रतार्किक सर्वथानभिज्ञोऽसि, ब्रह्मैव जीवात्मानो नहि ततोऽन्य। नहि दहनपिण्डाद् भेदेनापि भान्तः स्फुलिङ्गा अग्निस्वरूपा भवन्ति। तत् किं ब्रह्मण एवाविद्या? न च ब्रह्मणोऽविद्या।"

नव्यन्याये तर्कप्रधानशैल्याश्रमोत्कर्षं सलक्ष्यते। तत्रत्य गद्य तु नितान्त दुरूहं दुर्बोधञ्च। तार्किकशिरोमणीनां श्रीरघुनाथचरणानां किञ्च गदाधरमहाभागानां ग्रन्थान् विलोक्यैव तत्रत्यस्य चण्डस्य गद्यस्य स्वरूपं सम्यग् द्रष्टुं शक्यते।

दर्शनशास्त्रस्य विवेचनपद्धतिं साहित्यशास्त्रिभिरपि अभ्यनन्यत। तैरपि नैजगद्ये सैव शैली अभ्युपगता सूक्ष्मविचारकारिणी तर्कप्रधाना। दृश्यतां काव्यप्रकाशीय गद्यम्—

"तत्प्रयोगेऽपि विभावाद्यप्रयोगे तस्याप्रतिपत्तेस्तदप्रयोगेऽपि विभावादिप्रयोगे तस्य प्रतिपत्तेश्चेत्यन्वयव्यतिरेकाभ्यां विभावाद्यभिधानद्वारेणैव प्रतीयत इति निश्चीयते तेनासौ व्यङ्ग्य एव मुख्यार्थबाधाद्यभावात् पुनर्लक्षणीयः।"

रसगङ्गाधरकारो जगन्नाथस्तु गद्यस्य यद्रूपमदर्शयत् तत्तु सरलतां स्पृशत्येव न। तत्र तु सैव च्छटा शोभते या नव्यन्यायग्रन्थेषु राजते।

केषुचन शास्त्रीयेषु ग्रन्थेषु गद्य पद्यमिश्रमपि दृश्यते। तत्र मुख्यविषयस्य विवेचनं गद्ये विहित पर पद्याना प्रयोग समर्थकत्वेन कृत। एषा शैली चिकित्साशास्त्रेऽलङ्कारशास्त्रे च प्राप्यते। कौटिल्येनार्थशास्त्रेऽपि इयमनुसृता।

संस्कृतभाषायां गद्यकाव्यानि तानि नेदानीमुपलभ्यन्ते यानि दण्डिबाणप्रभृतीनां कवीनां कालात् प्राक् प्रणीतान्यभूवन्। कात्यायनेन वार्तिके हि आख्यायिकाया यो निर्देश कृत, पतञ्जलिना वासवदत्ता-सुमनोत्तराभैमरथीनां य उल्लेखो विहित, भोजेन स्वकीये शृङ्गारप्रकाशे मनोवतीसातकर्णीहरणनामधेययो रचनयोर्य सङ्केत समुपस्थापित, दण्डिना मनोवत्या या प्रशसानुष्ठिता, हालालित श्रीपालितो या तरङ्गवतीं लिलेख, रामिलसौमिलौ च या शूद्रककथा रचयाञ्चक्रतु, बाण स्वहर्षचरिते भट्टारहरिचन्द्रस्य यद् गद्य प्राशसत्, तस्सकलमपि गद्यकाव्यनिकुरम्ब सम्प्रति दुर्लभ, न तदधिकृत्य किमपि विदित पर सद्विषयिणी या चर्चा तैस्तैरनुष्ठिता सा तु सुस्पष्टतयेदमवगमयति यदस्मद्भारते सुबन्धुबाणादिरविभ्य प्रागपि मनोहरगद्यकाव्यकर्तार कवय प्रादुरभूवन्। नूनमस्मद्देशस्य गता महत्त्वद्वयाब्दव्यापिनी कालकला गद्यकलया सर्वथैव विभूषिता बभूव।

अतिपुरातने युगे गद्यस्य यद् रूप सरलं सरसञ्च दृष्टमभवत् पर तदुत्तरकाले तस्य यद्रूप लोचनपथेऽवातरत्, तत्प्रायशस्त्वेन अलङ्कारालङ्कृत समासबहुलं श्लिष्टञ्च व्यालोक्यत। ईसवीय द्वितीये शतके महाक्षत्रपरुद्रदाम्नो य शिलालेखो जुनागढे तस्य गद्य ज्ञापयति यत् तदाप्रभृत्येव कवीना मानसमलङ्कारालङ्कृतगद्यप्रणयने प्रणय बबन्ध।

"प्रमाणमानोन्मानस्वरगतिवर्णसारसत्वादिभि परमलक्षणव्यञ्जनैरुपेतकान्तमूर्तिना स्वयमधिगतमहाक्षत्रपनाम्ना नरेन्द्रकन्यास्वयम्बरानेकमाल्यप्राप्तदाम्ना महाक्षत्रपेण रुद्रदाम्ना सेतु सुदर्शनतर कारितम्।" ( रुद्रदाम्नो गिरिनारलेख )

गद्यमिदं स्वागामिकालगामिनो गद्यगुम्फनकारिणस्तथैवाचूचुदत्, यथा मनोवतीप्रभृतिगद्यकाव्यानि। गिरिनारशिलालेखे गद्यस्य यद्रूपमालोक्यते तस्य प्रौढ प्रकृष्ट सुन्दरतर च रूप हरिषेणरचितसमुद्रगुप्तप्रशस्त्यां प्राप्यते। तत्र सुदीर्घसमासश्रुतिसुखदशब्दसमुदायसुशोभितगद्यकाव्यस्य मनोज्ञच्छटोच्छलति।

श्लेषस्यापि सुन्दरता तत्र शोभते। एषा गद्यशैली उत्तरकालोद्भूतान् गद्य लेखकान् नितरामप्रीणात्। तस्मात् तेषां गद्यकाराणां गद्यमस्मत्पुरः परममञ्जुलतया-लिङ्ग्यमानमलङ्कारैरलङ्क्रियमाणं श्लेषैराश्लिष्यमाणं दीर्घदीर्घतरसमासैराक्रम्यमाणमुपतिष्ठति। एतादृशेन विकासोन्मुखेन गद्येनास्मद्वाङ्मयस्य तेः शताब्द्यो मण्डिता अभूवन् यासु गुप्तसाम्राज्यं हर्षवर्द्धनशासनानेहा च चरमाग्रक्रतुः।

सुबन्धु-दण्डि-बाणत्रयः स्वप्राक्तनगद्यप्रणेतृणां गद्यश्रियं चरमोत्कर्षमगयन्। तेषां प्रशंसनीयेन प्रयासेन गद्यकलाकलेवरं सत्कलाभिर्ल्लितताभिः समग्रैः प्रसाधनैश्च सुमज्जितं भूत्वा बभौ।

सुबन्धुर्वासवदत्तां प्रणीय गद्यस्य तद्रूपं परमोत्कर्षं निनाय यत्र दीर्घदीर्घतरसमासानां बहुलता अलङ्काराणां विपुलता श्लिष्टपदानाञ्च प्रचुरता भवति। सः प्रत्यक्षरं श्लेषमयोजयत्, वक्रोक्तेः सन्निवेशं कृत्वालङ्कारचमत्कारेण गद्यं स्वकीयमतितरामेवादीपयत्। स वस्तुतः श्लेष-कविः। स सभङ्गाभङ्गोभयविधश्लेषं प्रयुज्य स्वीयं काव्यं विचित्रयाप्यन उत्कृष्टोदाहरणत्वेन ससर्ज क्वचित् क्वचित्तु तदीया श्लिष्टा पद रचनैतावतीं क्लिष्टतां भजते यत् तामवगन्तुं तदर्थमवधारयितुं विद्वत्तल्लजानामपि प्रज्ञा चङ्क्रम्यते। क्वचित् क्वचित् कोष साहाय्यमन्तरेण पदमेकमपि पाठक उपगन्तुं शक्नोति न।

दीर्घतरसमासवती पदावल्येकेक्ष्यताम्—

"यश्च मदकलकलहंससारसरसितोद्भ्रान्तभाः कूटविकटपुच्छच्छटाव्याधूतविकचकमलखण्डविगलितमकरन्दबिन्दुसन्दोहसुरभितसलिलया······।"

प्रसन्नश्लेषशोभितवाक्यानि कानिचनावलोक्यन्ताम्—

"······चालिनमिवाङ्गदोपशोभितं, कुक्कुकण्ठमिव हारिकण्ठं, कनकमृगमिव रामार्पणनिपुणं, जयन्तमिव वचनामृतनन्दितवृद्धश्रवसं, कृष्णमिव कं सहर्षं न कुर्वन्तम्······।"

विरोधोत्प्रेक्षोपमादिकालङ्कारयुक्तेषु वाक्येषु श्लेषस्य च चमत्कारोत्पादने स प्रयतमानो दृश्यते। तदीयाः सन्त्युपमाः कौतूहलकारिण्यः। तासु कवेरद्भुतविदग्धताया आभा परिस्फुरति।

"व्याकरणमिव विततलीनदीर्घप्रत्ययबहुलम्, न्यायविद्यामिव उद्योतकरस्वरूपाम्" इत्यादिरान्युदाहरणान्यत्र प्रमाणम्। तस्य प्राकृतिकानि दृश्यानि श्लेषराहित्यादतिशयतया मनो रमयन्ति।

"क्रमेण च रजोविलुठितोत्थितकुलायार्थिपरस्परकलहविकलकलविङ्ककुलकलकलवाचालशिखरिषु ……भगवती सन्ध्या समदृश्यत" इत्यादिषु अभिरामसमास्यश्रीः कं न कोविदं नन्दयति । कलापक्षस्य चेत् साम्राज्यं क्वापि दृश्यते तदा तदस्यैव कवेः रचनायां वासवदत्तायां दृश्यते । कविर्बाणभट्टः सत्यमेवाह कृतिमेतदीयामुद्दिश्य—

"कवीनामगलद् दर्पो नूनं वासवदत्तया ।
शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम् ॥"

बाणो बहूनि ग्रन्थरत्नानि रत्नैकवती-रत्नाकरात् साहित्यसंसाराय समर्पयामास । कादम्बरी हर्षचरितञ्च तस्य गद्यकाव्यानां मौलिभूषणभूतावनुपमौ ग्रन्थौ स्त । हर्षचरितमुपलब्धाख्यायिकासु पुरातनतमा आख्यायिकास्ति । बाणस्य समये गद्यस्य जीवनम् "समासबाहुल्यं मतमभूत् । अतः कविस्तदेव लक्ष्यीकृत्य हर्षचरितं निबबन्ध । स आख्यायिकां हर्षचरिताभिधानां प्रणीय संस्कृतसाहित्यसंसारस्य गौरवमवर्धयत् । तदीयेयं रचना प्रथमैवासीत् या भामह-दण्डि-रुद्रटप्रभृतीनस्मान् विद्वद्वरान् अनुसरद् ये हि कस्यापि विशिष्टस्य लक्ष्यग्रन्थस्याभावात् आख्यायिकाया लक्षणं यथायथं प्रदर्शयितुं नितान्तमेवाऽसमर्था अभवन् । हर्षचरितं न केवलं काव्यवैभवत्वेन विदितमपितु तत् सप्तमशतकवर्तिनो भारतस्यापि अत्युज्ज्वलं प्रामाणिकं सांस्कृतिकं चित्रमपि सत् साहित्यजगति देदीप्यते ।

तत्रत्यां हि गद्यश्रियं दर्शयितुमुद्धरणमेकं निधीयते—"……स्वमपि धूमसम्भोद्गमसमुद्भूतिभियेव भस्मयन्तः, स्वेदिन इव विलीयमानमधुपटलगोलकगलितमधुबिन्दुस्रुतयः काननेषु, ज्वलन्त इव परिशीर्यमाणशिलासंहतयो महीधरेषु, गृहीतशिलाजस्वला इव उज्ज्वलितसूर्यमणिशकलेषु शिलोच्चयेषु, प्रत्यदृश्यन्त दारुणा दावाग्नयः ।"

बाणस्य कादम्बरी अद्वितीया रचना । न तादृशी क्वापि रचना साहित्यसंसारे द्वितीया । इमां रचनामधीत्यानुशील्य च विद्वज्जगद् बाणं 'बाणोच्छिष्टं जगत् सर्वम्' इत्यनेन श्लाघनेन श्लाघमानं विराजमानं भवति । केवलमिदमेकं वाक्यं बाणस्य या महीयसी कृते. अस्या महनीयतां महीयस्त्वञ्चोद्घोषयति । साहित्यिकं यदपि सौन्दर्यं गतिं तदत्रापि सर्वातिशयप्रौढीभूतं विलोक्यते । अत्र कथावस्तु भावपक्षश्च द्वावपि स्वकीयेन पूर्णेन समृद्धेन च वैभवेन अर्थेन प्रभावेन सह सानन्दं विभ्राजमानौ दृश्येते । चरित्रचित्रणमपि यद्वा

दृष्टिर्गच्छति तदा सा तत्रैव स्थिरा भवति । न तत् स्थान-यत्र गन्तुमभिलषते, चेत् प्रकृतिच्छटावलोकनाय सा गच्छति तदा तत्रापि तस्याः स्थितिः सैव सञ्जायते तथापि सा निष्कम्पा भूत्वा निमेषालसपक्ष्मपङ्क्तिर्भवन्ती तदवलोकन एव परा भवति । सर्वाण्यपि वर्णनानि नितरामेव बन्धुराणि वदान्यानि समुज्ज्वलानि सन्ति । उपमोत्प्रेक्षादिकानां सकलानामप्यलङ्काराणां छटा तु तत्र भात्येव पर विरोधाभासश्लेष परिसंख्यालङ्काराणां यादृशी मञ्जुला मधुरता अस्य कवे कवितासु दीप्तिमा भवति न तादृशी सम्भवतः क्वचिदपि वर्तते । हार्दिक्य सर्वा अपि भावना साकारा भूत्वा अस्य गद्याजिरे नृत्यन्त्य सविलासमीक्षणपथेऽवतरन्ति ।

आदर्शस्य गद्यस्य सर्वेऽपि गुणास्ते ये तेन हर्षचरिते—

"नवोऽर्थो जातिरग्राम्या श्लेषः स्पष्टः स्फुटो रसः ।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुर्लभम् ॥"

उल्लिखितास्ते सर्वेऽपि तस्य गद्ये विराजन्ते ।

स एतावान् महान् यत् तत्प्रशंसायामुदीरिता —

"कादम्बरीरसभरेण समस्त एव
मत्तो न किञ्चिदपि चेतयते जनोऽयम्"

"प्रागल्भ्यमधिकमाप्तु वाणी बाणो बभूवेति"

"रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति ।
सा किं तरुणी ? नहि नहि वाणी बाणस्य मधुरशीलस्य ॥"

इत्यादिका सर्वा अपि सूक्तयो लघीयस्य एव प्रतिभान्ति ।

तदीया रसनोपमाश्री प्रेक्ष्यताम्—

"क्रमेण च कृतं मे वपुषि, वसन्त इव मधुमासेन, मधुमास इव नवपल्लवेन, नवपल्लव इव कुसुमेन, कुसुम इव मधुकरेण, मधुकरेण इव मदेन नवयौवनेन पदम् ।"

सम्प्रति परिसंख्याया अपि लक्ष्मी इह विलोक्यताम्—

"यत्र च महाभारते शकुनिवधः पुराणे वायुप्रलपितं, वयःपरिणामे द्विजपतनम्, मूलानामधोगतिः ।"

उपदेशस्य माधुर्यमत्र लघुलघुवाक्यैः सरलसरलतरैः कियद्रमणीयतां नीतम्—

सुरभारतीचरणानुरागिणो मनीषिणो यतमाना प्राप्यन्ते। अम्बिकादत्तव्यासस्य शिवराजविजयप्रबन्धोऽनेकनवानप्रशैलीसुशोभितप्रौढगद्यस्य स्पृहणीयं निदर्शनम् इष्यते।

साम्प्रतिकेषु गद्यकविषु पण्डिता क्षमा च परमसम्माननीयं स्थानमध्यास्ते। सा चिरपुरातन्या भाषाया नवान् एव प्राणान् सञ्चारयन्ती दृश्यते। तदीये गद्ये इदानीन्तनजगदभिमता वर्णनशैली विज्ञानानुमोदितविचारणाना मधुरिमा प्रगतिप्रिया च दृष्टिः सर्वत्र समुल्लसति। तदीया कथामुक्तावली घटनावैचित्र्य विचित्राणां सभाजितमनोऽभिरुचीनां कथानां कमनीय सग्रहः।

विंशे शतके सञ्जात पण्डितो हृषीकेशशास्त्री प्रबन्धमञ्जर्यां यच्छलित निबन्धं गद्य तत्र सामयिकेषु विषयेषु सुरुचिरुचिरान् निबन्धान् निबध्नता तेन सरसाया व्यङ्ग्यवत्या प्रवाहशीलायाश्च शब्दावल्यामवतार्य सस्कृतगद्यस्य श्री अपूर्वामेव चम कृतिं प्रापिता स्ति।

अन्य चास्मिन् काले प० रामस्वरूपशास्त्रि ब्रह्मानन्दशुक्ल शङ्करराघव नारायणशास्त्रिखिस्ते द्विजेन्द्रशास्त्रि विद्याधरशास्त्रिप्रभृतयः शतश सुधीन्द्रा गद्य साहित्य वर्धयन्त समवलोक्यन्ते। एवंस्थिते कथ हि वक्तुमिद शक्य यत् सस्कृतभाषाया सस्कृतसाहित्यस्य च प्रचारो निरुद्धता गतोऽस्ति।

प्रार्थ्यते परमेश्वरो यद् भारतीया स्वकीयभारतीयसस्कृत्या सस्कृतभाषा याश्च दृढ सत्य स्नेह निबध्नीयुयत सस्कृतगद्यमेधेत भारतस्य चास्य प्राक्तया स्वत नताया श्री विश्वव दनीय च गरिमाण प्रपद्यत।



क्वे सकलसुधीजनवन्दितायाः कवितायाः अनवद्या बन्धुरता निभालयितुं तदीया कादम्बरी एवाल भवेत् तस्मात् सैवालम्ब्यते । तामेव तु लक्ष्यीकृत्योक्तमिदम्—

'कादम्बरीरसभरेण समस्त एव मत्तो न किञ्चिदपि चेतयते जनोऽयम् ।"

कादम्बरी संस्कृतगद्य साहित्यस्य समुज्ज्वलं रत्नमस्ति । तत्र भाषा भावेन भाति, भावश्च भाषया । स दार्थयोरुभयोरपि नितान्तमेव श्लाघनीयो योगस्तत्र दृष्टिपथमवतरति । वर्णनानां सुन्दरता अनिर्वचनीयैव । क्वचिद् विन्ध्याचलस्य विकटाटवी साहससल्लापा भीरुत्पादनकरं शबरसैन्यं च वर्ण्यते तु क्वचित् सदयताया अवतारो धर्मस्य साकारं रूपम्, आध्यात्मिकताया देदीप्यमानं निदर्शनं मुनिर्जाबालिस्तदीयश्च परमपावनो मनश्चौर्यचणं सुभगशोभाशुभ्र आश्रमं सर्वेषां मनांसि रमयति । क्वचिद् बाह्ये गन्धर्वोत्सङ्गलालिताया कल-क्वणनकारिण्या वीणाया इव मञ्जुवादिन्या स्निग्धस्वान्ताया महाश्वेताया विरह-विधुरा मूर्तिं सल्लक्ष्यते तु क्वचित् अलोकसामान्यानां सुखानां निचयमुपभुञ्जा-नायाः गन्धर्वराजतनयायाः सरसमानसायाः कमनीयस्वरूपायाः कादम्बर्याः सरसा कथा श्रोतॄणां चित्तचञ्चरीकाश्चोरयन्ती दृष्टा भवति । सर्वत्रैवालङ्काराणां मधुरं शिञ्जितं श्रोत्रेन्द्रियं प्रीणाति, सर्वत्रैव रागाभिसरायां वृत्तेरभिव्यञ्जना हृदयमुन्मीलयन्ती विभाति । वस्तुत कादम्बरी हि अलङ्काररसयोः प्रियेण प्रका-रेण मेलनकारित्वात्, भाषा भावयोर्भव्यया पद्धत्या संयोजनकारित्वात्, कल्पना-वर्णनयोश्च विचित्रेण विधिना संश्लेषणकारित्वाच्च संस्कृतगद्यकाव्येषु अद्वितीयो एव रचना । रसिकमानसोन्मादनकारित्वान्नूनं कादम्बरी कादम्बर्येव ।

बाणः स्वकीयानां पात्राणां चरित्राणि चारुतयैव चित्रयति । स अस्यामपि कलायां नितरां कुशलः । अत एव तस्य पात्राणि प्राणवन्तीव भूत्वा मञ्जुलमूर्तिमन्तीव भूत्वा पाठकनयनालिन्दे अवतीर्णानि भवन्ति । प्रजापालनपरस्य महाराजस्य शूद्रकस्य वीरमूर्तिः कस्य न हृदये उत्साहं, सौम्यतापसो हारीतः कस्य न चेतसि प्रीतिं, ज्ञानवृद्धो जाबालिः कस्य न हृदि भक्तिं च सञ्चारयति ? अवदातचरितस्तारापीडः, शास्त्रे व्यवहारे च कुशलः शुकनासः, शुभ्राम्बरा तप-स्विनी महाश्वेता, कमनीया च कादम्बरी कुशलेन कविना स्वलेखनी तूलिकया तथाऽऽलिखिता यत् तानि सर्वाण्यपि पात्राणि सचेतसां चेतःसु स्वीयममरं प्रभावं समुद्दिपन्ति ।

स एव वस्तुतस्तु कविः कवियो जगतो विविधान् अनुभवान् समवाप्य

तदीयहृदयस्पर्शिनः पक्षस्य सञ्चयने चतुरो भवति । अस्मिन् हि निरूपे कर्षणात् बाणस्य कविता निर्दोषशान्तकुम्भमिव समिद्धयति । कविर्बाणो यथा नानाविधं लोकवृत्तविषयकं ज्ञानं निदधाति तथैव स चमत्कारवर्षिणीं यथार्थतामपि परिपुष्णाति । तस्यामरे काव्ये सुखसमृद्धिसुन्दरं भोगविलासमुल्लसितं जीवनमेकतश्चित्रितमस्ति, एकतश्च तपस्विनो हि पूतं चरितमालिखितमस्तीत्येतत् सर्वं कवेरनुभूतीनां विशालतां विविधतां यथार्थताञ्च रूपयति ।

कादम्बर्यां प्रकृतेर्वर्णनमतितरां रमणीयं ललितञ्च भाति । केचन संस्कृतकवयः प्रकृतेर्मञ्जुलं रूपं चातुर्यात् चित्रयन्तो दीव्यन्ते, केचन तु तस्या भयावहस्य रोमाञ्चकृतः स्वरूपस्य प्रदर्शने पटीयांसः प्राप्यन्ते परं बाणे हि उभयविधापि प्रवीणता विभ्राजते स प्रकृतेर्मधुरं कठोरञ्च रूपं परमकौशलेन प्रदर्शयन् समवाप्तो भवति । पुरन्धिधाना दृश्यानां स्वरूपाणि हृदयङ्गमानि कारयितुं कविना विविधा अलङ्कारा अवलम्बिताः । उपमोत्प्रेक्षाविरोधाभासपरिसङ्ख्यालङ्काराणां स्तूपान् उत्थाप्य कविः पाठकानां पुरः स्वकीयान् वर्णनीयान् विषयान् मञ्जुलतयावतारयन् विलोकितो जायते । विन्ध्याटव्या भयङ्करतायाश्चित्रणं कविर्यत् परमसफलतया कृतवान् तत्तु मानसे परं विस्मयमातनोति भयं च महता हृदयमापूरयति—

"नखमुखलग्नेभकुम्भमुक्ताफलैः लुब्धैः शबरसेनापतिभिरभिहन्यमानकेसरिशता, प्रेताधिपनगरीव सदासन्निहितमृत्युभीषणा महिषाधिष्ठिता च, समरोद्यतपताकिनीव बाणासनारोपितशिलीमुखा विमुक्तसिंहनादा च, कात्यायनीव प्रचलितखड्गभीषणा रक्तचन्दनालङ्कृता च, ' क्वचित् प्रलयवेलेव महावराहदंष्ट्रासमुत्खातधरणीमण्डला, क्वचिद् दशमुखनगरीव चटुलवानरवृन्दभज्यमानतुङ्गशालाकुला ' ।"

कवेस्तपोवनवर्णनं सर्वविधप्रभावोत्पादकवर्णनीयविषयविभूषितमस्ति, तद् दृश्यं न कदापि विस्मरणीयं भवितुमर्हति यत्र जरदन्धतापसाः परिचितैर्वानरैर्दीप्तहस्तावलम्बाः भ्रमन्तस्तपोवनं प्रवेश्यमानास्तत्रश्च नि:सार्यमाणा दृष्टा भवन्ति । अनेन वर्णनमपि परममेव मनोरमं कृतमस्ति । प्रभात-सन्ध्यान्धकार-चन्द्रोदयादिसम्बन्धीनि प्राकृतिकानि दृश्यानि कविनातिशयसहृदयभावेन याथार्थ्येन च चित्रितानि सन्ति । अच्छोदसरोवर्णनेऽपि कवेः सूक्ष्मेक्षणशक्तेरगाधता सम्यग् दर्शिता भवति । सरोवरस्य निर्मलत्वस्य प्रदर्शयितुं कविरुपमानानामेव महतीं शृङ्खलामेव दीर्घां व्यातन्वानो दृश्यते—

"मणिदर्पणमिव त्रैलोक्यलक्ष्म्याः, स्फटिकभूमिगृहमिव वसुन्धरादेव्याः, निर्गमनमार्गमिव सागराणाम्, निस्यन्दमिव दिशाम्, अवतारमिव जलाकारं गगनतलस्य, कैलासमिव द्रवतामापन्नम्, तुषारगिरिमिव विलीनम्, चन्द्रातपमिव रसतामुपेतम्, हराट्टहासमिव जलीभूतम्...... ।"

कादम्बर्यां प्रकृतेः सौम्यमुग्रञ्च रूपं यावत्या रुचिरतया चित्रितं तावत्यैव ललिततया तत्र विविधानां वस्तूनां वर्णनं कृतमवाप्यते। वर्णनानि संश्लिष्टानि प्रभावपूर्णानि च विधातुं भावांश्च भासुरीकर्तुं कविरुपमोत्प्रेक्षाश्लेषविरोधाभासादिकानामलङ्काराणां महत्या समीचीनया रीत्या प्रयोगं विदधानश्च वीक्ष्यते।

उपमामाश्रित्य इन्द्रायुधस्य वर्णनं कीदृशं मधुरं विहितं; दृश्यतां क्षणम्—
"हरिचरणमिव सकलवसुन्धरोल्लङ्घनक्षमम्, वरुणहंसमिव मानसप्रचारम्, मधुमासदिवसमिव विकसिताशोकपाटलम्......सूर्योदयमिव सकलभुवनार्घार्हम्...... ।"

तस्यैव वर्णनमुत्प्रेक्षामुखेन वीक्ष्यताम् ईषत्—
"अश्वालङ्कारनिहितमरकतरलप्रभाश्यामायमानदेहतया गगनतलनिपतितदिवसकररथतुरगशङ्कामिवोपजनयन्तम्, अतितेजस्वितया जवनिरोधरोषवशात् प्रतिरोमकूपात् समुद्गतानि सागरपरिचयलग्नानि मुक्ताफलानीव स्वेदलवजालकानि वर्षन्तम्...... ।"

राजकुलवर्णनं श्लेषेण क्रियमाणं मनाक् अवलोक्यताम्—
"राजकुलमिव भरतगुणानन्दितम्, ज्यौतिषमिव ग्रहमोक्षकलाभागनिपुणम्, नारदीयमिव वर्ण्यमानराजधर्म्मम्, यन्त्रमिव विविधशब्दरसलब्धास्वादम्, मृदुकाव्यमिवाव्यचिन्तितस्वभावाभिप्रायावेदकम्, महानदीप्रवाहमिव सर्वदुरितापहरम्...... ।"

उज्जयिनीनगर्याः सौन्दर्यं विरोधाभासमाश्रित्य दर्शयति कविरेवम्—

"संगृहीतगारुडेनापि भुजङ्गभीरुणा, सलोपजीविनापि प्रणयिजनोपजीव्यमानविभवेन, धीरेणापि विनयवता, प्रियंवदेनापि सत्यवादिना, अभिरूपेणापि स्वदारसन्तुष्टेन, अतिथिजनाभ्यागमार्थिनापि परप्रार्थनानभिज्ञेन......विलासिजनेनाधिष्ठिता ।"

परिसंख्यालङ्कारस्य तु बाण. सम्राडेव प्रतीयते। यथाऽयं कविः क्लिष्टपरि-

जनपन्यतानितविपादविषण्णस्य तारापीडस्य हृदयगतानां मृदुलानां भावानां चित्रणं नितरामेव रमणीयमवितथञ्च वर्तते—

'अहमपि खलु देवि! कदा मे तनयजन्ममहोत्सवान-दनिर्भरो हरिष्यति पूर्णपात्रं परिजनः। कदा हारिद्रवसनधारिणी सुतसनाथोत्सङ्गा द्यौरिवोदितरविमण्डला सबालातपा मामानन्दयिष्यति देवी कदा च चितिरेणुधूसरो मण्डयिष्यति मम हृदयेन दृष्ट्या च सह परिभ्रमन् भवनाङ्गणम्" ।
" शून्यमिव मे प्रतिभाति जगत्, अफलमिव पश्यामि राज्यम्। अप्रतिविधेये तु विधातरि किं करोमि तन्मुच्यतां देवि! शोकानुबन्धः, आधीयतां धैर्य धर्मे च धीः ।"

चन्द्रापीडस्य प्रथमदर्शनानन्तरं स्वदेशं निवर्तमाने सति तस्मिन्, कादम्बर्या भावानां चित्रणं कविर्यच्चकार तत् कवेर्मनोविज्ञानात्मकस्य विश्लेषणस्य प्रिय निदर्शनमस्ति—

'तिरोहितदर्शने च देवे, सा या स दिगन्त दुग्धोदधिधवलैः प्लावयन्तीव दृष्टिपातैः सितातपत्रापदेशेन शशिनेर्ष्यया निवार्यमाणरविकरस्पर्शा सुचिरं तत्रैव स्थितवती। तमुपेत्य च 'देवेनात्र मरकतशिलामकरिकाप्रणालमसृणसिक्तमा महरितलतामण्डपे शीकरिणि शिलातले स्थितम्' किमपि चिन्तयन्ती दुःख दुःखेन क्षणदामनैषीत्।"

प्रेम भौतिकानां सम्बन्धानां न नामान्तरमिति बाणो मन्यते। तद्ध्यान्तु तत् जन्मान्तरे समुद्भूतं कश्चनाध्यात्मिक एव सम्बन्धोऽस्ति। कादम्बरी 'जन्मान्तरसौहृदम् एव चित्रयति। एषा सा प्रेमकथास्ति या हि अतीत विद्यमानञ्च परस्परं निबध्नाति। सा सन्दिशति यत् प्रेम न कदापि समानस्य मर्यादामतिक्रमते। यत् 'प्रेम' इत्यनेन नाम्ना गीयते तद् भवति सयत नियमञ्च। कालस्तद् विघ्नयितुं न प्रभवति। तस्य स्मृतिस्तु शश्वत् प्रस्फुरन्त्येव अनुभूयते। समवाप्तानेकजनु ससिद्धिचारितार्थ्यं महाश्वेतापुण्डरीकयोः कादम्बरीमहाश्वेतयोश्च प्रेम इत्यत्र निदर्शमानं प्रागवत् प्रमाणमस्ति।

यस्मिन् यस्य प्रणयस्यैषा मनोऽभिरामा कथा लिखितास्ति स प्रणयो वाह्या कर्षणप्रसूतो न, न च स रूपच्छटाराग एव। स तु अस्ति लोकोत्तरानन्दजनित विकारः। स अचेतसश्चेत सचेतसश्चेतसा निबध्नाति मिथः। स बहुजन्मस्वपि-

नीमभिव्यक्तिमादाय विजृम्भमाणो भवति। कादम्बर्या प्रणयलीला नैकमेव जन्माभिव्याप्य सन्तिष्ठमानास्ति सा तु जन्मत्रयवती वर्तते। सत्स्वपि त्रिषु जन्मसु जातेषु सा स्वकीयं माधुर्यं न कीदृशीमपि तनुतामनुभवति। काम शरीर परिवर्तताम्, कर्मवशाच्च प्राणी काम नानायोनिषु विचरेत् पर तदीय हृदीय प्रेम सदैव तमनुयाति। कादम्बरीकथाऽस्माक पुरत इदमेव सत्य निदधाति।

यौवन धनैश्वर्य दोष निरूपणावसरे कवि काव्यमय्या भाषया नीतितत्त्व नितरामेव ललितेन प्रकारेण सन्निदधाति। तत्रापि कविना रूपकस्योपमायाश्च निवेशस्तथा कृतो यद् यौवनस्य चाञ्चल्य लक्ष्म्या उन्मादशीलत्वमैश्वर्यस्य च प्रमत्तत्व युगपदेव साकार भवत् स्वस्वविच्छित्तिपूर्वक पाठकानामग्रे समुपस्थित सञ्जायते। लक्ष्मीमुद्दिश्य कवि कथयति—

"इय सवर्द्धनवारिधारा तृष्णाविषवल्लीनाम्, व्याधगीतिरिन्द्रियमृगाणाम्, परामर्शधूमलेखा सच्चरितचित्राणाम्, विभ्रमशय्या मोहदीर्घनिद्राणाम्, निवास जीर्णवलभी धनमदपिशाचिकानाम्, तिमिरोद्गति शास्त्रदृष्टीनाम्, राहुजिह्वा धर्मेन्दुमण्डलस्य ।" वर्णनमिद रूपकच्छटया रम्यमाणमास्ते। कविचारा महोदारा महोदाराश्च सन्ति। तस्य दृष्टि अतिदूरदर्शिनी अस्ति। तस्य धी ईदृशी निशितास्ति यत् किमपि वस्तु स्वकीयान् सर्वान् अपि गुण दोषान् निज वैशिष्ट्यञ्च न कदापि सगोपितु शक्नोति तस्या पुरत ।

"कववीणस्य गद्य हिंस्रासत्त्वसमाकुल भयावहारण्यानीव" इति केचन आलोचका यद् वदन्ति तत् ते कवे समासबहुलानि ओजोगुणमण्डितानि स्थलान्येव विलोक्य वदन्ति। यत्र कविर्दीर्घदीर्घतरान् समासान् प्रयुयोज, ओजोगुणगुम्फितानि निकटानि वाक्यानि ससर्ज, विरोधाभास श्लेषादीन् अलङ्कारान् आश्रित्य रचनाचातुरी तानि स्थलानि सन्त्यवैवविधानि। यदि तेषा वर्णन तथाविधतया न विहित स्यात् तदा तत्तद्वर्ण्यपदार्थाना यथार्थ स्वरूप तद्गतञ्च वैशिष्ट्य न कदापि साकार भूत्वा सनीवञ्च भूत्वोपस्थित भवितु शक्नोति। यो विषयो यादृशो भवति, कुशल कविस्त तादृश च विषयम्प्रति तदनुरूपामेव भाषा तदनुकूलामेव पद्धति तदनुगुणामेवाभिव्यक्तिविधामपि स्वीकरोति। अटवी शबरसैन्य-राजकुल दिग्विजय चण्डिकामन्दिर जरद्द्रविड सन्ध्यादिकानि स्थलानि तादृश्यामेव पद्धत्या कविर्वर्णयन् दृष्टो भवति यादृशी पद्धतिस्तदर्थमपेक्ष्यते। प्रभावशालिनां पदार्थाना प्रभावस्य प्रदर्शन यदि वर्णन-

विधिः कर्तुं न क्षमते तदा स वर्णनविधिर्व्यर्थ एव। अस्मादेव कारणात् कविः सर्वत्र विषयानुरूपमेव गद्यं निबबन्ध। आलोचका अविचारपूर्वकमेव अस्य कवेर्गद्यमालोचितवन्तः। संस्कृतसाहित्ये बाण इवान्यः कोऽपि प्रभावशालिगद्यलेखकस्तु दृश्यत एव न। आदर्शगद्यस्य यान् गुणान् कविर्हर्षचरिते उल्लिलेख ते गुणास्तस्य गद्ये वैशद्येन विद्यमानाः प्राप्यन्ते।

सन्देश-संलाप-विरहादिका विषया लघुलघुतरकलेवराणि वाक्यानि काङ्क्षन्ति। न ते दीर्घदीर्घतरान् समासान् अपेक्षन्ते न च ते विकटं पदबन्धम्। तस्मात् कविस्तद्विधेषु विषयेषु लघुलघुतरवाक्यानि प्रयुनक्ति न तत्र स समासान् दीर्घान् अवलम्बते न च विकटपद-संघटनामेवोपयुनक्ति। दृश्यताम्—

(क) "किमिति निरर्थमयमात्मा मया शिशुनेवायासितः। किमनेन गृहीतेनागृहीतेन वा विचारयुगलेन प्रयोजनम्। यदि गृहीतमिदं ततः किम्, अथ न गृहीतं ततोऽपि किम्।"

(ख) कुमार, पूर्णा नो मनोरथाः। अधीतानि शास्त्राणि। शिक्षिताः सकलाः कलाः। गतः सर्वास्वायुधविद्यासु परां प्रतिष्ठाम्।

(ग) "यदि सत्यमनया यथा कथितं तथा सर्वमवितथं स्वप्नदर्शनम्। अहं तु न श्रद्दधे। कुतोऽस्माकमियती भाग्यसम्पत्।"

"रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति।
सा किं तरुणी? नहि नहि वाणी बाणस्य मधुरशीलस्य॥"

रीतिप्रियस्य मते बाणस्य गद्ये पाञ्चाल्या अस्य शुभ्रं लावण्यं स्फुरति—

"शब्दार्थयोः समो गुम्फः पाञ्चाली रीतिरिष्यते।
शिलाभट्टारिकावाचि बाणोक्तिषु च सा यदि॥"

संस्कृतसाहित्यपरम्परानुसारेण चेदं यद् बाणस्य कवितामुद्दिश्याभिहितं तत् किञ्चिदुचितमस्ति—अनुप्रासानुप्रासाद्यैः संस्कृतभाषा कविना प्रस्थाप्यमानास्ति कथा च पुष्पलतेव छत्रधर इव मञ्जुलभावेन परिष्क्रियमाणास्ति।

बाणस्य प्रतिभा सर्वव्यापिनी आसीत्। सा प्रस्तुतसन्दर्भं न तावन्मुञ्चति यावत् भवति न स पूर्णतयाऽऽलोड्यमानः। वर्ण्यस्य विषयस्य सर्वाङ्गीणतया वर्णनकारित्वादेव कविमिमं लक्ष्यीकृत्येयं गाथा श्रूयते—"बाणोच्छिष्टं जगत् सर्वम्"। बाण्याक्षरमसीमा यतो विकासोऽस्य कवितायां दृष्टो भवति तस्या उत्कृष्टतमोत्थानं तत्र विलोक्यैव आचार्यगोवर्द्धनः कविमिममेवं स्तौति।

"जाता शिखण्डिनी प्राग् यथा शिखण्डी तथाऽवगच्छामि।
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूव॥"

वाग्वनितायाः सुमधुरसङ्गीतगायिका यत् तस्याः अधरीकृतवीणामधुरक्वणत्वात् मल्लादर्शी तामेव स्तौति।

"बाणी पाणिपरामृष्टवीणानिक्वाणहारिणीम्।
भावयन्ति कथं वान्ये भट्टबाणस्य भारतीम्॥"

बाणो विधिवशस्वितामिमां स्वकीयां कादम्बरीं नाम कृतिं समर्पयितुं न शशाक। तस्याः समाप्तेः प्रागेव स स्वर्गारोहणमकरोत्। तस्मात् सुतः पुलिन्द्रभट्टस्तस्याः शेषभागं समाप्तिमनयत्। तत्पूरितोऽवशिष्टो भाग एव उत्तरार्धनाम्ना प्रथते। उत्तरार्धारम्भे बाणात्मजः पुलिन्द्रभट्टः लिखति—

याते दिवं पितरि तद्वचसैव सार्धं विच्छेदमाप भुवि यस्तु कथाप्रबन्धः।
दुःखं सतां तदसमाप्तिकृतं विलोक्य प्रारब्ध एष च मया न कवित्वदर्पात्॥

अन्यच्च, एतादृशं विद्वत्तमं पितरं प्राप्य पुत्रः साहित्यसंसारे कदाचिदेव कोऽपि द्वितीयः स्यात्। अथ च स पुनराह—पितुः कृपाप्रसादादेव तद्गद्यमिव गद्यं स्रष्टुमहं समो जातोऽस्म्यथाऽपि कादम्बरीरसभरेण तथा मत्तः कृतोऽस्मि यत् किञ्चिदपि न वेद्मि—

*कादम्बरीरसभरेण समस्त एव*
मत्तो न किञ्चिदपि चेतयते जनोऽयम् ।
भीतोऽस्मि यत्र रसवर्णविवर्जितेन
तच्छेषमात्मवचमाप्यनुसन्दधानः ॥

बाणस्य विलक्षणप्रतिभापेशलत्वात् प्रकाण्डपाण्डित्यवत्त्वाच्च महाराजः *श्रीहर्षवर्द्धनस्तस्मिन् अतितरां श्रद्धां न्यदधात्* । सः *तस्य परमप्रियपात्रं* सम्मानास्पदञ्च बभूव । श्रीहर्षचरितं प्रणीय बाणोऽपि तं नितरां मत्युपचकार । सत्यमेवेदं बाणप्रशंसायां जगता गीयते—

हेम्नो भारशतानि वा मदमुचां वृन्दानि वा दन्तिनां
श्रीहर्षेण समर्पितानि कवये बाणाय कुत्राद्य तत् ।
*या बाणेन तु तस्य सूक्तिनिकरैरुट्टङ्किताः कीर्तय-*
स्ताः कल्पप्रलयेऽपि यान्ति न मनाङ् मन्ये परिम्लानताम् ॥



## पण्डिता क्षमा

अस्मत्प्रिये भारते देशे भगवदनुक्रोशेन चिरन्तनादनेहसः पुरुषा इव पुरन्ध्रयोऽपि प्रौढपाण्डित्यस्य कवित्वशक्तिजुषः समये समयेऽजनिषत। पुरातनतमे वैदिकयुगे तु कृता मन्त्रद्रष्ट्र्यो ब्रह्मवादिन्यो लोपामुद्रायमीप्रभृति विदुष्यः समभूवन् —इति को न वेद वेदविद्यानुशीलयिता। राजर्षिजनकस्य सदसि ब्रह्मतत्त्वमधिकृत्य विमृशन्तीं मैत्रेयीं गार्गीं च को नाम नोपनिषत्साहित्यसेवी जानाति।

एष रामायणमहाभारतादिवर्णी समयस्तु अतिपुराणः। तस्य समयस्य तु इतिवृत्तमपि न प्रकाशे समुपतिष्ठते परं यदेतत् कालात् पूर्ववर्तिनीं सहस्राब्दीं प्रति दृष्टिः क्षिप्यते तदाप्यस्माकमग्रे बह्व्यो महीयस्यो विदुष्य उपस्थिता भवन्ति। विज्जका सुभद्रा मोरिका मारुला शीलभट्टारिका मधुरवाणी गङ्गादिकाभिर्विचक्षणाभिर्गता भूयस्यः शताब्द्योऽस्मत्पुरस्तादित्येतत्साधु विदितमेव संस्कृतसाहित्येतिहासविदां पुंसाम्। नैवंविधः कालो यत्र नास्माकीनो देशस्तासां विदुषीणां ललनानामालोकेनालौकिकेनालोकितः सम्प्रत्यपि निर्मलश्यामरसादिकाव्यकारिण्यः श्रीनिर्मलाप्रभावती प्रभृतयोऽन्यकानेकमेवात्र यो विद्यावय शास्त्रपारगामिन्यो देव्यो वीक्षिता भवन्ति। एतासु साम्प्रतिकीषु कवयित्रीषु अस्मद्गेयचरिता पण्डिता क्षमा विभ्राजते।

श्रीमती भारतनारीभूषणं विद्वदुत्तमा क्षमा स्वकीयेन पूतोद्भवेन पुण्यपत्तन नामधेयस्य पत्तनस्य पुण्ये नवाधिकाष्टादशशततमे शतीय वत्सरे जुलाईमासे चतुर्थ्यां तारिकायां प्रगुणीकृतवती। तदीयाः पितृपादाः पण्डितप्रवरश्रीशङ्कर पाण्डुरङ्गमहाभागाः संस्कृतभाषाया महामनीषिण आसन्। भर्ता च तस्याः श्रीमान् डॉक्टर राघवेन्द्रराव शल्यभिषग्वरेषु महतीं प्रतिष्ठां जगाहे।

मान्या श्रीक्षमा प्राच्यप्रतीच्ययोरुभयोरपि विद्ययोः श्लाघनीयमधिकार मुदधात्। भारतीयता तत्रातिशयभास्वरभावेन व्यराजत। सा भारतीय जीवन संस्कृतिञ्च प्रदर्शयितुमाङ्ग्लभाषायामनेककथानाटकादीनि व्यरचयत्। संस्कृत भाषाया मृदुता भावाभिव्यञ्जनक्षमता गम्भीरगरीयस्त्वादिका भूयिष्ठा विशिष्ट

तास्तां नितरामावर्जयन्ति स्म । तस्मात् सा आंग्लभाषां विहाय स्वकीयाः कृतीः कर्तुं संस्कृतभाषामशिश्रियत् । संस्कृतभाषामुद्दिश्याथ स्थिताशयजुषं विचार-मभिव्यनक् ।

"संस्कृतभाषायाः शब्दकोषोऽन्यासां भाषाणां शब्दकोषेभ्यो गरीयान् ; तत्र अभिव्यञ्जनायाः करणानि तेभ्यः करणेभ्यो महीयांसि बलीयांसि च विभान्ति यानि संसारस्य अन्या भाषा जुषन्ते । अस्मादेव हेतोः संस्कृतभाषा लक्षशो वर्षाणि यावद् अखिलमपि विश्वमैक्यसूत्रेण निबन्धुं प्रबभूव । मङ्गलनाम्मस्फ-वलशालित्वं तस्याः, तस्या जीवितभाषात्वमभिव्यनक्ति । अविदितगुणापि सा जननिकरकर्णकुहरेषु वमति मधुधाराम् । सकलमपि भूभुवनं तस्या जीवनं लभते । भौगोलिकया ऐतिहासिकया च दृशा उभाभ्यामपि दृग्भ्यां सा चमत्कारं वितनुते । काश्मीरप्रदेशात् कन्याकुमारीं यावत् पाञ्चालेभ्यः कामरूपान् यावत् भासमाना सर्वा अपि भाषा अभिव्याप्य सा विभ्राजते । तत्र भारतस्य त्रयोऽपि कालाः प्रतिबिम्बिता भवन्तो दृश्यन्ते । तत्र क्वचिद् वैदिकस्य भारतस्य उषा सम्पूर्णेऽपि संसारे चेतनां सञ्चारयन्ती प्रकाशं वर्षन्ती गतिं प्रीतिञ्च उद्गिरन्ती निरन्तरम् , क्वचित् तत्रौपनिषदी निरस्ततमस्का ज्योतिर्धीः भुवनानि विद्योतयन्ती, क्वचिद् रामायणकथा मानवादर्शश्रियं वितन्वन्ती क्वचित् महाभारत-घनघटा स्वयुगस्य छटामुन्मेषयन्ती, क्वचिद् बौद्धकालस्य लक्ष्मीः स्ववैभवं विकिरन्ती, क्वचिद् गुप्तसम्राजां च प्रतापप्रभा पुरः स्वयशः प्रसारयन्ती दृग्गोचरीभवति यथा तत्रोज्ज्वलातीतस्य छविर्निधीयते तथैव तत्र वर्तमानकालिक-युगस्यापि शान्तः प्रकाशः प्रस्फुरति, आशास्यते च तत्र तदपि भाविकाले कम-नीयं जगद् वीक्ष्येत यत्र सर्वेऽपि संस्कृतं भाषमाणाः श्रुता भविष्यन्ति ।

वर्चस्विनी क्षमा महाराष्ट्रवासिनी महिलाऽऽसीत् । तस्याः शैशवं सौराष्ट्रेषु व्यतीयाय । प्रकृत्या सा दीन-दरिद्रवत्सलाऽऽसीदतस्तदीये साहित्ये सर्वत्र दीन-दरिद्रजनोद्धरणभावनामन्दाकिनी प्रवहन्ती दृश्यते । प्राचेतसं महर्षि वाल्मीकिं यथा क्रौञ्चवधो रामायणं नाम काव्यं स्रष्टुं प्रगल्भं प्रवर्तयामास तथैव रसिका-मिमां क्षमामपि भारतीयस्य दैन्यं दारिद्र्यञ्च काव्यानि प्रचारयितुं प्रेरयामास । सा च प्रतिभावेशवत्त्वात् सा अचिरेणैव कालेन पुष्कलं लोकप्रियं साहित्यं ससर्ज । अद्यपर्यन्तं तद्रचिता इमा रचनाः प्रकाशमायाताः सन्ति—

(१) सत्याग्रहगीता, (२) कथामुक्तावली, (३) कथापञ्चकम् ,

( ४ ) विचित्र परिवृत्यात्रा, ( ५ ) शङ्करजीवनाख्यानम् , ( ६ ) मीरालहरी, ( ७ ) उत्तरसत्याग्रहगीता, ( ८ ) तुकारामचरितम् , ( ९ ) रामदासचरितम् , ( १० ) ग्रामज्योति , ( ११ ) ज्ञानेश्वरचरितम् , ( १२ ) एकाङ्किसप्तकम् ।

काश्चन रचना मम्प्रत्यपि प्रकाशं न गता सन्तीत्यपि कथ्यते। क्षमादेव्या साहित्यं काव्य कथा गीति नाटक विविध प्रकीर्णकाख्येषु पञ्चसु भागेषु विभक्तमस्ति ।

काव्यम् सत्याग्रहगीता नाम तदीयं काव्य त्रिभागात्मकं विद्यते । तत्र गान्धियुग चित्रितमस्ति । प्रथमे भागे महात्मनो गान्धिन एकत्रिंशदधिकैकोनविंशतिशततमेशवीयात् प्राग विहितानि राजनीतिकानि गान्धीरविन सन्धिप्रभृतीनि कार्याणि गीतानि सन्ति। द्वितीयभागे—उत्तरसत्याग्रहगीतायाम्—एकत्रिंशदधिकैकोनविंशततमेशवीयाद्वारा चतुश्चत्वारिंशदधिकैकोनविंशतिशततमेशवीयान्त यावन्महात्मा गान्धी हरिजनोद्धार हिन्दीभाषाप्रचार स्वदेशीयवस्तु प्रचार नैर्देशिकयमनबहिष्कार विविधराष्ट्रियसंस्थोद्योगशालाद्विप्रतिष्ठापनादिकानि यानि महान्ति कार्याणि कृतवान् तानि तत्र वर्णितानि सन्ति । तृतीयभागे–जयसत्याग्रहगीतायाम्—महात्मगान्धिना सञ्चालितेन सत्याग्रहान्दोलनेन समग्रारस्य स्वातन्त्र्यस्य कीर्तनं, साम्प्रदायिकताजनितविकाराणां चर्चा, महात्मनो बलिदानञ्च गीतमस्ति ।

क्षमा निसर्गत कवित्वशक्तिं समवाप । सा ता सामयिककाव्य प्रणयने प्रयुयोज । संस्कृतसाहित्ये तदीया रचना सन्ति सर्वथैव अभिनवा। तत्र नवनवा भावोद्भावनपरा ऊहा शोभन्ते । वथावस्तुविन्यासप्रकारश्च सर्वथैव नवीनो भाति । सर्वत्रापि स्वाभाविकतया वैज्ञानिकतया ललितया च रीत्या-ऽऽधेयवस्तूना प्रस्थन कृतमस्ति । तत्र भारतीय संस्कृत्या सभ्यतायाश्च उत्कृष्टतामुद्रातु य स्तुत्य पन्था स्वीकृतो वर्तते स आधुनिकमनोवृत्ति नितान्त-सरलतया स्वाधीना कर्तुं क्षम ।

साम्प्रतिके समय य देऽपि श्रेष्ठा संस्कृतसाहित्यकारा सन्ति तेषु क्षमादेव्येव अग्रगणनीयास्ति । संस्कृतसाहित्यरसज्ञा तत्साहित्याद् या मुद प्रीतिञ्च लभन्ते न ता कस्मादप्यन्यस्मादाधुनिकात् कस्यन्तरविरचितात् साहित्यात् । १९४४ तमेशवीयाब्दे दक्षिणभारतान्तर्गतत्रिवेन्द्रमस्थ गान्ध्याश्रमप्रार्थनया संस्कृतरसिभि संस्कृतभाषाया यानि गान्धिजीवनचरितविषयकाणि काव्यानि

*प्रणीयन्ते निर्णेतारस्तेषां काव्यानां मध्ये हि एतत्प्रणीतमेव काव्यं श्रेष्ठतमत्वेन* निर्णीय एतामेव रचयित्रीं प्रथमेन पुरस्कारेण सम्मानयन्तिस्म ।

डॉ० राधाकृष्ण-एम० आर० जयकर-झोपाह्वामरनाथप्रभृतयो विद्वद्धौरेया क्षमायाः कवित्वशक्तिं पुनः पुनः प्रशंसन्तः श्रूयन्ते । नात्र संशयो यत् तदीयाः कृतयः साम्प्रतिके युगे पुनः संस्कृतभारत्यां प्राणान् प्रातिष्ठिपन्। वर्तमानेऽनेहसि प्रणीतेषु संस्कृतकाव्येषु प्रायेण परम्परागता रूढिवादितैव प्रतिलक्ष्यते । परं क्षमायाः काव्येषु तु सर्वत्र प्रगतिवादिता शङ्खं धमन्ती श्रूयते । इदानीन्तनस्य कस्य काव्ये दीनजनानामार्तनादः श्रुतो भवति ? कः कविर्निःस्वानामपि दिगम्बराणामपि दुर्बलानामपि दयनीयायाः दशायाः वर्णने स्वकीयं स्वान्तमावर्जयत् समवाप्यते ? इयं क्षमैव दरिद्रभारतस्य कारुणिकीं मनोमर्मभागभिदुरां कथामस्मत्पुरः साश्रं निदधानाऽवलोक्यते । एतस्या एव काव्ये—

"ध्यायं ध्यायं दशां दीनां बन्धूनां दुःखितोऽभवत् ।
तदुद्धारमनुध्यायन् विनिद्रोऽगमयन्निशाम् ॥"

× × × ×

यावन्न वेष्टिताः सर्वे बन्धवो मे यथोचितम् ।
स्थास्यामि स्वल्पवेशोऽहमिति तेन धृतं व्रतम् ॥

इत्येवंविधा वर्तमानभारतस्थितिप्रदर्शनकारिणः श्लोका समवाप्यन्ते ।

एवमेव विदुषी अस्यैवंविधा मदीये काव्ये पारतन्त्र्यं मरणादपि अनिरिष्यते इत्येतदुच्यते—

"श्वेतखादिधरा सन्तः सन्नामा वैतसेश्वराः ।"

स हि तन्तुचक्रस्य गुञ्जनमेतस्याः काव्यादन्यत्र श्रूयते—

"गुञ्जनं तन्तुचक्रस्य श्रूयते स्म गृहे गृहे ।"

एतदीयं हि आदर्शवाक्यम्—

"शूद्रो वा ब्राह्मणो वापि क्षत्रियो वा कृषीवलः ।
देवदृष्ट्या समाः सर्वे तिष्ठन्तु नरोत्तमाः ॥"
भेदः कृतो मनुष्येण न धात्रा समदर्शिना ।
शीलं चिह्नं सुजातस्य न जातिर्न च जीविका ॥
अतोऽन्त्यजानस्प्रष्टुं नाधिकारोऽस्ति कस्यचित् ।
असौ मलिनकर्माहो इत्युक्तिर्न तु किल्बिषम् ॥"

इत्यादिभिः श्लोकैर्जातिवादमन्त्यजानस्पृश्यत्वञ्च निन्दत् क्वचित् ;

"हिंसां न कोऽपि कुर्वीत मनोवाक्कायकर्मभिः ।
अहिंसयैव सिद्धिः स्यादित्याह पुनः पुनः ॥"

इत्यादिना हिंसाया हेयतां किञ्च अहिंसाया ग्राह्यतां क्वचित् ;

"बलं सर्वबलेभ्योऽपि सत्यस्यैवातिरिच्यते ।
सत्यज्ञानबलः श्रेयान् सबलात् सत्यवर्जितात् ॥"

इत्यादिना सत्यस्य प्रकृष्टतामुपन्यस्यच्च क्वचित् प्राप्यते । एतावदेव न, अस्यास्तु काव्यमस्माकमग्रे देशार्थमसूनपि जुह्वतस्तस्मान् दर्शयति, तत् तान् मानवान् अतितरां भर्त्सयति ये सन्ति तु ख्रीस्तधर्मावलम्बिनः परं दिवानिशं हिंसात्मकानि कठोराणि कर्माण्यनुतिष्ठन्ति निपीडयन्ति च मानवजातिमन्याय-मत्याचारञ्च विधाय । अतः काव्यमिदं मानवं नरकरूपमार्गं दर्शयति । राष्ट्रियता-भावविभाविता पावनध्येयेन कस्मादपि नान्यस्मात् साम्प्रतिकात् संस्कृतकाव्यात् संलभ्या भवति ।

अहह क्षमाया काव्यमपीदं तु न परं श्रीमद्भगवद्गीताया आनन्दा-मृतकणानां वर्षेव अनिशमारभते । दृश्यताम्—

स्वधर्मं प्रतिपद्यस्व पुरस्त्वं च रणम् ।
अहिंसकः क्षत्रियोऽयं प्रसक्तं स्वकर्मणि ॥
अपमानमिमं सोढुं कथं शक्नुथ बान्धवाः ।
स्वकन्याधिकारिणो भीतिमुत्तिष्ठत सर्वेऽस्मिन् ॥

साहित्य स्वयुगस्य मुकुर इति सत्यमेवोक्तं केनापि। क्षमादेव्या कृतयो यद्यपि पठिता स्युस्तदा पाठकास्तत्र स्पष्टमेव नितान्तसरलतया गान्धियुगस्य भारतं द्रष्टुं प्रभवेयुः। तेषां पुरः समग्रमपि भारतं सजीवं चित्रमिव भूत्वा समुपतिष्ठेत्। ते तद् विलोक्य ज्ञास्यन्ति आंग्लशासनस्य दमनं, कृषीवलानां शोचनीयां दशां देशस्य च कारुणिकीमवस्थाम्। यथा चित्रशालामधिष्ठिता जना पटोपरि प्रतिबिम्बितानि अनवच्छिन्नतया एकैकशो बहूनि चित्राणि पश्यन्ति तथैव क्षमादेव्याः साहित्यमपि चित्रशालास्ति। तत्र दर्शकः कस्मिंश्चिच्चित्रे सन्मार्गंप्रति आंग्लशासनमानेतुं प्रयतमानं महात्मानं गान्धिनम्, कस्मिंश्चिच्चित्रे हरिजनान् उद्धरन्तं तम्, कस्मिंश्चिच्चित्रे भेदो सर्वत्र विगतमस्पृश्यताभावं विचार यन्तं तम् कस्मिंश्चिच्चित्रे भारतीयान् अधिकारान् आंग्लजाति याचमानं सविनयं तम् कस्मिंश्चिच्चित्रे देशस्वातन्त्र्याय कारागारीयकष्टानि सहमानं तम्, कस्मिंश्चि च्चित्रे देशभक्तान् बहून् बहुविधानि दुःखानि सहर्षं निषेवमाणान्, कस्मिंश्चिच्चित्रे प्राणान् अपि जुह्वतोऽनेकान् तरुणान्, कस्मिंश्चिच्चित्रे दीनदरिद्र विपन्नादिवृन्द सकरुण क्रन्दनं, वैदेशिकवस्त्रादि निरोधनाय देशसेवकान् कठोर प्रयत्नं विदधा नांश्च कस्मिंश्चिच्च चित्रेऽन्यानि च बहुविधानि देशस्य शोचनीयानि मनोमर्म भागानिपीडकानि दृश्यानि दर्शं दर्शं नितरामेव व्यथामनुभवति। वस्तुत क्षमादेव्या रचना पाठकस्य हृदये देशभक्तिं प्रगाढां समुत्पादयन्ति। ता अधीत्य मानवो न कोऽपि कदाचिदेवंविधो यो देशानुरागी न स्यात्। ता मानवस्य हृदयाद्सद्भावान् दूरीकृत्य तन्निर्मलं कर्तुं क्षमा सन्ति। ता मानव सङ्कीर्णतातोऽनुदारतात क्षुद्रतातश्च निर्गमय्य तमुदारे पवित्रे विकारविहीने क्षेत्रेऽव तारयन्ति। तस्माद् वस्तुत क्षमादेव्या काव्यानि दर्शनग्रन्था इव सन्ति। आधुनिक युग काव्ये या या विशिष्टता दिदृक्षते तां तां विशिष्टतां तत्साधु समवाप्नोति।

पण्डिता क्षमा यथा सत्याग्रहगीतादिकाव्यानि प्रणीय संस्कृतकाव्यसाहित्य संसारे अदृष्टपूर्वामेव छटां व्यतनोत् तथैव सा कथानां सृष्टिं विधाय संस्कृतकथा साहित्यसंसारमपि नूतनयैव कयापि अतुल्यैव भव्यविभया व्यभूषयत्। भारत भूषा क्षमा स्वकथासाहित्यरचनया संस्कृतकथासाहित्यस्य गरिमाणमुदनमयत्। संस्कृतसाहित्ये कथानामपि यद्यपि प्राप्यता प्रेक्ष्यते चिरन्तनात् कालात् परम् आधुनिक पाश्चात्य संसारे कथोल्लेखनस्य या विधा या पद्धतिः या च नूतनामेव

निश्चितिमवलम्बत प्राचीनं संस्कृतकथासाहित्यं न तस्या विधाया न तस्याः पद्धत्या न च तस्याः विच्छित्या स्पृष्टमवाप्यते । पण्डिता क्षमा संस्कृतकथासाहित्यं हि आधुनिककथासाहित्यस्याभिर्विशिष्टताभिरलङ्कुरुते । सा तत्र मानवहृदयस्य तत्तत्सन्निवेशयितुं प्रायतत यस्य पाश्चात्याविर्भावेन प्रतीच्यप्रथ्य कथारसिकेभ्यो भृशं रोचते ।

मानवः परिस्थितीनामस्ति किङ्करः । न सांसारिकं वैभवमनायासेनैवाक्रष्टुं शक्नोति, प्रकृतिदौर्बल्यात् स इन्द्रियाण्यपि नावशातुं प्रभवति, विपदि स क्षिप्रमेव धैर्यधनं मुञ्चति धनं न स्वदिशं, सौन्दर्यं न स्वामाशां, पदं न नैजदिशां, लोकस्थानिसौभाग्यलोलता च तं स्वकक्षुभमाकर्षन्ति सततन्दिवम् अतः स्वकीयानां मानसिकवृत्तीनां स्वरूपोद्भावनमतितरामपेक्ष्यते—इत्थेषा विचारधारा साम्प्रतिके संसारे द्राघीयसी भूत्वा सर्वत्र प्रवहमाना केन न दृश्यते ? पण्डिता क्षमा वर्तमानस्य लोकस्य रुचिं स्वाद प्रवृत्तिञ्च सम्यगधीतवती । मानवीया मनोवृत्तिः कुत्र रमतेऽतितरामित्येतद् विज्ञाय यदौषधं तस्य मनोमलिनतां परिमृज्य तद्धितं कर्तुं क्षमते तदेव सा उपायुनक् । सा स्वकथासाहित्ये मनो या या दिशा गच्छति यद् यद् कर्तुं तत् प्रवर्तते यद् यद् तत् प्रीणाति तत् सर्वमेव चित्रयतितराम् ।

अत्र 'प्रेमरसोद्रेक' कथा पण्डितक्षमाप्रणीता स्वदृष्टेः पुरः प्रतिष्ठाप्य एतत्प्रदर्शनस्य चेष्टा कृता स्यात् यदेतस्या विदुष्या कथा वस्तुतस्ता उपर्युक्ता सर्वा विशिष्टता सन्निवेशयन्ति या खलु इदानीन्तनीं प्रतीच्यधरणीं रमयन्ति निरन्तरम् । वर्तमानं जगत् साधारणतमानां मानवानां जीवनदर्शने रुचिं दधाति । तद् रजकानां चर्मकाराणां सूचिकाराणां श्रमजीविनामन्येषाञ्च निम्नतमश्रेणीसमुद्भवानां नराणां नारीणाञ्च दैनिके जीवने घटमानानां घटनानां वर्णनं महतीं प्रीतिं निबध्नाति । तस्मात् कारणात् पण्डिता स्वीयप्रेमरसोद्रेककथायां सपदि पाठकस्य वृत्तं गायति । प्राचीनासु संस्कृतकथासु नैतादृशानि पात्राणि गेयत्वेन अवचितानि । तत्र नृपतीनामभिजातानामुच्चवर्णानां तपस्वि भक्त धार्मिकादीनामेव चरित्राणि चित्रितानि दृश्यन्ते न तत्र नृशंसो दस्युः, न पापीयान् बन्दी, न परनारीचारः पामरः, न पतिव्यक्ता वनिता न च समाश्यातनाभिपीड्यमानविधवादीनां समुदायो हि वर्णनीयविषयत्वेन परिगृहीतः ।

कल्पयितुमपि कथेयं कमनीया अस्मद्दृष्टिपथे हि एका पतिपरित्यक्ता नारी किञ्च

कृषीवल-नाविकादीन् बहून् साधारणतमान् जनान् अवतारयति। अथ चैषा कथा शालिक्षेत्र-ध्वस्तदेवायतन-विशङ्कटगोष्ठ-पांसुलमार्ग-सुश्लिष्टगुल्मादिकानि दृश्यानि वितनोति। समग्रमपि वातावरणं ग्राम्यं विद्यते। न तत्र वर्त्तते धनधान्यसमृद्धानां नगराणां छटा। प्रायेणास्मदीयेयं धारणा यद् धैर्यं महत्स्वेव पुरुषेषु राजते न जनसामान्ये। इयं पण्डिता ह्यामिद्रायां मेघध्वजपालिकायां दारिकायामपि तं गुणं दर्शयति। प्रायेण विश्वसिमो वयं यत् सुशिक्षिता जना एव अपरिचितेष्वपि जनेषु समुदाचारं व्यवहरन्ति न तदितरे। परं कथाया अस्या लेखिका साधारणतमे स्थविरेऽपि समुदाचारविधायिनीं धियं चित्रयन्ती दृश्यते।

मानवस्य मानसं दया-क्षमा-कठोरता घृणा-स्नेहादीना गुणागुणानामास्पदं भवति—इत्येतद्धि तथ्यमेतस्यां कथायां समन्ताद् जायते। अत्र कथातः एतस्याः कांश्चन पङ्क्ति उद्ध्रियन्ते ताभ्यो मानवहृदयस्य ता विशिष्टता विदिताः स्युः—

( क ) "ततः क्षणमात्रं विमृश्य शङ्कां च दूरीकृत्य निबद्धपुत्रविमोचनपराभूत्।"

( ख ) "……परमवेदनया भृशं पीडितोऽस्मीति प्रतीता च तत्क्लेशं प्रशमयितुं निश्चिकाय।"

( ग ) "……निर्गंसात् प्राक् मयावश्यं बालिकायै किमपि पारितोषिकं प्रदेयमिति मनसि कृत्वा स्वमहानुभावं दर्शयितुं वृद्धकृषीवलायासावाचक्ष्यौ।"

( घ ) "अनपत्यासीन्मद्गेहिनी। तस्याश्चान्यतमातिकुपितस्तां सार्धत्रयोदशवर्षेभ्यः प्राग् गृहाद्विःशासितवानहम। नान्यां च कन्यां परिणीतवान्।"

( ङ ) "गृहसुखाभावात् परिम्लानोऽस्मि तया। तस्या भावी भर्ता भाग्यशाली भविष्यति।"

( च ) "दीयतां पञ्चशती रूप्याणामर्हसि अनायासेनैव। यत्र मे पितामहस्य पितामहाश्च निवासस्थानत्रैव समुषितो ममापि। विद्यते हि दिष्ट्या पर्याप्तं धनसंपत्तिः सन्निधौ मत्पौत्रस्यार्थमिति स—निश्चयं मोक्ष्यामि च सपदि संप्रत्यधोऽस्यै स्थविरकृषीवलस्याहं गृहमुपाविशत्।"

पण्डितायाः कथाया अपास्तु सौन्दर्यमिदमपि राजते यत् सा तत्र प्रथमं हि आदौ किमपि रहस्यबीजं वपति। ततः कृत्वा सा पाठकानां मानसेषु कौतूहलं जनयति। कथायां चरमं तेन विधिना सा विदधाति यत् उपसंहारकौतूहलवर्धनकारिणं कथायां सञ्चारयति। ततश्च अस्मासौ पितामहहृदयस्यापि रहस्यं समु-

द्रावयति । पाठकाः कथामधीत्य निशम्य वा चकितचकिता इव भूत्वा कमपि विचित्रमेवानन्दमनुभवन्ति ।

पण्डिता क्षमा सरसं सरलञ्च गद्यं निबध्नाति । तदीये गद्ये प्राञ्जलः प्रवाहः प्राप्यते । नैसर्गिकी छटा परिवीक्ष्यते । वर्णनक्रमो नातिदीर्घो न चातिह्रस्वो भवति । पाठकस्तत्र क्वापि न क्लाम्यति न ताम्यति अपि तु आस्वादनार्थं परमोत्साहमश्नुते । यद्यपि एतस्या मनीषिण्या गद्यं न श्लेषश्लिष्टं न अलङ्कारप्रभूतभारक्लान्तं न दीर्घदीर्घतरसमाससङ्कीर्णं खलु विलोक्यते परं पाठकानां मनो यथात्र रमते, सम्भवतो, न तथा तत्र तत्र रमते प्रीतिं वा विन्दति यद् भवति श्लेष-समासोक्तिविरोधाभासयमकादिभिराकीर्णम् । एतदीये गद्ये वस्तुतस्तु संस्कृत भारती प्रसन्नता सुबोधता च परिपुष्णन्ती प्राप्यते । अत्रोदाहरणद्वयमेव निधीयते येन पाठका गद्यसौन्दर्यसुधाकणिका काञ्चन पातुं प्रभवेयुः —

(क) 'नास्मि त्विमात्मभरणक्षमा । चिराय त्वयात्रावस्थितम् । परिश्रान्तोऽसि । क्षुधार्तोऽपि त्वम् । याहि गेहम्, याहि शीघ्रम् । तवाम्बा त्वदागमनोत्कण्ठिता त्वां प्रतीक्षमाणाऽसहाया स्थिता स्यात् ।"

(ख) "सेयं सरोजलोचना कुन्दकुड्मलदन्तपङ्क्तिः प्रवालाधरा चञ्चलालका शिरीषकुसुमकोमला शारदकौमुदीव रुचिरा धैर्यशीलापि मृदुवचना धीरापि स्थिरमतिः स्नेहनिर्झरसम्प्लुता दमयन्तीव परमदमनशीला क्षमातलागता सुरसुन्दरीव कमनीया कृषीवलस्य क्षेत्रादिकार्येषु मुदा प्रचरयन्ती सुखमास्त ।"

(प्रेमसमोद्रेक)

पण्डितायाः क्षमायाः कथामुक्तावलीमुद्दिश्य सारदारणाश्रिर आह—"संस्कृतकथामुक्तावली आधुनिकस्य युगस्य सर्वोत्तमा रचनास्ति । एतदीया भाषा सरसा सरला प्रसादगुणगुम्फिता वर्तते । अत्र वर्तमानं भारतं नैजस्वरूपे प्रतिबिम्बितं दृश्यते । वस्तुत एष कथासंग्रहः क्षमायाः पण्डितायाः संस्कृतसाहित्यस्य कृते अतुलं चिरस्थायि प्राभृतम् ।"

गीति —मीरालहरी नाम गीतिकाव्यं गीतिकाव्येषु शुद्धसंस्कृतपदपङ्क्तिपात्रं समुद्धतमविचारविभावितमनवद्यकल्पनाकल्पितमास्ते । तत्र भावनानां विभा चमत्कारचञ्चल्यहृद्यसमञ्जसता च अनुपमैव प्रेक्ष्यते । नूनं गीतिकाव्यमिदं प्रणीय अनया भावुकहृदयया संस्कृतगीतिकाव्यानां श्रीः संवर्द्धितैव ।

नाटकं हि काव्यसाहित्यस्य श्रेष्ठमङ्गम् । पण्डितक्षमाया नाटकानि तत्प्रयो-

जनं समीचीनतया सम्पादयन्ति यद् हृदि निधाय नाटकानां सृष्टिर्नाटकाचार्यं कृता। 'गिरिजयप्रतिज्ञा'विधवादिनाटकानि तदीयानि वर्तमानयुगस्य प्रतिनिधित्वमनुतिष्ठन्ति। एकाङ्कि साहित्यमपि तस्या एकाङ्किनाटकलाया स्वीयमाभ्यन्तरं रूपं परिगृह्य दीप्यन्ते।

विविधरचना—विविधरचनासु इह पण्डितक्षमाया पत्रभाषणादीनामन्तर्भावो भवति। इमानि च पत्रभाषणादीनि सन्ति महत्त्वशालीनि। एभ्योऽपि सर्वे आ मानमुपकर्तुमर्हन्ति। प्रकाशिते सति एवंविधे साहित्ये लोको नूनं ततः कल्याणं स्वमर्नैयित्तु शक्नुयात्।

श्रद्धेया कवयित्री क्षमा न केवलं साहित्यस्रष्टा एव इत्यममवत परं सा भारतभाग्यप्रकाशमहात्मगान्धिनो नायकत्वे ग्रामे ग्रामे नगरे नगरे च परिभ्रम्य स्वकीयैः श्रेष्ठैराचारैरुदारैश्च विचारैर्दास्यशृङ्खलानिबद्धाया जनताया स्वातन्त्र्यप्रियताया स्फूर्तिमपि समुदपादयत्। सा भारतस्य प्रायेणाष्टादशभाषासु अभिज्ञतां न्यदधात् तस्मात् यत्रापि अगात् तत्र स्वविचारांस्तत्प्रदेशस्यैव भाषया प्रकटीकृतवती। तस्या देशभक्तत्वात् पवित्रचरित्रविदुषीत्वात् तस्या भाषणानि देशवासिनां मानसेष्वमोघं प्रभावमक्षिपन्।

इयं प्रतिभाशालिनी विदुषी २२–४–५४ तमदिनाङ्के भूलोके निजकृतिकीर्तिं वितत्य तिरोहिताभवत्। भूयस्तात् सदा भारतभुवः पुत्रविधाभिः संस्कृतविदुषीभिर्भगवान्।

—०—

## श्रीपण्डितराज-जगन्नाथः

जगति जलबुद्बुदवत् यान्ति यान्ति च जनाः प्रतिक्षणमुत्पद्यन्ते म्रियन्ते च परं तेषामेव जनुर्धन्यं येषां जनुषा मातुर्भारत्या मन्दिरस्य विजयवैजयन्ती उत्तुङ्गतरा भूत्वा दोधूयते । श्रीपण्डितराजो जगन्नाथस्तेषु विद्वद्वरेष्वन्यतमो जातो यं हि विपश्चिल्लजा यावज्जीवस्तावत् सरस्वत्याः कोशे स्वरचनारत्नं सर्वथैव सम्वर्द्धयितुमीहन्ते स्म । पदवाक्यप्रमाणपारावारीणानां पण्डितानां लोके स स्वकीयामनन्यगामिनीमाभामादधान शुशुभे । तस्मिन् विद्वज्जगदद्भुता प्रतिभामद्भुतं पाण्डित्यमद्भुताञ्च प्रबन्धप्रणयनप्रवीणतामवाप्नुत । वस्तुतः सुरसरस्वतीसाहित्याम्बरे तस्य पद्ममम्बरमणि पदमिव निरतिशयया तेजस्वितया विद्योतते ।

“मूर्तिमतेव नवाबासफखानमन प्रसादेन द्विजकुलसेवाहेवाकिवाञ्छित शर्मेन माथुरकुलसमुद्रेन्दुना रायमुकुन्देनादिष्टेन श्रीसार्वभौम साहिजहानप्रसादाधिगत‘पण्डितराज’पदवीविराजितेन तैलङ्गकुलावतंसेन पण्डितजगन्नाथेनासफविलासाख्यमाख्यायिका निरमीयत”—इत्येताभिरसफविलासस्थ पङ्क्तिभिस्तस्य शाहजहाँ राजसभाधिष्ठितत्वं किञ्च तस्य तैलङ्गवंशावतंसत्वं स्फुटतरं ज्ञातं जायते । ‘दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः” इत्येतेन च तदीयेन वाक्येन स स्वकीयं नवीनं वयो दिल्लीश्वरस्य च्छायायामनैषीदिति भवति विदितम् । एतेन तस्य सप्तदशशतकवर्तित्वं च सिद्ध्यति ।

अथ विश्रुतेभ्यस्तत्कृतिविराजितेभ्यः श्लोकेभ्यस्तस्य ‘कः पितासीत्, का मातासीत्, को गुरुरासीत्, कीदृशश्च तस्मिन् प्रकाण्डवैदुष्यमराजत’इत्येतद्विषयस्य वृत्तान्तोऽतिसमासेन समवाप्यते —

(क) तैलङ्गान्वयमङ्गलालयमहालक्ष्मीदयालालित
श्रीमत्पेरमभट्टसूनुरनिशं विद्वल्ललाटन्तपः ।
सन्तुष्टः कमठाधिपस्य कवितामाकर्ण्य तद्वर्णनं
श्रीमत्पण्डितराजपण्डितजगन्नाथो व्यधासीदिदम् ॥

( ख ) श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्चः<br>काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत् ।<br>देवादेवाध्यगीष्ट, स्मरहरनगरे शासनं जैमिनीयं<br>शेषाङ्कप्राप्तशेषामलभणितिरभूत् सर्वविद्याधरो यः ॥

( ग ) निर्माय नूतनमुदाहरणानुरूपं<br>काव्यं मयात्र निहितं न परस्य किञ्चित् ।<br>किं सेव्यते सुमनसां मनसापि गन्धः<br>कस्तूरिकाजननशक्तिभृता मृगेण ॥

पण्डितराजो जगन्नाथ इमान् ग्रन्थान् व्यरचत्—

( १ ) गङ्गालहरी ( पीयूषलहरी ) एष ग्रन्थो गङ्गास्तवविषयकोऽस्ति ।

( २ ) सुधालहरी ( सूर्यप्रशस्तिरत्र वर्तते ) ।

( ३ ) अमृतलहरी ( अत्र यमुना स्तुतास्ति ) ।

( ४ ) करुणालहरी ( इह भगवतो विष्णोः स्तुतिः कृतास्ति ) ।

( ५ ) लक्ष्मीलहरी ( लक्ष्मी-प्रशंसायां रचितेयम् ) ।

( ६ ) आसफ-विलासः ( आसफखानस्य प्रशंसायां रचितः ) ।

( ७ ) प्राणाभरणम् ( कामरूपाधिपतिप्रशंसायामुपनिबद्धम् ) ।

( ८ ) जगदाभरणम् ( उदयपुराधीश्वरकर्णसिंह-सूनु-जगत्सिंहस्य वर्णनमत्र विहितम् ) ।

( ९ ) चित्रमीमांसाखण्डनम् ( अप्पयदीक्षितप्रणीत-चित्रमीमांसाख्यग्रन्थस्य खण्डनमिह दृश्यते ) ।

( १० ) मनोरमाकुचमर्दनम् ( भट्टोजिदीक्षितकृतस्य मनोरमाभिधग्रन्थस्य खण्डनरूपम् ) ।

( ११ ) भामिनीविलासः ( अत्र सन्ति गृहीताः करुणा-श्रृङ्गारनिर्वेदाद्यनेकविषयाः ) ।

( १२ ) रसगङ्गाधरः ( अलङ्कारशास्त्रविषयकोऽयमद्भुतो ग्रन्थोऽस्ति ) ।

यमुनावर्णनपरकमपि ग्रन्थं गद्ये पण्डितराजश्चकार इत्येतद् विदुषां जगति श्रूयते परं साम्प्रतं न सः प्राप्यते । पण्डितराजोऽन्योक्ति-सम्बन्धिनीमपि रचनामेकां रचितवान् । एषा तदीया रचना सम्प्रति हि तस्मिन् संग्रहे संगृहीतास्ति

यत्र पण्डितराजप्रणीतानां कृतीनां सङ्ग्रहणं कृतं वर्तते। रसगङ्गाधरो नाम ग्रन्थो न पूर्णं प्राप्यते।

संस्कृतवाङ्मये गीतिकाव्यप्रणेतारो ये सुप्रसिद्धाः भर्तृहरि बिल्हणामरुक हाल धोयी गोवर्धनाचार्य जयदेवप्रभृतयः कवयोऽभूवन्स्तेषु पण्डितराजस्य जगन्नाथस्यापि गणना सादरं गीतिकाव्यकोविदैर्विधीयते। पण्डितराजस्य गीतिषु रसिका आभ्यन्तरसौन्दर्यविषयिकामतिशयानन्दवर्धिनीं मधुरतां पिबन्ति। तदीया गीतयो हि सहृदयान् जयदेवं स्मारयन्ति। तदीयायां शैल्यां तदेव मनोज्ञत्वं तदेव प्राञ्जलत्वं दृग्गोचरीभवति यद् भर्तृहरेः शैल्यां शोभते। भव्यो भावभङ्गिमा प्रौढश्च पदविन्यासः सर्वत्रैव गीतिषु तदीयासु विलसति तस्माद् विपश्चितां मनांसि तस्य गीतिकाव्यानि नितरामेव प्रीणयन्ति। भामिनीविलासस्तद्रचितमुक्तकगीतीनां रमणीयः सङ्ग्रहो वरीवर्ति।

(अ) तीरे तरुण्या वदनं सहासं
नीरे सरोजं च मिलद्विकासम्।
आलोक्य धावत्युभयत्र मुग्धा
मरन्दलुब्धालिकिशोरमाला ॥

(आ) रे चेतः कथयामि ते हितमिदं वृन्दावने चारयन्
वृन्दं कोऽपि गवां नवाम्बुदनिभो बन्धुर्न कार्यस्त्वया।
सौन्दर्यामृतमुद्गिरद्भिरभितः संमोह्य मन्दस्मितैः
एष त्वां तव वल्लभांश्च विषयानाशु क्षयं नेष्यति ॥

इत्येतादृशैर्भूयोभिर्भावबन्धुरैर्ललितललिततरैः श्लोकैर्विभूष्यमाणत्वाद् भामिनीविलासस्य भावुकानां समाजः सोऽतितरामाह्लादयति।

पण्डितराजस्य कवितायां नैसर्गिकः प्रवाहः सर्वत्र प्रवहति। तत्र पदानां मनोऽभिरामा शय्या कल्पनायाश्च हृदयहारिणी चारुता चकास्ति। स महान् परमेशभक्त आसीत्, अत एव तद्रचितासु गङ्गालहरी सुधालहरी करुणालहरी प्रभृतिकृतिषु भक्तिभावना प्राणमयी भूत्वा आनन्दसुधासागरनिमज्जनक्षमगुणा च भूत्वा समुच्छलति। स सकलमपि स्वाभिमानं विहाय स्वमप्रमपि दुष्टदर्पदम्भादिदोषान् परित्यज्य नितान्तसरलहृदयतया आत्मसमर्पणधियं निधाय, स्वकीयान् भक्तिप्रवणान् भावान् स्तोत्रेषु समावीविशद् अतो भक्तिभावभुव उत्थाय रसपदवीमधिरूढास्ति। किन्तु सुधिय इह त्रि चतुर्भक्तिसुधासीकरान् —

( अ ) अपि दीनतरं दयानिधे, दुरवस्थं सकलैः समुज्झितम् ।
अधुनापि न मां निभालयन् भजसे हा कथमस्मचित्तताम् ॥
सुमहान्ति जगन्ति बिभ्रतस्तव यो भारिरभून्मनागपि ।
स कथं परमाणुदेहिनां परमाणोर्मम धारणे श्रमः ॥

( आ ) नितरां निनदेन पृच्छ्यते सुविचार्येतरमत्र यच्छ मे ।
करिणो गिरितोऽप्यहं गुरुरत्तारितो नोद्धरसे यदद्य माम् ॥
न धनं न च राज्यसम्पदं नहि विद्यामिदमेकमर्थये ।
मयि धेहि मनागपि प्रभो करुणाभङ्गितरङ्गितां दृशम् ॥

( इ ) निधानं धर्माणां किमपि च विधानं नवमुदाम्
प्रधानं तीर्थानाममलपरिधानं त्रिजगताम् ॥
समाधानं बुद्धेरथ खलु तिरोधानमधियां
श्रियामाधानं नः परिहरतु तापं तव वपुः ॥

( ई ) विपोदृशा नाथ विपानलोपम-
विपादभूमौ भवसागरे विभौ ।
परं प्रतीकारमपश्यता जना
मयात्मनात्मा भवते समर्प्यते ॥

पण्डितराजो जगन्नाथोऽपि श्रीहर्ष-भवभूतिसदृशः स्वाभिमानशाली बभूव । स संस्कृतसाहित्ये यथा पाण्डित्यरचिन्यादिहेतोर्विश्रुतोऽस्ति तथैवागौरवगर्वोक्तिनिमित्तादपि विख्यातो वर्तते । वस्तुतस्तस्य गर्वोक्तयो न समस्थलीका । अवर्तनापि तदागाधं वैदुष्यं विलक्षणा च प्रतिभा तस्माद् गर्वोक्तिभिश्चेत् स. स्वप्नतिस्थलीकृतस्तर्हि युक्तमेव तत् कृतम् । श्रूयतामेका तदीया गर्वोक्तिः—

गिरां देवी वीणागुणरणनहीनादरकरा
यदीयानां वाचाममृतमयमाचामति रसम् ।
वचस्तस्याकर्ण्य श्रवणसुभगं पण्डितपते-
रधुन्वन् मूर्धानं नृपशुरथवाऽयं पशुपतिः ॥

पण्डितराजोऽन्योक्तिप्रणयने च परामेव पटीयस्तां गाहते । अन्योक्तिषु तदीयासु अपूर्वा मनोज्ञता विमलश्च स्वद्वयं विभाति । अतस्ताः प्रेक्षावतां कण्ठाभरणतां गता सन्ति—

प्राक्तनेषु शास्त्रकारेषु महती श्रद्धासीत्। स मम्मटस्यानेकसिद्धान्तान् प्रत्याख्यातवान् परं न क्वापि स प्रत्याख्यानार्थमदिष्टाऽऽभाममवलम्ब्यमानोऽधिगम्यते। स्थाने स्थाने स 'सहृदय शिरोमणि'रित्येतेन विशेषणेन सम्बोधयन् समवाप्यते। परं स्वकालवर्तिभिः वनिभिः प्रधीभिः सार्धं तस्यासीत् स्पर्धा। विशेषतो भट्टोजिदीक्षिताप्पयदीक्षिताभ्यां सह। तस्मादसौ तत्सिद्धान्तनिरसने क्वचित् परुषतामादृतं प्रतिलभ्यते। अस्तु तावत्।

पण्डितराजो महास्तार्किकोऽप्यासीत्। तस्य तर्कशैल्या लोकोत्तरत्व तार्किकमन प्रमादनप्रवीणत्व तल्लिखितेषु सिद्धान्तग्रन्थेषु स्फुटतया विशदतया च समवलोक्यते।

पण्डितराजस्य रसगङ्गाधरोऽपूर्वोऽद्भुतो मूर्धन्यश्च ग्रन्थोऽस्ति अलङ्कारग्रन्थेषु। अध्ययनीयोऽयमस्ति ग्रन्थः। अलङ्काराणामिह परमगाम्भीर्येण विवेचनं तत्स्पर्शिन्या मर्मभेदिन्या भाषया विहितं दृश्यते। तेषां स्वरूपस्य प्रतिष्ठापने य प्रयास आचरितो विद्वद्धौरेयेण लेखकृतल्लजेन वस्तुतः सोऽस्ति अभिनन्दनीयः। न केवलमेतावत्येव विशिष्टता विद्यतेऽस्य ग्रन्थस्य। एषा विशिष्टता तु न वर्तते तादृशी गरीयसी यादृशी रसनिरूपणविषयके स्थले दृष्टा भवति। तत्र तु पण्डितराजस्य प्रतिभायाश्चरम उत्कर्ष एव वीक्षितो जायते। नानार्थकशब्दस्थले पदार्थोपस्थित्यर्थं या प्रक्रियाङ्गीकृतास्ति किञ्च व्यञ्जनामधिकृत्य यो हि सारो निस्सारितः सोऽपि विद्वल्लोकं भृशं प्रीणाति। सर्वेऽपि विद्वांस एकमतेन ग्रन्थेऽस्मिन् प्रदर्शितं काव्यलक्षण, शब्दव्युत्पादन, गुणनिरूपण, रसस्याङ्गानामुपाङ्गानाञ्च प्रतिपादन, भावानाञ्च विशदतयाऽवदाततया च कृतं वर्णनं प्रशंसन्ति पुनः पुनः। को नाम रस इत्यत्र स आह—

"समुचितललितसन्निवेशचारुणा काव्येन समर्पितैः सहृदयहृदयं प्रविष्टैस्तदीयसहृदयतासहकृतेन भावनाविशेषमहिम्ना विगलितदुष्यन्तरमणीत्वादिभिरलौकिकविभावानुभावव्यभिचारिशब्दव्यपदेश्यैः शकुन्तलादिभिरालम्बनकारणैश्चन्द्रिकादिभिरुद्दीपनकारणैरश्रुपातादिभिः कार्यैश्चिन्तादिभिः सहकारिभिश्च सम्भूय प्रादुर्भावितेनालौकिकेन व्यापारेण तत्कालनिर्वर्तितानन्दांशावरणाज्ञानेनात एव प्रमृष्टपरिमितप्रमातृत्वादिनिजधर्मेण प्रमात्रा स्वप्रकाशतया वास्तवेन निजस्वरूपानन्देन सह गोचरीक्रियमाणः प्राग्विनिविष्टवासनारूपो रत्यादिरेव रसः।" अत्र स मम्मटाभिनवगुप्त भट्टनायकप्रभृतीनामनेकेषां प्राचामाचार्याणां बहूनाञ्च नव्यानां

मतमुपस्थापयन् "रसो वै सः" इत्येतच्छ्रुतिस्वारस्येन रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रस इति साधयति।

केचन कविकौशल-कल्पितकमनीयतास्पदं शब्दमेव काव्यं मन्यन्तेऽपरे कविकौशल-कल्पितकमनीयतास्पदं शब्दार्थयुगलमेव काव्यमिति वदन्ति। काव्यस्य एतद्द्वयं सामान्यलक्षणं मतम्। पण्डितराजो जगन्नाथस्तेषु काव्यलक्षणकारिष्वन्यतमो यः शब्दमेव काव्यत्वेन स्वीकरोति। पण्डितराजस्य काव्यलक्षणमिदं— "रमणीयार्थप्रतिपादकः शब्दः काव्यम्" स्वलक्षणस्य व्याख्यायां स इमानि वाक्यानि निदधानोऽवाप्यते :—"इत्थं च चमत्कारजनकभावनाविषयार्थप्रतिपादकशब्दत्वम्, यत् प्रतिपादितार्थविषयकभावनात्वं, चमत्कारजनकतावच्छेदकं तत्त्वम्। स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारवत्त्वमेव वा काव्यत्वमिति फलितम्।" पण्डितराजः शब्दार्थयुगलं न काव्यत्वेनाङ्गीकुरुते। स आह—"काव्यमुच्चैः पठ्यते, काव्यादर्थोऽवगम्यते, काव्यं श्रुतमर्थो न ज्ञातः, इत्यादिविश्वजनीनव्यवहारतः प्रत्युत शब्दविशेषस्यैव काव्यपदार्थत्वप्रतिपत्तेश्च··· तदेवं शब्दविशेषस्यैव काव्यपदार्थत्वे सिद्धे तस्यैव लक्षणं वक्तुं युक्तम्।"

पण्डितराजः काव्यस्य कारणमेकमात्रं हि उत्पाद्यां प्रतिभां मनुते। कारणान्तराणि तु परम्परयैव सः काव्यस्य कारणत्वेन स्वीकुरुते। स ब्रूते—"तस्य च कारणं कविगता केवला प्रतिभा।"

रसगङ्गाधरकार उत्तमोत्तमोत्तममध्यमाधमभेदात् काव्यं चतुर्षु भागेषु विभनक्ति। "केचिदिमानपि चतुरो भेदानगणयन्त उत्तममध्यमाधमभावेन त्रिविधमेव काव्यमाचख्युः" इत्यभिधाय त्रिभेदमानिन आक्षिपति।

पण्डितराजस्त्रीन् एव गुणान् मन्यते। गुणानां रसधर्मत्वेऽपि अयं विद्वान् महतीं समालोचनां "प्रत्यक्षमेवेति चेत् न······"इत्यादिशब्देषु सन्निवेशयन् वीक्षितो भवति। स "आत्मनो निर्गुणत्वात् रसे गुणानां स्थितिर्न भवितुं शक्नोति" इति वदति। इदमपि स ब्रवीति 'यद् रसस्योपाधयः सन्ति रतिशोकक्रोधादयः। तेषामिदा(स्थान)रूपत्वात्, ते गुणा इत्युच्यन्ते। गुणो न गुणे स्थातुं प्रभवति : एतद्धेतो रत्यादावपि गुणस्थितिर्न सम्भवा। तस्मात् शब्दार्थौ गुणवन्ति।'

अभिधादिशक्तिनिरूपणस्थितिषु पण्डितराजजगन्नाथोऽस्वतिन। तिसृणामपि अभिधा-लक्षणा-व्यञ्जनानां शक्तीनां प्रतिपादने व्याख्याने च सः गम्भीरं पाण्डित्यं

सूक्ष्मदर्शित्वञ्च प्रकटीकुर्वन्नवाप्यते । "शक्त्याख्यो ऽर्थस्य शब्दगतः, शब्दस्यार्थगतो वा सम्बन्धविशेषोऽभिधा" इत्यभिधाया लक्षणमुपपादयन् सः 'केवलसमुदायशक्तिः, केवलावयवशक्तिः समुदायावयवशक्तिसंकरश्चे'ति भेदत्रयेण तस्यास्त्रिविधत्वमामनति । 'शक्त्या प्रतिपादकत्वमभिधा' इत्येतद्व्यपदीक्षितोक्तं तल्लक्षणमसौ 'इह शब्दाज्ञायमानायाम्'……इत्यादिशब्दैर्निरस्यन् 'न चाभिधानः शक्तिरतिरिक्ते'त्याद्युवाचोपसंहरति स्वकीयं तत्प्रत्याख्यानात्मकमवतरणम् । मम्मटादिरिव सोऽपि चतुष्टयी शब्दानां प्रवृत्तिरिति मन्यते । "शक्यसम्बन्धो लक्षणे"-त्येतल्लक्षणा लक्षणं प्रकाश्य स तस्याः निरूढा प्रयोजनवती चेत्येतौ द्वौ भेदावभिधाय प्रयोजनवत्याः षड्विधत्वं प्रतिपादयति । तत्र च स प्राचामाशयमपि मतभेदप्रदर्शनपुरस्सरमभिव्यनक्ति । एतावदेव न 'नव्यास्तु' इत्यतस्तेषामाकुलीभाव. स्यादि'त्येतत्पर्यन्तं नव्यानामपि विचारान् सम्यक् समालोचयति । यथा काव्यप्रकाशे मम्मटेन व्यञ्जनायाः प्रतिष्ठापनमनेकानेकाभेद्यावद्धैश्चयुक्तिपूर्वकं विहितं तथा रसगङ्गाधरे तन्न दृश्यते परं संलक्ष्यक्रमध्वनिनिरूपणावसरे पण्डितराजस्तदुपपादनं वैदग्ध्येन विदधानः पर्यवलोक्यते । एकस्मिन् स्थले स ब्रूते—"……'तस्मान्नानार्थस्याप्राकरणिकेऽर्थे व्यञ्जने'ति प्राचां सिद्धान्तः शिथिल एव । प्राकरणिकाप्राकरणिकयोरर्थयोरुपमायां तु सा कदाचित्स्यादपीत्यत्रास्माकं प्रतिभाति… ।"

भावः क इत्यत्र स्वमतस्य प्रदर्शनात् प्राक् पण्डितराजस्तत्तन्नाव्यलक्षणेषु दोषं दर्शयति । तदीयानि भावप्रकरणगतानि वाक्यानि द्वित्राण्यत्र निधीयन्ते—( १ ) "अथ किं भावत्वम् ? विभावानुभावभिन्नत्वे सति रसव्यञ्जकत्वमिति चेत्, रसकाव्यवाक्येऽतिव्याप्त्यापत्ते. ।" ( २ ) "नापि रसाभिव्यञ्जकचर्वणाविषयचित्तवृत्तित्वं तत्त्वम् । भावादिचर्वणायाम्……अतिप्रसक्तेः ।" इत्थं हि पण्डितराजस्तत्तल्लक्षणमालोचयन् स्वाभिमतं भावलक्षणं लिखत्येवम्—"विभावादिव्यज्यमानहर्षाद्यन्यतमत्वं तत्त्वम् ।" लक्षणञ्च नैजं "व्यभिचार्यञ्जितो भावः" इत्येतत् काव्यप्रकाशकारोक्तञ्च भावलक्षणं प्रतिष्ठाप्य परिपुष्णाति । निःसंशयं, भावानां यद् विशदं यथार्थं निरूपणं पण्डितराजेन कृतं तदतितरां रमणीयं वर्तते । एवमेवानेकार्थकशब्दस्थले पदार्थोपस्थितिः केन प्रकारेण जायते—इत्येतद्विषयकं यदुपपादनं पण्डितराजेनानुष्ठितं तद् विद्वद्वराणां निखिलामपि जगतीं सुतरां प्रीणाति । पण्डितराजो यमपि विषयं विविनक्ति तं प्रकाण्डपाण्डित्य-

चया भाषया सन्निदधाति। तस्य विवेचनशैली सर्वत्र तर्कोद्ग्रथिता समवाप्यते। स अन्येषां मतानां प्रदर्शने समुपस्थापने विवेचने च परामेव रुचिं निदधाति। वस्तुनो मर्म, तदीया सत्ता विशिष्टतारतम्यानि सम्पूर्णान्यस्य ज्ञानि तदीयमाभ्यन्तरं रूपञ्च यावन्न स्फुटता यान्ति तावत् स तद्वस्तु जहात्येव न। व्यञ्जनामुद्दिश्य सर्वैरपि साहित्यशास्त्रपारदृश्वभिर्विमर्दनं विहितं परं पण्डितराजस्य तद्विषयकविमर्दनं किमप्यपूर्वमेव विद्यते। वस्तुतस्तस्य विचारावियोजनप्रकारोऽनुपमोऽस्ति, नैजोऽस्ति, विचित्रोऽस्ति। तस्य ग्रन्थे रसगङ्गाधरे निपुणा बुद्धिः सर्वत्र यथेष्टं ओजयमधिगच्छति। उपमालङ्कारादुत्तरालङ्कारपर्यन्तं यऽप्यलङ्कारास्तेन स्वकीये ग्रन्थे समुपस्थापितास्तेषां सर्वेषामप्यलङ्काराणां स्वरूपं यादृश्या तलस्पर्शिन्या शब्दावल्या, यादृश्या, मर्मप्रकाशिन्या भाषया, यादृश्या प्रौढया रीत्या, यादृश्या ओजस्विन्या सज्जया च तेन प्रतिष्ठापितं न तादृश्या शब्दावल्या भाषया रीत्या सज्जया च कोऽपि प्रतिष्ठापयन् समुपलभ्यते। अत्र तस्यालङ्कारनिरूपणं कीदृशं भवतीत्येतद् दिङ्मात्रं प्रदर्श्यते पर्यायोक्तालङ्कारवर्णनस्थले स आचार्यमम्मटभट्टस्य भावं कीदृश्या दुरवगाहाया भाषया सन्निदधाति—इति विलोक्यताम्—'अस्या च गम्यस्य येनाकारेण गम्यता तदतिरिक्ताकारेण वाच्यता। तेन पर्यायेण भङ्ग्यन्तरेणोक्तमभिहितं व्यङ्ग्यं यत्रेति प्राचीनैर्निर्मितं लक्षणं व्यङ्ग्यवाच्ययोर्विरोधादसंगतमिति नाशङ्कनीयम्। एकस्यैव प्रकारभेदेन वाच्यत्वव्यङ्ग्यत्वयोरविरोधात् ।' विद्वन्मूर्धन्य पदे पदे स्वपाठकानां हितार्थं हि अन्येषामलङ्काराचार्याणां मतानि निदधानो दृश्यते। अत्रैव पर्यायोक्ते क्वापि स "गम्यस्यापि भङ्ग्यन्तरेणाभिधानं पर्यायोक्तम् " इत्यादिशब्दैः अलङ्कारसर्वस्वकारस्य मतं, क्वापि 'पर्यायेण वाच्यादतिरिक्तप्रकारेण व्यङ्ग्येनोपलक्षितम् "इत्यादिशब्दैः अभिनवगुप्तपादाचार्याणां मतं, क्वापि च कुवलयानन्दकारस्य च मतं निदधानं केन न प्राप्यते? स दयालुर्मनीषी न केवलं तन्नम्मना-युपन्यस्यति, अपि तु तेषामाशयमपि समुपस्थाप्य पाठकवृन्दमुपकरोतितराम्। अलङ्कारस्वरूपनिरूपणं परमतसमुपस्थापनादिनैव स न तुष्यति अपि तु स 'अमुकालङ्कारस्यामुकालङ्कारात् का भिद्यते'त्याद्यपि साधु प्रस्तौतीति। एवंविधा तस्य विशिष्टता सर्वत्रापि तद्ग्रन्थे पाठकैरवाप्यते।

पण्डितराजजगन्नाथमस्माशानेव पण्डितमन्यमानविकृत्य केनापीदमवितथमेवोदीरितम्—

अर्थाहरणकौशल्यं किं स्तुमः शास्त्रवादिनाम् ।
अव्ययेभ्योऽपि ये चार्थान्निष्कर्षन्ति सहस्रशः ॥

अन्या जगद्धितमयी मनसः प्रवृत्ति-
रन्यैव कापि रचना वचनावलीनाम् ।
लोकोत्तरा च कृतिराकृतिरार्तहृद्या
विद्यावतां सकलमेव गिरां दवीयः ॥



## शिवराजविजयः

सप्तपञ्चाशदधिकाष्टादशशततमे ख्रीस्ताब्दे घटितस्य राजविद्रोहस्य विफलता यदा मातृभूमेः प्रातःस्मरणीयानां भक्तानां दलनं विधाय भारतीयाया जनताया मानसं वेगवतीं गभीरां निराशां सञ्चार्य विजृम्भमाणा पर्यवालोकयत, जनताया हृदन्तात् यदा स्वातन्त्र्यावाप्तिविषयको विश्वासोऽपाह्रियत, यदा समीरोऽपि श्वासादानकर्मणि वेपमानोऽन्वभूयत तदा तदानीन्तनस्य साहित्यिकसंसारस्य अलौकिकालोककल्लोलं नक्षत्रं महाकविः अम्बिकादत्तव्यासो भारतीयानां हृदयाधि-वासामविश्वासं निर्विण्णतामुत्साहहीनतामुदासीनतां निर्बलताञ्च दूरीकर्तुं तत्र च प्रस्फुरन्तीमाशां मनसि विश्वासमदम्यां जीवनशक्तिं बलीयांसमुत्साहमद्भुतं साहसं श्लाघनीयं स्वसाध्यसाधकक्रियाकौशलमनभिभवनीयञ्च पौरुषं सञ्चारयितुं सिंहोरस्कस्य महाराजस्य पुण्यश्लोकस्य शिवराजस्य स्पृहणीयेन चरित्रेण पूयमानं शिवराजविजयं नामानुपमं गद्यकाव्यं ससर्ज ।

एषा हि शिवराजविजयाख्या रचना वस्तुतः पुष्कलगुणविशिष्टत्वात् सामयि-काभिलाषपूर्तिकारित्वाच्च विंशस्य शतकस्य रचनासु उच्चतमं स्थानमध्यास्ते । साम्प्रतिकस्य समग्रस्य महान् विद्वान् डॉक्टर भगवान् दास पुनः महनीयां कृतिमभिनन्दन् प्राह—" संस्कृतसाहित्यस्य पण्डितमण्डले प्रायेण त्रयाणां गद्यकाव्यानां चर्चा चिरादविरतं प्रवर्तमानाऽऽप्यते । तानि गद्यकाव्यानि सन्ति—सुबन्धोर्वासवदत्ता, बाणस्य कादम्बरी, दण्डिनश्च दशकुमारचरितम् । दण्डिनो गद्यकाव्यं दशकुमारचरितं तु निश्रप्रचतया स्वतरं गद्यकाव्यद्वयात् वरतरमिति वक्तुं सुशकम् । यद्यप्यलौकिकनामसम्भाव्यतामिव च मेध्यो घटना असकृत् घटितास्तत्र सन्ति परं तत्र भाषा न केवलमोजस्विन्यर्थवती च शोभते राजनीति लोकचातुरी ललितकलादिविषयकं ज्ञानमपि तत्र समुल्लसति परं वासवदत्ताया कादम्बर्याश्च शब्दारण्यान्यां तु वराकोऽर्थपान्थः सर्वथा श्रान्तो भ्रष्टश्च भवन् विलुप्ततामिव प्रयाति, तयोरुपलब्धिरेव न भवति । कविताया गुणेषु प्रसादो मुख्यो गुणः, स एतयोर्द्वयोरपि समवासो न जायते । परं शिवराजविजये न स्थितिरीदृशी । तत्र भाषा उत्तमोत्तमापि ओजस्विन्यपि अर्थपूर्णापि सुबोधापि

भवति" इत्येतद् अग्निकादत्तम्याम स्वयमपि वक्ति पर यदा वय नैजदृष्टिं तस्य शिवराजविजयरिथतग्रन्थोपरि आपाततयैव क्षिपामस्तदैव तत्क्षण ज्ञात जायते यत् श्रीव्यासविदुषो गद्य ता सर्वा विशिष्टता निदधाति या श्रेष्ठगद्ये भवति।

"नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्ट स्फुटो रस ।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुष्करम् ॥"

इति यद् बाणेन गद्यस्य सौन्दर्यमुदीरित तत् स्फुटतयैव श्रीव्यासस्य कृतौ शिवराजविजय निरीक्षित भवति । अत्र सर्वत्र मनोभिरामाणा पदाना सच्चयन कृत वर्तते, नवनवार्थानामुन्मेष सलभ्यते, न चापि अस्वाभाविकताया लेशोऽपि दृष्टो भवति, श्लेषस्य परिग्रहो यत्रापि कृतो न स अस्ति शिरोवेदनाकृत् । पाठक श्रोता च अनायासेनैव सर्वत्र रस पिबन् अग्रे उपसरन् वीक्षितो जायते । सस्कृतभाषाया वीरतापूर्णभावानामभिव्यक्त्यर्थं कियती बलवती सफला च शक्तिर्विराजते किञ्च नव नवविषयस्यामसाधकारिणी कीदृशी कियती च महती प्रभविष्णुता प्रसुप्तास्तीति च श्रीव्यासनिपश्चिद्वरस्य शिवराजविजयाध्ययनेन सम्यग् ज्ञात भवति । इहोद्धरणानि निधाय एतासा सर्वासा विशिष्टताना किञ्च एताभ्यो व्यतिरिक्तानामन्यासा विलक्षणताना प्रदर्शनस्य समावेशोद्योगो विहितो भवेद् येनोपरि निवेदित निवेदन प्रत्यक्ष स्यात् किञ्च समालोचकैर्विद्वद्भिर्ग्रन्थ मिममधिकृत्य या श्लाघा कृतास्ति तस्या अपि सत्यता प्रमाणिता भवेत् ।

शिवराजविजयस्य रचनाया काल स आसीद् यदा भारतीयजनताया मानसे देशभक्तिभावना पूर्णतया प्रसुप्तासीत्, यदा भारतीया शोचनीया दीनता कापुरुषताञ्च अवलम्बमाना समवाप्यन्त, यदा तेषु नोत्साहो, न जीवन शक्ति, न कर्तव्यपरायणता, न स्वधर्मपालननिष्ठा च व्यलोक्यत, यदा ते निर्दया, म्लेच्छैर्बहुविधैश्च देशापकारानुरागैं कलहैरेव नैज जीवनसमय नयन्त एव समुपालभ्यन्त, यदा तेषां शोणितेऽल्पापि उष्णता नान्वभूयत, यदा ते स्वकीय गौरव सर्वथैव विस्मरन्तो दासतामेव सर्वस्व मन्यमाना सुखेन काल क्षिपन्तोऽदृश्यन्त, यदा ते विनष्टशौर्यभावा भवन्त परचाटुकारितायामेव रूलम्रा अवाप्यन्त, यदा ते स्वसस्कृतौ स्वसभ्यतायाञ्च नितान्तमनभिज्ञा एव प्रत्यैयन्त, यदा ते निष्प्राणा सन्तोऽपि श्रृङ्गार एव विलीना व्यालोक्यन्त, यदा ते परकृत न्यक्कारमपि स्वकीय सम्मानमिवावगच्छन्त सर्वत्र समासादयन्त, यदा च ते सर्वमर्यादौचित्य विस्मरन्तो नृत्ये सङ्गीते हासे उपहासे च निमज्जन्त पर्यवैक्ष्यन्त। एतादृशे चिन्तनीये पतनकाले शिवराजविजयो भारतीया जनता देशभक्तिमन्व

स एव देश स्वस्य ईश्वरस्य, स्वस्य धर्मस्य, स्वस्य साहित्यस्य, स्वस्या भाषाया, स्वकीयाया सम्पद, स्वकीयाना पुत्रकलत्राणा, स्वकीयाना देवमन्दिराणा धर्मस्थाना पुरातनाना दुर्गप्रासादादीना, स्वकीयाना सर्वेषामपि कलानां शालाना, नैजाना तीर्थाना पुस्तकालयाना शिक्षागाराणामुद्योगागाराणाञ्च रक्षा कर्तुं शक्नोति यस्य देशस्य देवपूजका, महात्मानो धर्मात्मान पुरोहिता पण्डिता श्रोत्रिया उपदेशका सर्व एव युवानो युवतयश्च मर्त्ता, समग्रा एव स्त्रिय पुरुषाश्च बाला बालिकाश्च कर्मण्या कठोरकर्मठा भवन्ति, शक्तौ शौर्ये पौरुषे च विश्वसन्ति, विवेकेन सर्वमपि साधु विमृश्य धैर्यमवलम्ब्य व्यसनानि विहाय प्राणानपि अञ्जलौ निधाय स्वकीय कर्त्तव्य सोत्साह पालयन्ति। परमात्मा तेषा मानवाना सहायको न कदापि भवति ये स्वकर्त्तव्येभ्यो विमुखा भूत्वा स्वस्य देशस्य स्वदेवतादीना रक्षार्थं भगवन्तमाह्वयन्ति प्रार्थयन्ते च—' हे भगवन् अस्मान् अस्मदीय धर्मादिक सकल च पाहि'' इति। शिवराजविजयो न दैववाद श्रद्धा निदधाति, स कर्मणि श्रद्धत्ते, स शौर्यमाराधयति, स पौरुषस्य श्रीचरणेषु स्व मौलिं प्रणत कुरुते। तदीयमिद मत यद् भगवतास्मकृते मनो बुद्धिहस्तपादादिकानि सर्वाणि साधनानि प्रदत्तानि सन्त्यतोऽस्मदीय कर्त्तव्यमस्ति यद् वय तेषा सर्वेषा साधनाना सम्यग् विनिश्चय, विचिन्त्य, विमृश्य च सदुपयोग विदधीमहि। ईश्वरस्तेषामेव कार्येषु सहायको भवति ये स्वयमेव कठोरतया वीरतया च स्वकीय कर्त्तव्यमभिव्यञ्जन्ति। 'वीर! गृहाण मस्त्रि वित्तम् पराजिता आर्य्यसेना, बन्दीकृता वयम्, मर्दितमस्त्र यदा, इतोऽपि न शाम्यति ते क्रोध किन्तु त्यजमामसि त्वि स्त्री जडा महादर प्रतिमाम्।' इत्यादिश्लाना पद्मीना समुपस्थापनस्य प्रयोजनमिदमत्र शिवराजविजयस्य प्रतीयते।

भारतवर्षीयेषु भारतवर्षीयता शिवराजविजया द्रष्टु कामयते अत स आह पुन पुन ''भारतवर्षीया यूयम्'' इति। नास्माभि स्वकीयमाभिजात्य जातु विस्मरणीयमत्र स महाराष्ट्रकुलजातत्वा स्मारयति भूयोभूय। धर्म प्राणेभ्योऽपि गरीयान्। तत्रत्यम प्राणैरपि विषयमिमं यतद्रवेधयितु मन्तुने—''प्राणा यान्तु न च धर्म' इत्यार्याणा दृढ सिद्धान्त। महान्ता हि धर्मस्य कृते लुण्ठ्यन्ते, पात्यन्त, हन्यन्ते, न च धर्म त्यजन्ति, किन्तु धर्मस्य रक्षायै सर्वसुखान्यपि त्यक्त्वा, निशीथेष्वपि, वर्षास्वपि चन्द्रहासचमत्कारेष्वपि च निर्भया विचरन्ति।

"कार्यं वा साधयेयम्, देहं वा पातयेयम्" इत्येतद्धि जीवनस्य लक्ष्यं शिवराजविजयस्याभिमतम्। भारतवर्षस्य निवासिना स्वकीयस्य राष्ट्रस्य स्वतन्त्रताया रक्षणाय, स्वदेशस्य संस्कृतेः सभ्यतायाः भाषायाश्च परित्राणाय, स्वराष्ट्रस्य गरिम्ण· परिवर्द्धनाय, स्वकीयस्य धर्मस्य च गोपनाय एतादृश्येव द्रढीयसी प्रतिज्ञा कर्त्तव्येति शिवराजविजयस्य हार्दिकोऽभिलाषो बलीयान्। कामं महान् प्रचण्डो झञ्झावात· प्रवर्तमानो भवेत्, कामं दारुणाभि· श्यामश्यामतराभिर्घनघटाभिर्व्योम आक्रम्यमाणं स्यात्, कामं मार्गो नितान्तभयङ्करो विषमो दुर्गमो वनसङ्कीर्ण· पर्वतश्रेणीसमाकुलो नानाविघ्नबाधाभिर्बाध्यमानश्च भवेत् परं न स्वकीयाल्लक्ष्यमार्गान्मानवेन स्खलितव्यमित्येतद् उपदेष्टुमेव शिवराजविजय.—"तावदकस्मादुत्थितो महान् झञ्झावात·, एकः सार्धं समयप्रवृत्तः स्वभावद्योऽन्धकारः, स च द्विगुणितो मेघमालाभिः।......वनाद् वनानि, शिखराच्छिखराणि,...परश्शतशतघ्नी-प्रचारजन्मनैव-कन्दरि-कन्दर-प्रतिध्वनिमिश्रगुणितेन महाशब्देन पर्यपूर्यत साऽरण्यानी। परमधुनाऽपि—"देहं वा पातयेयं कार्यं वा साधयेयम्" इति कृतप्रतिज्ञोऽसौ शिववीर-चरो न निजकार्याद्विरमते इत्येतद्वतरणमवतारयति मुदा।

शिवराजविजयो हि देशे तादृशान् भृत्यान् दिदृक्षते यादृशा हि भृत्याः शिवराजस्य सविधे बभूवुः। न शिवराजस्य भृत्याः स्वामिनो वञ्चनं जानन्ति स्म; न ते केनापि बृहत्तरेण, उत्कोचलोभेनैव गृह्यमाणा अभूवन्; ते सकला अपि विपद· सोढुं तु सदा सन्नद्धा अवाप्यन्त परं न ते आत्मानं कर्त्तव्यपदादभ्रंशयन्। शिवराजविजयो राजकर्मचारिषु सेवकेषु राज्यम्प्रति देशम्प्रति सत्यमनुरागं, सत्यं कर्त्तव्यपरायणत्वं सञ्चारयितुमेव—"कथं विश्वासघातं स्वामिवञ्चनञ्च शिक्षयसि?......ये उत्कोचलोभेन स्वामिनं वञ्चयित्वा आत्मानमन्धतमसे पातयन्ति, न वयं शिवगणास्तादृशाः......" इत्यादिकानि वाक्यानि सन्निवेशयति। शिवराजविजयस्याकाङ्क्षास्ति यद् देशस्य नेतृषु ते सर्वे गुणाः सन्ति वाञ्छनीया ये महाराजे शिवे अशोभन्त। तद्गुणा विशिष्टा एव देशस्य भारतस्य स्वतन्त्रतां पातुं प्रभवेयुः किञ्च देशस्य गौरवं वर्धयितुं समर्थाः स्युः। अत· सः शिवस्य गुणवर्णनव्याजेन स्वदेशस्य शासनसूत्रधारिषु राजनीतिनिष्णातत्व–विद्याभिज्ञत्व-रणचतुरत्व-दीनदु·खदग्धदहनत्व-स्वधर्मरक्षणसक्षमत्व-विलक्षणविचक्षणत्वादिगुणानां सन्निवेशो भवेदित्येतां स्वकामनां प्रकटयति। न स इत्थमति

यद् देशस्य भारतस्य पवित्राया वसुन्धराया क्वापि गोपीनाथसदृशा देशद्रोहिणो दृष्टा स्यु, ये स्वकीय व्यक्तित्वमुत्थापयितु स्वं जीवन सुखेन यापयितुं देशस्य अरातीनां चरणेषु अञ्जलिं बद्ध्वा लालायितत्वामङ्गीकुर्वन्ति, ये मातृभूमिद्रोहित्वमेव दासेरकता वहन्ति।

शिवराजविजयोऽस्माकं पुरतो हि—"तत्र च क्वचित् सद्मासु पर्यङ्केषु चोपविष्टान्, मगडगडाशब्द ताम्रकधूममाकृष्य ' '' मद्यपायूर्णितशोणनयनान्, मपारस्परिकस्कण्ठग्रह पर्यटत " इत्यादिभिर्वाक्यश्रेणीभिर्यवनसैन्यस्य स्कन्धावारीय चित्रं किञ्च "अद्य गानम्, अद्य लास्यम्, अद्य मद्यम्, अद्य वाराङ्गना, अद्य भ्रूभङ्ग, अद्य वीणावादन" मित्यादिपङ्क्तिभिर्यवनमेनापतीनां वैलासिकस्य जीवनस्य चित्रमालिख्य किञ्च—"म्लेच्छगण दुराचार दुराक्रान्त-वसुमती-वेदनामिव समुद्रशायिनि निर्विवेदयिषु, वैदिकधर्म ध्वस दर्शन सजात निर्वेद इव ' '' " इत्यादिभि पङ्क्तिभि सूर्यस्यास्तगततया वर्णनच्छलेन तात्कालिकीनो भारतस्य हृदयभेदिका दशामस्मत्पुरो निदधाति।

शिवराजविजयस्य वर्णनानि सन्ति नितान्तमेव मनोभिरामाणि, तत्र नितरामेव नैसर्गिकता विलसति। तत्र न केवल वर्णनोपयुक्तानि पदान्येव राजन्तेऽपि तु तत्र मनोज्ञा सजीवता सरसता धारावाहिकता चातितरामेव परिस्पन्दमाना वीक्षिता भवति। दृश्यताम्—

मेव वर्णेन सुवर्णम्, कलरवेण पुंस्कोकिलान्, केशैः शैलमयूरवृन्दान्, ललाटेन कलाधरकलाम्, लोचनाभ्यां खञ्जनान् अधरेण बन्धुजीवम्, हासेन ज्योत्स्ना तिरस्कुर्वन्ती वयसा एकादशमिव वर्ष स्पृशन्ती श्यामकौशेयवस्त्रपरिधाना······ अविदितग्रहुल्लतानतारतम्य मन्दमन्द मुग्धमुग्धं मधुरमधुर किञ्चिद् गायतीति।

शिवराजविजयस्य भाषास्ति नितान्तमेव चमत्कारमयी। सां निशम्याधीत्य वा मनो विस्मितं भवति तत्, तच्छ्रवणाध्ययनावेहसि भृश मुग्धं जायते, सर्वमपि अन्यत् तद् विस्मरति, अपूर्वमेव विलक्षणमेवाद्भुतमेव रसं निपीय तन्मन्यते आत्मान धन्यतमम्। विलोक्यताम्—

"अपरदासेरकेण स्वादिष्ट मार्गा नव वारिद वारि बिन्दु वृन्दमम्पर्क प्रशमितनिन्दुर सन्दोह मन्तर्पणमधुरगन्धि रजनीकरनिकरविरोचिता भूमिमालोकयन् आमघटुपाञ्जलमुक्तोदय हस्तपादं प्रक्षाल्य, हनुमन्मूर्तिं दृष्ट्वा प्रमपि नित्यनियममिव निर्वाह्य······बालानां मुखमनुभवन्, कदाचिच्चन्द्रम्, कदाचित् तारका",

क्वाचिद् गिरिशिखराणि अवलोकयन् ' परिस्पन्दपरपादाहति-पिच्छिल-पाषाण-पट्टिका-परिष्कृत-वेदिकाया पर्यटन् कञ्चित् समयमतिवाहयामास ।"

अस्मिन् शिवराजविजये बहूनामलङ्काराणां प्रयोगः कृतो दृश्यते। क्वचिदुपमा, क्वचिद् रूपकम्, क्वचिद् विरोधाभासः, क्वचित् समासोक्तिः, क्वचिच्च अन्येऽनेकेऽल-ङ्काराः सचेतसां चेतांसि चोरयन्तः परिस्फुरन्ति ।

'एष भगवान् मणिराकाशमण्डलस्य, चक्रवर्ती खेचरचक्रस्य, कुण्डलमाखण्डलदिशः, दीपको ब्रह्माण्डभाण्डस्य, प्रेयान् पुण्डरीकपटलस्य" इत्यादौ माला-रूपकालङ्कारः कियतीं मनोहरच्छटामावध्नन् विलोकितो भवति, ' वर-कम्पित-कृपा-कृपण-कृपाणो महादेवमाराधयिषुस्तपस्विवेषोऽर्जुन इव शान्तवीररस इवस्थान" इत्यत्र पूर्णोपमा स्वकीयं सौन्दर्यं वितन्वन्ती दृष्टा जायते, "परितश्च तस्यैव सर्वामप्यपर्वपराक्रमां श्यामामपि यशःसमूहश्वेतीकृतत्रिभुवनां कुशासना-श्रयामपि सुशासनाश्रयाम्' इत्यादौ विरोधाभासस्य विच्छित्तिः साधु दृष्टिगोच-रीभवति, 'धारित्ताकृतिमिव वीरतां विग्रहिणीमिव धीरता" मित्यादावुत्प्रेक्षा परिस्पन्दमाना सती विलोक्यते, "तेषां चैकैकमन्तरा महाफला माकन्दद्रुमाः, मध्ये मध्ये च विहितपार्श्वस्थ पादपालम्बा मन्दमन्दमनिलान्दोलिता लता लसन्ती" इत्यादौ समासोक्तिश्च स्वविलासेन बुधवृन्दस्य मनो हरन्ती वीक्ष्यते ।

"पाथोधि पथ पूर परिवर्ति परश्शतपोतस्थ सांयात्रिकसमूह गेगीयमान कीर्ति-चन्द्रिका-चुलुकन चकोरीभूत कोङ्कण कल्याण स्यादशादि-महामण्डल मण्डन" इत्येवविधानि दीर्घदीर्घतराणि समासाश्लेषितानि वाक्यान्येव न, शिवराजविजय उपहारीकृतस्य कोविदकुल परिप्रीणात्यपि तु स "अभाग्य एष जनः, अस्वायत्त हृदयम्, विगलित धैर्यम्, पराधीनं चित्तम्, अस्थिर धाम्ना, दुर्निवार प्रेमप्रवाह, दुरन्तोऽभिलाषः, अप्रतिरोधा कर्मरता, तत् किमिव वच्मि ? इत्यादिकानि सरलसरलतराणि लघुलघुतराणि वैदर्भीरीतिसमुन्मिषितानि वाक्यानि श्रोपायनी कृत्य विद्वद्वर्गं नन्दयति ।

शिवराजविजयो न केवलं साहित्यिकान् ललितललिततरैः नवनवकल्पनाक्लिन्नैर्नानाभावविभावविनैर्वाक्यैः सम्यक् मोदयतेऽपि तु स' धानुष्क शास्त्रीय प्रामिक-धाविस यत्र-तत्र मोमुद्यमान-नरानृत्यमान-पोस्फुर्यमान तानप्यमान-अतुल्य-वाक् प्रावयाविदन् विविधेषु विषयेषु स्वपाजित अनापित चर्वित चर्वित-उद्-भिन्नकृतिप्रचुरतरपदानि च प्रयुज्य वैयाकरणानामपि समाजं साधु परितोषयति ।

शिवराजविजयो हि नवनवाभूतपूर्वाश्रुतपूर्वपदानाञ्च निधिरस्ति। कतिप-यानि पदानि विलोक्यन्ताम्—मोठिवि, मोहरम:, रामयानम्, इष्टका, अमरिका, काचयानम्, अष्टापदम्, पाल्की, मज्जितम्, गुड्डारु, छुरिका, गुदन:, आरनालम्, कपट्टोल, पोटलिका, गडगडा, कषिका च।

शिवराजविजये ये संवादाः समुपस्थापिताः सन्ति तेऽपि संवादानुकूलवाक्य-युक्तत्वात् रामणीयकतां श्रयन्ति। तच्चोरपि निभालनीया—

महादेवः—उद्वाहः कदा भविता ?

संन्यासी—श्वः।

महादेवः—अथ वरयात्रा-समयः कः ?

संन्या०—यातैकयामायां यामिन्याम्।

महा०—कति सहचरा अनुमता नगराधिकारिभिः ?

संन्या०—वादकातिरिक्तास्त्रिंशत्।

महा०—भद्रम्, वयमपि सह योत्स्यामः।

शिवराजविजये यत् किमपि कथितं तत्र सर्वत्र अमोघा ओजस्विता, चम-त्कारकारिणी ऊर्जस्वलता, विचित्रैव वक्रोक्तिः, अद्भुतो भावाभिव्यञ्जनविधिश्च शोभन्ते। पाठकानां श्रोतॄणाञ्च मनांसि सर्वेभ्योऽप्यन्येभ्यः पदार्थेभ्यः प्रसभमा-कृष्य शिवराजविजयस्य प्रभावपेशलानि गद्यानि स्वदिशाम्प्रति स्वाभिमतम्प्रति स्वलक्ष्यम्प्रति परमसफलतापूर्वकं नेतुं तानि, सर्वथैव क्षमाणि भवन्ति। न कादम्बर्यां न वासवदत्तायां न दशकुमारचरितेऽपि सा भावप्रकटनप्रवीणता दृष्टिपथं याति या अत्र वीक्षिता भवति दिङ्मात्रमिह तस्या विद्युतो लोलालोकेन क्रियतां स्वजी-वनं सार्थकम्—

( क ) हा भारत ! किं लुण्ठकैरेव भोक्ष्यसे ? हा वसुन्धरे ! किं दीनप्रजानां रक्तैरेव स्नास्यसि ? हा सनातनधर्म ! किं विलयमेव यास्यसि ? हा चातुर्वर्ण्य ! किं यथावशेषमेव भविष्यसि ?

( ख ) ······भगणित-फणावलि फूत्कृतैरिव पीड्यमानो विमल-कमलोदर-सोदर-सौन्दर्याभ्यां कमलकोमलकमला-करतलाभ्यां पादयोः पीड्यमानो नितान्तं तस्मिन्नेव कोमलतमर्यङ्के शेते शेते। तत् किं जगतः शेषे तत्र निद्रया भज्यते ? ······तत् किं गजोद्धार-धावन-श्रमितोऽसि ? यत्र धावसि। निशाचरगहनन-यत्नाय सज्जितोऽसि ? यत्नातुरसि।

न शिवराजविजये पुरातनकथनप्रणालीमङ्गीकुरुते । अङ्गीकृतापि यद्यपि तदा सा नवीनायामेव शैल्या परिणमय्य अवतारितास्ति । तत्र रूपशिल्पस्य सौष्ठवं बङ्किमचन्द्रकृतस्योपन्यासस्य सौष्ठवमनुहरति । बाणस्य गद्यसौन्दर्यं तत्र भाति परं तदुपरि व्यासस्य मुद्रा स्पष्टं परिस्फुरति, तत्र दशकुमारस्य पदलालित्यं विद्योतते परं न तत्पौराणिकतयालिङ्गितमस्ति । इतिहासकल्पनयोरत्र स मञ्जुलः सम्बन्धः सगुम्फितो यः संस्कृतसाहित्यस्य न पुरातने न चाभिनव एव साहित्ये विलोक्यते ।

न शिवराजविजये लेखकतल्लजेन कापि अतिदूरी कथा सृष्टा तत्र तु समान मनस्यैव तस्य ज्योतिः पिण्डस्य मानवस्य चरित्रं चित्रितं यो विशङ्कटसङ्कटसङ्कुलेऽ नेहसि भारतीयगौरवं गोपायाञ्चकार । तस्य मानवरत्नस्य चरित्रमुद्रीय नून व्यासमहाकविर्जीवनस्य ता व्याख्या वितताना यत्रादर्शमानवताया रूपं प्रत्यक्षी भवति । सैव, राष्ट्रियता शतशतस्वरैर्मानवं प्रमोदयन्ती सर्वतः स्वां दिव्याभाभां विकिरति ।

अहो, अम्बिकादत्तव्यासो, वस्तुतो महान् प्रतिभावान् विद्वान् कल्पनावान् उत्कृष्टराष्ट्रानुरागवान् अस्ति । तस्य देशभक्तिस्तस्य स्वसंस्कृतिविषयकं प्रेम एकैकस्तद्वचनात् प्रकर्षेभवप्यरतस्तस्य रचनातस्तदीयमुत्कटं पाण्डित्यं भाषाया उपरि महान् एकाधिकारो व्याकरणादिशास्त्रनिष्णाततादिकाश्च गुणा व्यक्ता भवन्ति । केन प्रकारेण तदीयेयं कृतिर्वर्णनीया स्यात् या वीरताया इतिहासोऽस्ति, या राष्ट्रप्रेम्णो मन्दाकिनी अस्ति, या नानाकलाना कलितं राजभवनमस्ति, या चारुचारुतरचरित्राणां चित्रशालास्ति, या हृदयहारिणां कोमलकान्त पदावलीना विलासागारोऽस्ति ।

स्वरचनां प्रति, सत्यमेव, एष कविर्व्यासः "स्वर्वामाधरमाधुरीं विधुरयन् वाचा विलासो मम" इत्यभिदधौ । अन्ततो वयं—

'का द्राक्षारसमाधुरी मधु च किं क्षीरं च किं साम्प्रतं
किं धाद्यक्रमनं च किं पिकवचः किञ्चापि योषिद् स्मितम् ।
राष्ट्रप्रेममयी महोज्ज्वलगुणा वीरानुरागाञ्चिता
दत्तव्यासकवेर्गिरा यदि शिवा श्रोत्रद्वयं गाहते ॥"

इत्येतेषु पदेषु निधाय नैजां नतिमिमां महनीयां कृतिम्प्रति, विरमाम ।

( ४७ )

## गीतिकाव्यम्

अस्ति गीतिकाव्यं सुरसरस्वतीमातु परममृदुलं शिरीषादपि पेलवं मनोरम मङ्गम्। तन्मुक्तक-प्रबन्धभेदेन द्विविधम्। यत् सन्दर्भानपेक्षि भवत् स्वयमात्मन्येव पूर्णतां बिभ्रत् स्वविषयवस्तुना रसिकानां मनांसि रञ्जयद्रसपेशलं भवति तन्मुक्तकमिति[1] संज्ञया प्रथितम्। एतदीयं प्रतिपदं सरसं भवति तदास्वादमात्रेण सहृदय-हृदयं सद्यः परिप्रीणयति। मुक्तककाव्येषु भर्तृहरेः शतकत्रयममरुकस्य चामरुकशतकं साम्प्रतिककविकुलालङ्कारभूत-पं० मधुरानाथस्य सरस्वती-सौरभञ्च सुन्दरतमान्युत्तमानि मुक्तककाव्यानि सन्ति। प्रबन्धकाव्येष्वेव रसः परिपोषमुपैतीत्येतां धारणां वस्तुतो मुक्तकानि काव्यानि समूलमुन्मूलयन्ति। रसं तत्र प्रतिपदमुत्तरलीभवदनुभूयैव आनन्दवर्धनः "मुक्तकेषु हि प्रबन्धेषु इव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते" इत्येतदाह।

यत्र किमपि सत्यं कल्पितं वा आख्यानकं कस्यचन गेयचरितस्यैकदेशिजीवनं गातुमुपादीयते तत्प्रबन्धात्मकं गीतिकाव्यमिति स्मृतम्। मेघदूतमन्यानि च पवनदूत-हंसदूतप्रभृतीनि काव्यानि उत्तमप्रबन्धगीतिकाव्यत्वेन गण्यन्ते।

गीतिकाव्येषु कवयः सङ्गीतमयानि वृत्तानि च प्रयुञ्जानाः प्रायेण प्राप्यन्ते ते तत्र सुकुमारान् भावान् तदनुरूपाणि च मधुरमधुरतराणि पदानि निबध्नन्ति। वर्णनाय च शृङ्गार-नीति-वैराग्य-प्राकृतिकदृश्यसम्बन्धिनो विषयास्ते तत्र चिन्वन्ति। विप्रलम्भ-शृङ्गार-करुण शान्तरसास्तत्र विशेषेण रमणीयतामनुभावना वीक्षिता भवन्ति। हृदयपक्ष एव प्राधान्येन परिस्फुरन् सर्वत्र, कार्ये व्यापृतः समवाप्यते च तत्र।

प्रकृत्या अधीरः कातरः सुखाभिलाषश्च मानवः। स आत्मानं स्वजनं परं वा विपद्ग्रस्तं दीनं वीक्ष्य विषीदति नितराम्। न तस्य सह्यो जायते स्वप्रियजन-विच्छेदः। दुःखानि यदा तमभिभवन्ति क्लेशा यदा तं क्लिश्नन्ति स रोदिति; सगद्गदः सुखानि स्वजनस्नेहः प्रियजनसम्पर्कश्च तं प्रसादयति प्रमोदयति च। तथैवा

---

1. पूर्वापरनिरपेक्षेणापि हि येन रसचर्वणा क्रियते तदेव मुक्तकम्–ध्वन्यालोकः

स हसति, क्रीडति, निषीदति, स्वपिति, विश्राम्यति, अत्ति, वक्ति च यत्र तदनुकूला. स्थितय आसाद्यन्ते । मानवस्य एष स्वभाव एव गीतिकाव्ये कविना मधुरमालिख्यते । कविप्रतिभायाः कमनीयं संस्पर्शमवाप्य मानवस्य तास्ता दुर्बलताः अपि आनन्दवर्षिण्यो भूत्वा भावुकानां पुर उपतिष्ठन्ते । ताः कस्मिन्नपि मनःप्रमोदकरे रूपे परिणता भवन्त्यः परिस्फुरन्ति । दुःखकरमपि मानवस्याख्यानं, विचित्रमेवैतद्, कविकल्पया सुखास्पदं सञ्जायते । दुःखमपि तत्रस्थं सुखत्वेनानुभूयते ।

गीतिकाव्येषु नारीप्रणयस्योदात्तता स्वीयं मर्म्मभागमपि समुन्मीलयन्ती दृग्गोचरीभवति । तत्र बाह्यप्रकृतेराभ्यन्तरप्रकृतेश्च प्रभावोऽन्योन्यमनुगृह्णन् प्रफुल्लति । यथा चलचित्रालये चित्राणि दर्शकानां चेतांसि चोरयन्ति तथैवात्रापि गीतिकाव्ये प्राकृतिकानि दृश्यानि रसिकानां स्वान्तानि हरन्ति ।

मुक्तकमपि गीतिकाव्यं लौकिक-धार्मिकभेदेन द्विविधतां भजति । लौकिकं हि मुक्तकं लोकविषयकैर्विधानैर्बन्धुरं भवति, धार्मिकं विशिष्टानां देवतानां स्तुतिभिः सुन्दरम् । संस्कृतसाहित्ये चिरन्तनात् कालात् द्विविधयोरपि लौकिक-धार्मिकगीतिकाव्ययोः प्रणयनं कुर्वन्त कवयः प्राप्यन्ते ।

वैदिकसंहितायामपि गीतिकाव्यस्य दिव्यैवाभा भाति । यवयस्तत एव वस्तुतो गीतिकाव्य-विरचनस्य शुभां प्रेरणामलभन्त । संहितासु उष-इन्द्र-विष्णु-वरुण-मरुदादीनां देवानां हृदयहारिणी: स्तुतीरधीत्य संश्रुत्य वा कवयोऽपि जगद्धरभट्ट-पण्डितराजजगन्नाथो-त्पलदेवप्रभृतय: स्वकीयानि गीतिकाव्यानि च देवस्तुतिपराणि प्राणैषुः ।

महर्षयो हि सत्यस्योपासका आसन् । ते तस्य सत्यस्य गवेषणाय सततमयतन्त यदीयया शक्त्या ब्रह्माण्डस्यापि सकलस्य सर्वेऽपि पदार्थाः स्व-स्वक्रियासु संलग्ना: सन्ति । तदर्थं ते प्रतिपदार्थं दृष्टास्तत्र च प्रविविशुः । प्रतिपदार्थस्याभ्यन्तरभागे प्रविष्टत्वात्, तेषां, तेषु तेषां तादात्म्यमेव सञ्जातम् । स्वेच्छया स्वीकृत एष तेषामुत्सर्गस्तेषां गिरासु ज्ञानगरिमाणं वर्णनमधुरिमाणञ्च उद्बीभवत् । श्रुतिमन्त्रेषु तत्तद्गुणवैशिष्ट्यस्य दर्शने कारणमिदमेव प्रतिभाति । तेषु मन्त्रेषु एतादृशा अपि भूयांसो मन्त्राः सन्ति यत्र महर्षीणां वृन्दं स्वीयान् मनोभिलषितानपि भावास्तीव्रानुभूतिपुरस्सरं विनम्वानमभिगम्यते । त एव मन्त्रा

धार्मिकगीतिकाव्यरचनोद्गीता भवन्ति । केचनात्र मन्त्रा उद्ध्रियन्ते । येन वैदिक गीतिमनोज्ञता दृष्टिपथेऽवतरितुमर्हेत्—

"अद्रेरधि पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं ततक्ष ।
वाश्रा इव धेनवः स्यन्दमाना अञ्जः समुद्रमव जग्मुरापः ॥"

इत्येष मन्त्र इन्द्रस्तुतिपरकः । अथ सायं गोचरान्निवर्तमानानां स्ववत्सोत्सुकानामुच्चै रावं विदधतीनां धावन्तीनां सौरभेयीणां 'वाश्रा इव धेनवः' इत्येनया पदपङ्क्त्या मनोहरं दृश्यञ्चोपस्थापयति । धेनुषु अपामुपमितता च कियती प्रिया । ये हि भावा मानवमानसं कमपि शक्तिविशेषं स्तोतुं नुदन्ति ते भावास्तदा हृदये समुत्पद्यन्ते यदा शक्तिः स्वतेजस्वितया मानवमभिभावयति हृदये । दृष्टस्तानि तानि लोकहितावहानि कार्याणि गहनविस्मयोत्पादनपूर्वकं स्वीयान् महनीयान् प्रभावान् निदधाति मानवस्याग्रे । स ( मानवः ) ततस्तां शक्तिं चर्वणकारिणीं स्तोतुमुपक्रमते । एष मन्त्रो यस्मादिन्द्रसूक्ताद् गृहीतः तदपि तच्छक्तेर्महिम्नः प्रेरणया प्रेर्यमाणाद् हृदयान्निर्गतमस्ति । एतादृशा मनोहरा अलङ्कारलसिता हृदयोद्गारा गीतिकाव्यनररत्नरूपाः श्रुतिषु सन्ति सहस्रशः ।

औषसानि सूक्तानि नितरामेव गीतिकाव्यस्य ललितं रूपं सृजन्ति । तत्रत्यानां भावनानां भव्यता नितान्तं मनो हरति । अधिप्रभातमरुणिम्ना मण्डितं सुवर्णच्छटयाऽऽच्छुरितं प्राच्यं नभोमण्डलं पर्यवेक्ष्य कस्य न भावुकस्य हृदये कोमला भावनोदेति ? अपि स्तब्धनिमीलते प्रेम्णा । स तदभिराममुपमायामुन्मज्जति निमज्जति च उषसोऽवदातद्युतिस्तस्य कविहृदयमुद्बोधयति । उषः सुन्दरीव तस्य प्रतिभाति भावानामुद्दामो वेगस्तथा वर्धते यत् स तस्यामात्मानं लोपयति । स कदापि उषसं कुमारीं कदापि प्रेयसीं कदापि मातरं मन्यते । भावनानां वलीयसा रहसा स सानन्दमेव गानुमारभते—

"अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम् ।
जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते अप्सः ॥"

हन्त, कवेर्हृदयमुपसि किं किन्नोत्प्रेक्षते । तत् उषः सुन्दरतां तीव्रतयाभिव्यञ्जक्तुं नानालङ्काराणां विधानं प्रस्तौति । शुभ्ररूपवती उषा सिस्नासुः सुन्दरीव नभःसरसि अवतरति कदापि, भ्रातृविहीना भगिनीव कदापि सा दायभागमादित्सया पितरं सूर्यं निकषोपसरति, चारुतरं दुकूलं वसाना प्रेमपाशेन पतिं वशीकर्तुकामा सौन्दर्याभिमानिनी कामिनीव प्रियतमस्य पुरः कदापि गच्छन्तीव विलोक्यते।

तदेवं श्रुतिषु प्रभूतानि सूक्तानि गीतिकाव्यस्य ललिततराणि निदर्शनानि विभान्ति । महाकविः कालिदासः स्वकाव्येषु प्रकृतेर्द्विविधस्यापि रूपस्य आभां प्रस्तुवन् प्रेक्ष्यते । तदीये ऋतुसंहारे प्रकृतिश्चेरस्वीयं रूपमनावृत्य रमणीयां श्रियमाकलयन्ती पुरोऽस्माकमुपतिष्ठते सदा मेघदूतेऽलङ्काराणां दीप्त्या दीप्यमानां सुमृदुलभावभङ्गीनां शोभया देदीप्यमानां रमण्याः सुन्दरतां निन्दन्ती दृग्गोचरेऽवतरति । कालिदासस्येदं प्रकृतिचित्रणं वैदिकीं शैलीमेवानुसरति ।

लौकिकेषु गीतिकाव्येषु मेघदूतं तिलकायते । तत्र कुबेरशापशप्तस्य विरहिणो यक्षस्य प्रियतमा-वियोगजनिताया व्यथाया मर्मस्पर्शितया कविना चित्रणं कृतम् । मानव-प्रकृतेः बाह्यप्रकृतेश्च परमहृदयहारि सामञ्जस्यं समुपस्थापितन्तत्र । बाह्यप्रकृतिर्यादृशीं चरमप्रधानतां तत्र नीता वीक्ष्यते न कुत्राप्यन्यत्र तादृशीं प्रधानतामासादितावलोक्यते । पूर्वमेघे तु आदितोऽन्तं यावत् प्रकृतेरेव कमनीयाकृतिर्दृग्गता जायते । यक्षस्य तत्प्रेयस्याश्च विरहावस्थाया वर्णनं विधाय कविर्मानवमानसस्य मार्मिकचित्रमेव प्रस्तवीति । यदा प्रभृत्येव काव्यमिदं सृष्टमभवत् तदा प्रभृत्येव न विद्मः कियन्तः कवयो हि काव्यादेतस्मात् प्रेरणां पूतामवाप्य दूतकाव्यप्रणयने रता बभूवुः कियन्तश्च तस्मात् सुधास्रोतस सुधां निपीय स्वजीवनं धन्यममंसत । न ज्ञायते च भाविनि कालेऽपि कियतां कवीनां प्रेरणास्रोतस्त्वेन च तत् सिद्धं स्यात् । यथातीतकाले कवयो नेमिदूत-शीलदूत-चन्द्रदूत-पवनदूतप्रभृतीनि काव्यानि, काव्यमिदं विलोक्य, कर्तुं प्रावर्तन्त वर्तमाने च यथा भ्रमरदूत-पत्रदूतप्रभृतिकाव्यानि च विरचयन्तो दृश्यन्ते तथैव भाविन्यपि अनेहसि बहवो हि कवयः प्रयतिष्यन्ते यत् तेषामपि दूतकाव्येषु तदेव सौन्दर्यं तदेव च माधुर्यं संभृतं स्यात् यन्मेघदूते समन्तात् प्रवहमानमस्ति । गीतिकाव्याग्रगण्यस्य मेघदूतस्य रमणीयां सुकोमलां कल्पनां तदनुरूपां भाषां मनोरमां, प्राञ्जलं प्रवाहं स्निग्धं प्रियं पदवृन्दं, प्रकृतेः किञ्च मानवप्रकृतेरुन्मादिनीं सुन्दरतां प्रेक्षन्तां क्षणम्—

अम्भोबिन्दुग्रहणचतुरांश्चातकान् वीक्षमाणाः
श्रेणीभूताः परिगणनया निर्दिशन्तो बलाकाः ।
त्वामासाद्य स्तनितसमये मानयिष्यन्ति सिद्धाः
सोत्कण्ठानि प्रियसहचरीसम्भ्रमालिङ्गितानि ॥

संस्कृतसाहित्ये गीतिकाव्यं यस्यां द्वितीयस्यां सरण्यां प्रणीतमभूत् सास्ति शतक-

शैली। शतकशैल्यां लभ्यमानेषु गीतिकाव्येषु भर्तृहरेः शतकानि शिरोभूषण भूतानि सन्ति। शतकीयानां श्लोकानां जनसाधारणस्य रसनायां सञ्चरणं भर्तृहरेः कृतीनां लोकप्रियतां स्पष्टतः प्रथयति।

शतकत्रयस्य नामानीमानि (१) नीतिशतकम्, (२) शृङ्गारशतकम्, (३) वैराग्यशतकम्। एतेषां शतकानामध्ययनेन तल्लेखकस्यावासपूर्णजगदनुभवत्वं विदितं जायते। अनुभूतीनां मार्मिकपक्षग्रहणे तद्धीः अद्भुतामेव क्षमतां निदधती विलोक्यते। यः कविः संसारमधिवसन् स्वानुभूतिबलेन तस्य (संसारस्य) हृदयमवगम्य कवितायां तस्य (हृदयस्य) रूपं साकारत्वेनालिखितुं क्षमते स एव सफलः कविरिति मनीषिभिः शस्यते। भर्तृहरिरेवंविध एव। स संसारस्य लघुलघुतराणि वस्तूनि अपि सूक्ष्मतया ददर्श व्यवहारांश्च विविधान् सावहितमानसैः शिक्षामपि सत्परिजग्राह—एता हि सकलास्तदीया विशिष्टतास्तदीयाभी रचनाभिरुच्चैराविर्भाव्यन्ते। शतकत्रयस्य लेखकक्रमे यन्मनुजो मङ्गलं पश्येत् सः सद्गुणान् सञ्चित्य नैजं जीवनमुन्नमयेत्। अत्र तद्रचनातः केचन श्लोका उद्ध्रियन्ते येन हि तत्कविताया अनन्यलब्धा विशिष्टता विदिता स्युः। येषां संसर्गात् न कोऽपि गुणो लब्धो भवितुमर्हति तेभ्यः को लाभः। धन्यास्त एव जना ये तुच्छान् अपि अयोग्यान् अपि गुणवतो विदधति—इत्येतन्नार्थं कियत्या विचित्रया चारुतयाभिव्यनक्ति कविः।

> किं तेन हेमगिरिणा रजताद्रिणा वा
> यत्राश्रितास्तु तरवस्तरवस्त एव।
> मन्यामहे मलयमेव यदाश्रयेण
> कङ्कोलनिम्बकुटजान्यपि चन्दनानि॥

यदपि कार्यं कुर्वीत तत्साधु चिरं विमृश्यैव विदधीत अन्यथा तत्फलेन दुःखमेव भवति। जगति अविमृश्यकारिणो जनान् अनुशयं विन्दमानान् प्रेक्ष्यैव कविरिदमाह—

> "उचितमनुचितं वा कुर्वता कार्यजातं
> परिणतिरवधार्या यत्नतः पण्डितेन।
> अतिरभसकृतानां कर्मणामाविपत्ते-
> र्भवति हृदयदाही शल्यतुल्यो विपाकः॥"

जगति पुष्पितां वाचं वदतां जनानां संख्यातिविशाला परं दानादिना साहाय्य-कारिणो विरलाः—इत्येतदनुभूय कथयति कविर्वैदग्ध्यविलसितया गिरा—

" रे रे चातक सावधानमनसा किञ्चित् क्षणं श्रूयता-
म्मम्भोदा बहवो वसन्ति गगने सर्वेऽपि नैतादृशः ।
केचिद् वृष्टिभिरार्द्रयन्ति वसुधां गर्जन्ति केचिद् वृथा
यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ॥"

सत्यमिदं यज्जगति धनं विना न जनः क्वापि मानं लभते कामं स विद्यागुण-कुलसनाथः स्यात् । निर्धनत्वात् स सर्वत्र तिरस्क्रियत एव—इत्येतद् विलोक्य भुवि कविर्व्याहरति—

जातिर्यातु रसातलं गुणगणस्तस्याप्यधो गच्छतु
शीलं शैलतटात् पतत्वभिजनः सन्दह्यतां वह्निना ।
शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥

यत् सुखं शाश्वतं निर्वेदे न तत् क्वापि । विपुलवैभवादिकं किमपि न शान्ति-प्रदम् । शान्तिस्तु वैराग्यादेव लभ्या भवतीति दृष्ट्वा ब्रूते कविः—

मही शय्या रम्या विपुलमुपधानं भुजलता
वितानं चाकाशं व्यजनमनुकूलोऽयमनिलः ।
शरच्चन्द्रो दीपो विरतिवनितासङ्गमुदितः
सुखी शान्तः शेते मुनिरतनुभूतिर्नृप इव ॥

सम्प्रति गीतिकाव्यस्यान्यविधमेव माधुर्यं पाययितुं पुर उपतिष्ठते । एष कवि-रस्ति 'अमरुशतकस्य' रचयिता 'अमरुक' । अहो, धन्योऽयं कविर्यं ध्वन्या-लोककारो रसमर्मविद् आनन्दवर्धनाचार्योऽप्येवं प्रशंसति—

"मुक्तकेषु हि प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते । तथा अमरुकस्य कवेर्मुक्तकाः शृङ्गाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव"

जगन्नाथपण्डितीयाया रचनाया शतकानि बहून्यवगतानि परं तस्मिन्नपि तत्र रसिकानां चेतांसि भृशं रमन्ते । तस्या मनोहारितैव तस्या लोकप्रियतायां कारणम् । वस्तुतोऽस्मिन् रसकवि जगति शृङ्गाररसस्यानुपमो निधिः । नास्य-समाप्तौ त्रुटिः न कापि सरसता स्यात्तु सम्भोति । 'घटे सागर' इत्येषा लोकोक्ति-रत्र यथार्थतामभिलापीकरोति । तस्य काव्यं मनोभिरम्यधाराप्रवहितमिव ।

माधुर्यं च पावनम्। अलङ्काराणां छटा मनोहारिणी। स्वभावोक्ति उत्प्रेक्षा, उपमा, अर्थान्तरन्यासश्च—इत्येतेऽलङ्कारास्तु वस्तुतः सहृदयानां हृदयं नितान्तं नन्दयन्ति। संस्कृतसाहित्येऽयं विद्वान् भल्लटो महाकविषु गण्यते। निपीयन्ता केचन तत्कवितासुधाशीकरा—

"एतत् तस्य मुखात् कियत् कमलिनीपत्रे कणं वारिणो
यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन् यदस्मादपि।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनै
कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तः शुचा॥"

मन्दाक्रान्तामस्थाने ममत्वमिह कियत्सु सुन्दरेषु शब्देषु सन्निहिता—
"कस्त्वं भो कथयामि दैवहतकं मां विद्धि शाखोटकं,
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायापि परोपकारकृतये मार्गस्थितस्यापि मे॥"
स्वाभिमतमर्थं कियल्ललितया सरण्यात्र कविर्निदधाति स्म।

<u>आचार्यगोवर्द्धनः शृङ्गाररसस्य सिद्धकविः</u> कविषु। कविर्जयदेवस्तमेवं श्लाघते—

"शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्द्धनस्पर्धी कोऽपि न विश्रुतः।" कविरयमार्यारचनायां सुप्रथयशाः। आर्यासमं छन्दो नात प्राक् कोऽपि एतावत्या सुचारुतया लिलेख। आर्यासप्तशत्यामेव कविः शृङ्गारस्य विविधानामवस्थानां वर्णनं मार्मिकतया विदधानोऽवाप्यते। मानवहृदयस्य प्रवृत्तीनाञ्च महान् वेत्तायं कविरित्येतद्वस्य कृतेरध्ययनेनाप्येवा सम्यग् ज्ञातुमर्हति। आश्चर्यमिदं यदेव आर्यासदृशलघुच्छन्दस्यपि विविधानां विशालानाञ्च भावानां सन्निवशने सफलतया क्षमो बभूव। आर्यासप्तशती हालकविकृतां गाथासप्तशतीं स्वपुरत आदर्शरूपेण निदधाति। श्रूयतां केचनमार्याञ्चितयम्—

"तल्पे प्रभुरिव गुरुरिव मनसिजतन्त्रे श्रमे भुजिष्येव।
गेहे श्रीरिव गुरुजनपुरतो मूर्त्तेव सा व्रीडा॥
न सवर्णो न च रूपं न संक्रिया काऽपि नैव सा प्रकृतिः।
बाला त्वद्विरहादपि जातापभ्रंशभाषेव॥"

गीतिकाव्येषु जयदेवस्य गीतगोविन्दकाव्यममरकाव्यम् अस्ति। अत्र संस्कृत-भारत्याः सौन्दर्यस्य माधुर्यस्य च चरमसीमावलोकिता भवति। कोमलकान्तप-दावल्याः सरसप्रवाहं मधुरभावानां मधुमयीं धाराञ्चावगाहितुमनसो रसिका अत्र स्वेच्छयावगाहन्तां तेषां तृप्तिं मनसः काव्यमिदं विहाय नान्यत् कर्तुं पारयेत्। इहामन्दवृन्दारकवन्दनीयस्य व्रजचन्द्रस्य जगदाधाराधाया राधायाश्च ललितानां लीलानां यादृशं ललामं गानं श्रुतं भवति नान्यत्र क्वापि। भावानां भव्यता, शब्दानां सुन्दरता, अर्थानां सरसता सर्वाभरणभूषितेहावलोक्यन्ते। निपीयतामाकण्ठ-मधरीकृतसुरसुधा गीतिसुधैतदीया—

"उन्मदमदनमनोरथपथिकवधूजनजनितविलापे।
अलिकुलसङ्कुलकुसुमसमूहनिराकुलबकुलकलापे॥
केलिकलाकुतुकेन च काचिदमुं यमुनाजलकूले।
मञ्जुलवञ्जुलकुञ्जगतं विचकर्ष करेण दुकूले॥
मनोभवानन्दन चन्दनानिल प्रसीद रे दक्षिण मुञ्च वामताम्।
क्षणं जगत्प्राण विधाय माधवं पुरो मम प्राणहरो भविष्यसि॥"

श्रीरूपगोस्वामी च राधाकृष्ण-ललितकेलीनां नितरामेव रसमयमवदात वर्णनं स्तुतिश्लोकेषु विदधानो दृग्गोचरीभवति। रचनायामेतदीयायां गीतगोवि-न्दस्य प्रभावः स्पष्टमेवावलोक्यते। रूपगोस्वामी प्रतिभावान् श्रीराधाकृष्णविमल-भक्तिनिर्मलहृदयवान् महान् वैष्णवः कविर्बभूव। तस्य स्तवमालायाः स्तुतयो गीतिकाव्यस्य मनोऽभिरामं रूपं चित्रयन्ति—

हृदि वलदविरलपञ्जरपटलीस्फुटदुज्ज्वलमौक्तिकसमुदाया।
शीतलभूतलनिश्चलतनुरियमवसीदति सम्प्रति निराशा॥
गोष्ठजनाभयसत्रमहाव्रतदीक्षित भवतो माधव बाला।
कथमर्हति तां हन्त सनातनविपददां गुणवृन्दविशाला॥

स्तोत्रात्मकं गीतिकाव्यमपि परमसरसं हृदयस्पर्शननिपुणं विपुलं च। स्तोत्र-साहित्यसर्जनस्य गीतिकाव्यस्य रचयितारश्च प्रभूता भक्तकवयोऽजायन्त। अस्म-दीयसंस्कृतसाहित्यस्य निर्दुर्दैरेयाणां कविवराणां विशिष्टमेयं यत् ते यादृशीं माक्रमोति विद्यायां निर्वस्त्रादशीमेवाधरा ततोऽपि गुरुतरां भक्तिं भगवति च सरलां निहितवन्तः। इदमेव कारणमस्ति यत् तेषां कविताः सन्ति जीवनरसेऽ-

राम कृष्ण प्रताप गान्धि जवाहरलालादिकाना मूर्तिषु परिवर्तन्ते तत् साधनमेव 'मूर्तिकला' इति निगद्यते, येन साधनेन सीता दमयन्ती विवेकानन्द रवीन्द्रादि-कान् जनान् , गिरि सरित्काननादिकानि वस्तूनि वा आलेख्येऽर्पितानि पश्यामो वय तदेव साधनविलक्षण 'चित्रकला' इति कलाविदो वदन्ति । यथा चित्रकार साधारण दलादिकमपि दमयन्त्यादिषु घटयति तथैव सगीतकारोऽपि साधारणान् एव शब्दान् स्वरान् वा अतिमधुरान् सरसान् आनन्दविधायकाश्च विधाय सचे तसा पुर सन्निदधाति । तान् निशम्य मानवानां तु कथैव का मृगादिका पशवोऽपि भीषणविषधरा भुजङ्गा अपि नितरामानन्द विन्दन्त प्राप्यन्ते । तेऽपि पुन पुन सानन्द शिरो धुनाना सुखसमुद्रे निमज्जन्तो लीयमाना विलीयमानाश्च विलोक्यन्ते । सगीतकारा यया कलया ससार प्रमोदयन्ति सैव 'सगीतकले'ति कीर्त्यते । एवमेव कविरपि या शरण प्रपद्य शब्दार्थौ हि सुधामयौ कर्तुमवतार-यितु प्रभवति, कलाकलितौ भूत्वा च शब्दार्थौ तौ ससारे विचित्रविचित्रा घटना घटयितु समर्थौ बोभूत । कवेर्वाणीं ता निशम्य शूरा समराङ्गणे प्राणान् अपि सहर्षं जुह्वति, कृपणा अपि ता श्रुत्वा दातारो जायन्ते, जना राष्ट्र स्व रक्षितु, स्व धर्मं पातु बद्धपरिकरा जायन्ते। किं बहुना ससारे असम्भाव्या अपि घटना सम्भा व्यास्तदा भवन्ति यदा कवि स्वकीया कवित्वमयीं गिरा प्रयुनक्ति । तद्गिरया जनेषु अन्याय निरोधनाय अपार बल समुत्पद्यते, सर्वत्रैव करुणाया सरित् तथा प्रवहमाना भवति यत् सा तान् अपि जनान् परिप्लावयति ये कदापि एकमपि बाष्पबिन्दु मुञ्चन्तो न दृष्टा पुरा बभूवु , सयमिना कृतब्रह्मचर्याभिमानानामपि चेतांसि विकृतानि भवन्ति । एतद्विधा विचित्रा दशा नयन्तीं कविगिरा प्राप्यैव तामधिकृत्य सुधिय एव स्तुवन्ति—

> अपारे काव्यससारे कविरेव प्रजापति ।
> यथास्मै रोचते विश्व तथेद परिवर्तते ॥

यया कवेर्वाणी एतद्विध लोकोत्तर पदमश्नुते सेव 'काव्यकला' इति कथ्यते बुधै । )

एतासु पञ्चविधास्वपि ललितासु कलासु काव्यकला सा कलास्ति या घन कोऽपि स्वेतरा कला सर्वथा जयति । तस्मात् काव्यकला कलासूत्तमा कला । सा कलानां सम्राज्ञी । सा स्वगुणै स्वविशिष्टताभि स्वोत्कर्षैश्च विजयिभि सर्वां कला अधरीकृत्य जरीजृम्भते । सा सर्वासामपि कलानां शिरासि नमयन्ती श्रेष्ठ

मुक्ततममासनमधिकरोति । अत्रेदमिदानीं विमर्शनीयत्वेनापतितमास्ते यत् काव्यकलायां ते के गुणाः किंवा कास्ताः विशिष्टता विभान्ति यद्वशात् सा सकला अपि कलाः अतिशेते । कलारहस्यविदां विपश्चितामभिधानमिदं यत् कलासु सैव कला श्रेष्ठा कला गण्यते या मूर्ताधारञ्च कदापि स्प्रष्टुं शक्नोति । स्थापत्यमूर्तिचित्रकलाः स्फुटमेवाधारापेक्षिण्यो दृश्यन्ते; सङ्गीतकलापि नादनिघ्ना परिधीयते । काव्यकलैव एतादृशी समवाप्ता जायते सर्वेभ्योऽपि तन्त्रेभ्यो या स्वतन्त्रा भवन्ती कलाजगति समुद्भासते सा महतोऽपि महत्तरं यत् कार्यं साधयति, न तदन्या कला हि साधयितुमीष्टे । तदर्थं प्रतिभाऽपेक्ष्यते; शास्त्राण्यभिलष्यन्ते, सत्कवीनां सन्निकर्षं आकाङ्क्ष्यते; सत्कविकवितानामनुशीलनमपेक्ष्यते । सा महद् ज्ञानं विशालमनुभवं व्यापकञ्च पाटवं कामयते । एतेषां सर्वेषामप्यपेक्षा अन्यस्याः कलायाः कृते न भवति । एतद्धेतोरपि काव्यकला सर्वाभ्योऽपि कलाभ्यः श्रेष्ठा किञ्च ज्येष्ठा । स्थपति-मूर्तिकार-चित्रकारादयः स्वं स्वं कलात्मकं कौशलं प्रदर्शयितुमभिमतं पर्याप्तं क्षेत्रमधिगच्छन्ति परं कविनटस्तु स नट आस्ते यः स्वीयकाव्यकलाकौशलस्य प्रतिष्ठापनाय तावन्तमप्याधारं नापेक्षते यावान् आधारो नटेनातिसूक्ष्मतन्तूपरि चलनार्थं गृह्यते । अन्ये कलाकारास्तु बाह्यमेव सौन्दर्यं परिलक्षयितुं क्षमाः सञ्जायन्ते परं काव्यकलाकारास्तु आभ्यन्तरमपि सौन्दर्यं विना रङ्ग-तूलिका-करण्डिकादिसाधनं प्रथयिष्णवो भवन्ति । सा यथा सुन्दरतया सर्वान् अपि लोकान्, समग्रान् अपि कालान्, सर्वत्रापि अविद्यमानान् पदार्थान् अपि अवतारयति न तथा सुन्दरतया अन्याः कलास्तत् सकलमपि वस्तुजातमवतारयितुमलं जायन्ते । विधातुः सृष्टौ यत् क्वापि न विलोक्यते काव्यकलेयं तदपि प्रादुर्भावयति । या नवरसरुचिरता दृश्यते सान्यस्यां कलायां क्व । एवंविधा अनन्यसदृशविशिष्टतामालोच्यैव आचार्यमम्मट आचष्टे—

> "नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।
> नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥"[1]

'कला कलायाः कृते' इत्येव उद्घोषो हि येषां वर्तते तेषां कवीनां काव्यानि पाण्डित्यप्रधानानि संलक्ष्यन्ते । तानि विविधालङ्कारतदुपस्कारादिप्रसाधनैस्तथा प्रसाधितानि सुगुम्फितानि सुश्लिष्टानि च जायन्ते यत् तत्रत्यं भावात्मकं सौन्दर्यं तत्राभ्यन्तरी सुषमा वा बाह्यया धीजिगुता आव्रियते । परं विद्वन्मण्डली चेतःसु साश्चर्यमेव विस्मयं जनयन्ती अमितां प्रसन्नतामुत्पादयति ।

केषाञ्चन जनानामभिधानमेतद् यदेतादृशानां काव्यानां सकाशात् कोऽपि लाभः सामाजिके जीवने नास्ति, ते वस्तुतस्तु नावितथमुदीरयन्ति। यथा सामाजिकं जीवनं रक्षत्यै स्वस्वस्थतायै च धर्मार्थकामान् अपेक्षते तथैव तद् रञ्जयितुमात्मानं प्रीणयितुं तोषयितुं च मैजं चेतः, अपनेतुं रजसनीषायाः कष्टं काव्य-शास्त्र-विनोदमपि नियततया वाञ्छति। यस्य हि समाजस्य प्रवृत्तिर्वैविधे विनोदे न दृश्यते वस्तुतस्तस्यापरिष्कृतरुचिशीलस्य समाजस्य सद्भावो न संसारस्यापि गौरवाधायकः।

"कला मानव-जीवनोन्मनाय" इत्येतद्धि येषां मन्तव्यं तेषां कवीनां काव्येषु न शब्दचित्रता दृष्टा भवति न तानि काव्यानि तदीयानि अलङ्कारादि-भारं पुष्कलं वहन्ति; न तत्र तद्वैचित्र्यमेव चकास्ति येन हृदयचक्षु क्षणं भावयन्निमीलितं सञ्जायते। तानि काव्यानि तु सरलतयैव मञ्जुलतयैव च मानवस्य पुरो जीवनस्य स्वरूपं प्रस्तुवन्ति। मानवीयजीवनोद्देश्यस्य जीवनोत्थानोपायानां च प्रदर्शनं तेषामिष्टं भवति न च वैदुष्यस्य सम्प्रतिष्ठापन तेषां प्रियम्। तानि तथा प्रयतन्ते येन मानवस्याग्रे मानवताया गतिविधी सम्यक् समुपस्थिते सञ्जायेयातां, मानवो हि तद्द्वारेण स्वकीयां दुर्बलतामभिजानीयात् तां च दूरीकर्तुं स प्रयतेत आत्मनि च सदाशयनां सञ्चारयेत्; स्वपदं च स द्रागेव सदाचारपथे निदधीत, एतानि च सर्वाणि कार्याणि कर्तुं सदैव तानि प्रयतमानान्येव प्राप्यन्ते।

काव्यकलाया अभिव्यक्तयो भवन्ति नानाननाः। कदापि ता नीतिवादितां परिपुष्णन्ति तु कदापि उपयोगितावादम्, कदापि च ताः शुद्धं कलात्मकमेव भाव-मुपासते। एतादृश्यां स्थित्यां प्रश्नोऽयमुत्तिष्ठति यत् किं सौन्दर्यमपि एतेषामेवोद्देश्यानां संकेते नृत्यार्थं बाध्यमानं भवति। अत्रेदं समाधानं निधीयते विद्वद्लोकैः सौन्दर्यं स्वत एव आश्रितवस्तु न, अभिव्यक्त्यर्थं तद् आधारमपेक्षते। तस्माद् विदितं भवति यत् कामं काव्यं केनाप्युद्देश्येन भवेल्लिखितं तत्र सौन्दर्यं नियततयाभिव्यक्तं स्यात् तस्य स्वतो निरपेक्षत्वात्। सौन्दर्यस्योद्भवः कस्मात् सञ्जायते; उद्भूयमानस्य च तस्योपलब्धिः कस्यां धारायामभीष्टा भवति इत्यत्र यदि विमृश्यते तदा ज्ञायते यत् सौन्दर्यं कल्पनाप्रसूतमस्ति। कवेः रागात्मिका वृत्तिः कल्पनामानन्दस्वरतां नयति। एष व्यापारो रसात्मकतांप्रति कारणं सञ्जायते। एतेन काव्यकलायाः सौन्दर्यानुगतत्वं निष्पद्यते। काव्येषु मानवमनोवृत्ते

रागपक्ष एव अभिव्यज्यते। काव्यानुभूतिस्तु रागपक्षायत्ता। तस्मात् तद्धरा स रागपक्ष एव। काव्यं वस्तुनोऽभिव्यक्त्यनुभूत्योः प्रक्रियात्वेन मतम्। उभयो-रप्येतयोः प्रभावेण काव्य-पाठकयोर्मध्ये एकत्वस्य प्रतिष्ठापना सञ्जायते। इद-मेकत्वमेव 'रसात्मकता' भवति। यावत् काव्यं सचेतसमेतां कोटिं न प्रापयितुं शक्नोति तावत् तत्काव्यं वस्तुतः काव्यत्वं नोपैति। रसात्मकबोधाय काव्ये वा साहित्ये सौन्दर्यतत्त्वस्यासीनताभिलष्यते। तत्रैव साहित्यिकभावभूमेः अधिष्ठित-त्वात्। तदभावे काव्यं काव्यं न तत् शब्दाडम्बर एव। काव्यकलामार्गस्य दुर्गम-त्वादेव कविपदलाभः परमकठिनः।

सकलस्यापि सामान्यस्य लोकस्योद्धारभरः कवावेव स्थितस्तस्मात् कविरयं पौराणिकत्वात् दार्शनिकत्वाच्च गरीयः। कविः स्वकाव्यकलया तस्यैव तत्त्वस्या-भिव्यक्तिं कुरुते यस्य पौराणिकाः पुराणेन, दार्शनिका दर्शनेन कुर्वन्ति परमभि-व्यक्ते पद्धतिस्तेषां नैकविधा। कव्यङ्गीकृतायां पद्धत्यां सत्यस्योपस्थापनं तथा न भवति यथा पौराणिकादिकाः स्वाभिमतपद्धत्या विदधति। स तु सौन्दर्यावृतं विधाय सत्यं प्रकाशयति न कदापि तस्य सौन्दर्यशून्यता तदभिमता। सौन्दर्य-सन्निविष्टत्वमेव तस्य न प्रियमपि तु तस्य प्रकाशनं हि परोक्षतया सदैवेष्यैतदपि स इच्छति। अतएव कवेर्वाणीं तद्गतञ्च माधुर्यं निपीय यादृशमानन्दं रसिका विन्दन्ति न तादृशमन्ये। सत्यस्य प्रकाशनं न कठिनं न च पद्यबद्धप्रयोगोऽपि कठिनः कठिनं तु अस्ति सत्यस्य सुन्दरतया मधुरतया विलक्षणतया च आविर्भाव-नम्। अत एव कवि-कर्म परमगहनम्। कवेः काव्ये सत्यं शिवं सुन्दरञ्च भवद् दृष्टं भवतीत्येतदेव वैशिष्ट्यं काव्यं वाङ्मये मूर्धन्यस्थानाधिष्ठितं विदधाति। परोक्षतया कथनमित्येतस्याभिप्रायोऽयं यत् काव्यं स्वाभिमतं वचः प्रकाशयितुं न अभिधा-वृत्तिमवलम्बते न च लक्षणां न च मीमांसकानां प्रियां तात्पर्यामेव। अपि तु व्यञ्जनां वृत्तिमाश्रयति। व्यञ्जनया काव्यमनन्यलब्धां प्रकर्षश्रियमश्नुते। तल्लो-कोत्तरमेव सञ्जायते। काव्यस्य लोकोत्तरत्वादेव आचार्य आनन्दवर्द्धनस्तस्य प्रशंसायामेवमाह—

> "प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
> यत् तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु॥"

विश्वस्य मङ्गलं सम्पादयितुं कविः प्रयतते। तस्मात् एतादृशस्य मार्गस्यानु-

सरण स्वीकरण वा तस्यावेचित जायते येन सर्वेऽपि प्रयातु प्रभवेयु । कवेरुद्भूद-विश्वभरत्र प्रेषयैव केनाप्युक्तम्—

"न स शब्दो न तद् वाच्य न स न्यायो न सा कला ।
जायते यन्न काव्याङ्गमहो भारो महान् कवे ॥"

यामिमा हि व्यञ्जनामालम्ब्य कवे काव्यकला स्वकीय स्थान सर्वेभ्योऽपि पृथक् करोति, किञ्च यया सा सर्वा अपि सकला कला शास्त्राणि जयति च तस्या स्वरूपमाचार्यमम्मटेन इत्थ दर्शितम्—

यस्य प्रतीतिमाधातु लक्षणा समुपास्यते ।
फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ॥
नाभिधा समयाभावात् हेत्वभावान्न लक्षणा ।
लक्ष्य न मुख्य नाप्यत्र बाधो योग फलेन नो ॥
न प्रयोजनमेतस्मिन् न च शब्द स्खलद्गति ।

व्यञ्जनामधिकृत्याधुनिकाना कथनमिद यद् व्यञ्जना सहजस्वतन्त्राध्यात्मिक-क्रियास्ति तदाधारो मूलत कल्पना भवति । तस्या सफलतैव सौन्दर्यमस्ति । अभिव्यञ्जनावादस्य सार क्रोचे मतेनायम्—

( १ ) कलाविषयक ज्ञान प्रतिभाज्ञानमस्ति ।
( २ ) सौन्दर्यमभिव्यञ्जनायामाकृत्याञ्च भवति वस्तुनि न ।
( ३ ) प्रातिभज्ञानस्यैवाभिव्यञ्जना भवति ।
( ४ ) व्यञ्जना स्वतन्त्रमानसिकप्रक्रियास्ति तदाधारो मूलत कल्पनास्ति ।
( ५ ) व्यञ्जनाया अविभाज्यरूपत्वात् काव्येऽलङ्कारादीना न पृथक् महत्त्वम् ।

न काव्यकला पानकरसार्थं शर्करोशीरैलाशीरवातारिप्रभृतिसाधनानि मना-गप्यपेक्षते सा एवविधा सामग्रीमन्तरेणैवाधरीकृतामृतमाधुर्यमद्भुतमेव जिता-तिलौकिकपानकरस पानकरस जगत कृते प्रस्तवीति । अहो धन्यास्ते कवयो ये सुधामपि वसुधायै सुलभा कृतवन्त । निपीयताम्—

मृगमदसौरभरभसवशवदनवदलमालतमाले ।
युवजनहृदयविदारणमनसिजनखरुचिकिंशुकजाले ॥
पीनपयोधरभारभरेण हरिं परिरभ्य सरागम् ।
गोपवधूरनुगायति काचिदुदञ्चितपञ्चमरागम् ॥

काऽपि कपोलतले मिलिता लपितुं किमपि श्रुतिमूले ।
चारु चुचुम्ब नितम्बवती दयितं पुलकैरनुकूले ॥
केलिकलाकुतुकेन च काचिदमुं यमुनाजलकूले ।
मञ्जुलवञ्जुलकुञ्जगतं विचकर्ष करेण दुकूले ॥

चेत् कविर्जगद् भवेन्निर्विण्णमिति कामयते तदा स तद्विधामेव गीतिं छुद्रीय तत् तथाविधमेव कर्तुं क्षमते—

भ्राम्यन्त प्रतिवासरं दिशि दिशि प्रत्याशया सम्पदां
दृष्ट्वा कालवशेन हन्त पलितं कस्यापि दैवद्रुमम् ।
श्वानः श्वापमवज्ञयोपहसितं सर्वत्र भग्नोद्यमा
जीवाम परमार्थशून्यहृदयास्तृष्णा मनोमोदकैः ॥
यात्रशून्यमयत्नलभ्यमशनं वायुः कृतो वेधसा
व्यालानां पशवस्तृणाङ्कुरभुजः सुस्थाः स्थलीशायिनः ।
संसारार्णवलङ्घनक्षमधिया वृत्तिः कृता सा नृणां
यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥

यद्यपि कविर्जगत् शोके तु कदापि उत्साहे तु कदापि शृङ्गारे निमज्जयति ।
सकलं हि जगच्छोके निपातयन्तं तम् अवलोकयन्तु—

धृत्वा पद्मस्खलनभीतिवशात् करं मे
यारूढवत्यसि शिलाशकलं विवाहे ।
सा मां विहाय कथमद्य विलासिनी द्या
मारोहसीति हृदयं शतधा प्रयाति ॥

सम्प्रति उत्साहं जनयन्तं तं पश्यन्तु—

चत्वारो वयमृत्विजः स भगवान् कर्मोपदेष्टा हरिः
सङ्ग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता ।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं यशो दुन्दुभिः ॥

इदानीं शृङ्गारसुधां पाययन्तं तं वीक्षन्ताम्—

पानायाधरतोऽमृतं वसतयेऽप्यस्याः स्तनक्ष्माधरौ
ऽथ स्नानाय सजघनान्तकन्दरधरः सख्याय चक्षुर्मृगः ।
जल्पो मन्त्रवरो मनोहरकथा ध्यानाय वक्त्राम्बुजं
चेत्थं देहतपःस्थले सति कथं सन्तो वनान्तं गताः ॥

यदि कविराश्चर्यनिमग्नस्तदा कथमिदं सम्भवं यत् सर्वेऽपि नाश्चर्यनिमग्ना स्युः—

दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत—
टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।
द्राक् पर्यस्तकपालसम्पुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥

अधुना कवयिर्हसति भवन्तोऽपि हसन्तु—

(क) गणयति गगने गणकश्चन्द्रेण समागमं विशाखायाः ।
विविधभुजङ्गक्रीडासक्तां गृहिणीं न जानाति ॥

(ख) आपाण्डुराः शिरसिजास्त्रिवली कपोले, दन्तावली विगलिता न च मे विषादः । एणीदृशो युवतयः पथि मां विलोक्य, तातेतिभाषणपराः खलु वज्रपातः ।

भयाद् भीत हि भूत्वा सर्वे कम्पतेतरां, दृश्यताम्—

त्रिविक्रमोपक्रमदर्शपक्षपाताहंकारविमर्द्दभ्रूर्तो
विक्षेपादक्रोदसौ रघुपतिर्लङ्कापते पत्तनम् ।
मन्दश्चैरु रसक्षरेदु विघन्दुदारु स्फुरद्गुग्गुलु
मोल्क्रीडत्फणि नि श्वसत् फणि रणज्झिञ्झिभ्रमद्दूदीपि च ॥

काव्यकलायामद्भुतमेव सामर्थ्यं प्राप्यते सा यदपि दर्शयितुमुत्सहते तद्धि नैव विलम्बं लोचनयो पुरः उपस्थापयति । विलोक्यतां जुगुप्सोत्पादनपरं घृणास्पदं दृश्यम्—

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोफभूयांसि मांसा
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा ।
आत्तस्नायवन्त्रनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥

क्रोधं साकारं भवन्तः काव्यकलायामीक्षन्ताम्—

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ।
तद् द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणै
क्रोधज्योतिरिदं महत् कुरुवने यौधिष्ठिरं जृम्भते ॥

याम भवन्तः कस्मिंश्चिच्छीतागारे स्थिता स्युः परं यदा निदाघमध्याह्नो-

वर्णनपरं काव्यं पठितुमारभन्ते तदाऽसौ शीतागारोऽपि आध्मायते, चेत् तदा हेमन्तकालो राजते तदा सोऽपि निदाघायेत—

उद्दामद्युमणिद्युतिव्यतिकरप्रक्रीडदर्कोपल-
ज्वालाजालजटालजाङ्गलतटीनिष्कूजकोयष्टय ।
भीमोष्मप्लवमानमूर्यकिरणा क्रूरप्रकाशा दशा-
मायु कर्म समापयन्ति धिगमूर्मध्याह्नशून्या दिश ॥
काश्मीर्यां कृततालमुद्गतदल कोयष्टिकष्टीकृते
तीरास्मान्तकशिखिचुम्बितमुखा धावन्त्यप पूर्णिका ।
त्यूहैस्तिनिशस्य कोटरवति स्कन्धे निलीय स्थित
वीतक्रीडकपोतकूजितमनुक्रन्दन्त्यध कुक्कुटा ॥

काव्यकलायाश्चित्रचित्रणचातुरी चित्रैरिव सा रेखासम्भारं नापेक्षते मनागपि । अत्र ता सर्वतस्तमो वितन्वन्तीं प्रेक्षन्ताम्—

नाकाश न दिशो न भूधरकुल नाम्भोधयो न क्षिति
नं द्यौर्नाम्बुधरा न तीव्रकिरणो नेन्दुर्न तारागण ।
एते षट्पदकायकान्तिपटलीपाण्डित्यचैतण्डिके
कल्लोलैस्तमसामसाम्प्रतमय विश्वस्य कल्पते ॥

चित्रकाव्यमधममिति कथन न युक्तम् । तदपि काव्य स्वकीयमनुपममेव सौन्दर्यं परिपुष्णाति । तत्रापि स रस परिस्पन्दते यो रसोऽद्भुताख्य विधां निदधाति । रसस्तु स एव न, यो हि मानव सर्वेभ्योऽपि विषयेभ्यो व्यावर्त्यात्मा सम्प्रति स्वस्यैवावर्जयेत् । क एतादृक् जनो योऽध स्थिता चित्रकाव्यच्छविमालोक्य न धन्य धन्यमिति वक्तु सानन्दमुद्यतो जायेत—

पायाद् व करणोऽरणो रणरणो रणो रणो वारणो
दत्ता येन रमारमारमरमारामारमा सा रमा ।
स श्रीमानुदयोदयोदयवयो दायोदयो देदयो
विष्णुजिष्णुरभीरभीरभिरभीराभीरभी सारभी ॥

काव्यकलाया महनीयता केन विधिना वर्ण्येत । तत्प्रयुक्त एकस्मिन्नपि शब्दे महार्थराशि समाविष्टो भवति । सा सांसारिक सुख दातु क्षमा, सा अपवर्गानन्द प्रदातुमपि प्रभविष्णु । सा तद्बलमपि निदधाति येन सा मानव हरिचरणरत कुरुते—

मुग्धं स्निग्धं मधुरमुरलीमाधुरीधीरनादैः
कारं कारं करणविवशं गोकुलव्याकुलत्वम् ।
श्यामं कामं युवजनमनोमोहनं मोहनाङ्गं
चित्ते नित्यं निवसतु महो वल्लवीवल्लभं नः ॥

स्वैरेव यद्यपि गतोऽहमधः कुकृत्यै-
स्तत्रापि नाथ तव नास्म्यवलेपपात्रम् ।
दृप्तः पशुः पतति यः स्वयमन्धकूपे
नोपेक्षते तमपि कारुणिको हि लोकः ॥

वस्तुतः काव्यकलास्पर्शमणि (पारसमणि) रत्नं संस्पृश्य अयोऽपि चामीकरतां याति; अगन्धोऽपि पदार्थः सौरभयुतो भवति । तत्प्रभावात् विषमपि अमृतायते; अमृतमपि विषायते । सर्वमपि अनिर्वचनीयतां प्रपद्यते । एतादृशी विलक्षणता एतादृशी विस्मयकृत्कर्मनिपुणता नान्यस्यां कलायामीक्ष्यते अतः सत्यं— कलासीमा काव्यम् ।



## अभिधादेरपि व्यञ्जना गरीयसी

✓ शब्दो हि महाशक्तिशाली । अर्थस्तस्मै शक्तिं प्रयच्छति । विपुलविपुलतरश क्त्यर्थं स सदा तमपेक्षते । पर शब्द साहाय्यमन्तरेण अर्थो न नैज गौरव प्रकटीकर्तुमर्हति । सोऽपि शब्दमपेक्षते । उभावप्यन्योन्याश्रितौ । अत एवोक्तमपि "शब्दार्थाविव सत्कवि " इति । अर्थं विना शब्दो न स्थातु क्षम, शब्द विना र्थोऽपि । द्वावपि परस्पर सम्पृक्तौ स्तस्तस्मादेव तु हेतोर्महाकवि कालिदासो भगवन्त शङ्कर प्रणमन्नाह—"वागर्थाविव सम्पृक्तावि"ति । शब्दे स्थिताया शक्ते प्रयोग विद्वान् एव कर्तुं क्षमते । प्रतिभावान् विपश्चिन्नैज लेख भाषण कवितादिक वा प्रति यावन्तमपि यादृशमपि गरिमाण प्रदातुमभिलपते स तावन्तमेव तादृ शमेव त शब्दे प्रयोक्तु क्षम । न साधारणो जन शब्दनिष्ठा शक्तिं जानाति, 'केन प्रकारेण शब्दस्थिताया महत्या शक्ते प्रयोग कर्त्तव्य' इत्येतदपि स न वेत्ति । तस्मात् तदीय वाक्य न लोक प्रीणाति न तमावर्जयितु स स्वप्नेऽपि क्षमते । कविर्मनीषी शब्दमुपास्ते स शब्दज्ञो भवति, शब्दस्य शक्तिमपि सम्यगवगच्छति । एतस्मात् कारणात् समग्रमपि जगत् तद्रचना तद् वक्तृता तद्वाणीं च सतत श्रोतुमुत्सुकता दर्शयति । यथा कस्यचन सुयोग्यस्य शक्तिमत शूरस्य शरो वेध्यस्य वस्तुनो वा हृदयस्याभ्यन्तरभागे प्रविश्य तदीयमन्तस्थ मर्म भित्त्वा बहिर्निर्गत्य चान्यानपि स्वसम्मुखापतितान् पदार्थान् भिनत्ति तथैव कुशलवक्तृप्रयुक्त शब्दोऽपि न केवल स्व विश्रुतमर्थं प्रकटीकृत्य विरमत्यपि तु स स्थल समय श्रोतृविशेषाद्य नुरोधवशादनेकान् विविधानर्थानभिव्यनक्ति । शब्द प्रत्यक्षमेवार्थं न निदधात्यपि तु स परोक्षमपि अर्थमधिकरोति । यो वक्ता परोक्षार्थद्योतनपर शब्द प्रयोक्तु समर्थो यश्च शब्द परोक्षार्थोपस्थापननिष्ठ स वक्ता स च शब्दो विदुषा समवाये परा प्रतिष्ठामश्नुते । ) विचारवन्तो विज्ञा शब्दाभ्यन्तरे राजमाना क्षमता सम्यक् चिरञ्चानुभूय निश्चयमिममगुर्यद् यथा पृथिव्यप्तेजोवाय्वादिपदार्था आत्मन्यनन्त बल विपुलाश्च गुणान् सन्निदधति तथैव शब्दोऽपि भव्यमगाधशक्तिभागनेकगुणशाली च । सद्गुण विद्या कला सम्पन्न सुसंस्कार नियत्यादिसाहाय्यसम्पन्न यथा लोके पुमान् अद्भुत माघ तेजो बल प्रभावञ्च प्रदर्शयति तथैव शब्दोऽपि प्रतिभावन्त

शास्त्र-पारदृश्वानं लोक-व्यवहाराभिज्ञं स्वाध्यायपरं जनमवाप्याद्भुताद्भुतार्थान् प्रकाशयति । शब्दस्य विलक्षणतामिमां साहित्यिकाः सुधीधौरेया धीरतया गम्भीरतया च चिन्तयाञ्चक्रुः । ततश्च ते वैयाकरणा नैयायिका मीमांसकाश्च शब्दाभ्यन्तरे यां यां शक्तिमनुसन्दधुस्तां तां शक्तिमेव न शब्दो ऽनुपते ऽपि तु स ततोऽपि परां शक्तिं निदधातीत्येतं निश्चयमगमन् (इति वैयाकरणाद्यन्विष्टाः शक्तीः साधु परीक्ष्यान्तत इदं निश्चिक्युर्यद् वैयाकरणाः शब्दे यामभिधां, नैयायिकास्तत्र यां लक्षणां, मीमांसकाश्च तत्र यां तात्पर्याख्यां शक्तिं पश्यन्ति ताः सर्वास्ततोऽपि शक्तयः शब्दाभ्यन्तरशोभमानया सहृदयसंवेद्यया शक्त्या सर्वथातिशीयन्ते । इमां हि अभिधादिविजयिनीं शक्तिं ते 'व्यञ्जना' इत्येतेन नाम्ना व्याजह्रुः । दृढतापूर्वकं ते प्राहुः—

> तत्र व्यापारो व्यञ्जनात्मकः ।
> यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ।
> फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ॥
> नाभिधा समयाभावाद्धेत्वभावान्न लक्षणा ।
> लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो ॥
> न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः ॥ इति ।

व्यञ्जनाया लक्षणमिदं प्रतिपाद्य ते तां व्याचक्षाणा ब्रुवन्ति 'व्यञ्जना-प्रतिपाद्योऽर्थो व्यङ्ग्यार्थ' इति कथ्यते । अभिधाप्रतिपाद्याद् वाच्यादर्थाच्छब्दस्य मुख्यार्थ एव वेद्यते यथा 'गङ्गा' इत्येतस्य शब्दस्य मुख्योऽर्थो जल-प्रवाहविशेष इत्येव वर्तते । एषः अर्थोऽभिधाबोध्यो भवति परं 'गङ्गायां घोष' इत्यादौ यदा गङ्गादिशब्दः प्रयुज्यते तदा स गङ्गाशब्दस्तटरूपं लक्ष्यमर्थं लक्षयति । तटरूपलक्ष्यार्थस्य ज्ञापनं लक्षणा करोति । परं 'गङ्गायां घोष' इत्यादौ प्रयुक्ताद् 'गङ्गा' शब्दात् शीतत्वपावनत्वादिकार्थो यः प्रतीयते सोऽर्थ एव व्यङ्ग्यार्थ इत्युच्यते । इमं व्यङ्ग्यार्थमभिव्यनक्ति व्यञ्जना । मीमांसकाभिमता तात्पर्याख्या वृत्तिर्न व्यञ्जनावृत्तेः कार्यं कुरुते तस्यास्तु कार्यं ततो भिन्नमेव । तदीयं कार्यं हि अर्थस्यान्वितताकरणं किंवा अन्वितस्यैवार्थस्याभिधानमास्ते । तदेवं व्यङ्ग्यार्थो वाच्यलक्ष्यतात्पर्यार्थेभ्योऽर्थेभ्यो नितान्तं भिन्नः । चेद् व्यङ्ग्यार्थस्य वाच्यादिष्वन्तर्भावः कृतः स्यात् तदा मूलक्षयकारिण्यनवस्थाऽऽपतेत् । )

( अभिधा केवलं मुख्येऽर्थे प्रवर्तते, लक्षणा तत्र प्रवर्तते यत्र मुख्यार्थबाधो

वा मुख्यार्थयोगो वा रूढिप्रयोजनयोरन्यतरद् वर्तते; तात्पर्यवृत्तिरन्वये गतिं कुरुते। व्यञ्जनायाः कार्यमेवं नैजमेव। सा तु अभिधामालम्बमानापि अभिधातः पृथगेव व्यापारमाचरति। एतावदेव न; सा लक्षणामप्याश्रयन्ती लक्षणातो विलक्षणं कार्यमनुतिष्ठति। अन्वयमात्रे गतिशालित्वात् तात्पर्याया वार्तैव का तत्पुरतः। अभिधां लक्षणाञ्चावलम्बमानापि व्यञ्जना स्वतन्त्रा वृत्तिरस्ति तत्कृतकार्यस्य सर्वथैव अभिधा-लक्षणाकृतकार्याद् भिन्नत्वात्। विद्युन्मेघादुत्पद्यते परं विद्युत्कार्यं मेघो न कर्तुं पारयति मेघो यद्यपि धूमज्योतिःसलिलमरुतां सन्निपातोऽस्ति परं मेघस्य कार्यं न धूमो न ज्योतिर्न सलिलं न च मरुत् कर्तुमर्हन्ति। पदार्थाः पृथक्कृतायां यत् कार्यमाचरन्ति न तत् कार्यं ते संहतिं गता अनुतिष्ठन्ति। तस्यां स्थित्यां तत्कार्यं किमप्यन्यदेव भवति। समुद्रो वारिबिन्दूनामेव संघातो भवति परं वारिबिन्दोर्भिन्नमेव किमपि नितान्तमद्भुतं विशङ्कटञ्च कार्यं करोति सः। व्यञ्जनाशक्तिस्तु विचित्रैव शक्तिः सा न सर्वथाभिधाद्यधीना, सा तु कदापि स्वातन्त्र्यमपि भजते।)

(यद्यपि व्यञ्जनव्यापारस्यानन्त्यं दृश्यते परमनुगतोपाधिवशाद् भेदत्रये तदन्तर्भावो भवितुं शक्यो वस्त्वलङ्काररसात्त्रिविधया व्यङ्ग्यार्थस्य त्रिविधत्वात्। एषां त्रयाणामन्तराले वस्त्वलङ्कारौ द्वावपि क्वापि व्यङ्ग्यौ भवतः क्वापि च वाच्यौ—वाच्यतासहौ—। परं रसः सदा व्यङ्ग्य एव भवति। न स कदापि वाच्यो भवितुं शक्नोति। वस्तुरूपोऽलङ्काररूपश्च ध्वनिर्व्यञ्जनाप्रतिपाद्य एव न लक्षणादिना तत्प्रतीतिः सम्भवा।

(क) अविवक्षितवाच्यस्य ध्वनेर्द्वावपि अर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्यौ भेदौ लक्षणामूलकौ भवतः। तत्र वस्तुमात्रव्यङ्ग्यो लक्षणायाः प्रयोजनत्वेनावतिष्ठते। स च व्यङ्ग्योऽर्थो लक्षणाया विषयः। चेत् सोऽपि तद्विषयत्वेनाभ्युपगम्येत तदा प्रयोजनान्तरस्वरूपता तदर्थमपेक्ष्येत। तथाऽनेनानवस्थैवापतेत्। तस्मादिदमेव निष्पन्नं यल्लक्षणामूलध्वनौ हि वस्तुमात्रव्यङ्ग्यो भवति यः, स व्यञ्जनयैव प्रतीतिपथेऽवतरति। न चान्यतोऽपि कापि शक्तिरन्या तं प्रत्याययितुमीष्टे तस्माद् व्यञ्जनाख्या शक्तिरभिधादितो विलक्षणा।

(ख) अभिधामूलध्वनेः शब्दशक्तिमूलके भेदेऽनेकार्थकाः शब्दाः प्रकरणादिना एकस्मिन् अर्थे नियम्यन्ते। शब्दस्यानेकार्थवाचकत्वे सत्यपि तेषां

बहूनामर्थानां मध्ये केवलमेकमेवार्थं प्रकरणाद्यनुकूलं तत्राभिधा ग्राहयति न च तदितरानर्थान्। एतेनेदं सिद्धं यन्नियन्त्रितार्थाच्छब्दाद् योऽर्थः प्रकरणादिवशाद् 'गृह्यते' स तु अभिधेयोऽर्थो भवति अवशिष्टाश्च अन्येऽर्था अभिधेया न भवन्ति। तेषामर्थानां या प्रतीतिरभिधेयार्थबोधावसरे भवति सा व्यञ्जनया कार्यते। मुख्यार्थबाधाद्यभावात् तत्प्रतीतिं लक्षणा तु कारयितुमर्हत्येव न। तस्माद् नियन्त्रितार्थाद् व्यतिरिक्ता अर्था व्यङ्ग्या एव भवन्ति तेषां व्यञ्जनाविषयत्वात्। 'भद्रात्मनो दुरधिरोहतनोर्वि'त्यादिश्लोकं हि उद्धृत्य प्रोक्तमाचार्यैः—यदत्र राजपरकोऽर्थो यो हि प्रकरणादिना नियन्त्र्यते स अर्थोऽभिधेयोऽस्ति किन्तु तं व्यतिरिच्य गजपरको योऽर्थो द्वितीयः प्रतीयते स प्रतीयमानोऽर्थो व्यङ्ग्यः। स अर्थो व्यञ्जनयाभिव्यक्तिं याति। न तमर्थमभिधा बोधयितुं समर्था जायते। राजपरकमर्थं समुपस्थाप्य तस्या विरतशक्तिकत्वात्। श्लेषेण राजपरकस्याप्यर्थस्य बोधो भवितुमर्हतीति कथनं न युक्तम्। श्लेषस्य प्रवृत्तिरत्र भवति यत्र वक्ता बहून् अर्थान् युगपद् व्याहर्तुमभिलषते। यत्र हि एकस्मिन्नेवार्थे वक्तुस्तात्पर्यं भवति तत्र व्यञ्जना अर्थान्तरमभिव्यनक्ति न च श्लेषस्तस्य तदविषयत्वात्। अभिधाद्यगम्यमर्थं या प्रकाशयति सा व्यञ्जना केन प्रकारेण अभिधादिषु हि अन्तर्भवितुं शक्या?

(ग) अर्थशक्तिमूलके ध्वनौ वस्त्वलङ्कारयोर्व्यञ्जनया प्रतीतिर्भवति न चाभिधया। तत्रापि अभिधाया गतिरसम्भवा। प्रतीयमानयोर्वस्त्वलङ्कारयोः सङ्केतग्रहसीमाबाह्यत्वात्। अभिधा सङ्केतितमर्थमेव बोधयति। तत्प्रतीत्यर्थं नाभिधोपासनापेक्ष्यते न च तदवबोधनायान्वितपदार्था एवाकाङ्क्ष्यन्ते। अत्र भावोऽस्य कथनस्य—प्रथमतः पदार्थः प्रतीयते, ततश्चान्वयविशेषरूपो वाक्यार्थः प्रकटीभवति, ततश्च वस्त्वलङ्कारयोः प्रतीतिः सञ्जायते। वाक्यार्थमधिकृत्य मीमांसकानां हि सिद्धान्तौ द्वौ। प्रथमः 'अभिहितान्वयवाद' इत्येतेन नाम्ना ख्यातो द्वितीयो हि 'अन्विताभिधानवाद' इत्यनेन नाम्ना विश्रुतः। अभिधा प्रथमं पदान्तर्गतमर्थं बोधयति ततश्च तात्पर्यं वाक्यार्थमुपस्थापयति नाभिधाया वाक्यार्थबोधनक्षमता सा तु पदार्थमात्रज्ञापने शक्तिं निदधातीत्येष अभिप्रायोऽस्ति अभिहितान्वयवादस्य। विचारिते सत्यस्मिन् अभिहितान्वयवादे, इदं स्फुटतरमेव विदितं सञ्जायते यदर्थशक्तिमूलके ध्वनौ प्रतीयमानयोर्वस्त्वलङ्कारयोर्बोधनं न कदापि अभिधा कारयितुं प्रभवति न च तात्पर्यमेव। तयोर्द्वयोरपि अभिधायास्ता-

त्पर्यादाद्यविषयत्वात्। वस्त्वलङ्कारस्पस्य व्यङ्ग्यार्थस्य व्यञ्जनाविषयत्वमेतेन सिद्धं किञ्च व्यञ्जनायाः पृथग् वृत्तित्वमपि निष्पन्नम्।

(घ) अन्विताभिधानवादस्याप्ययमभिप्रायोऽयं—अभिधा अन्वितमेवार्थं प्रकाशयति न च अनन्वितमर्थम्। यद्यभिधायां हि अन्वितार्थमात्रप्रकाशनक्षमतास्ति तदा सा व्यङ्ग्यार्थं तं केन प्रकारेण प्रकाशयितुं क्षमते यो हि वाच्यार्थबोधानन्तरं प्रतीयते। व्यञ्जनाबोध्यमानमर्थं व्यंग्यं न अभिधा एकाकिनी बोधयितुं क्षमा न च सा तात्पर्याख्या साहाय्यमपि गृहीत्वा तं प्रकटीकर्तुं पारयति इत्येतस्मात् कारणात् व्यञ्जना सर्वथैव स्वतन्त्रो व्यापारः। न अभिहितान्वयवादेन स व्यापारो निरस्तो भवितुमर्हति न चान्विताभिधानवादेनैव।

(ङ) यद्यपि व्यङ्ग्योऽर्थो नैमित्तिकोऽप्यस्ति परं स नैमित्तिको व्यङ्ग्योऽर्थो यं शब्दं निमित्तत्वेनाददाति स शब्दः कर्तृत्वेन तु नो ग्राह्यो भवितुं शक्योऽर्थस्याकार्यत्वात्। शब्दोऽर्थं प्रकाशयति ज्ञापयति वा केवलमतः स (शब्दः) ज्ञापको मतोऽर्थश्च ज्ञाप्यः। परं शब्दस्य प्रकाशकता ज्ञातव्यतामपेक्षते। सा च ज्ञातव्यता सङ्केतेन ज्ञाता जायते। यावद् व्यङ्ग्यार्थं प्रति कोऽपि शब्दो नियतत्वेन निमित्तत्वाय न कल्पते तावत् नैमित्तिकस्य (व्यङ्ग्यस्य) अर्थस्य प्रतीतिः कुतः सम्भवेत्? व्यङ्ग्यार्थप्रतीतौ शब्दो ज्ञापकरूपनिमित्तं तु वर्तते परं तदीया सा निमित्तता व्यञ्जनां विना नोपपद्यते। यतो हि शब्दस्तदैवार्थं बोधयति यदा स वृत्तिसहायः स्यात्। शब्दोऽर्थप्रकाशनार्थं वृत्तिमपेक्षते। यथा वाच्योऽभिधया, लक्ष्यो लक्षणया च प्रकाशते तथैव व्यङ्ग्योऽर्थोऽपि व्यञ्जनया प्रकाशते विना वृत्तिं प्रकाशं न याति सोऽपि तस्माद् व्यङ्ग्यार्थज्ञानाय शब्दवृत्तिः स्वीकार्यास्ति। अन्यथा, शब्दो व्यङ्ग्यार्थस्य निमित्तमिति कथनमसङ्गतं स्यात्। चेद् विना व्यापारमर्थं प्रति शब्दो निमित्तत्वेन मतो भवेत् तदाभिधा लक्षणा च द्वे अपि वैयर्थ्यं यायाताम्। एतेन विमर्शनेन च व्यञ्जनाया अभिधादिभिन्नत्वं सिद्धयति।

(च) इषुरिव अभिधापि व्यङ्ग्यार्थं प्रकाशयितुं शक्नोति "यत्परः शब्दः स शब्दार्थः" इत्येतन्न्यायादिति चेत्, तदपि न, "यत्परः शब्दः स शब्दार्थः" इत्येतस्य न्यायस्य "यदेव विधेयं तत्रैव तात्पर्यमि"त्येतस्मिन्नर्थे सन्निहितत्वात्। विधिवाक्येषु क्रिया साध्यत्वेन सन्तिष्ठते, तदर्थं एव कारकपदानि प्रयुज्यन्ते। प्रधानक्रियायाः सम्पादनाय कारकाणां स्वीयाः क्रिया अपि भवन्ति। यथा 'गामानय' इत्यत्र 'आनयनम्' प्रधानक्रियास्ति। 'गोचालनञ्च' गौणक्रिया।

प्रधानक्रिया निर्वहणकारिण्या क्रियया सार्धं सम्बद्धत्वात् कारकेष्वपि कश्चिदंश साध्यतारूपेण लक्ष्यते। इत्थं वाक्ये किमपि वस्तु सिद्धरूपं भवत् किमपि च साध्यरूपं सत् समवतिष्ठते। साध्यवस्त्वेव (मीमांसकमतेन) अप्राप्तं भवति। अप्राप्तस्यैव सिद्धिरपेक्ष्यते। अदग्धदहनन्यायेन तस्यैव विधानं क्रियते। तस्मात् सिद्धयति यच्छब्दस्य तात्पर्यं हि अप्राप्त एव निपीदति। तदेव व्यङ्ग्यार्थो न शब्दस्य वाच्योऽर्थ। एतेन व्यङ्ग्यार्थस्य कृते व्यञ्जनाऽपेक्ष्यत इत्यायातम्।)

((छ) 'विषं भक्षय' इत्यादिवाक्यस्य 'एतस्य गृहेऽभ्यवहरणविषभक्षणादपि दुष्टम्' इत्यप एवार्थ। यदेव विधेयं तत्रैव तात्पर्यमिति मीमांसकन्याया-दुक्तवाक्यऽप्युपात्तशब्दार्थ एव तात्पर्यं न च प्रतीतमात्रे। एवं स्थिते वाच्यार्थभिन्न-प्रतीयमानार्थनिमित्तेन व्यञ्जनाया उपादानमिष्टम्)

(ज) शब्दश्रवणानन्तरं सर्वविधानामपि वाच्याद्यर्थानां बोधोऽभिधयैव जायत इति चेत् तदा 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पूर्वपूर्वबलीयस्त्वमिति' जैमिनिसूत्रं कथं सगच्छेत? अभिधाया सर्वार्थबोधकारित्वस्याङ्गीकृते-ऽर्थविप्रकर्षचर्चाया कृते कुतोऽवकाशोऽवशिष्येत? यदि श्रुति लिङ्गादि-प्रतिपाद्येष्वर्थेषु न कापि स्वरूपविशिष्टतास्ति तदा तत्सग्रहणमेव मुधा? तत्स ग्रहणेन कस्य प्रयोजनस्य सिद्धि स्यात्? अर्थबलीयस्त्वतायास्तदेवमसिद्धत्वेन तेषामुपादानमकिञ्चित्करम्। तस्माद् व्यङ्ग्यार्थनिमित्तेन व्यञ्जनाया ग्रहणम-निवार्यम्।)

(उपरि कृतेनैतेन विमर्शनेन ध्वनेर्व्यञ्जनाप्रतिपाद्यस्य व्यङ्ग्यार्थस्याभिधावृत्त्यबोध्यत्वञ्च निष्पन्नम्। सम्प्रत्यत्रेदमपि स्फुटीक्रियते यद् व्यङ्ग्यार्थं विना दोषादीनामपि व्यवस्था नोपपद्येत। अतो व्यञ्जनाया उपादानमपेक्ष्यत एव।)

(झ) व्यङ्ग्यार्थेऽभ्युपपन्ने सत्येव, 'कुरु रुचिम्' इत्यनयो पदयोर्विपर्यस्तत्वे, 'रुचिकुरु' इत्येवविधं रूपं गते सत्युक्तवाक्ये, 'चिकु' शब्दस्य भगनामा-वाचकतया अश्लीलतादोष उत्थितो भवति। परमत्र न 'रुचिम्' इत्येतस्य शब्दस्य न च 'कुरु' इत्येतस्य शब्दस्य वाच्यार्थोऽस्ति 'भगनामे'ति। यदा हि अश्लीलार्थो वाच्योऽस्ति न, अभिधां विहाय कान्यस्या वृत्तिर्वाच्यार्थबोधिका च न तदा भगनामास्वरूपाश्लीलार्थस्य प्रतीति कथं सम्भवा? एवं स्थिते, एतादृश प्रयोगोऽपि काव्ये वर्जितः केन प्रकारेण भवितुं शक्य? परं सर्वं एव सहृदयास्तादृशप्रयोगस्या-

सम्यार्थत्वात् वर्जनीयत्वमुपपादयन्ति । अतोऽभिधा व्यतिरिच्य व्यञ्जनाया अपि अर्थबोधकवृत्तित्वेन ग्राह्यत्वमपेक्ष्यते ।

((घ) नित्यानित्यदोषव्यवस्थार्थमपि व्यञ्जनाया स्वीकरणमपेक्ष्यते । श्रुतिकटुत्वादिदोषा 'श्रृङ्गारे सन्ति दोषा पर वीरादौ भवन्ति ते गुणा'—इत्येतद्-भिधान तदैव युक्त भवति यदा व्यञ्जनाङ्गीक्रियते । अन्यथा न । 'आलिङ्गित स तन्वङ्ग्या कार्तार्थ्यं लभते कदे'त्यादौ पतितस्य 'कार्तार्थ्यमि त्येतस्य पदस्य श्रुति कटुत्व प्रतीतिरेवमेव । तद्विधाया प्रतीतेर्नोऽभिधा व्यञ्जनाया ऋते कान्या वृत्ति ?)

((ट) पर्यायवाचीनि बहूनि सन्ति पदानि । पर तेषा पर्यायवाचिना पदाना मध्ये निरल्मेव किमपि पद क्वचित् काव्ये नितरा सौन्दर्यं वर्धयति । तथा हि "द्वय गत सम्प्रति शोचनीयता समागमप्रार्थनया कपालिन" इत्यत्र शिवपर्यायवाचिकपालीत्येतत्पद हि अद्भुतमेव सौन्दर्य सृजति । चेत् तत् पद विहाय शिवपर्यायवाचिपिनाकीत्यादि पद तत्र प्रयुज्येत तदा न तत्सौन्दर्यं तत्र सम्भवम् । कपालिपदजनिता सुन्दरता व्यञ्जनयैव गम्या भवति न त्वन्यन्त रेण तस्माद् व्यङ्ग्यव्यञ्जकभावोऽभ्युपेय एव । तदङ्गीकरणेनैव असाधुत्वादीना नित्यदोषत्व कष्टत्वादीनामनित्यदोषत्वमित्येतद् विभागकरणमुपपन्नतां प्रपद्यते ।)

(ठ) वाच्योऽर्थ सर्वान् प्रतिपत्तॄन् प्रति एकरूप एवातो नियत स । न हि 'गतोऽस्तमर्क' इत्यादौ वाच्योऽर्थ क्वचिदन्यथा भवति । प्रतीयमानस्तु वर्ततेऽनियत । वाच्यव्यङ्ग्यार्थयोरिय भिन्नतापि व्यञ्जनाया उपादेयत्व प्रति पादयति ।

((ड) वाच्यो व्यङ्ग्यश्चार्थौ वस्तुतो नितान्तभिन्न । 'नि शेषच्युतचन्दन-मि'त्यादौ यदा वाच्यो निषेधात्मकस्तदा व्यङ्ग्यो विध्यात्मको दृश्यते ।)'मात्सर्य मुत्सार्य' इत्यादौ वाच्य सशयरूप पर व्यङ्ग्योऽर्थो निश्चयरूप । तदेव स्वरूप-तोऽपि द्वावपि भिन्नौ । तयोर्भिन्नता स्वरूपत एव न कालत, आश्रयतो, निमित्तत, कार्यत, सख्यातो, विषयतश्च प्राप्यते । वाच्यस्य प्रतीति प्रथम भवति ततश्च व्यङ्ग्यस्य, अत कालभेदो वर्तते । वाच्य शब्दगत एव व्यङ्ग्यस्तु शब्दतदेक-देशतदर्थवर्णसघटनागतश्चात स आश्रयतोऽपि भिन्नता गाहते । वाच्यस्य बोधो व्याकरणकोशाद्यात्मकशब्दानुशासनेन भवति पर व्यङ्ग्यस्य प्रकरणादिसहायप्रति-भानैर्मल्ययुतशब्दानुशासनेन वेदितव्यतास्तेऽतो निमित्तभेदोऽप्युभयो । वाच्यार्थ स्य बोधो बोद्धापि कर्तुं शक्यते पर व्यङ्ग्यार्थस्तु सहृदयवेद्य एव । किञ्च वाच्ये

न चमत्कारः प्रतीयते, व्यङ्ग्ये तु तस्य प्रतीतिः सचेतसा क्रियते तस्माद् वाच्य-व्यङ्ग्ययोः कार्यं नैकम् । 'गतोऽस्तमर्क' इत्यादौ संख्यायाः (तस्य तस्य जनस्य तत्तदर्थावगम्यमानतया) भिन्नतास्ति सापि वाच्य–व्यङ्ग्ययोर्विभिन्नतां स्पष्टीकरोति ।

"कस्स वा ण होइ रोसो" इत्यादिस्थलमुच्चैर्वाच्यस्य व्यङ्ग्यस्य च विषय-भिन्नतामुपपादयति । तदेवं व्यञ्जनाया ग्राह्यत्वमनेकधा सिद्ध्यति । न केवलं वाच्यव्यङ्ग्ययोर्भिन्नत्वाद् व्यञ्जनायाः महत्त्वमुपपद्यते अपि तु वाचक–व्यञ्जकयोश्च भिन्नतापि तदीयां विशिष्टतामुद्घोषयति । तथाहि—

(ङ) वाचकस्तु तमेवार्थं बोधयति यत्र तदीयः सङ्केतग्रहः । परं व्यञ्जकस्तु न तदपेक्षी । व्यञ्जकता न केवलं शब्दे दृष्टा भवति सा तु अर्थेऽपि निरर्थकवर्णादौ च विलोक्यते ।

"वाणीरकुडङ्गोड्डीन" इत्यादौ ह्येतत् स्फुटीभवति यत् व्यङ्ग्ययोऽर्थो नाभिधा-वृत्तेर्न च तात्पर्यवृत्तेरधीनतायामस्ति । एतेन तादृशार्थनिमित्तेन च व्यञ्जनाया अङ्गीकरणत्वमपेक्षितं जायते । न प्रतीयमानस्यार्थस्यापलापनमुचितं कदापि ।

(च) व्यङ्ग्यार्थस्य लक्षणावृत्तिबोध्यतापि न । अस्मादपि कारणात् व्यञ्जनाया अभ्युपगतिरनिवार्या भवति । लक्ष्यार्थ-व्यङ्ग्यार्थयोर्भिन्नत्वेनावधारणे सन्ति हेतव इमे—

(अ) यद्यपि एकस्य शब्दस्यानेके लक्ष्यार्था भवितुं शक्याः परं ते सर्वे नियता एव भवन्ति । लक्ष्यार्थस्य प्रतीतिः सामीप्यादिनियतसम्बन्धाधारेणैव जायते न च सम्बन्धाधारं विना । लक्षणा मुख्यार्थयोगमपेक्षते । व्यङ्ग्यार्थस्तु प्रकरणाद्यपेक्षिणा मुख्यार्थेन सह सम्बन्धं निदधानोऽपि न सदा नियतत्वेन तद्वि-धसम्बन्धमपेक्षते प्रतीयते च ।

(आ) लक्षणा मुख्यार्थबाधे सति प्रवर्तते परम् "अत्ता एत्थ…" इत्यादौ मुख्यार्थबाधादर्शनात् सिद्ध्यत्येतद् यद् व्यञ्जना तथाविधायामपि दशायां प्रवर्तयत्यात्मानम् ।

(इ) प्रयोजनप्रतीत्यर्थं लक्षणयापि व्यञ्जनाश्रीयते परं व्यञ्जना न तन्माहात्म्यचिन्ताचिन्तिता दृश्यते ।

(ई) यथा अभिधा सङ्केतायत्ता यथा च लक्षणा मुख्यार्थबाधादित्रय-त्रिकाधीना न तथा व्यञ्जना परवशा ।

( उ ) व्यञ्जना न सर्वत्राभिधामपेक्षते न च सा सर्वत्र लक्षणामेव। सा क्वचित् क्वचिदात्मन्येव रममाणा न कामपि वृत्तिमवलम्बते। व्यञ्जकताया न सर्वत्र शब्दानुसरणशीलत्वात्, तस्याः सर्वतन्त्रस्वतन्त्रत्वमिहोक्तम्। अशब्दात्मकनेत्र-त्रिभागावलोकनादिगतत्वमपि व्यञ्जनायाः प्रसिद्धमेव।

( ऊ ) "अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ एव वाच्यः, वाक्यमेव च वाचकम्" इति येप्याहुः, तैरप्यविद्यापदपतितैः पदपदार्थकल्पना कर्त्तव्यैवे"ति निगद्य मम्मटाचार्येण कियत्या मधुरया वक्रोक्त्या व्यञ्जनाया वेदान्त्यभिमतत्वं साधितम्।

( ऋ ) व्यङ्ग्यस्य प्रतीतेरनुमानागम्यत्वाच्च व्यञ्जनाया अभ्युपगमनमपेक्षितं सञ्जायते। व्यक्तिविवेककारो 'भ्रम धार्मिक' इत्यादौ व्यङ्ग्यस्यानुमेयत्वं यत् प्रतिपादयामास तत् समीचीनं न। तत्रत्यस्य हेतोर्व्यभिचारित्वात्। भीरुजनस्यापि प्रियास्नेह–स्वाग्या- देशादिवशात् भयवत्स्थानम्प्रति गमनं दृश्यत एव तस्माच्च व्यङ्ग्यार्थो हि अनुमानत्रीध्यः।

तदेवं व्यञ्जनाया उपादेयत्वं, तदीयं महत्त्वं, तदीयं श्रेष्ठत्वं, तदीयं सर्ववृत्ति-विजयशीलत्वं, तदीयं परोक्षार्थदर्शकत्वं तदीयमतिशयानन्दशालित्वञ्च पूर्णतया सिद्ध्यति।

"निःशेषच्युतचन्दनम्", "कस्य वा न भवति रोष", "रामोऽसौ भुवनेषु विक्रमगुणैः", "न्यक्कारो ह्ययमेव"–इत्यादिषु श्लोकेषु यदद्भुतमवदातं सौन्दर्यं प्रवहति यश्च मधुरो रसस्तत्र सहृदयैः पीयते तदर्थं सकलमपि सुधीजगत् व्यञ्जनाम्प्रति स्वीयं कृतज्ञताञ्जलिमर्पयति।

वस्तुतः शब्देऽर्थे च लावण्यमिव तरलं यत् सर्वोत्तमं पावनतमं मधुरतमं सुन्दरतमं च तत्त्वमुल्लसति तत्साहित्यदक्षिण एव मार्गयितुमक्षमन्त। तन्मा-गितमिदं तत्त्वामृतं यां परां मुदं सृजति न तां तु त्रिष्वप्यन्यत् सृजद् दृश्यते। कवीश्वरान् लक्ष्यीकृत्य केनापि कोविदोत्तमेन युक्तमेवेदमभिनन्दनं कृतम्—

> जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।
> येषां नास्ति यशःकाये जरामरणजं भयम्॥



# वैदिकी संस्कृतिः

या वेदस्मृतिशास्त्रविन्मुनिवरैर्जुष्टा सुखैकास्पदा
दैवी सम्पदलङ्कृता भगवता श्रीशेन सरक्षिता ।
या वर्णाश्रमधर्मसारहृदया कामार्थमोक्षप्रदा
नित्या विश्वहितैषिणी विजयते सा वैदिकी संस्कृतिः ॥

स्वकीयेभ्य आप्तेभ्य पितृपितामहप्रपितामहादिभ्य कुलपरम्परायाः, सम्प्रदायाच्च कस्यचन देशस्य जनता यान् आचारान् विचारान् व्यवहारान् रीतिनीतिक्रिया-कार्यकलापाश्चाधिगम्य आचरणे च परिणमय्य नैजं जीवनं यापयति त आचार-विचारादय एव 'संस्कृतिः' इत्येतेन शब्देन प्रोच्यन्ते ।

जनता जीवन-यापनप्रयोजनेन तादृशमेव सदन भोजन वसन पान क्रीडन मनोरञ्जनमन्यच्च सकलमभ्युपगच्छति यादृश देश-काल-जल-पवनादिक भवति । इद देशकालादिक जनताया बुद्धौ मानसे शरीरे मस्तिष्के च नियततयैव नैजं प्रभावममोघं क्षिपति । सा तेषां सर्वेषां सान्निध्यात् तदीयैः संस्कारैः संस्कृता जायते । तस्या तद्विधा संस्कृततैव संस्कृतिरिति बुधैर्गीयते ।

वसिष्ठ-पराशरात्रिभरद्वाजासकृष्णादिसौचोक्तानां भरतभूसम्भवानां मान वानां संस्कृतिर्वैदिकी संस्कृतिरिति नाम्नाच सर्वत्र विश्रुता । सा "आनीद्वात स्वधया तदेकम्" ( ऋग्वेद, १०।१२९।२ ) अथ च "सगच्छध्व सवदध्व स वो मनासि जानताम्" ( ऋग्वेद, १०।१९१।२ ) इत्येवविधाभ्य आधारधा राभ्य, विविधकलाकलितनिकेतनकृतवासानां प्रस्तर-कशिपु-तल्प-प्रोष्ठ-खट्व-शूर्प-तितउ-अर्दरादिकासत्यासपरिच्छदविनिवेशनपराणां, प्रतिष्ठापितनानादुर्गनगर ग्रामनिचयानां, दध्याशीर-नवनीतायुवाग्यौदनादिप्रचुरभोज्यपदार्थप्रयोगप्रदर्शि-तकामानां, क्षौमोर्णाजिनशैलुप्समपरिधानाद्याचरणावृतवपुष्काणां, निरस्त्रवसपाश-कुटीर-प्रभृतिपुष्कलालङ्कारालङ्कृतानां गवादिपशुपालनरतचित्तानां, आकाङ्क्षित-सकलोदयानां विश्वोपकारिकर्मपरायणानां ज्ञान विज्ञानसम्पन्नानां यज्ञयागानुष्ठा-नप्रवणानां कृषीवलानाम् आचरणेभ्य , किञ्च—

"इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्याः…"

इत्यादिमन्त्रवर्णिततरङ्गिणीसेव्यमानदेशात् वसन्त–ग्रीष्म–वर्षाशरद्धेमन्त-शिशिरषड्ऋतुपार्यमाणवातावरणाच्च स्वघटनोपादानानि बहूनि बहुविधानि च समासाद्य भुवि लब्धेभ्योऽपि परानन्दान् अभिव्याप्य विराजमानास्ति ।

इयं वैदिकी संस्कृतिरेव आध्यात्मिकी संस्कृतिर्वा भारतीया संस्कृतिरित्यभिधीयते । तस्या वेद–ज्ञानप्रकाशनकारिणां भारतीयानां महर्षीणां विचारैर्जन्यमानत्वात् । एषा संस्कृतिर्विश्वसंस्कृतिरित्यपि कथ्यते तस्यास्त्रिकालवर्तिसकलदेशस्थप्राणिमात्रोपकारकयज्ञात्मकर्मनिष्ठत्वात् । भारते प्रवहतां सततनानान्तराणां सम्प्रदायानाञ्च मूले स्थिरीभूय एषा निषीदति अतएव सर्वेषामपि सम्प्रदायानां प्रतिपाद्यो विषय एकः स एव यं भारतीया संस्कृतिरभिनन्दति ।

स्थान–समयभेदेन भिन्नतामाददानापि भारतीया संस्कृतिः सुरधुनीधारेवाजस्रं स्वकीयामेकात्मतां पूततां च न जहाति । इदमेव कारणं यद् भरतावनौ चिरात् प्रकृष्टास्वपि सा कालवैविध्यजनितविकृतिरजोधूसरासु साम्प्रदायिकतासु निपत्यापि न म्लानतां गता दीप्यते । यथेश्वरो मायोपहितः सन्नपि न मायया मलीकर्तुं शक्यते तथैव सम्प्रदायोपधर्मविधर्माद्युपहितापि न सा तैः सम्प्रदायादिभिः कदापि स्वपथात् पातयितुं प्रभूयते ।

यत्कर्म यज्ञार्थं न विधीयते तत्कर्माण्यनेकदोषानुत्पादयन्ति । तद्विधानि कर्माणि सततं मानवं दुन्वन्ति । स जनुर्निधनचक्रपतितोऽनिशं पिपीडति । यज्ञार्थकर्माणि तु तेभ्यो नितान्तं विपरीतानि । तानि मानवे निष्कामभावनामुद्भावयन्ति । निष्कामेषु कर्मसु यदा रुचिरेति तदा रागद्वेषादिका दोषा असद्भावाश्च मनोभुवं हित्वा दूरं पलायन्ते । मानवोऽनिर्वचनीयां प्रीतिं भजमानो जीवनस्य चरममुद्देश्यमवाप्तुमभिधावति । भारतीयसंस्कृतौ निष्काम-कर्मवीचयः सर्वतः उच्छलन्त्यः प्रवहन्त्यश्च संलक्ष्यन्ते—

"तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः" ॥

देशान्तरीयासु संस्कृतिषु नेदं वैशिष्ट्यम् । ताः सन्ति सकामकर्मसु रममाणाः । तस्माच्च ताः श्रेयसे कल्पन्ते ।

सांसारिकान् भोगान् विहातुं न सा मानवमुपदिशति । किन्तु तेषामुपभोगोऽनासक्तिपूर्वकमेव कार्य इति सा काङ्क्षति । सा तामेव प्रवृत्तिमनुमन्यते या

आचरति किन्तु स स्वकीयेन गहनानुभूतिबलेन योग्यतासामर्थ्येन सक्रियेण च ज्ञानेन जनसामान्यस्य मलिनतामनायासेनापनीय कर्त्तव्य कर्म गन्तव्यञ्च मार्गं प्रदर्शयति । अत भारतीयसंस्कृत्यां वानप्रस्थाश्रमव्यवस्था सर्वजनकल्याणकारिणी व्यवस्था समवतिष्ठते ।

सन्यासाश्रमं प्रविश्य मानवो जीवनस्यान्त्य लक्ष्यमधिगच्छति । एष आश्रमो मुक्तेर्द्वारमिव । दुःखानामात्यन्तिकनिवृत्तिर्वा जन्मजरामरणपाशान्निर्मुक्तिर्न तत्त्वज्ञानाधिगममन्तरेण सम्भवा । तज्ज्ञानलाभाय भारतीया संस्कृति सन्यासाश्रमवादिनी भूत्वा विद्योतते । निश्चप्रचतया विश्वजनीनाया भारतीयाया. संस्कृत्या एषा आश्रमवादिता संसारं सम्यग्व्यवस्थापयति उन्नमयति चोत्तरोत्तरम् ।

समाजस्य मङ्गलाय तस्योत्थानाय, सुख-शान्तिपूर्वक तस्य जीवन जगति यापनीयाभिमतप्रयोजनेन वैदिकसंस्कृत्या वर्णव्यवस्था कल्पितास्ति । यस्मिन् जनवर्गे सात्विक तत्त्वं प्रधानतया दृश्यते स इह संस्कृतौ 'ब्राह्मण' इति, यत्र सात्विकतत्त्वान्वित राजस तत्त्व प्रमुख स 'क्षत्रिय' इति, यत्र रजोगुणविशिष्टस्य तमोगुणस्योन्मेषो दृश्यते स 'वैश्य' इति, यत्र च तमोगुण एव विद्यते मुख्यतया स 'शूद्र' इति निगद्यते । आधुनिकं मनोविज्ञानमित्थं विभजते-जीवो द्विविध – उद्बुद्ध अनुद्बुद्धश्च । तत्रोद्बुद्धस्त्रिविध —ज्ञानप्रधान , क्रियाप्रधान , इच्छाप्रधानश्च । ये मस्तिष्केण समाज सेवन्ते ते सात्विका जीवा ज्ञानप्रधानत्वाद् 'ब्राह्मणा' इति कथ्यन्ते । ये बाहुबलेन समाजमाराधयितुमनसस्ते राजसजीवा क्रियाप्रधानत्वात् 'क्षत्रिया' इति भाष्यन्ते, भौतिकदृष्टिमन्तस्तम प्रधाना राजसजीवा 'वैश्या' इति उच्यन्ते, अनुद्बुद्धा प्राणिन तमोगुणप्रधाना 'शूद्रा' इति शस्यन्ते । मनुष्येषु ज्ञान, क्रिया, इच्छा इत्येते भावा प्राप्यन्ते । इमान् एव भावान् आश्रित्य वर्णव्यवस्था-प्रासाद सन्तिष्ठते ।

भारतीयसंस्कृत्यभिमता वर्णव्यवस्था अर्थशक्ति पदे विदधाति । धनेन पुमान् भौतिकानि द्रव्याणि क्रेतुं शक्नोति किन्तु न तेन स सम्मान क्रेतुं प्रभवति । भारतीयसंस्कृतिरभिलषते-यज्जना स्वस्वप्रवृत्त्यनुसारेण समाजं सेवेरन् । ब्राह्मणा ज्ञानेन, क्षत्रिया बलेन, वैश्या धनेन, शूद्राश्च सेवया च समाजमुपकुर्वीरन् । यदा कस्यापि कृते किमपि कर्त्तव्य निर्धार्यते तदा तेन कर्त्तव्येन सम तस्य

कोऽप्यधिकारोऽपि स्थिरीक्रियते। अयमधिकारो वस्तुत उपहारत्वेन मतः। भारतीयदृष्टिरधिकारं सम्मान–शासन–धन–क्रीडाभेदेन चतुर्षु भागेषु विभजते।

ब्राह्मणाय कर्त्तव्यपालनोपलब्धये सम्मानं प्रदत्तं किन्तु सम्मानमवाप्य बुद्धिर्दुष्यति अतः ब्राह्मणं प्रति भारतीयसंस्कृतेरयमुपदेशः—

"सम्मानाद् ब्राह्मणो नित्यमुद्विजेत विषादिव"।

क्षत्रियाय तत्कर्त्तव्यरचोद्देश्येन यत्पारितोषिकत्वेन प्रदीयते तदस्ति शासनम्। परं शासनमपि मानवमुन्मादयति तस्मात् भारतीयसंस्कृतेरतत्प्रति व्याहरणमिदम्—

"दण्डो हि सुमहत्तेजो दुर्धरश्चाकृतात्मभिः।
धर्माद् विचलितं हन्ति नृपमेव सबान्धवम्॥"

वैश्याय धनं तदधिकारत्वेन विश्राणितं परन्तु तदपि जनं मोहयति अत उक्तम्—

"वृध्याच सर्वभूतानामल्पमेव प्रयत्नतः।"

शूद्रो हि शरीरेण समाजं निषेवते। तदीया शक्तिस्तदेव। न तस्य सविधे ज्ञानं, न बलं, न धनम्। तस्मात् तत्कर्त्तव्यानुरोधेन तदर्थं पारितोषिकत्वेनावकाश उत्सृष्टः। सर्वविधविकासाय तस्मात्पि सर्वविधं सौविध्यम्तु प्रदत्तमेव हि वर्ततेऽनुपदम्। स स्वोत्थानाय स्वतन्त्रः—

"शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्।"

धनमानं श्रयणबलं लघयितुं वर्णव्यवस्थायां प्रतिष्ठाप्रभुताप्रस्पदञ्च नैकत्र सन्निवेशितास्तास्मिन्सोऽपि पृथक् स्थाने व्यस्ततां समारोप्याऽवस्थापिताः। यत्र प्रतिष्ठा प्रदत्ता तत्र प्रभुता सम्पच्च दूरीकृते यत्र प्रभुता समर्पिता तत्र न प्रतिष्ठा न सम्पदेवोपहृता किन्तु यत्र सम्पत् प्रतिष्ठापिता तत्र प्रतिष्ठाप्रभुते द्वे अपि हृते। प्रतिशक्ति सदैवाकिंस्येवा कृता। समाजस्य विकासः स्वार्थपरार्थयोः समन्वयेन भवितुमर्हतीति भारतीयदार्शनिकाः साधु विविदुः। तस्मात् तेऽर्थमुपेक्षमाणाः परार्थं प्रमुखे स्थाने निधाय स्वार्थं परार्थसाधकत्वेन गौणमधिष्ठानमध्यासयामबभूवुः। निष्कामा प्रवृत्तिः परार्थं साधयति, सकामा च स्वार्थम्। निष्कामभावेन समाजहिताचरणं ब्राह्मणक्षत्रिययोः कर्त्तव्यम्। सकामतयापि तदाराधनं वैश्यशूद्रयोः, धर्मत्वेनाभ्युपगतम्। वर्णव्यवस्थाया इदं दृष्टिः संसारं रक्षितुमीष्टे। जगज्जनानामौक्यिमेनमक्ते सा संवर्धयितुं भारतीयसंस्कृतिनिर्दिष्टा वर्णव्यवस्थामुररीकुर्यीरन्।

आस्माकीनमद्यतनं भारतं योजनामयवातावरणं विस्तृणोति। उन्नतिपराः सर्वेऽपि देशान्तरीयाश्च स्वं स्वं राष्ट्रमुन्नमयितुं योजनानामानायं वितन्वाना अत्र वीक्ष्यन्ते क्वचित् पाञ्चवर्षिकी क्वचिद् दाशवर्षिकी योजना प्रवर्तमानावाप्यते। आभिर्योजनाभिर्बन्ध-बन्धनं, कुल्याखननं, सेतुप्रणयनं, नल-कूपारचनं, विविध-यन्त्रशालानां संस्थापनम्, औद्योगिकागारप्रतिष्ठापनं, वैद्युच्छक्तेः प्रसारणमित्यादिविधान्यनेकानि महामहाविशङ्कटान्युपक्रमणान्युपाक्रान्तानि दृश्यन्ते। एतासां योजनानां प्रयोजनं पार्थिववैभवोपभोगपल्लवनं विहाय नान्यत् किमपि (मानवानां भौतिक्याः क्षुधो निवारणायानुष्ठीयमाना इमे उपक्रमाः सन्ति कथनीयाः) किन्त्वाधुनिक्यानया विज्ञानशिक्षया मानवस्तस्य चरमाल्लक्ष्याद् विमुखीकृतः। मानवतातः सः पराङ्मुखीकृतः। सार्वजनीनभावनातः पातितः। सः स्वं यावदिच्छति न तावत् स्वं वर्गं, यावत् स स्वं वर्गं काङ्क्षति न तावत् स्वकीयं समाजमेवमेव यावदसौ स्वसमाजमभिलषते न तावत् स्वकीयं राष्ट्रम्। परकीयवर्गव्यक्तिस्वसमाज-राष्ट्राणां तु वार्तैवातिदूरे तिष्ठति। न राष्ट्रं राष्ट्रान्तरस्थेभ्यानं विश्वासं सुखानि च मोक्तुं शक्नोति ((तस्य सर्वाण्यपि शस्त्रास्त्राणि नवनवानि परराष्ट्रं परसम्पदं विनाशयितुमुन्मूलयितुञ्च माननध्यावानं सान्त्वेयं च सन्तिष्ठन्ते)) अपि किमियमेव मानवता? किमेषैव उन्नततमा सभ्यता? किमयं कश्चिद् विश्वबन्धुतायाः प्रकारः? वैदिकी संस्कृतिर्न कदापि भौतिकताविकासविरोधिनी। सा तु परोत्कर्षासहनविरोधिनी। तदीयस्त्वभिधानमिदमेव यद्येषां वैज्ञानिकानां कार्याणां कर्तरि मानवे मानवताया उद्रेको न समुदितस्तदाभिः सम्पद्भिरेभिः कार्यैश्च को लाभः? न प्रतिदिनं वृद्धिं गच्छन्त्य इमा दुर्लभा दुष्पूराः प्रमाथिन्यो भौतिक्यः कामनाः मानवं दुराचारान्निवर्तयितुं क्षमन्ते। नैता भ्रष्टाचारात् तं पराङ्मुखीकर्तुमर्हन्ति। अस्याः पार्थिवताया एव सम्वर्धनेन यद् यदैवैका कामना पूर्तिमृच्छति तदैवैषमपरां कामनां जनयति—

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥

तस्मात् तन्नाशाभ्यर्थीरेव निधेया। भारतीयसंस्कृतेरेष एवान्तरिकोऽभिलाषः।

भारतीयसंस्कृत्या गुरुतमा योजना मानवस्य निर्मितिः। प्रतीच्या संस्कृतिः स्वार्थं चिन्तयति, ग्रासांसि स्थापयति, निर्मितीर्विस्तरयति परं सा मानवताया उन्मीलने निमीलितनयना भूत्वा सुखेन स्वपिति।

नात्र संशयो यदन्न वसनादिकाभावे मानुषेणानृतचारिणा विपथगामिना भ्रष्टाचारनिषेविणा च भवितु शक्यते—

"बुभुक्षितः किं न करोति पापं, क्षीणा नरा निष्करुणा भवन्ति"—किन्तु प्रचुरभोज्यभोग्योपकरणधारिणो नानाविधर्द्धिःयाम्बरशालिन उच्चप्रासादनिवासिनोऽतुल्सुखविहारिणोऽपि निन्दनीयेषु कर्मसु रममाणा आमाद्यन्ते सर्वत्र। ततोऽपि पुष्कलाद् धनात् तृप्तिं अलभमानास्ते सर्वतो वित्तं सहस्रबाहवो भूत्वा कृषन्तो वीक्ष्यन्ते। तस्माद् भारतीया संस्कृतिरिमां प्रतीच्यां संस्कृतिं न मानव कल्याणकारिणीं पश्यति। सकलमपि जगदद्येतस्या प्रतीच्याया संस्कृते परिश्रान्तं परिक्लान्तं नितरामशान्तमुद्विग्नञ्च वर्तते। एतद्धेतोर्निखिलमेव भुवनं हाहाकारं विदधानं श्रूयते।

मानवस्य निर्माणं मानवताया निष्पादनं शान्तेः समुत्पादनं विश्वबन्धुतायाः आविर्भावनं च भारतीया संस्कृतिः साधु जानाति। तदीया संस्कारवादिता उपर्युल्लिखिततत्त्वान्येव सूते। भारतीयसंस्कृत्या निर्दिष्टा षोडशापि संस्कारा मानवजातेः मानसं संस्कुर्वन्ति परिमार्जन्ति च। तेषां प्रभावं प्रत्यक्षाप्रत्यक्षरीत्या धियि आत्मनि च निपतति। तेन धियि सात्त्विकानां प्रकाशानां सञ्चारो भवितुमारभते आत्मा च भवति द्रढीयान्। यस्मिन् मानवे सात्त्विकी धीः, शुद्धं स्वच्छं मनो बलवान् आत्मा वासं कुर्वन्ति स एव विश्वस्य सेवां कर्तुं पारयति। अतः भारतीयसंस्कृतिस्तादृशैर्मानवैरलङ्क्रियमाणं विश्वं दिदृक्षते यादृशा मानवास्तदुद्धाराय अपेक्ष्यन्ते। भारतीयसंस्कृतेरयं विश्वासः—

"इह चेदवेदीत् अथ सत्यमस्ति, न चेदवेदीत् महती विनष्टिः।"

भारतीयसंस्कृतेर्मूलानुबन्धनानवगमनेनानेके छिद्रान्वेषिणः आलोचकाः आक्षिपन्ति यद् भारतीयसंस्कृतिः स्वप्नस्य कल्पनायाश्च चञ्चलां छायामभ्यस्यते। संसारस्य क्रियाप्रक्रियाधारया सार्धं नास्ति तदीयोऽल्पिष्ठोऽपि सम्बन्धः। परमेष आक्षेपो नावितथः। भारतीयसंस्कृतिश्चरणाभ्यामिमामखिलां स्पृशति किन्तु मूर्ध्नाम्बरमभिव्याप्य निषीदति। आमुष्मिकताया निहितत्वत्तस्यापि सा ऐहिकताया दूरस्था नास्ति। पदार्थविद्या शासनपद्धति-समाजव्यवस्था-शरीरशास्त्र-वार्तावास्तुकला-युद्धविद्या जननविज्ञानप्रभृतीनामखिलानामपि विद्यानां कलानां विज्ञानानां क्षेत्रेषु भारतीयसंस्कृतेः पारङ्गतत्वं सर्वविदितमेव। वायुविज्ञानदक्षतया सा कालाध्वनोर्व्यवधानं ज्यति, सूर्यविज्ञानस्य साहाय्येन पदार्थस्वरूपं परिवर्तयितुं

मृत्युञ्जयगन्तु सा सामर्थ्यमश्नुते । तदीया समाजव्यवस्था व्यक्तिविकासकारी-ण्युपकरणान्युररीकृत्यापि समाजस्य शुभं प्राधान्येनानुतिष्ठति । तदीयमर्थशास्त्रं समाजशोषणकारि न भूत्वा तद्रक्षकं पोषकञ्च सञ्चकास्ति ।

"उपार्जितानां वित्तानां त्याग एव हि रक्षणम् ।
तडागोदरसंस्थानां परीवाह इवाम्भसाम् ॥"

इत्यभिधाय सा समाजस्य पुरस्तान्मङ्गलमयीं सम्मतिं प्रस्तौति । येन समाजस्य दिनानुदिनं वृद्धिर्जायेत ।

भारतीया संस्कृतिर्न शरीरे उपेक्षाधियं निदधाति । सा तु तत्र स्नेहं विदधाना भातितराम् । सा मन्यते—

"देहोऽयं मानुषो राजन् पुरुषस्याखिलार्थदः ।
तस्मादस्य वधो वीर सर्वार्थवध उच्यते ॥"

सा कामयते—

"पश्येम शरदः शतं जीवेम शरदः शतम् ।"

सा प्रार्थयते—

"भद्रं कर्णेभिः शृणुयाम देवाः ।"

मानवस्वभावे प्रवृत्तिर्द्विविधा लक्ष्यते—केन्द्रोन्मुखी वृत्तोन्मुखी च । आद्या वृत्तात् केन्द्रबिन्दुमुपसरति । सा विचरतु क्वापि परं तच्चित्तं सदैव केन्द्रे स्थितं भवति । सा तावन्न विरमति यावत् केन्द्रं न लभते । अन्या केन्द्रात् परिधिं प्रधावति । सा बाह्यविहारिणी । द्वे अपीमे प्रवृत्ती द्विविधां संस्कृतिं सुवाते । केन्द्रोन्मुखी प्रवृत्तिर्भारतीयां संस्कृतिं वृत्तोन्मुखी च पाश्चात्यसंस्कृतिं जनयति । भारतीयसंस्कृतिराचरणप्रधानास्ति । तत्र अन्तर्वृत्तेविकासः, समाजघटकेतीरा स्मशुद्धिः, वैयक्तिकजीवनस्य त्यागपरता च स्वीक्रियन्ते । यथार्थहिताचरणस्य कृते शुद्धान्तःकरणस्यापेक्षितत्वात् ।

इदमनुपदगेयोक्तं यद् भारतीया संस्कृतिर्न भौतिकतापरिपन्थिनी । केवलं तस्या मतभेदः संस्कृत्यन्तरेण सह भौतिकतोपयोगविषये वर्तते । भारतीयसंस्कृतेः भौतिकतोपभोगप्रकारः आध्यात्मिकतामाश्लिष्टोऽस्ति परं संस्कृत्यन्तरस्य भौतिकतोपयोगविधा तच्छून्यास्ति । भारतीयसंस्कृतेराध्यात्मिकताश्लिष्टता भौतिकता सर्वैरपि सत्यपक्षपातिभिर्विद्वद्भिः प्रतीक्ष्यै पुनः पुनः श्लाघ्यते । "इन्द्रिया ह्यान्

कैन इट टीच अस्" इत्यादिनामधेया ग्रन्था भूयोभूय संस्कृतिं वैदिकीं प्रशंसन्त केन न श्रूयन्ते ।

अस्माकं धर्मस्यान्तराले, समाजव्यवस्थाया मूले, शिक्षाया गर्भे, कलाया अन्तःकरणे च भारतीया संस्कृतिरिमां भव्यां भावना पिपर्ति—

धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते ।
नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृत ॥
कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता ।
जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभि ॥

भारतीया संस्कृति कर्मवादिनी । कर्म विना न गति । तदेव बन्धने पातयति तदेव बन्धनान्मोचयति । न कदापि तस्माज्जुगुप्सेत—

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च सन्यसनादेव सिद्धिं समधिगच्छति ॥

भारतीया संस्कृतिर्जन्मान्तरवादिनी । जगन्मध्य प्राणिषु वीक्ष्यमाणा विविधता, दु खसुखादिक, दारिद्र्यमदारिद्र्य, रोगादिकमन्यच्च विषमता पूर्वजन्मकृतकर्म वशादेव समागता सन्ति—

"जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।"

भारतीयसंस्कृतिराचारवादिनी । सा ज्ञानादाचार ज्यायांसमवगच्छति । न सा तथा विद्वांस सभाजयति यथाचारवन्तम्—

"कदाचार नर वेदा न पुनन्ति कदाचन ।
न देवा न धन नेज्या नाधीतिर्न महान्वय " ॥

अहह भारतीयसंस्कृतिप्रपूर्णमाणा ग्रन्था सदाचार सेवितु कियन्मधुरया गिरयोपदिशन्ति—

आयु स्वैर स्रवति वपुषो भिन्नकुम्भादिवाम्भ
को विश्वास प्रहरति कदा क्रूरकर्मा कृतान्त ।
नान्य पन्था विषय विपतो दूषितो मानवाना
कल्याणाय प्रभवति सखे बन्धुराचार एक ॥

भारतीयसंस्कृतेर्वैशिष्ट्यमिदमपर यत् सा मातृशक्ते सम्मान करोति । "या देवी सर्वभूतेषु मातृरूपेण संस्थिता", "स्त्रिय समस्तास्तव देवि भेदा " इत्यादिवचासि अस्या संस्कृतेश्चैर्नारी सम्मानभावनामुद्गिरन्ति ।

एषा चान्या विशिष्टताऽस्या यदियं विचारसहिष्णुता श्रयति। सा स्वकीयान् विचारान् प्रकाशयितुं सहर्षं सर्वान् प्रति स्वातन्त्र्यं प्रयच्छति। भारतेऽत एव तु भूयिष्ठानां वादानां मतानाञ्च दर्शनं भवति। को न जन इह ईश्वरवादानीश्वरवादद्वन्द्व पौरुषेयत्वापौरुषेयत्ववाद देहवाद शून्यवादादिकान् शतशो वादान् शृणोति।

भारतीयसंस्कृत्यै सदैव सत्यं रोचते। यत्र विद्या यत्र ज्ञानं यत्र प्रकाशस्तदत्र ता प्रीणाति। तत्रैव सा रमते न ततोऽन्यत् किमपि सा मानं जानाति।

सेयं तपोवनसम्भवा त्यागतपोभ्यां पूता 'सर्वं खलु इदं ब्रह्म' इत्यनस्मिन् सत्य श्रद्धावतीत्वात् समदर्शिनी भारतीया संस्कृतिः संसारस्य सर्वास्वपि संस्कृतिषु श्रेष्ठा। यत्राद्य खस यवन दरद म्लेच्छ पारद काम्बोजादिदशानां संस्कृतयः कालस्याननगह्वरे विलिल्यिरे तत्रेयं वैदिकसंस्कृतिर्नवनवियमैनमन्तीं दाधूयमाना सर्वत्रापि संसारे स्वकीयागम-समाधारणीं प्रभुतामारं पश्यन्ती विश्वान्तिरे सप्रमोदं विजृम्भते।

प्रार्थ्यते परब्रह्म परमेश्वर —

अध्यात्मज्ञाननिष्ठाऽखिलललितकलापोषिणी पुण्यरूपा
विद्यानामेकगेहं कविकुमुदविधुर्विश्वसाहित्यसम्पद्।
देशस्यास्य प्रतिष्ठाऽऽगमनिगमनिधिर्गौरवं चार्यजाते
सर्वेषां रक्षिका सा त्रिभुवननिखिले भासतां संस्कृतिर्नः॥

## संस्कृत-भाषा

संस्कृतभाषा भाषास्वादिभाषा । सा सर्वासामपि भाषाणां जननी । या का अपि भाषा अद्य जगति प्रचलिता सन्ति किं वा याश्चापि अतीतकाले काश्चन कालकवलं यावज्जीवनमवाप्य विलुप्ता अभवन्तासां निखिलानामपि भाषाणां स्रोत इयमेवामरभाषास्ति। भाषाया एतस्याः सर्वभाषाजननीत्वोपपादनाय प्रामाण्याय वा न भाषा विज्ञानविदुषां वचनमेवातितरामपेक्ष्यते न चास्मदेतद्-दभिधानं कोऽपीतिहासविरोधश्चेदि येतदपि नानिवार्यत्वेनापेक्षितम् । य हि ऋग्वेद समारस्याद्य पुस्तकं सर्वे अपि प्राच्याः प्रतीच्याश्च पण्डिता एकस्वरेण स्वीकुर्वन्ति स स्वर्गापवर्गमार्गप्रदर्शी ज्ञानज्योतिःपुञ्जपावनप्रदीपो वेदः संस्कृतभाषाया मेव सशोभते । अतस्तया ( संस्कृतभाषाया ) आदिभाषात्वं स्वत एव सिद्धम् ।

संस्कृतभाषा तान् सर्वान् अपि गुणान् बिभर्ति ये हि कस्याश्चन भाषाया सर्वजनीनत्वाय सर्वविधविषयोद्भावनत्वायाखिलभावविभावनत्वाय सार्वभौमत्वाय च काम्यन्ते । न केवलं तदीयं शब्दसौष्ठवं अर्थगाम्भीर्यं गुणगुम्फमलङ्कारालङ्कृतत्वं रसातिशायित्वञ्चानुपममपि तु तस्याः परमपुरुषार्थसाधीयस्त्वमपि अद्वितीयमेव । धर्मार्थकामानामुपपत्त्या सममेवापवर्गमादिशन्तीयं सुरगवी सुरसरिदिव जगदघौघविध्वंसनपटीयसा कौमुदीव शान्तिसुधावर्षिणी निखिलविश्वप्रसृतभाषामुकुटमणिः । न तदीयो महिमा कालविशेषजागरूकः किन्तु कालत्रितयसिद्धः ।

संस्कृतभाषा भारतीयानामनुपममस्य पैतृकं धनम् । यावदेतद् धनं गौरवमधिकरोति न जगति कोऽपि देशस्तावद् देशमिमं जेतुं प्रभविष्णुः । एतस्या भाषाया तज्ज्ञा विभान्ते यत्सदृशं न किमपि पूतम् । सकला परा शान्तिरासाद्यते, नष्टक्लेशं सर्वेऽपि, स्वार्थ, ऐन्द्रियम्, कन्द-प्रन्थपथ भिसतां यान्ति । तत् सर्वाण्यपि कर्माणि दग्धं शमने, तथानन्तमभ्युदयविधायकं सामर्थ्यनिशमाशु यर्पेति । जगत् तदीयमेवनिधिं ज्ञानं प्रदीप

निषद्दर्शनगीता-रामायण-श्रीमद्भागवतादिभ्यो ग्रन्थनिर्झरेभ्योऽनायासेनैव पातुं प्रभवति ।

संस्कृतभाषायां यथाध्यात्मिकं ज्ञानं विपुलं तथैवाधिभौतिकमपि ज्ञानं प्रचुरम् । लौकिकजीवनप्रकर्षाय यद्यदभीप्सितमस्ति तत् तत्र दृश्यते । लोकेऽर्थमन्तरेण जीवनं व्यर्थम् । दुःखानां शकटमेव तन्मतम् । तस्यार्थस्य केन प्रकारेण समुपार्जनं कार्यं केन विधिना स रक्षणीयो वर्धनीयश्चेत्येतद्विषयाणां प्रतिपादनकारिणो ग्रन्था अपि नादुर्लभाः । लोकदृष्टयार्थस्य प्रयोजनमस्ति कामानामुपभोगः । भाषायामस्यां तमपि काममधिकृत्य ग्रन्था वर्तन्ते । अर्थ-कामौ धर्मेण नियन्त्रितौ भूत्वा दृढीयसीं स्थितिं लभेते । भाषायामस्यां धर्मविषयका अपि ग्रन्थाः सन्ति पुष्कलाः । तस्मात् भाषेयमैहलौकिकपारलौकिककल्याणसम्पा-दयित्रीत्यत्र न कापि संभीतिः ।

अस्ति संस्कृतभाषानेकवैशिष्ट्यशालिनी । तत्र सा संस्कृतिमन्दाकिनी प्रवहति यया मानवता जीवनमनुगता सततमुपचयमधिगच्छति । तदीय उद्घोषोऽयम्—

यावद् भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम् ।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति ॥

संस्कृतभाषाया यस्य धर्मस्य निरूपणं कृतमस्ति स प्राणिमात्रस्य सुहृत् । स —

"सर्वेऽपि सुखिनः सन्तु सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्"

इत्येतस्यां भावनायामभिनिविशन् तदनुरूपाचरणपक्षपाती । संस्कृतभाषा-प्रतिपादितधर्मस्यात्मा 'अहिंसा' ऽस्ति । आचार तपस्त्यागसत्य-शुचितास्तस्य प्राणाः सन्ति ।

संस्कृतभाषा तानि कर्माण्येव धर्मत्वेनाभ्युपगच्छति यानि भवन्ति यज्ञार्थानि । यानि कृत्वा न कोऽपि विषीदति कदापि, यानि अनुष्ठाय जनो दुःखेभ्यो विनिर्मुक्तो भूत्वा अमितसुखमत्र लभते । सा यज्ञार्थानि कर्माणि प्रशंसन्त्येवं श्रूयते—

"यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥

संस्कृतभाषाया ये हि अर्थसम्बन्धिनो ग्रन्था सन्ति तेष्वर्थस्य महत्त्वं सम्यक् स्वीकृतमस्ति। लोके तस्य योपादेयता विद्यते ता ते मनसाऽऽद्रियन्ते। लोके च ते तदर्थं भृशमुत्साहयन्ति, तदर्जनाय ते न प्रवर्तयन्ति।

संस्कृतभाषायामित्रमर्थसम्बन्धिनी विद्या 'वार्ता' इत्येत[illegible] अर्थशास्त्रमधिकृत्य तदीयव भावना भव्या—

> धर्ममर्थञ्च कामं च प्रवर्तयति पाति च।
> अधर्मानर्थविद्वेषानिदं शास्त्रं निहन्ति च॥

एतेभ्योऽप्यधिकानि वर्षाणि भारतं भारतीयतां च उन्मूलयितुं नाशक्नुन् इत्यत्र यत्कारणं तदस्ति—संस्कृतभाषा। सा सर्वान् अपि तत्तद्विभिन्नदेश भूषा-भोजनोपभाषाद्युपयोगिनो भारतीयान् स्वसंतन्यपरिपोषितसंस्कृतिरश्मिना नियम्य एकीकुरुते।

संस्कृतभाषाया साहित्यं गुरुतमम्। न कस्या अपि भाषाया साहित्यमपि तत्सेतु पारयति। कामं प्रकामं कस्या अपि अन्यस्या भाषाया ग्रन्था संख्याया वा शब्दावलिगणनायां विशालतरा स्यात्। अस्या भाषाया सन्निधौ विद्यमाना ग्रन्था स्वसारशालितया इतरभाषाणां ग्रन्थान् सलील पराभवन्ति। एतदीयाया शब्दावल्यामपि यद् व्यापकत्वं यद् गभीरत्वं यद् भिन्नार्थकत्वं, यत्प्रकृष्टत्वं, यन्निशितत्वं, यन्माधुर्यं यत् प्रसादत्वं यदोजस्त्वं यत्सूक्ष्मत्वं यच्च कामदुघत्वं विद्यते न तत् तत् कस्या अपि भाषाया शब्दश्रेणीषु सन्निहितमस्ति।

अन्यच्च साहित्यं वैदिकलौकिकभेदेन द्विविधम्। वैदिके साहित्ये संहिता-षडङ्ग ब्राह्मणारण्यकोपनिषदादयोऽन्तर्भवन्ति। लौकिके च दर्शनपुराणरामायण-महाभारतकाव्यादीनि सन्निविशन्ते। वेदेषु ज्ञान कर्मोपासनाविज्ञानवैभवं विभा-सततराम्। उपवेदाश्च सन्ति तदीयाश्चतुर्विधा—आयुर्वेद, धनुर्वेद, गान्धर्ववेद, अर्थवेदः।

आयुर्वेद शल्यशालाक्यकायचिकित्साभूतविद्याकौमारभृत्यागदरसायनाद्यष्टा-ङ्गेषु विभक्तोऽस्ति।

धनुर्वेदो युद्धविद्यां शस्त्रास्त्राणि च निरूपयति।
गान्धर्ववेद सङ्गीत विद्यां गायति।

अथर्ववेदो राजनीतितन्त्रार्थतन्त्रकृषिवाणिज्यसमाजशास्त्रादीनि तत्त्वानि विविनक्ति ।

वेदानामङ्गानि च सन्ति षट्—शिक्षा कल्प व्याकरण निरुक्तच्छन्दोज्यौतिषभेदात् । एतेषु षट्सु यथाक्रमं स्वरवर्णाद्युच्चारणशिक्षा श्रौत गृह्यकर्माणि, नामाख्याते, वैदिकपदनिरुक्ति, छन्दांसि, काल ग्रह नक्षत्रादीनि सम्यगुपपादितानि सन्ति ।

ब्राह्मणेषु यज्ञविधानम् आरण्यकोपनिषत्सु च ब्रह्मादिनिरूपणं कृतं वर्तते ।

दर्शनानि च नास्तिकास्तिकभेदेन द्विविधानि सन्ति । तत्र आस्तिकदर्शनेषु सन्तीमानि—वेदान्त सांख्य न्याय वैशेषिक योगमीमांसा । एषु ब्रह्म-जीव प्रकृति-द्रव्य गुणादिपञ्चकर्मादिविविधपदार्थानां सविशदं वर्णनं दृश्यते । नास्तिकेषु दर्शनेषु चार्वाक बौद्ध जैनदर्शनानि सन्ति मुख्यानि । तत्र चार्वाकदर्शनं भूतवादि वर्तते । बौद्धदर्शनं विज्ञान वाद शून्यवादादिविविधवादप्रमुखस्थानपुरस्सरं निर्वाणोपदेशपरम् । जैनदर्शनमाचारशुचिताऽहिंसाप्रतिपादननिष्ठम् ।

पुराणानि सन्त्यष्टादश । तत्र सर्गप्रतिसर्गादिप्रकथनपूर्वकं राजवंशादीनां प्रवचनं कृतम् ।

स्मृतयः सन्ति वर्णाश्रमधर्मं कर्तव्य दण्ड व्यवहारादिव्यवस्थापिकाः ।

निगमतन्त्रादिषु लोककल्याणविधायकविविधोपायकलापः आम्नातः ।

रामायण महाभारत काव्य नीति नाटकाख्यायिकादीनाञ्च उद्देश्यं प्रवृत्तितो निवृत्तिप्रति जनसाधारणस्याभ्याकर्षणमस्ति ।

संस्कृतभाषाया निर्दिष्टं साहित्यं सकलमपि संस्कृतभाषाया गरिमाणं व्यापकतां सर्वाङ्गीणताञ्चास्मत्पुरतः उपस्थापयति ।

उपरिनिर्दिष्टसंस्कृतसाहित्यस्य विवरणावलोकनेनेदमपि सिद्ध्यति यद्गीर्वाणीसुरभारतीः भारतं प्रेयसि श्रेयसि च उभयत्र स्वबुद्धिं बबन्ध ।

यदा हि अस्माभिरन्यान्यभाषाणां साहित्यं प्रति स्वदृष्टिः क्षिप्यते तदा तत्रैतादृशी व्यापकता सर्वजनीनता श्रेयः प्रेयः प्रदायकसाधननिरूपणकारिता न विलोकिता जायते ।

अद्यतना मनीषिणः 'ग्रीक'भाषायाः इतरस्य साहित्यं प्रशंसनीयतरमिति बहुना मन्यन्ते । परं तदपि संस्कृतसाहित्यान्न गरीयः । तत्रैहिकजीवनं सुख

सम्पादयित्रीणा विद्याना तु प्रकाम वर्णन विभाति परं हृदयशोधनकारिण्या कलाया न क्वापि तत्र लेशोऽपि लसति, न च तत्राध्यात्मिकी चर्चैव चकास्ति। किमेवविध साहित्य सर्वाङ्गीण प्रवक्तु शक्यते। प्रतीच्य साहित्य न भारतीय-साहित्यात्—न संस्कृतभाषाया साहित्यात्—पुरातनतरम्। तत् संस्कृतभाषाया साहित्यस्य निर्भर्ति ऋणम्। तत् तस्मादेव शिक्षा त्रिविधा लेभे। संस्कृत-साहित्यस्य बहवो ग्रन्था ध्वस्तता नीता, बहव कालेन कवलिता, बहव क्वापि अन्यत्र नीता, बहव अज्ञातस्थानस्थितिषु सञ्जाता सन्ति। अतोऽनेके विषया संस्कृत साहित्यप्रतिपादिता साम्प्रत समवाप्ते संस्कृतसाहित्ये न दृश्यन्ते। पारतन्त्र्यात् कुत्सितराजनीतिहस्क्षेपात्यातश्चाधुनिकाना विषयाणामाधुनिकरीत्या च तत्र प्रवेशो न भवितु शक्नोतिस्म यद्यपि, पर सत्यप्येतादृशेऽभावे साम्प्रति-कानामेव विद्यानुरागिणा ज्ञानपिपासूना पण्डितानामुदीरणमिदं यत् संस्कृत-साहित्यस्य योंऽशोऽधुना प्रकाशमागत सोऽपि साहित्यान्तराद् गरीयान्, प्राची-यश्च यश्च तदीयोंऽशोऽप्रकाशितो वर्ततेऽथवा विलुप्तोऽस्ति तस्य तु गणनैव दूरे वर्तते।

संस्कृतसाहित्यस्य सकाशे यद् व्याकरण वर्तते तस्य सामर्थ्यन्तु मातुमपि शक्यम्। तत् समस्तविषयाणा प्रतिपादनार्थं यादृशी शब्दावलिरपेक्ष्यते तादृश्या शब्दावल्या निष्पादने निर्माणे च आश्चर्यजनक क्षमता निदधातीत्येतस्या दशाया तत् (साहित्य) कथमपि न कस्मादपि साहित्यान्न्यूनम्। विश्वस्य का अपि भाषा प्रथमन्तु अस्या संस्कृतभाषाया समक्षे स्वीय शिर उन्नमयितुम-स्मादपि कारणात्, न समर्था भवन्ति यद् भाषाया अस्या केवल व्याकरणमेव तद्विध यद्विध व्याकरण न कस्या अपि भाषाया सकाशे भाति। अहह, संस्कृतभाषाया व्याकरण केन प्रकारेण प्रशस्येत। तदीयैव कृपेय यद् विविधा द्वारेणा अपि प्रयुद्धा भाषामिमा हन्तु न प्राभवन्। अयि तत्तद्भाषाभिमानका-रिण प्रथम स्वकीयाया भाषाया व्याकरण संस्कृतभाषाया व्याकरणतोऽपि विदधतु तत संस्कृतभाषामालोचयितु नैजमानन कुर्वन्तु विवृतम्।

अत्र एव च प्रवाद आकर्ण्यते यत् संस्कृतभाषा व्यावहारिकी भाषा न कस्मिन्नपि कालेऽवर्तत। विषयेऽस्मिन् सम्प्रति द्वे विरोधिनी मते स्त। एके वदन्ति यत् प्राकृतभाषैव व्यावहारिकी भाषासीत्। संस्कृतभाषा तु केवल ग्रन्थेषु प्रायुज्यत। अपरे इदमप्याहु —संस्कृतभाषाया व्यावहारिकभाषात्वेनापि प्रयोगो

बभूव । कस्मिंश्चन काले भारतीयजनता स्वकीयान् भावान् अनयैव भाषयाभिव्यनक्त । सा अस्यामेव नैजं हार्द्दिस्मखिलमपि कृत्यमनुष्ठितवती ।

इदं तु चिरन्तनात् कालादवगम्यमानमेव यत् सुशिक्षितानां नागरिकाणां, ग्रामीणानामशिक्षितानाञ्च भाषायां भेदो भवति । नागरिकः शिक्षावान् जनो यां भाषां प्रयुङ्क्ते तस्यां पदानि शुद्धानि संस्कृतानि श्रूयन्ते उच्चारणञ्च तेषां सर्वेषां युक्तं प्रशस्तं च भवति परं ग्रामीणोऽशिक्षितो नरो हि तामेव शिक्षितजनप्रयुक्तां तथाविधेन विधिना नोपयुनक्ति । तत्र पदानि न शुद्धानि भवन्ति न चोच्चारणमेव युक्तं भवति । प्राचीनसमये प्रायेण ता एव भाषा प्राकृतभाषानाम्ना अभ्याहूयन्त या अशिक्षितेषु ग्राम्येषु प्रायुज्यन्त किञ्च या नागरिकेषु शिष्टसुशिक्षितेषु प्रचलिता आसन् ता एव साहित्यिक्यो या संस्कृता भाषा इति व्यपदिश्यन्त । साम्प्रतं किं न दृश्यते तथ्यमेतदिदं यत् शिक्षिताशिक्षितप्रयुक्त-हिन्द्या स्पष्टमेवोच्चारणस्य भिन्नता पदानाञ्च शुद्धाशुद्धता श्रुता भवति । एकामेव भाषां शिक्षिताशिक्षितौ वदन्तौ परमुच्चारणादिवैभेद्येन सा भिन्नभिन्नेव जायते । एतादृशी विभिन्नता तु लोके सर्वत्र सदैव दृक्पथमध्यारोहति । धीमांश्चतुरो जनस्तदेव कार्यं सम्पादयति यत्कार्यं पूर्वं केनाप्यविदग्धेन बुद्धिरहितेन कृतं परं तदेकमेव कार्यं तद्विधजनद्वयानुष्ठितत्वात् भिन्नमेव रूपं परिगृह्योपस्थितं जायते । अत इदमेव प्रतिभाति यद् एकैव भाषा नामद्वयेन व्यपादिश्यत । पुरा ग्रामीणेषु अशिक्षितेषु या भाषा प्राकृतभाषेतिनाम्ना व्यवाह्रियत सैव भाषा नागरिकेषु शिक्षितेषु संस्कृत-भाषेतिनाम्ना अभ्यधीयत । भाषणलिखनयोर्भाषा प्रकार्येकैव न भिन्न-भिन्ना । परं भाषणकालवर्तिन्या भाषायाः लिखनकालवर्तिनी भाषाधिकतरा परिष्कृततामाधत्त इति केन न दृश्यते ? तस्मात् प्राचीनयुगे या भाषा ग्रन्थेषु प्रयुक्ताभूत् सैव भाषा जनैस्तत्तद्ग्रन्थलेखकैः स्वकीये व्यवहारेऽप्याह्रियत । अतः, संस्कृतभाषा यद्यपि व्यावहारिकी भाषा नासीदिति कथनं रागद्वेषर्ष्यादोषदुष्टत्वादग्राह्यमेव । संस्कृतभाषाया जन-भाषात्वादेव कोषेषु 'भाषा' इत्येतन्नाम विलोक्यते—"ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती ।" संस्कृतप्राकृतयोर्मध्य एष भेद एव भवति यदेका अपशब्दरहिता अपरञ्चापशब्द-सहिता । महाभाष्ये विषयमिममधिकृत्य सविस्तरमुक्तं महर्षिणा पतञ्जलिना ।

महर्षेर्यास्कस्य निरुक्ते वैदिकानां पदानां व्युत्पत्तिः प्रदर्शितास्ति । स ग्रन्थः संस्कृतभाषां व्यावहारिकभाषात्वेन प्रमाणीकरोति । वैदिकसंस्कृतात् भिन्ना

अन्येषामपि बहूनां प्राचीनानां महीपानां राज्येषु राज्यभाषात्वेनाऽन्य पुरस्कारत्वेन च संस्कृतभाषा प्रायुज्यत। राजशेखरसूरिणा सन्दर्भे काव्यमीमांसायामुल्लिखितं अवाप्यते। धाराधीशो भोज संस्कृतभाषाया व्यवहारे प्रचारे प्रसारे च या रुचिमनुकरणीयामदीदृशत् सा तु सर्वेषां गेयैव संवृत्ता।

संस्कृतभाषाया महत्त्वं केन विधिना वर्ण्येत तस्यां तावन्त एव गुणा सन्ति यावन्ति व्योम्नि नक्षत्राणि। सा पुष्कलाभिर्दिशाभिः प्रस्फुरन्ती दृश्यते। राम लक्ष्मण भरतादीनां सद्व्यवहारं, सीता सावित्र्यादीनां चरित्रचारुत्वं, भीष्मार्जुनकर्णादीनां शूरत्वं, श्रीकृष्णस्य गीता, कौटिल्यस्य राजनीति प्रचण्डा प्रतिभा, अशोकस्य धर्मचक्रज्योति गुप्तसम्राजां शासनश्री, हर्षवर्द्धनप्रभृतीनामनन्यशासनपद्धति, शिवाजिप्रतापप्रभृतीनां च देश प्रेम चेत्कश्चिद् दृग्गोचरीभवितुमर्हति तर्हि तेषां सर्वेषामपि मञ्जुला संस्कृतभाषाया साहित्यमभ्यास्ते।

यदि कस्यचन भावुकस्य मानसे आकाङ्क्षेयं जागर्ति यत् स रामगिरित कैलास यावद् यात्रामनुतिष्ठेत्, किं वा एष अभिलाष कस्यचन संचेतसश्चित्ते चकास्ति यत् स गोदावरीसरित पावन परिसर दण्डकारण्यस्य भीषणताञ्चेक्षेत यद् वा कस्यचन सहृदयस्य स्वान्ते एषा कामनोद्भवति यदसौ व्रजकान्तेन कृष्णेन सम तरणितनूजाकूलनिकुञ्जेषु विहरेत्, अथवा कस्यचन धन्यस्य चित्ते

उत्कलिकेयमुत्तरलिता भवति यत् स द्रौपदी-कादम्बरी-शकुन्तला-दमयन्ती-वासवदत्तादीनां भुवनललनाललामानां लोकोत्तरसौन्दर्यसुमेदितानां पावन-चरित्राणामस्मदां छविमवलोकयेत्, आहोस्वित् यस्य च सुजनस्य मनस्युत्सुकतेदं प्लवते यदसौ बुद्धस्य शान्तिशुभ्रां तपःपूतां गिरं शृणुयात् वा कश्चिन्महात्मना वाग्वृत्तीदं यत् सो महात्मनो गान्धिनः सत्याग्रहसमरशोभाशुचितां पश्येत् तदा सः संस्कृतभाषायाः मेघदूतोत्तररामचरित-गीतगोविन्द-किरातार्जुनीय-कादम्बरी-शाकुन्तल-नैषधीयचरित-वासवदत्ता-बुद्धचरित-सत्याग्रहगीता सादरमधीयीत ।

अपि किं यस्मिन्नपि साहित्ये भरतकृतनाट्यशास्त्रनीकाशं नाट्यशास्त्रं, भर्तृहरिप्रणीतं शतकत्रयसंकाशं शतकत्रयं, विष्णुशर्मविरचितं पञ्चतन्त्रमिव षड्विधनीतिबोधकं पञ्चतन्त्रं, मम्मटप्रणीतकाव्यप्रकाशप्रतीकाशं साहित्यशास्त्रं, पिङ्गलविनिर्मितच्छन्दोविषयकपिङ्गलसूत्रनिभच्छन्दोग्रन्थ, कल्हणस्य राजतरङ्गिणीवत् राजतरङ्गिणी, जगद्धरभट्टादिकृतस्तोत्ररत्नस्तुतिकुसुमाञ्जलिसमं स्तोत्रनिकुरम्बं, गोवर्द्धनाचार्यस्य शृङ्गाररसपूर्णार्यासप्तशतीसमार्यासप्तशती कीलिता भवति !

अहह संस्कृतभाषा परमानन्दसन्दोहमधुरा । नानाज्ञानविज्ञानसमृद्धिमत्त्वात् सा वसुमतीव, जीवनप्रदायिनीत्वात् सा जीवनप्रदं जलमिव, तेजस्विनीत्वात् सा तेज इव, उदात्ततमभावगाम्भीर्यभावादिनीत्वात् सा गन्धवह इव, व्यापकशब्दशालिनीत्वात् सा व्योमेव, अथवा भूतपञ्चकतुल्यमेव तत्त्वम् । शीतांशुरिव गगनायामेव लोकमाह्लादयति परमिदं संस्कृतं तत्त्वं नन्दयति, अतस्तु सुगमार्थैरवगमितेः । सविता ध्वान्तमेव ध्यान्तं निरस्यति परमेतद्वाङ्मयमन्तरमज्ञानतमो हिनस्ति मन्दा-दिद समस्यमवजानाति । सद् हितस्य वैलक्षण्यं धीयते तदीयमाचार्यशङ्कर-वल्लभ-माध्व-निम्बार्क-रामानुजादिना नितरां सुधया भूया माधुर्या भूया भक्तिभाव-विभाविता भूया भूयः संस्कृततत्त्ववाग्ध्वरसमर्गमिश्रयो. स्वकीयं शिरः सादरं पुरंगम प्रणतम् ।

वस्तुतः सरलमपि भारतं यावत् संस्कृतमातरं शरणं न प्रपद्यते न तावदस्य राष्ट्रे शान्तिः, सदाचारः, सरलता, सुपथः सम्भवम् । सत्यमेवाचष्टे । दीक्षितानन्तपण्डितपादः स्वयम्—

> भारतस्योन्नतिः शान्तिर्भवेत् संस्कृतभाषया ।
> धरामि करगुदस्य सर्वेषां सद्गुणि शिवम् ॥

समस्तेऽपि संसारे भारतीयाया संस्कृतेश्चिह्नानि भवन्ति दृग्गोचराणि । तानि ज्ञापयन्ति यत् कदापि सा मनोज्ञा वेला विलसति यदा संस्कृतभाषाया साम्राज्यं सर्वत्र क्षितिमण्डले सर्वथालोकितमासीत् । द्विसहस्रसमाभ्योऽधिका समा अतिक्रान्ता, लङ्कायां पाण्डववंशस्य शासन यद् बभूव, स्याम ( थाइलैण्ड ) देशस्य प्राचीन नाम 'द्वारावती' ति यच्छ्रूयते, क्रिश्चनरेशवीयपञ्चमशताब्द्या वैदिकधर्मस्य हीनयानसम्प्रदायस्य च य प्रचारो जात, हिन्दचीनदेशस्य पुरातन नाम 'चम्पा' इति यदाकर्ण्यते, फिलिस्तीनद्वीपस्य प्राचीनभाषाया संस्कृतभाषाया बहूना शब्दाना य समावेशो निभाल्यते, दक्षिणामेरिकाया विशालानि देवमन्दिराणि भूखननाद् यानि भवन्त्यासादितानि, मिश्रदेशस्यातिप्राचीनानामपि सभ्यताया वैदिकसंस्कृतेर्यानि लक्ष्माण्यवलोक्यन्ते, बोर्नियोऽभिधे द्वीपे चतुर्थस्य शतकस्य यूपलेखा वेऽवाप्यन्ते तत्र मूलवर्म्मणो भूभर्तुर्या दानचर्चा दृष्टा भवति, जावासुमात्रा बालिप्रभृतिदेशानामाख्यान यत् पुराणेषु यवद्वीप सुवर्णद्वीप बालिद्वीप नामभि कृतमस्तीत्येते सर्वेऽपि व्यतिकरा स्फुटतया संस्कृतभारत्यास्तेषु तेषु स्थानेषु प्रसार प्रकटीकुर्वन्ति ।

नात्र संशय स्तोकमपि संस्कृतभाषासदृशी न कापि भाषा । सा स्त्रीयतत्तद्गुणवत्तया सर्वस्पृहणीयोपादेयतान्विततया अनन्यलभ्यया महत्तया प्राचीनतमतया वैज्ञानिकधरासीनतया च सर्वाभ्योऽपि भाषाभ्यो गरिष्ठा ।

कस्यापि कवर्गीतयानया पदावल्या प्रार्थ्यते—

सवर्णा सद्वृत्ता विविधललितालङ्कृतिघना
गुणाढ्या निर्दोषा विबुधनिवहाराधितपदा ।
सुरीतिप्रख्याता भवविभवरूपाश्रितरसा
सदेयं शर्वाणी जयतु सुरवाणीह सततम् ॥

अध्यात्मज्ञानगेह स्मृतिललितकलावल्लरीवाटिकाभू
विद्यानामादिबीज कविकुमुदविधुर्विश्वसाहित्यसम्पद् ।
देशस्यास्य प्रतिष्ठागमनिगमनिधिर्गाररत्न चार्यजाते
श्रीकृष्णस्य प्रसादाद् भरतभुवि पुनर्यातिता भारती न ॥

मैक्समूलर स यमेवाह भाषामिमामधिकृत्य—

'दी ग्रेटेस्ट लैंगवेज इन दी वर्ल्ड, दी मोस्ट वण्डरफुल एण्ड दी मोस्ट परफेक्ट"।

श्री के एम मुन्शीमहाभागानामयंरश इद कथन सत्यम्—

✓ 'विदाउट संस्कृत इण्डिया उड बी नथिंग बट ए बण्डल ऑफ लिंग्विस्टिक ग्रूप्स'।

श्रीमती रमारावऽर्कयित्री प्राच्यप्रतीच्यसाहित्यपारावारीणा धन्या, या संस्कृतभाषाया महनीयतां सम्यग् विज्ञाय भारतस्य कल्याण यत्र, तत् सादर प्रार्थयन एवम्—

सस्कृतप्रीतिन सन्तु सर्वे भारतभूमिजा।
संस्कृतेनैव कुर्वन्तु, व्यवहार परस्परम्॥
सस्कृतज्ञानमासाद्य सस्कृताचारवृत्तय।
सर्वत संस्कृतीभूय सुखिन सन्तु सर्वत॥

संस्कृतभाषाया भाविकाल परमोज्ज्वल। अत स्तोक एव यत्नश्चेत् कृत स्यात् तदा साध्ये सिद्धि सुनिश्चितेति मम मति—

भावी काल परमविमल संस्कृतस्यास्ति भव्यो
भक्तिं प्रौढा सुरवचसि चेद् दर्शयेयु स्वकीयाम्।
तिग्मप्रज्ञा निजजनिरमा प्रीतिमन्त प्रवीणा
लोकश्रेयो ननु हि निहित देववाणीविकासे॥



## संस्कृतभाषाया अभ्युत्थानोपायाः

कस्यापि प्राणिनो वस्तुनो वाऽभ्युत्थानं पतनञ्च निसर्गजातमेव । यं भगवन्तं भानुं प्रभाते उदयन्तं लोकः पश्यति तमेव मध्याह्ने प्रखरप्रतापोत्कर्षं गच्छन्तं स प्रेक्षते ततस्तमेव सायमस्तं भवन्तमसाववलोकयति । शशिनि गगनमलङ्कुर्वाणे या कुमुद्वती आनन्दोल्लासेनोल्लसिता दृश्यते सैव तस्मिन् अन्तर्हिते विषण्णा म्लानानना परिवीक्ष्यते । परिवर्तनं प्रकृतेरविचलो नियमः । नैव किमपि तत्रैकामेव स्थितिमनुभवद् दृगतं भवितुं शक्यम् । अत एव तु कालिदास आह—

> कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
> नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥

कदाचिदेतन्नियमपरवशतयाद्य गीर्वाणवाणी न तां स्थितिमध्यासीना अवलोक्यते यामधिष्ठिता सातीतयुगेऽवलोकिता बभूव । अस्तु नाम तद्ह्रासस्य हेतुरयं नात्र कर्मण्या मनस्विनः श्रद्दधते । यां भाषाम्प्रति राजा राजशासनं चाऽऽश्रयं प्रयच्छति सा नियतत्वेन समुन्नता भवति तस्याः प्रसारः प्रचारश्च प्रकृष्टतया सर्वत्र सततं सञ्जायते । यदा हि संस्कृतभाषा राजादृताऽऽसीत् तदा सा उन्नतेश्चरमशिखरमध्यारूढा केन नावालोकि ? लोके प्रतिवेशं तस्या व्यवहृतत्वात् शास्त्र-स्मृती-तिहास पुराण-नीतिग्रन्था-युर्वेद-काव्यादीनि लिखितान्यभूवन् । समग्राण्यपि कार्याणि राजकीयान्यराजकीयानि वा तस्यामेव सम्पन्नतामगुः । भोजराजकाले कुविन्दा अपि संस्कृतभाषायां कविताः प्रणयन्तोऽवाप्यन्त । सर्वत्र जनाः समन्तात्शिक्षाः संस्कृतज्ञा अलभ्यन्त । साम्प्रतं यत् किमपि छिन्न-भिन्नं न्यूनमपूर्णञ्च साहित्यं संस्कृतभाषाया अधिगम्यते तदपि नितान्तविशालं महत्त्वमयञ्च वर्तते । तच्च ज्ञापयति संस्कृतभाषाया लोकव्यवहृतताम् । यस्या भाषाया लोके व्यवहारो न जायते न तस्याः साहित्यमेतावदगाधं पुष्कलञ्च भवितुमर्हति । यास्क पाणिनि-पतञ्जलिप्रभृतीनां विद्वद्धौरेयाणां ग्रन्थाः संस्कृतभाषाया लोकव्यवहृतत्वे सन्ति समुज्ज्वलानि ज्वलन्ति प्रमाणानि । पुनस्या भारती-

भाषेत्यादीनि नामान्यपि एतस्या भाषायमुच्चैः ख्यापयन्ति सत्यमेवेदं यद् वैदेशिकैर्धर्मान्धैश्च भारतस्य राजकीयाः सर्वेऽपि गुरुगुरुतराः पुस्तकालया अन्या च सकला राजसामग्री सम्पूर्णश्च परिच्छदोऽध्वंसयन्त तस्माद् एतस्या भाषाया लोकव्यवहृततावबोधिका वार्ता न लब्धहस्ता जायन्ते। अतो जनाः भाषाया अस्या लोकव्यवहृततायां सन्दिहन्ति। परं येऽनिशं संस्कृतभाषायां व्यवहरन्ति ये सततं संस्कृताध्ययनाध्यापने समयं नयन्ति ते तस्यां तत्तल्लक्षणानां विद्यमानत्वात् स्पष्टमेव एतां हि संस्कृतभाषामधिकृत्य वदन्ति यदियं भाषा कदापि लोके प्रयुक्ता व्यवहृता चाभवत्। विद्वांस. शिक्षिताः आप्तपुरुषा नृप-मन्त्रि-सामन्तादयो राजकीयकर्मचारिणोऽधिकारिणश्च सकलमपि नैजं कार्यमेतया संस्कृतभाषयान्वतिष्ठन्; ग्रामीणा अशिक्षिता. सामान्यजनाश्च एतस्या भाषाया एव विकृतरूपभूतां प्राकृतभाषां प्रयुञ्जते स्म तथैव, यथाद्यतनाः शिक्षिता मानवास्तां भाषां व्यवहरन्ति या पुस्तकेषु दृश्यते किन्तु ग्राम्या. साधारणा. पुरुषाः तया स्वव्यवहारं विदधति याः साम्प्रतं भोजपुरीयराजस्थानीयविहारीयभाषाः इत्यादिनामभिः

प्रसिद्धाः सन्ति। इमा सर्वा अपि भाषाः हिन्द्या एव विकृतरूपभूता भाषा एव सन्ति न च ततो भिन्नाः। पुराऽत्र शिक्षणालयेषु संस्कृतभाषयैव शिक्षा प्रदत्ताभूत्। सैवात्र अपाठ्यत। युवानो बाला वा संस्कृतभाषयैव शिक्षामलभन्त परं यदा देशे वैदेशिकसत्ताया राज्यं प्रतिष्ठापितमभूत् तदा ते वैदेशिका नृपाः संस्कृतभाषां दूरीकृत्य स्वकीयां भाषां शिक्षणालयेषु राजकार्यालयेषु च प्रवेशयन्ति स्म तेन संस्कृतभाषा लोकात् पृथग् जाता। वैदेशिका एतेनैव प्रकारेण न भाषामिमामपाकुर्वंस्ते भाषामेतामपकर्तुं भारतीयजनेषु भारतीय-संस्कृतिसभ्यताश्च प्रति तीव्रां घृणाक्षोभोत्पादयन्ति स्म। एतस्माद्धेतोश्च आर्येयं भारत एव लोके चिराद् न्यक्कृता अवज्ञाता दलिता च दृष्टा भवति। हा! साम्प्रतं तु अस्य देशस्य शिक्षामन्यपि अप्रोदाख्ते। हन्त यां भारतीयां संस्कृतभाषां— "इन फैक्ट देअर इज़ स्टिल स्क्रेप्ली ऑफ वर्क ऐण्ड फॉर दोज़ हू केम आफ्टर अस फॉर विद होल दैट हैज़ बीन एचीव्ड, वी आर ओन द्री देअर कोएड ऑफ ए ट्रूली हिस्टोरिकल स्टडी ऑफ इण्डियन फिलॉसफी एण्ड लिट्रेचर, हीयर, आल्सो, वी आर लिटल लाइक चिल्ड्रन प्लेइंग ऑन दी सी-शोर एण्ड फाइण्डिंग नाउ ए पेबिल ऑर ए शैल व्हाइल दी ग्रेट ओशन ऑफ देट एन्मेण्ट लिट्रेचर लाइज़ बिफोर अस अण्डिस्कवर्ड एण्ड अन एक्सप्लोर्ड"—इत्यादि-

शब्दैर्मुहुर्मुहु श्लाघन्ते प्रतीच्या सैव भाषा स्वकीय एव देशे स्वकीयैरेव जनैरवधूयमानास्ति।

संस्कृतभाषा स्वकीयाभिर्बहुलाभिर्विशिष्टताभिर्जगति विद्यमाना सर्वा अपि भाषा हेलयैव जयति। ये हि यावन्तश्च वैज्ञानिका गुणा एतस्या भाषाया शोभन्ते ते तावन्तश्च कस्या भाषाया विलोकिता भवन्ति? एतदीया वर्णमाला सर्वथैव पूर्णा। यदत्र लिख्यते तदेव पठ्यते। सर्वविधा अपि भावा सर्वे च विषया एतया स्पष्टतया प्रकाशयितु सन्ति शक्या। सुकुमारसुकुमारतरविषयप्रतिपादने यथेय कुशला तथैव कठोरकठोरतरस्यापि विषयस्य निरूपणे इव क्षमा। एकतस्तु इय परमललिता मधुरा च अपरत इय परमकठोरा गभीरा च। इय सरलसरलतरेषु क्लिष्टक्लिष्टतरेषु च शब्देषु सर्वविधान् अपि भावान् प्रकटीकर्तुमीष्टे। कमपि भावमेकयैव रीत्या न अपि तु बहुविधया रीत्या प्रकटीकुरोतीयम्। अस्या सविधे शब्दाना महान् भाण्डागार शोभते। परिमितशब्दैर्भावा प्रकाशिता स्यु किंवा भूयिष्ठै पदैरित्येतदिय सम्यग् वेत्ति। अत्रैतादृशाना शब्दाना हि विपुला सख्या विद्यते ये शब्दा नानार्थवन्तो भवन्ति। वस्तुतो यादृशा गभीरा व्यापका उत्कृष्टा शब्दा एतस्या सविधे विद्यन्ते न तादृशा शब्दा ससारस्य कस्यामपि भाषाया दृष्टा भवन्ति। अस्या भाषाया व्याकरण जगतीतलवर्तिनीना सर्वासामपि भाषाणा व्याकरणानि अतिशेते। सर्वाण्यपि व्याकरणानि एतदीयव्याकरणभानो पुरत खद्योता इव प्रतीयन्ते। सत्यन्तु इदमास्ते यद् साम्प्रतकालमस्माक सकाशे सस्कृतभाषा वैज्ञानिकीभाषा विभाति यावत्काल च अस्माक पार्श्वे वैज्ञानिक सुदृढ सर्वाङ्गपूर्णं च व्याकरण विद्योतते तावत्काल नो न का चिन्ता पीडयितुमतितरा क्षमते या हि नष्टसाहित्याद् उद्भवति। यतो हि एतस्या भाषाया अवलम्बनेन वय पुनरपि बहुविध साहित्य स्रष्टु शक्नुम। सम्प्रति तु आद्यावपेक्षेय प्रकृष्टा यत् सस्कृतभाषाया प्रचारप्रसारश्च भुवि करणीय। तथा प्रयत्न कार्योऽस्ति यथा सा ता व्यावहारिकता समुपयात् या हि वर्तमान काल काङ्क्षति। अतोऽत्र तद्विषयका उपाया विमृश्यन्ते—

१ राज्याश्रयो हि सस्कृतभाषाया उत्थाने आद्य कारणम्। राज्य खलु सर्वविधबलसम्पन्न भवति। तस्य सविधे उत्तमोत्तमप्रतिभाशालिनो नानाशास्त्रपारदृश्वानो विचारवन्तो धुरन्धरा सदाचारपरा अमात्या मन्त्रिणोऽधिकारिणश्च

भवन्ति। तेषां साहाय्येन तान् संस्कृताभ्युत्थानविषयकान् उपायान् विमृश्य तदाश्रयणेन संस्कृतभाषा प्रचारयितुं सर्वथा क्षमम्। तत् कोषशक्तिं निदधाति तस्या उपयोगं विधाय अभिमतमपरिमितञ्च धनं व्ययीकर्तुं प्रभवति। तदायत्ततायामखिलापि जनता भवति अतस्तद् या भाषाप्रति जनता प्रवर्तयितुमिच्छति तामवश्यमेव सा प्रवर्तते। तदिच्छानुग्रहसमस्तं सर्वमपि तस्मिन् भवति। सदा लोकरतो बिभेति स नदेव कर्तुं तदेव व्यवहर्तुं समुद्यतः सञ्जायते यद् राज्यं कामयते चेद् राज्यमिच्छति यत् तदीया जनता संस्कृतभाषामधीयीत तामेव व्यवहारे आनयेत् तदा कथमिदं सम्भवं यज्जनता तदभिलाषानुगामिनी न भवेत्। राज्यं हि स्वदेशस्य सर्वेष्वपि विद्यालयेषु संस्कृतभाषामनिवार्यपाठ्यविषयत्वेन चेत् प्रतिष्ठापयेत् तत् को नाम एतादृक्जनो यो न संस्कृतभाषामर्जयितुं सज्जः स्यात्? जनता अर्थार्थिनी भवति। राज्ये सर्वत्र सर्वेषु विभागेषु संस्कृतभाषायाः प्रयोगं दृष्ट्वा सा अर्थावाप्तिप्रयोजनेनावश्यमेव संस्कृतं पठेत्। प्रत्यक्षं न प्रमाणमपेक्षते। साम्प्रतमाङ्ग्लभाषाया राजभाषात्वात् सर्वेषामेव तदध्ययनपरत्वं दृश्यत एव। तस्मात् संस्कृतभाषाया उत्थानाय प्राधान्येन राज्याश्रयोऽपेक्ष्यते।

२ *संस्कृतभाषाया अध्ययनार्थं लोकेऽभिरुच्या समुत्पादनम्—*

यद्यपि जीविकालाभस्य सर्वजनोद्दिष्टत्वात् जीविकाया सम्मानस्य च दात्री भाषैव लोकेन सगृह्येत तथापि "संस्कृताध्ययनं विना भाषाविज्ञानशास्त्रे न गतिर्न च भाषा विज्ञानशास्त्रे निष्णातता एव भवितुं सम्भवा, किञ्च पुरातनभारतस्य जनता केन प्रकारेण जीवनं यापितवती, तस्मिन् हि पुरातने युगे *भारतस्यार्थिक सामाजिक राजनीतिक धार्मिकावस्था च कीदृश्यासीदित्येतत् सर्वं* तद्भाषाध्ययनमपेक्षते, भारतीयायाः संस्कृतेः सभ्यतायाश्च ज्ञानं संस्कृतसाहित्याध्ययनादेव सम्भवम्। भारतीयेतिहासजिज्ञासूनां कृते संस्कृतभाषाया ज्ञानं नितान्तमेव लाभप्रदं भवेत्। संस्कृतपठनाद् हृदयं भगवद्भक्तिपरं भवति मानसिकी शान्तिर्लब्धा जायते, आध्यात्मिकं बलं वर्धते" इत्यादिकं निगद्य मृदु-*तया सफुरतया च जनताया मानसे संस्कृताध्ययनविषयिणी अभिरुचिः समुत्पा-*दनीया संवर्द्धनीया च।

३ सरलमृदुलभाषायां पुस्तकानां निर्माणम्—

सरलायां सरसायां च भाषायां सादृशा ग्रन्था विद्वद्भिर्निर्मेया येभ्यो भाषा-

ज्ञानपूर्वकं विज्ञानेतिहासादीनां साम्प्रतिकलोकस्य्यनुकूलानामपि विषयाणां ज्ञानं सम्पद्येत ।

४. संस्कृतग्रन्थप्रकाशनाय मुद्रणालयस्थापनम्—

विद्वज्जनप्रणीतानां नवनवोपयोगिनां ग्रन्थानां प्रकाशनाय स्वल्पैरपि अनेकैर्भागैः संप्राप्तेन धनेन अनेकेषां मुद्रणालयानां स्थापनं कर्तव्यम् ।

५. नवग्रन्थप्रकाशनसमितीनां स्थापनम्—

अस्मिन् अपि युगे संस्कृतप्रचाराकाङ्क्षिणां प्रकाण्डपाण्डित्यशालिनां मनीषिणां न चिन्तनीया न्यूनता । बहवो हि बुधा नवनवरचनाः रचयन्तः प्रेक्ष्यन्ते तेऽर्थाभावात् स्वरचनानां प्रकाशने सन्त्यक्षमाः । तद्रचितानां ग्रन्थानां प्रकाशनेन ते वर्द्धितोत्साहा भविष्यन्ति; अन्यांश्च उपयोगिनो ग्रन्थान् प्रणेतुं प्रेर्यमाणा भविष्यन्ति तस्मात् सत्कृतिप्रकाशनकारिणीनां संस्थानामपेक्षा वर्तते । ताः संस्थाः न केवलं नवरचनाः प्रकाशयेयुः अपि तु दुर्लभानां प्राचीनानां ग्रन्थानां प्रकाशने रताः स्युः । एवंविधकार्यसम्पादनाय प्रकाशनसमितयः प्रतिष्ठापनीयाः ।

६. संस्कृतभाषायां पत्र-व्यवहारः—

सर्वैरपि संस्कृतज्ञैः संस्कृत-पण्डितैः परस्परं संस्कृतभाषायां पत्रव्यवहारो विधेयः । भाषणे लेखने च सरलाया भाषाया व्यवहार: कार्यः । संस्कृत-प्रचार-प्रयोजनेन पुण्यव्रतमेतद् धारणीयम् ।

७. पुरस्कारवितरणम्—

मवाप्स्यन्ते । संस्कृत पत्रप्रकाशकानां कर्तव्यमिदं यत् ते तत्र सरलसंस्कृतभाषां प्रयुञ्जीरन् । अथ च तत्र परीक्षोपयोगिनीनां सामग्रीणां छात्रोपकारकाणां विषयाणां च प्रकाशनं विदध्युः । वर्तमानलोकप्रियविषयेषु लेखान् प्रकाशयेयुः मनोविनोदनकारिण्यः कथाः कविताश्च तत्र सन्निवेशयेयुः किञ्च पत्राणि अल्पमूल्यकानि कृत्वा यथासमय नियमतः प्रकाशनं नयेयुः । एष मार्गः संस्कृतप्रचारणे नूनं सहायकः सिद्ध्येत् ।

९. संस्कृतशब्दानां व्यवहरणम्—

दैनिके व्यवहारे संस्कृतभाषायाः सरलसरलशब्दाः प्रयोक्तव्याः । यथा माता, पिता, भगिनी, भ्राता, बन्धुः, मित्रम्, वायुः, जलम् अग्निः, पृथिवी, नारी, पुरुषः, नदी, वनम्, वृक्षः, लता, वत्सः, पशुः, सन्ध्या, दिनम्, चन्द्रः, सूर्यः इत्यादिकाः । कदापि यदा तदा वार्ताप्रसङ्गे लघु लघुवाक्यान्यपि प्रयोक्तव्यानि । यथा—"स्नानं कुरु शीतलं जलम् आनय, भोजनं कर्तव्यम् पुस्तकं पठ, क्षीरं पिब, पुस्तकं लिख, दधि देहि" इत्यादीनि । यदा तदा स्वसंवादावसरेषु किञ्च निबन्धलेखनादिकाले किञ्च भाषणसमये संस्कृतभाषायाः वाग्धारात्मकानि च बहुप्रचलितानि वाक्यान्यपि आदरणीयानि । उदाहरणार्थमत्र कानिचन सुभाषितानि दीयन्ते—"अतिस्नेहः पापशङ्की, सुलभमुपदिश्यते परस्य, दुःखं न्यासस्य रक्षणम्, प्रत्युत्पन्नमति स्त्रैणम्, आर्जवं हि कुटिलेषु न नीतिः, निसर्गनिपुणा नार्यः, क्षते प्रहारा निपतन्त्यभीक्ष्णम्, गण्डस्योपरि पिटकः संवृत्तः, किं दूरं व्यवसायिनां, शीलं परं भूषणम्, भाग्यं फलति सर्वत्र न विद्या न च पौरुषम्, विषस्य विषमौषधम्, शरीरमाद्यं खलु धर्मसाधनम्, शठे शाठ्यं समाचरेत्, उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी, महाजनो येन गतः स पन्थाः" इत्यादिकानि ।

सदवसरेषु उचितेषु च समयेषु जनमनोविनोदनप्रयोजनेन च गृहीता सुप्रचलिताः सरससरलनीतिपूर्णाश्च श्लोकाः सुस्वरपूर्वकं शुद्धतया उच्चारणीयाः । यथा अधः स्थिताः श्लोकाः —

"उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।
सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥"

"पिबन्ति नद्यः स्वयमेव नाम्भः स्वयं न खादन्ति फलानि वृक्षाः ।
नादन्ति सस्यं खलु वारिवाहाः परोपकाराय सतां विभूतयः ॥"

"विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय।
खलस्य साधोर्विपरीतमेतज्ज्ञानाय दानाय च रक्षणाय॥"
"न ह्यतो धर्मचरणं किञ्चिदस्ति महत्तरम्।
यथा पितरि शुश्रूषा तस्य वा वचनक्रिया॥"

एवंविधानां श्लोकानां प्रयोगेण संस्कृतभाषांप्रति जनेषु संस्कृताभिरुचिः समुत्पद्येत। बाल्यावस्थातः एव प्रवृत्ते संस्कृतसदाद्संस्कारे आयुः सम्वर्धनेनैव सह संस्कृतभारतीप्रीतिरपि प्रतिक्षणमुपचीयेत। एतेनापि संस्कृतभाषा सम्यगेव व्यावहारिकी स्यात्। तत्तद् वस्तुयुक्तगृहभाण्डेष्वपि तत् तद् वस्तुसूचक-संस्कृतनामान्यङ्कनीयानि। तत् तद् व्यवहारबोधकानि काष्ठफलकान्यपि संस्कृतशब्दैरेवाङ्कनीयानि। पण्यवीथिकास्वपि आपणाः तत् तद्द्रव्यविक्रयकारिणः संस्कृतशब्दैरेव निर्देष्टव्याः एवमादिदिशा सञ्जाते संस्कृतशब्दबहुले व्यवहारेऽचिरेणैव मनोरथे सिद्धिः स्यात्।

१० कथा प्रचार —

सभासु, समाजेषु, पाठशालासु, महाविद्यालयेषु आश्रमेषु च दिनैकभागे रात्रौ वा केनापि सुविचक्षणेन कथाकुशलेन शिक्षकेण वा अन्येन केनापि निपुणबुद्धिना वेदशास्त्रपुराणादिभ्यः किमपि वाक्यमुद्धृत्य सरलया सरसया च संस्कृतभाषया वा संस्कृतशब्दसमाकुलया हिन्दीभाषया भावगर्भितगम्भीरगिरा शुकस्यारोहावरोहपूर्वकं व्याख्यातव्यम्। तदनुरूपदृष्टान्तोपस्थापनं वरं भवेत्। एवमनुष्ठिते कतिपयैरेवाहोभिः संस्कृतभारती द्रागेव व्यावहारिकी भवितुमर्हत्। संस्कृतप्रचारदृष्ट्या कथा आश्रयणीया न च धनार्जनोद्देश्येन।

११ संस्कृतभजनगानम्—

स्वरतालल्यसमिता गीतिर्हि शास्त्रसारार्थगर्भिता यथाश्वसैव मन एकतानतां नयति न तथा किमप्यन्यत्। समाहिते मनसि विचित्रशक्तिरदेति इति सर्वसंम्मतम्। गानस्य प्रभावोऽद्भुतस्तेन अप्राणा अपि सप्राणा इव सञ्जायन्ते। अत गानस्य महिमा महान्। संस्कृतभाषा व्यावहारिकी स्यादित्येतदर्थं संस्कृतवाण्या भजनगानमुपकारि स्यात्। अस्माभिः उर्दूभाषागीतकानि, गजल कव्वाली-त्यादिकाव्यानि विषयवासनोद्दीपकानि हिन्दीभाषानिबद्धानि भजनानि च गीयन्ते। चेदस्माभिः संस्कृतभाषायामपि पौरुषोद्दीपकानि सदाचारप्रसारकाणि देशभक्तिमूलकानि मातृपित्राचार्यादरोपदेशकाणि शिवभक्त्युपदेशकानि गीतकानि

गीयेरन् तदावश्य इदिति संस्कृतभाषाभजनगानशुद्धचित्ता जना संस्कृतभारती-सुश्रुतेमुपक्रमेरन् ।

१२. संस्कृतभाषाया अध्यापनविधे परिष्कारो व्याकरणस्य च सरलीकरणम्—

पाठशालासु विद्यालयेषु च दृश्यते इद यत् संस्कृतपण्डिताङ्गीकृतपाठन-पद्धतिर्बालकान् संस्कृतभाषाध्ययनादुद्वेजयति । तत्स्वीकृताध्यापनप्रकार संस्कृता ध्ययनगमति इतिति तन्मानसेषु विरक्ति जनयति । ते उद्विग्ना भूत्वा संस्कृत-भाषाया जुगुप्सन्ते । वदन्ति च परस्पर यत् संस्कृतभाषातिकठिना । एषा हि दोषपूर्णा संस्कृतपाठनपद्धति संस्कृतभाषाया प्रचारे महतीं बाधामुपस्थापयति । दोषमयी पद्धतिरेषा सत्वरमेवापनेया । बालेषु युवसु वृद्धेषु सर्वेषु च जनेषु यथा संस्कृतभाषाप्रति सुरुचि समुत्पद्येत तथा यतितव्यम् । संस्कृतपण्डिता प्रथम व्याकरणं कोपञ्च कण्ठस्थ कारयन्ति । नोचितमिदम् । भाषाया ज्ञानार्थं प्रथम सरलसरलतरपदावलीविभूषितानि पाठ्यपुस्तकानि पाठनीयानि । स प्रयत्न कार्यो यत बालाना प्रवत्तो भाषाया भवेत् । ते संस्कृतपाठ्यपुस्तक साहाय्येन विदितप्रचुरव्यावहारिकशब्दा स्यु , लघुलघुतरवाक्योच्चारणे च क्षमा भवेयु । शिक्षका लघुलघुवाक्यानि स्वयमभिधाय छात्रेषु स्वरचितवाक्योच्चारणार्थं प्रेरणा प्रदद्यु । ते प्रयतेरन् यच्छात्रा संस्कृतप्रश्नानामुत्तराणि स्वयमपि संस्कृतभाषाया ब्रूयु । संस्कृतपाठ्यपुस्तकेषु नूतनविधाना पाठाना सन्निवेश कार्यो ये पाठा सवादात्मका प्रश्नोत्तरात्मकाश्च स्यु । अध्यापका पाठ्यपुस्तकेभ्यो व्याकरणविषयक नितान्त स्थूल ज्ञान च वितरेयुश्छात्रेभ्य । छात्रा यत् किमपि कण्ठस्थीकुर्युस्तद् बोधपूर्वकमेव । कण्ठस्थीकरणस्यापि महत्त्वमास्ते । तस्मात् कण्ठस्थीकरण विषयके कार्ये शिक्षकास्तथा प्रवर्तेरन् यथा तेषा सुमृदुल मस्तिष्क प्रति प्रतिकूलो हि प्रभावो न निपतेत् हृदयमुद्विग्नता न व्रजेत् । न बालश्रेणीषु व्याकरणक्लिष्टता प्रतिष्ठापनीया तत्र स एव प्रयत्नो विधेयो येन बालेषु व्याकरण ज्ञानलाभाय रुचिमानमुत्पद्येत किञ्च वाक्यान्तर्गतपदाना मध्ये बाला राजमान व्याकरणीय सौन्दर्यस्यास्वाद ग्रहीतु प्रभवेयु । हन्त संस्कृतभाषाया व्याकरण तु परमरमणीयं वैज्ञानिक च विद्यते परमस्मत्स्वीकृतकुत्सितपाठनपद्धतेस्तत् सम्प्रति सरसमपि नीरस, मृदुलमपि कर्कश, रुचिसवर्द्धनपरमपि अरुचिविधायक, प्रसन्नमपि मलिन, प्रतिभाति । सर्वेषामपि संस्कृताभ्युदयानुरागिणा कर्तव्यमिद यत ते संस्कृत-भाषाया प्रचाराय संस्कृतपाठनपद्धतेर्वर्तमानान् दोषान् दूरीकुर्यु ।

१३ मातृणां संस्कृतज्ञतायाः अपेक्षा—

नास्ति नारीणां कृते विद्यार्जनप्रतिषेधः क्वापि शास्त्रे। पुरातनं भारतं शिक्षितनारीविभूषितमासीत्। गार्गीमैत्रेयीप्रभृतयो भूयिष्ठा नार्यो विदुष्य आसन् प्राचीने भारते। मातर एव भवन्ति आद्या आचार्याः शिशूनाम्। ता एव स्वकीयान् शिशून् स्तनन्धयान् पयःपानावसरे सरससुवर्णमयीं संस्कृतभाषां भाषणव्यपदेशेन बोधयितुं पाठयितुं वा समर्थाः। यदि वयं वस्तुतः संस्कृतभाषाप्रचाराभिलाषिणः स्मस्तदा त्विममेवास्माभिर्मार्गमनुगत्य संस्कृतज्ञं विधातव्यम्।

१४ पौरोहित्यकर्मकाण्डपण्डितेभ्यः संस्कृतपुस्तकानां दक्षिणात्वेन प्रदानम्—

जनतायाः परमं कर्त्तव्यं यत् सा सर्वेष्वपि दानधर्मोत्सवावसरेषु ब्रह्मभोजेषु यज्ञेषु कथासु जपेषु अनुष्ठानेषु उद्यापनेषु सकलेष्वपि शुभकृत्येषु ब्राह्मणान् प्रति संस्कृतपुस्तकानां दानं विदध्यात्। न केवलं सा रूप्यकाणि वसनानि पात्राणि भोज्यसामग्रीं च प्रदद्यादपि तु संस्कृतपुस्तकान्यपि प्रयच्छेत्। यानि पुस्तकानि तेभ्यः प्रदत्तानि भवेयुर्जनता तत्पुस्तककथां कथयितुं च तान् प्रार्थयेत्। नात्र संशयो यजमानाभिलाषपूर्त्यर्थं ते तानि पुस्तकान्यवश्यं पठिष्यन्ति तत्सम्बन्धिनीं कथां च श्रावयिष्यन्ति। अनेनापि प्रकारेण संस्कृतप्रचारः सम्भवः स्यात्।

यदा ह्यस्माकं भारतं परतन्त्रमासीत् तदा तु संस्कृतभाषायाः प्रसारो वस्तुतो नितान्तकठिन आसीत् सम्भवोऽपि नासीत् परमिदानीं तु संस्कृतभाषायाः प्रचारणमतितरां सरलम्। यद्यस्मिन् अपि स्वातन्त्र्ये संस्कृतभाषाया उन्नतिर्न जायते, सा प्रचलिता न भवति तदा तत्रापराधोऽस्माकमेव संस्कृतज्ञानां संस्कृतजीविनां विदुषामेव। संस्कृतभाषायां न स्तोकमपि न्यूनत्वं विद्यते केवलमस्मद्दोषप्रमादतुच्छस्वार्थवशादेव सा सम्प्रति विषीदति। विजयतां सा संस्कृतभाषा—

यत्प्रभापटलोद्भासा भासतेऽद्यापि भारतम्।
दिव्यं तत् संस्कृतज्योतिरासंसारं प्रवर्तताम्॥

अहह, संस्कृतभारतीमध्यनु भारतीयाः कीदृशेन मधुरेण पद्येन केनापि विपश्चिद्वरेण प्रार्थ्यन्ते—

सुरभारतीं कथं न समधीत भारतीया
इ्याविदानीं का जननीं बिना द्वितीया॥

## 'मुहूर्तं ज्वलितं श्रेयो न च धूमायितं चिरम्'

भगवता परमेश्वरेण मानवानां सृष्टिः प्रयोजन विशेषेण कृतास्ति। तेऽपि तिर्यञ्च इव आहार निद्रा मैथुनादिष्वेव स्वकीय जीवन यापयितु जगत्युत्पन्ना स्यु म्रियेरन् मृता इत्येतन्न विधातुरभिलषित कदापि। विविधज्ञान विज्ञानविभव मुपार्जयन्, शारीरिक मानसिकमाध्यात्मिकञ्च उत्थानम् अनुतिष्ठन्, स्वसेवाभि पारिवारिकस्य सामाजिकस्य नागरिकस्य राष्ट्रस्य विश्वस्य च जीवन समुन्नमयन् सार्वजनीन धर्मं आचरन् भगवति परमात्मनि द्रढीयसीमचञ्चा भक्ति समुपस्था पयन् मानव सरल शुद्ध सात्त्विक जीवन सतत गमयेत्—इत्येतदर्थं तस्य समुत्पादन जगदेककर्ता ब्रह्मा विदधौ। स न इच्छति यन्मानव स्वोदरपूरणार्थमेव चिर जीवेत्। स वाञ्छति यत् तस्मिन् जीवति बहवो जीवन्तु स कामयते यद् यावत् स जीवेत् दीनेषु दरिद्रेषु दयमानो जीवेत्, स अभिलषते यद् लोके मानव आपद्वार्तिं हरन् जीवन वहेत्। सर्वोदये मनो निदधान सर्वेषां पारमार्थिक हित कुर्वाणो यदि स मुहूर्तमपि ज्वलितो भवन् जीवति तदा तस्य जीवन तस्य मानवस्य जीवनाद् गरीयो महीयश्च यो जीवनन्तु चिरमधारयत पर न तच्ची वनेन कोऽपि श्रेयो द्रष्टुमशकत्। ईश्वरस्य नाभिलषितमिद मानवस्य निरर्थक जीवनम्।

एतज्जगत् तेषामेव मानवानां जीवन प्रशसति य हि जना 'मुहूर्तं ज्वलित श्रेयो न च धूमायित चिरम्' इत्येतदुद्देश्यमग्र निधाय जगति जीवनमनयन् नयन्ति वा। नतिहासकारा न कवयो न पौराणिका न च नीति कारास्तान् मानवान् असत्यातान् कदापि श्लाघमाना दृश्य ते श्वान वा य काका इव चिर बलिं भुञ्जाना जगति अजीवन्। अत्र तु तस्यैव गणना कृताऽभूत् यो मानवधर्ममपालयत्—

> परिवर्तिनि ससारे मृत को वा न जायते।
> जातस्तु गण्यते सोऽत्र य स्फुरेच्च श्रियाधिक ॥

अत्र तु तेषामेव जीवन सभाजितमभिनन्दित चाभूत् यथा स्थिरया धरा स्वाय जीवन धर्तुं शक्नोति त एव जना ससारस्यास्य रक्षका मता भवन्ति य सचरि

नताश्रिया दंदीप्यमाना भवन्त समग्रमपि कदमरप्यान्त दूषयन्तो भुव पांशु मुद्यता सन्ति सहर्षम्—

ये दीनेषु दयालव स्पृशति यानल्पोऽपि न श्रीमदो
व्यग्रा ये च परोपकारकरणे हृष्यन्ति ये याचिता ।
स्वस्था सन्ति च यौवनोन्मदमहाव्याधिप्रकोपेऽपि ये
तै स्तम्भैरिव सुस्थिरै कलिभरक्लान्ता धरा धार्यते ॥

महाभारते उद्योगपर्वण्युपन्यस्त विदुलोपाख्यानमिहोल्लिख्यते तेन साधु मानव-जीवनस्य चारित्र्यं प्रेरयेतद् विदित स्यात ।

विदुला कर्त्तव्यपरायणासीदेका विदुषी नारी । सद्गुणविभूषितत्वात् सा क्षत्रियाङ्गनासु परामेव प्रतिष्ठामवाप । तस्या एव सुत सञ्जय आसीत् । एकदा स सिन्धुराजेन सह युध्यमान पराजितो बभूव । पराजित रणक्षेत्रात् पलाय-मान तमवलोक्य विदुला नितरा चिखेद । मन्यु प्रकटयन्ती अतिनीक्ष्णकटुवचो-नाराचैर्मनोमर्म्मभाग छिन्दन्ती सा प्राह तम्—

'समराङ्गिरात् पलाय्य त्व शत्रुकुलमनन्दयो माञ्च भृशमपीडय । त्वदीय मिद निन्दनीय कर्म मदीयन्तु सर्वमपि सुखमपाहरत् । न त्व मम पुत्र । मम पुत्रो न कदाप्येतादृश कुत्सित कर्म कर्तुमुद्यतो भवितुमर्हेत् । तव शोचनीय-मेतत् पलायनरूप कर्म विलोक्य तु मम मन 'त्व मम पुत्रोऽसि न वेति' शङ्कते पुन पुन । विदुलाया पुत्रस्तु रणे मरण वर मन्यते न च तत पलायनम् । साम्प्रत ममैव न, यस्या अपि यशोधनाया वीराङ्गनाया सन्तानस्त्वन तव गणना न सम्भवा । न क्षत्रियात्मजा कदापि एता मलीमसा पद्धतिमाददते । उत्तिष्ठ, आजीवन मा पराजयमिम वरिष्ठा । कस्मादात्मानमवसादयसि ? कस्मात् त्व स्वकीयेभ्य परिमितेभ्य साधनेभ्यो विपीदसि ? त्य तथानूनभयादेव बिभेषि । उत्तिष्ठ, उपसहर निर्वेदम्—अनिर्वेद श्रियो मूल लाभस्य च शुभस्य च । नहि खलु व साहसवतां कश्चिदविषयो नाम—

'मात्मानमवमन्यस्व मा शोच्यैव पराजित ।
मन कृत्वा सुकल्याण मा भैरथ प्रतिसहर ॥"

न जानासि मन्द ! मनस्वी नाल्पेन तुष्यति—

धीरवीरस्य हृदय कुनदिका न या स्वल्पेनैव जलवर्षणेन प्रपूर्यते, तन्मूषिका-ञ्जलिर्न य कणेनैकेन सभृत सञ्जायते । नान्त सारो जनोऽल्पेनोन्माद्यति । हन्त

त्वां प्रेतमिव पतितं प्रेक्ष्य शोचामि। अपि किं त्वयि वज्रपातः सञ्जातः। कादर;

"त्वमेवं प्रेतवच्छेषे कस्माद् वज्रहतो यथा।
उत्तिष्ठ हे कापुरुष मा स्वाप्सीः शत्रुनिर्जितः॥"

न तावत् स्वारातीन् दग्धुं प्रभवसि यावन्न स्वयं प्रज्वलसि। चिरं न चेत् तर्हि तिन्दुकराशिरिव सप्रकाशं प्रस्फुट मुहूर्तमेकम्। न च तुषाग्निरिव धूमायस्व चिरम्। चिरधूमायिततायास्तु परदहनशीला क्षणजीविनी अर्चिष्मत्ता वरम्। तद् विधेहि येन शत्रूणां नयनानि दूयेरन्। तदाचर, येन रिपूणां प्राणाः सङ्कटे निपतेयुः। मा स्म वंशयशोविनाशनकारिणि कर्मणि आत्मानं पीपतः—

अलातं तिन्दुकस्येव मुहूर्तमपि विज्वल।
मा तुषाग्निरिवानर्चिर्धूमायस्व जिजीविषुः॥
मुहूर्तं ज्वलितं श्रेयो न च धूमायितं चिरम्।
मा ह स्म कस्यचिद् गेहे जनि राज्ञः खरो मृदुः॥"

त्वदीयेनैतेन भिक्षावृत्तिपरिग्रहणेन दैन्यलालनेन शान्तिगीतालापेन तावदीनं कुलं कज्जलकोशमलीमसं स्यात् तावत्पूर्वजाननानि लाञ्छनेन लाञ्छितानि स्युः। प्रार्थये परमेश्वरं यन्न कापि सौभाग्यवती युवतिस्त्वादृशमुत्साहरहितं वीर्यविहीनं चामर्षशून्यं सुतं प्रसुवीत। पुरुषः स एव वाच्यो भवति यत्र पौरुषं शत्रुहृदय-दलनकुशलं शौर्यं च स्वभीषणमुखं व्याददानो विजृम्भते। चेन्न तत्र परिपन्थि-निकरपातनपटीयःसमर्थं यदि न तत्र भूभुवनधूननिपुणामर्षः प्रचण्डस्तदा स पुरुषः पुरुषो न नारी एव—

"एतावानेव पुरुषो यदमर्षी यदक्षमी।
क्षमावान् निरमर्षश्च नैव स्त्री न पुनः पुमान्॥"

न त्वमात्मानमतः परं पुरुषं मन्यस्व।"

एतावति कृतेऽपि परुषे वाक्प्रहारे न सञ्जयस्य चेत उत्साहं जगाम। तत्र पौरुषं प्रसुप्तमासीत् तत्र वीरोचितप्रवृत्तिरयगतासीत्।

सञ्जयो मातुर्वात्सल्यमाजुहाव—"मातः, संगरे तनुमसून् कस्मात् प्रेरयसि ? अहमेव चेन्नाभविष्यं तदा तव जीवनमेव किं सार्थकतामगमिष्यत ? भ्रमति मयि त्वं तव प्राणान् अपि योद्धुं न कामयिष्यसे।" निशम्यैतद् वचनस्य विदुला पुनः कोपवेगोद्दीप्ता बभूव। सा न धिक् कुर्वन्ती प्रावोचत्—"नाहं त्वत्कृते जीवामि परं स्वार्जितिप्रयोजनेन स्वाकर्मप्यपालननिमित्तेन जीवामि। त्वमपि

नाऽस्मत् कृते क्षत्रियोऽसि अपि तु स्वयशसे स्वकर्त्तव्यधर्मपरिरक्षणाय आसीदिति। प्रजाजना स्वजनाश्च त्वामालम्ब्य जीवन्ति तस्मात् तदर्थमेव प्राणधारणं युक्तम्। यदि त्वं न तेषामालम्बनं हि भवितुं शक्तोऽपि तदा जीवनस्यैव ते का सार्थकता? नाहं निन्दानिन्दितं जीवनं वरं मन्ये। सा नृपतिरेकान्तनिश्वसिनि पिण्डे प्रीतिं दर्शयति स्वक्षमताया शूरतायाश्च समये परिचयं न प्रयच्छति अग्निः स्फुलिङ्गेन। पश्य न लोकः सिन्धुराजे रज्यति। तद्राज्यं वस्तुतस्तव पूर्वजानामेव। तवोदासीनतया तदायत्ततां गता प्रजा किंकर्तव्यविमूढाऽस्ति। अन्ये राजानोऽपि त्वत्पुनरुत्थानं सोत्सुकं प्रेक्षन्ते। त्वं साम्प्रतं स्वीयं 'सञ्जय' इत्येतन्नाम धन्वर्थय। स्वसुहृदः सिन्धुराजं निर्यातयितुं त्वदीयं साधनं त्वमाकाङ्क्षन्ति, समृद्धिं वृद्धिं वा न पश्य, लाभं हानिं वा न चिन्तय, त्वमाक्रम्य प्राणोऽसि अतः साम्मुख्यं कुरु। प्रतिभटतां प्रकटीकुरु। अपि किम् आश्रयदातारो वयम् आश्रिता बुभूषेम इत्येतदुचितम्? त्वदीयमिदं दैन्यन्तु ज्ञापयति यत् त्वं सम्प्रति आश्रितो बुभूषसि। नाहं त्वां क्षत्रियधर्माद् भ्रष्टं न विलोकयितुकामा यया कुलमेतद् सुवर्णमरालमिथुनेन मानसमिव प्रफुल्लितप्रभम्। शत्रुदर्पमनुनयन्तं लघिमतामङ्गीकुर्वन्तं त्वां द्रष्टुं नाहं प्राणान् बिभर्मि। हन्त, ममान्वये तु कोऽप्येतादृशो नोदपद्यत यः पारतन्त्र्याङ्गीकरणं वरममंस्त—

"नास्मिन् जातु कुले जातो गच्छेद् योऽन्यस्य पृष्ठतः"।

मातरमनुकूलयितुं सञ्जयोऽस्य प्रयत्नमनुतिष्ठन् जगाद—

"मातः, तव मानसमनु प्रतिभाति मे कुलिशकठोरतानिर्मितमयोमयं वा। अपि सत्यमिदं त्वं मम माता नासि। कस्मादित्थं त्वं मामनले निर्दयभावेन प्रक्षिपसि? न मम सविधे सैन्यं, कोषो, मित्राणि वा। एवं स्थिते कथमहं युध्यै? रिपुदर्शनादपि क्रूराद् व्यवहारात् क्रूरतरं व्यवहारं मयि त्वमाचरसि।

सञ्जयस्य कथनमिदं प्रतिवक्तुं विदुला शशंस—नास्ति मद्वात्सल्यं निस्सारम्। न मम पयो यालेयाङ्गनायाः पयः। अन्यायविरोधनेन अपमानासहनेन च तस्य सार्थकतां विधेहि। नास्ति मम सविधं कोषो मित्राणि च—इत्येतत् तवाभिधानं नानुमन्ये। कम्पस्तव पुरुषार्थेन सङ्कल्पेन च दृढेनानावृतो भवतु। मित्राणि, वत्स, परीक्षितान्येव कदा? यदा त्वं विपदि तानि समस्मरः? तव सुहृदस्तु प्रतिपद्यन्ताम् सौरभेण इव निरपाया सन्ति। यावत् त्वं स्वीयं स्नेहं न तेभ्यः सन्दर्शयिष्यसि तावत् साहाय्याय केन विधिनोत्साहमवाप्स्यन्। येनाहं तव

प्रभावस्य प्रखरता पुरुषार्थस्य अगाधता धियश्च तिग्मताम्। न त्वं वेत्सि स्वीयं बलम्। उत्तिष्ठ जागृहि, उद्युङ्क्ष्व। सुस्थिरेण चित्तेनेदमेवावधारय यत् साफल्यं मद्वशवर्ति—

"उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु।
भविष्यतीत्येव मनः कृत्वा सततमव्यथैः॥"

अथ सञ्जयोऽजागः। स प्रत्याशुश्राव—

"उदके भूरियं धार्या मर्तव्यं प्रवणे मया।
यस्य मे भवती नेत्री भविष्यद् भूरिदर्शिनी॥"

मातः शत्रुसैन्यसलिलनिमग्नां वसुधां प्राणानपि हुत्वोद्धरिष्ये। त्वया, अम्ब, मम श्रेयःपथः प्रदर्शितः। नियतमेव विजयश्रीर्मया लब्धव्या स्यात्।

अस्मद्भारतस्य मातरः स्वसुतान् सदैवोपर्युक्तेनैव प्रकारेणोपदिशन्त्योऽवाप्यन्त। तास्तथा प्रायतिषत येन तत्पुत्राः स्वजीवनस्य लक्ष्यं जानानास्तद् धिगन्तुं निरन्तरमुपसरेयुः।

कर्त्तव्यस्य पालनं, धर्मस्य रक्षणं, सदाचारस्य परिपोषणं, न्याय्यपक्षस्याश्रयणं परोपकारस्य वरणं, निःस्वार्थसेवायां जीवनस्य समर्पणञ्च असिधाराव्रतमेव, कठोरं तप एव, स्वकीयैश्वर्यसुखसम्पदादीनामवहेलनमेव। न कदापि कर्त्तव्यनिष्ठो धार्मिको जनः सुखानि भोक्तुं शक्नोति, न स कष्टानि दारुणानि सहमानोऽपि जगतीमिमामाराधयितुमेव समर्थः। स सदैव स्वकीयं गन्तव्यं मार्गं कण्टकाकीर्णमेव लप्स्यते।

संसारे ये केऽपि मानवा अनेन मार्गेण गतास्ते जीवनं यावत् दुःखानि अभजन्, निन्दात्मकानि वचनानि अशृण्वन्, स्वपुत्रकलत्रादिभ्योऽपि तेऽतिदूरं नीता अभूवन्। जीवनमपि तेषां ग्रहीतुं लोकोऽयमुद्यतोऽवलोकितोऽभूत्।

रामात् परः को लोकसेवक इह जगति समजायत। परं किं स स्वजीवने सुखं ददर्श? प्रथममसौ निर्वासितो भूत्वा गहने कानने निवसन् भूयांस्यसहनीयानि दुःखानि सेहे ततश्च स लोकपरीवादेन तत्प्राणप्रियप्रियातोऽपि वियोजितोऽभूत्। आजीवनं तद्वियोगसन्तापसन्तप्तः सन् क्रन्दन् विलपन् शोचन् एव स्वजीवनं निनाय।

कृष्णं को न जानाति जगति। धर्मस्य त्राणाय अधर्मस्य च विनाशनाय स प्रत्याशुश्राव। तस्य सुफलं सञ्जातं तत् सर्वविदितमेव। जीवने प्रतिपदं स

भयङ्करैर्विरोधैस्तस्य । अधर्मं पातयितुमाडम्बरं विनाशयितुमन्यायं पराजेतु-मन्यायं दलयितुमत्याचारं निर्ध्वंसयितुमनाचारञ्च व्यापादयितुं स जीवनं यावत् तैः सार्धं युयुधे । स स्वकुमारान्, राज्यच्युतान्, राजसु प्रतिष्ठापयामास, दुष्टान् भूपान् राज्य-सिंहासनादध्वंसयत् । सः वद्देषु जीवनस्य साधनं वरं मेने परं नासबीतिः कदापि तस्मा अरोचत । सः सज्जनान् पातुमेव जीवनमधारयत् । न स कदापि स्वसुखाय प्रायतत । परसुखायैव सः अजीवत् । राजलक्ष्मीरसं मदैव अचीकमत परं न स ताम् ।

महाराजप्रतापः अरावलीपर्वतस्य प्रस्तरेषु शयनं स्वीचकार परं न सः अक्बरस्य पराधीनतां स्वीकृत्य सांसारिकाणां वैभवानामुपभोगं साधु विवेद । स तृणेषु जीवनं निनाय; स्वसुतसुतादीनां मनोमर्मविदारणकारिणं क्रन्दन-शब्दमपि श्रोतुमाग्मानं सुदृढमकरोत् परं मातृभूमेः परतन्त्रतां द्रष्टुं न सन्नद्धो बभूव ।

महाराजमहाराष्ट्रकेसरी शिवाजिरपि स्वराष्ट्रस्य गौरवरक्षार्थं सहर्षं स्वं भीषणेषु सङ्कटेष्वपातयत् । न सोऽपि स्वं प्राणप्रिये राष्ट्रेऽमानवीयमनाचारमयं कुत्सितं शासनं विलोकयितुं क्षणमपि जीवन-धारणमुचितममंस्त ।

मन्यमन्ये चानेके जनाः वर्तमान एवाद्यापि । महात्मा गान्धी विलोक्य-ताम् । तस्य सविधे धनमासीत्, विद्याप्यतुलासीत् । सः संसारस्योत्कृष्टतराणि बहूनि सुखानि भोक्तुं क्षम आसीत्; स उच्चतरपदेऽपि आसीनो भूत्वा जीवन-मानन्दपूर्वकं नेतुमपि समर्थ आसीत्; स परमैश्वर्यवान् अपि भवितुं योग्य आसीत् परं स देशे सति पराधीने, अन्यायनिष्ठे शासने सति विद्यमाने संसारस्य महान्ति महान्ति सुखानि उच्चोच्चतरं पदमैश्वर्यञ्च प्रकृष्टं तृणमिवामुञ्चत् । कृषीवलानां दीना दशा तमरोदयत्, देशस्य निरक्षरता तमपीडयत्; स्वदेशस्य दरिद्रता तमवेपयत् । सः स्वकीयं प्रियं राष्ट्रं नग्नं विलोक्य स्वयं वासोऽपि धारयितुं न वरममन्यत । को न जगति तं कौपीनमेव वसानं विलोकितवान् ? स दीन-दरिद्राणां विपदो हर्तुं सत्याग्रहे मतिं निहितवान् । राष्ट्रं स्वीयं हि अन्यायेभ्योऽत्याचारेभ्यश्च पातुं कारागारं सिषेवे । मानवताया रक्षायां स प्राणान् अपि अजुहोत् ।

पुरुषा एव न नार्योऽपि चहुला-महारानी लक्ष्मीबाई-सरोजिनी-कमलानेहरू-प्रभृतयो न न्यायमार्गं कदाप्यत्यजन् । ताः अपि, अतः, आजीवनं कर्तव्यं

पालयन्त्योऽदर्शयन्त । परं ये केऽपि सन्मार्गेण अगमन् न ते सुखपूर्वकं क्षणमपि स्थातुमिह प्राभवन् । ते यावदपि अतिष्ठन् तावन्निर्भया सोत्साहा सोद्योगा एव भवन्तः स्थिताः अवालोक्यन्त । विपदो भीषणा न तेषां मुखं खिन्नं, तेषां तेजो मलिनं, तेषां कान्तिञ्च विवर्णां कर्तुमशक्नुन् । हसन्तो हसन्तस्ते विघ्नान् आलिङ्गन् । यः परोद्धाराय जीवति स एव जीवतीति मन्वते ते—

"यस्य जीवन्ति धर्मेण पुत्रा मित्राणि बान्धवाः ।
सफलं जीवितं तस्य ह्यात्मार्थे को न जीवति ॥"

इति सहर्षमुच्चैः घोषन्त सर्वेण जगता व्यालोक्यन्त ।

धनं नश्वरं, जीवनं नश्वरं, संसारस्य सर्वेऽपि पदार्था नश्वराः, संसारः स्वयमेव नश्वर इति विमृश्य सुधियो यश एव कामयन्ते । यशो न कदापि म्रियते । तदेव सर्वैः गीयते इत्येतन्निश्चित्य सर्वमपि विहाय यशःकामो यश एव वृणीते—

"स जीवति यशो यस्य कीर्तिर्यस्य स जीवति ।
अयशोऽकीर्तिसंयुक्तो जीवन्नपि मृतोपमः ॥
चलं वित्तं चलं चित्तं चले जीवितयौवने ।
चलाचलमिदं सर्वं कीर्तिर्यस्य स जीवति ॥"

यदा-यतोदारताविद्यादयाशूरतादिसद्गुणेषु यदीयेषु मुग्धा भूत्वा जना यस्य जीवनं धन्यं मन्यन्ते चेत् स पुरुष इह मुहूर्तमपि समतिष्ठत तदा तस्यैकस्यापि तदपि मुहूर्तस्थास्यपि जीवनं कोटिसंख्याकानामपि पुरुषाणां सहस्राब्देभ्यापिभ्योऽपि जीवनेभ्यो नूनं गरीयो महीयश्च—

जातः कूर्मः स एकः पृथुभुवनभरायार्पितं येन पृष्ठं
श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं यत्र तेजस्विचक्रम् ।
सञ्जातव्यर्थपक्षाः परहितकरणे नोपरिष्टान्न चाधो
ब्रह्माण्डोदुम्बरान्तर्मशकवदपरे जन्तवो जातनष्टाः ॥

येन जनेन शरीरस्यास्य सार्थकता सम्यगवेदि स शरीरेणानेन पुनश्चिन्तामणिमेव क्रीणीते न च वराटिकाम् । श्रूयते यत् सूर्यवंशे दिलीपो नाम कश्चिद्राजा बभूव । तस्य पुरः यदा आपन्नार्तिप्रशमनं समस्योपस्थिता जाता स तदा तदेव चक्रे यत् क्षत्रियस्य कृते समुचितमासीत् स स्पष्टमेवावादीदिदम्—

किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः ।
एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु ॥

वस्तुतः सत्यमिदमेव, धर्मोऽयमेव । अत एव उक्तम्—

> यो नात्मजे न च गुरौ न च भृत्यवर्गे
> दीने दयां च कुरुते न च बन्धुवर्गे ।
> किं तस्य जीवितफलं हि मनुष्यलोके
> काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥

यावत् सत्यस्य प्रकाशः—ज्ञानभानोरुदयो—न भवति न तावत् मानवो वस्तुतः कर्त्तव्यनिष्ठो भवितुमर्हति । अत एव देशस्यास्य महर्षयो मानवसंसारं ज्ञानार्थं पुनःपुनः प्रणोदयामासुः, गीतायाञ्च श्रीकृष्णः प्राह—

> "नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।"

ज्ञानमुपार्ज्य यैस्तेन सत्पथो वृतः त एव तत्तेजः प्रासरन्तो येन समस्तमपि जगत् आलोकितमभवत् । न मानवो हि शरीरस्थित्या जीवति मानवस्तु परमार्थतो धर्मेण, कर्त्तव्येन, सदाचरणेन जीवति । मानवेतरप्राणिनो हि लोके शरीरेण जीवन्ति परं मानवो नाम प्राणी तु यशसा सत्कर्मणा च जीवति । सत्कर्म एव यश एव जीवनमिति विचार्य ये प्राणान् अधारयन् त एव जनानां सर्वेषां स्मृतिपथे सन्ति । ये हि जीवनं शरीरमेव मेनिरे ते क्व अजायन्त, क्व च अम्रियन्त इति कोऽपि न जानाति । मानव-जीवनस्य प्रयोजनं मत्वा ये तत्प्रयोजनानुकूलं स्वं जीवनमयापयंस्तानेवाधिकृत्य केनापि कविना गीतमिदम्—

> धन्यः स पुंसां त्रिदशाभिधन्यः कारुण्यपुण्योपचयः क्रियाभिः ।
> संसारसारत्वमुपैति यस्य परोपकाराभरणं शरीरम् ॥

महात्मनां शरीरे न शिरांसि बहूनि भवन्ति, न च हस्तपादादयोऽपि भवन्ति भूयांसस्तेऽपि एकशिरस्का बाहुद्वयवन्तः पादद्वयशालिनश्च भवन्ति परं ते गुणविशेषैर्मानवधर्मरक्षणकारणादेव 'महात्मानः' इति कथ्यन्ते । सत्यमेवोक्तं—

> विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः ।
> यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ॥

ये सर्वेषु समदर्शिनो भवन्ति त एव 'सज्जनाः' इत्युक्ताः । सज्जनेषु केनापि स्वकीया शुभकामनेयं साधु दर्शिता—

> ते सज्जनाः किल भवन्तु सदा प्रसन्ना ये प्रीणयन्ति जगतीजनतामनांसि ।
> शश्वत्परोपकृतिकर्मपरा पयोभिर्वारां भरैर्घनघटा इव काननानि ॥

गुरुगोविन्दसिंहस्य सुतौ न तावत् विस्मृतौ स्यातां यावन्मानवधर्मो जीवेत् जगत्याम्। तयोरमरतायाः किं कारणम्? इदमेव यत् तौ मानवीयजीवनस्य महत्त्वममसाताम्।

वस्तुतोऽस्माकं देशे एवंविधानां मानवानां मानवीनां च संख्या न न्यूनास्ति येषु मानवतायाः समुज्ज्वलं हि रूपं विद्योतमानं सद् जागर्ति। अद्यापि श्रीजवाहरलालनेहरुर्मानवतायाः समदर्शितायाः साकारं सजीवं स्वरूपं बिभ्राणः सर्वैरपि विश्वेन दृश्यते।

पुनरपि अस्माकं राष्ट्रस्य भवने भवने एतादृशानां जनानां संख्या नितरामेव वृद्धिं गच्छेत् यानुद्दिश्य कवय एवं गायन्त उच्चैः श्रूयन्ते—

अहो महत्त्वं महतामपूर्वं
विपत्तिकालेऽपि परोपकारः।
यथास्यमध्ये पतितोऽपि राहो
कलानिधिः पुण्यचयं ददाति॥

ते साधवो भुवनमण्डलमौलिभूता
ये साधुतां निरपकारिषु दर्शयन्ति।
आत्मप्रयोजनवशीकृतखिन्नदेहः
पूर्वोपकारिषु खलोऽपि हि सानुकम्पः॥

इमान् हि सन्मानवान् प्रशमन्तो हि कवयो न कदापि तृप्यन्ति ते तेषां प्रशंसनं एव स्वजीवनं धन्यं मन्यन्ते—

आपत्समुद्धरणधीरधियः परेषां
जाता महत्यपि कुले न भवन्ति सर्वे।
विन्ध्याटवीषु विरलाः खलु पादपास्ते
ये दन्तिदन्तमुसलोल्लिखनं सहन्ते॥

'मुहूर्तं ज्वलितं श्रेयो न च धूमायितं चिरमि'त्येतामुक्तिं जीवने चरितार्थीकुर्वाणैः पुरुषैर्यावत्संसारोऽयं न प्रपूरितः स्यान्न तावत् कदापि लोकेऽस्मिन् सुखशान्ति-सुरसरित् प्रवहन्ती भवितुमर्हेत्। जगति सुखानां वृद्धिर्भौतिकताप्रकर्षेण परमार्थतया न जायते सा तु आध्यात्मिकतायाः समुत्कर्षेणैव सम्भवा।

—ः※ः—

# वीरभोग्या वसुन्धरा

जगति एवंविधः कः प्राणी यः सुखान्युपभोक्तुं नाभिलषते । सर्वेषामपि प्राणभृतामन्तःकरणे एषैवेच्छोत्कटा भूत्वा जरीजृम्भते यत् तेषां सन्निधे जगतः सकलं सुखसाधनानि स्युः । समग्रस्यापि भूमण्डलस्य प्रभुः स्वायत्तं विधाय ते सानन्दं विहरेयुः । सर्वा अपि वसुन्धरा तेषामाज्ञावशवर्तिनी भूत्वा 'का आज्ञा' इति निवेदयन्ती तेषां पुरो नतभाला भवन्ती सन्तिष्ठेत । ते यद्यदीच्छेयुस्तदपि लभ्य तत्करगतं भवेत् । ज्ञाने पौरुषे सम्पदि यशसि पदे प्रतिष्ठायाञ्च तेषां साम्यं न कोऽपि कदापि कर्तुं प्रभवेत् । परमेतादृशा मनोरथास्तेषामेव जनानां सफला भवन्ति ये तत्तदभिलषितानां पदार्थानां तत्तदाकाङ्क्षितानां द्रव्याणां च कृतेऽपेक्षितां शक्तिमात्मनि निदधति । शक्तिमन्तरेण नैकामपि वराटिकां कोऽपि मानवोऽत्र लोकेऽधिगन्तुं शक्नोति । चेत्कश्चित् विहीनशक्तिः स्वकीयं पितृपितामहादिभ्योऽवाप्तवैभवो जायते तदा जगतीयं तस्माद् दुर्बलाज्जनात् तदीयं सर्वस्वमपि झटित्यपहरति । एतस्मिन् विषये संसारस्येतिहासः साक्षी वर्तते यदेतादृक् कोऽप्यनेहा न वीक्षितो भवति यस्मिन् काले बलवद्भिः निर्बलानां सम्पदो, निर्बलानां राज्यं, निर्बलानां कलत्राणि, निर्बलानां मेदिनी, निर्बलानां परिच्छदाश्च नाक्षिप्त प्रसभम् ।

देशान्तरस्य चर्चा दूरे आस्तां स्वदेश एव दृश्यतां तावत् । वैदिककालोऽस्मद्देशस्य पुरातनतमः कालो बभूव । अस्मदीयस्य राष्ट्रस्य श्रेष्ठकालत्वेन स प्रख्यातः परं तत्रापि निर्बला बलवद्भिरत्यन्तं पीडिता न स्युः तदा कस्माच्छ्रुतिषु विविधासु द्रोहिण्यश्च दस्यूपद्रवाणां नानोल्लेखाः प्राप्यन्ते । अवश्यमेव तदानीमपि गोपायितुमात्मानं स्वसम्पदादिकञ्च पातुं तेजसो वीर्यस्य चापेक्षानुभूता बभूव । अवश्यमेव तदा परधनगृध्नवोऽपि विचरन्तो व्यालोक्यन्त । 'मा गृधः कस्यस्विद् धनम्' इत्येतदुपदिशद्भ्यो वेदेभ्य इत्येतदेव ज्ञातं जायते ।

राजशक्तिः सा शक्तिर्भवति या दुष्टान् निगृह्णाति दुर्बलान् उद्धतबलेभ्योऽनीतिनिष्ठेभ्यो रक्षति । तां विना दुर्बलानां जगती न स्वकीयधनधरादारादिकं त्रातुं

प्रभवति । सैव अपुत्राणां पुत्र, अबन्धूनां बन्धु, असहायाना सहाय, अधनाना धन भवति । अवश्यमेव वैदिकेऽपि काले तदानीन्तनो लोक इदमनुबभूव यद् बलमृते न स गोपायितु स्व कदापि क्षमस्तस्मात् त्राणाय स्वस्य 'राजा' इत्येतन्नामक बल ससर्ज । यदि नैव तदा कस्माद् वेदेषु—

"त्वांविशो वृणतां राज्याय त्वामिमाः प्रदिशः पञ्च देवीः ।"

"सर्वास्त्वा राजन् प्रदिशो ह्वयन्तूपसद्यो नमस्यो भवेह ।"

( अथर्व—३।४।१ )

इत्यादिकाना बहूना मन्त्राणा दर्शन भवति ।

अस्मदीय हि राष्ट्र स्वकीयसस्कृते स्वकीयसभ्यतायाश्च प्रत्यूपसमथादेव बलस्य महत्त्व तस्य महिमान च साधु मेने । तस्य दृढीयानय विश्वास आसीद् यत् तदन्तरेण न प्रेयस सिद्धिर्न च श्रेयस । प्रेय श्रेयसोरेकमात्र साधन बलमेव विद्यते तेज एव चास्ते । तस्मादेव कारणात् अस्मद्देशस्य प्राचीनतम वैदिक साहित्य सत्र श्रद्धा प्रबला प्रदर्शयति । तदुच्चैर्बलस्य महनीयता स्वीकुर्वद् उपदिदेश जगदेवम्—

'ब्रह्मचर्येण तपसा राजा राष्ट्र विरक्षति ।"

ब्रह्मचर्येण तपसा देवा मृत्युमुपाघ्नत ॥'

ब्रह्मचर्यं शक्त्युपार्जनस्य श्रेष्ठ साधनमस्ति । तस्माद् यद् बल गृहीत भवति तद्वान् भूत्वा पुरुष सहस्र समा अपि जीवितु समर्थ । प्रकृते सुसदु समोहय त्वात् सदैव सृष्टया जनेषु वैविध्य विलोकितमभवत् भवति च विलोकितम् । राग द्वेषेर्ष्यादियोपकारादिका अनिश जगति क्रीडन्त प्रेक्ष्यन्ते । सज्जनता दुर्जनता-उभयमपि भूभुवनस्य प्रियसुते स्त । अत सोऽपि काले वैदिक आर्यां विभाव्यमानोऽनापि ।

इदन्तु सर्वविदितमेव देव दानवयो सत्तेद पुरातने समये युद्धानि प्रास्फोटयत । देवा दानवान् पराजेतु दानवाश्च देवान्, सतत शक्तिमपुपूजन् । नितरामेव तस्यामशिक्षन् । अस्मद्देशस्य न कोऽपि देव एतादृग् विलोक्यते यो न स्यादा युधवान् । चक्र विष्णु, शिव शूलम्, वज्रम् इन्द्र, दण्ड यम, पाश वरुण, करवाल काली बिभर्ति । देवानामिय शस्त्रधारणप्रियता ह्यतेनाभिव्यक्ता भवति । न केवल देवेषु शस्त्रा प्रीति प्रहरणेषु च अनुरक्तिर्वासिताभवत् सा स्वस्माक देश सञ्जातेषु सत्स्वपि कीर्तनीयचरित्रेषु मनुजेषु दृष्टाभूत् । अन्यथा कस्माद्

रामो धनु, कृष्ण सुदर्शन, बलदेवो मुसल, हनुमान् गदाञ्च बिभ्राणा दृग्गोचरा जायन्ते।

विदितमेव सम्यग् न शान्तिरिह जगति निश्चिन्ता भूत्वा स्थातुमशकत्। युद्धानि हि अशान्तिजनितानि समये समयेऽवदन्त। युद्धानि तदैव जनुर्गृह्णन्ति, यदा असत्य सत्य, अन्यायो न्याय, पाप पुण्यम्, अधर्मो धर्मम्, अत्याचार सदाचार, कठोरता दयालुताम्, असज्जनता सज्जनता च व्यापादयितु प्रक्रमते।

अस्मद्देशस्य सम्पूर्णमपि साहित्य युद्धगाथाभि परिपूरितमस्ति। पुराणेषु न जानीमहे, कियत्यो युद्धकथा विराजन्ते। रामायणस्य महाभारतस्य च मध्ये युद्ध विहाय अन्यदस्त्येव किम्? एतत्सर्वमपि साहित्यमिदमेव ज्ञापयति यच्छक्ति विना न कदापि जगति कोऽपि जीवितुमर्हति। शक्ति विना धनवान् अपि गुण वान् अपि विद्वान् अपि कलावान् अपि कोऽप्यन्यो वा न नैज किमपि पातु प्रभवति। किं विना शक्ति रामो रावणात् सीता ग्रहीतु क्षम आसीत्? किं विना शक्ति पाण्डवा कौरवेभ्य स्वकीय स्वत्वमुपादातु समर्था आसन्? किं शक्ति विना अशोक कलिङ्गान् जेतु योग्य आसीत्? किं शक्ति विना प्रतीच्या देशा जर्मनाधिनायक हिटलर पराजेतु पर्याप्ता आसन्? शक्ति विना तु सृष्टे प्रार म्भादद्यपर्यन्त कोऽपि स्वकीय साध्य साधयितुमल न सञ्जात। वसुन्धराया भोगा सदैव वीरैरेव भुक्ता। वीरैरेव स्वदेशस्य सम्मान गौरवञ्च सवर्द्धितम्। वीरैरेव धरायां धर्म प्रतिष्ठापित, वीरेभ्य एव सर्वे बिभ्यति, वीरानेव सर्वे सादर नमन्ति, वीरान् एव सर्वेऽभिनन्दन्ति। वीरताविहीन शान्तिप्रिय, वीरतारहितो क्षमावान्, न कस्मिन्नपि प्रभाव स्थापयितुमीष्टे। ससार शक्तिशालिन एव वशे सन्तिष्ठते न च स सद्भाववत, सत्यवादिन, दृढसधस्य मनस्विनो वा। इदमेव कारण प्रधान यद् दरद(चीन)देशो नास्मद्देशस्य शान्तिप्रियतामजीगणत्, न स तस्य सरलहृदयताम् अपुपूजत् न च स तस्य मानवत्वानुरागमेव मानयामास। स तु अस्मद्देशस्य यदैव ध्यान वीरतावर्धनादन्यत्र प्रविष्ट तदैवाविलम्ब त सहसैव आस्कदत्। तदीय प्रचुर भाग द्रागेव अग्रहीत्। हन्त, निर्बलमेव ससारोऽय परिपीडयति तस्यैव सुख प्रसभ स्वत्वगत करोति। वीरस्य दिशि तु स स्व- प्नेऽपि दृष्टि न क्षिपति।

कुटिला जना न धर्मात् शङ्कन्ते, न ते सदाचारात् बिभ्यते ते तु केवल वीर- त्वात् कम्पन्ते। यावत् न तेषा मुखमुपमर्दन्त न तारन् ते शाठ्याद् दूरे पला-

यन्ते। शठतां शक्तिरेव शास्ति। शठतां नाशयितुं, कुटिलतां ध्वंसयितुं, दुष्टतां क्राथयितुं, नीचतां चूर्णयितुं, वर्वरतामुन्मूलयितुमुत्कोचादिग्रहणप्रवृत्तिं रोद्धुं शक्तेरेव सदापेक्षा भवति।

कापटिकेषु जनेषु कदाचनापि कथञ्चनापि सारल्येन न व्यवहरणीयम्। 'आर्जवं कुटिलेषु न नीति' इत्येतं सिद्धान्तं देशोऽयं कदा न मानयतिस्म? को न अवगच्छति यद् देवकीनन्दन श्रीकृष्णचन्द्रो जरासन्धस्योज्जासनाय कुटिलताया अङ्गीकरणं नानुचितं कदापि मेने। स तेन सह भीमं योधितवान् कारितवांश्च तं पुरन्दरपुरातिथिम्। धरायाद् रथचक्रमुद्धरन्तं कर्णं स तत्काल एव करालकालकवलितमचीकरत्। साध्यसाधनाय समयासं सदवसरं न त्यजेद् भीमान् इति विमृश्यासौ शिखण्डिनम् पुरो निधाय धनञ्जयेन भीष्ममपि व्यापीपदत्। कुरुकुलगुरुं द्रोणाचार्यं संहर्तुं सत्यावतारभूतं युधिष्ठिरम् 'अश्वत्थामा हत.' इत्युदचीचरत्-इत्येतदपि सकलमितिहासकोविदानां विदितमेव।

यत्तु केचन धर्मध्वजधारणधौरेयधीरधिया सुधिय आमनन्ति कपटव्यवहारोऽयं, सत्यम्, अस्मिन् संसारे मुक्तिद', परं परलोकदूषकत्वान्मुक्तिदो नैव भवितुमर्हति। तेषु निवेद्यते कपटाचारिषु कपटाचरणं चेत् तदीयकपटदोषदूरीकरणाय अङ्गीक्रियते येन पुन- कदाप्यसौ कपटात्मा कपटव्यवहारं न कुर्यात् तदा धर्म एव; किं वा कपटकारिणः प्रहारादात्मानं पातुकामेन यदि कुटिलताभ्युपगम्यते तर्हि तद्विधकार्याचरणस्योद्देश्यं केवलमात्मरक्षणं न पुनः परविप्रलाभ इत्येताभ्यामुभाभ्यां युक्तिभ्यां कुटिलेषु कुटिलताव्यवहरणं न दोषावहम्। तस्मात् श्रीकृष्णचन्द्रो न कदापि पापभाक्। एतेनेदमपि सिद्धं यदाहवेऽन्योऽन्यं प्रहरतो वीरान् न कदापि हिंसाजन्यं पातकं संस्पृशति। तत्र कर्मणि शस्त्रप्रहरणात् स्वस्य रक्षणमेव लक्ष्यं मुख्यं भवति न च जिघांसा। श्रीकृष्णचन्द्रो यदार्जुनेन पापभयादवोचि—

"पापमेवाश्रयेदस्मान् हत्वैतानाततायिन।"

इति तदा श्रीकृष्णो मतमिदमेव दृढं प्रास्तावीत्—

"अथ चेत् त्वमिमं धर्म्यं संग्रामं न करिष्यसि।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि॥"

श्रीभीष्मपितामहो नयविचारेण सरलतावलम्बनं न युक्तम् इत्येतस्यामालोकधारायां युधिष्ठिरं राजधर्ममेवमुपदिदेश—

यन्ते। शठता शक्तिरेव शास्ति। शठता नाशयितुं, कुटिलतां ध्वंसयितुं, दुष्टता क्राथयितुं, नीचता चूर्णयितुं, बर्बरतामुन्मूलयितुमुत्कोचादिग्रहणप्रवृत्ति रोद्धुं शक्तेरेव सदापेक्षा भवति।

कापटिकेषु जनेषु कदाचनापि कथञ्चनापि सारल्येन न व्यवहरणीयम्। 'आर्जवं कुटिलेषु न नीति' इत्येत सिद्धान्त देशोऽयं कदा न मानयतिस्म? को न अवगच्छति यद् देवकीनन्दन श्रीकृष्णचन्द्रो जरासन्धस्योज्जासनाय कुटिलताया अङ्गीकरण नानुचित कदापि मेने। स तेन सह भीम योधितवान् कारितवाश्च त पुरन्दरपुरातिथिम्। श्वभ्राद् रथचक्रमुद्धरन्त कर्णं स तत्काल एव करालकालकवलितमचीकरत्। साध्यसाधनाय समवाप्त सदवसर न त्यजेद् धीमान् इति विमृश्यासौ शिखण्डिन पुरो निधाय धनञ्जयेन भीष्ममपि व्यापादयत्। कुरुकुलगुरु द्रोणाचार्यं सहर्तुं सत्यावतारभूत युधिष्ठिरम् 'अश्वत्थामा हत' इत्युदचीचरत् इत्येतदपि सकलमितिहासकोविदाना विदितमेव।

यत्तु केचन धर्मध्वजधारणधौरेयधीरधिया सुधिय आमनन्ति कपटव्यवहारोऽयं, सत्यम्, अस्मिन् ससारे भुक्तिद, पर परलोकविदूषकत्वान्मुक्तिदो नैव भवितुमर्हति। तेषु निवेद्यते कपटाचारिषु कपटाचरण चेत् तदीयकपटदोषदूरीकरणाय अङ्गीक्रियते येन पुन कदाप्यसौ कपटात्मा कपटव्यवहार न कुर्यात् तदा धर्म एव, किं वा कपटकारिण प्रहारादात्मान पातुकामेन यदि कुटिलताभ्युपगम्यते तर्हि तद्विधकार्याचरणस्योद्देश्य केवलमात्मरक्षण न पुन परविप्रलाभ इत्येताभ्यामुभाभ्या युक्तिभ्या कुटिलेषु कुटिलताव्यवहरण न दोषावहम्। तस्मात् श्रीकृष्णचन्द्रो न कदापि पापभाक्। एतेनेदमपि सिद्ध यदाहवेऽन्योऽन्य प्रहरतो वीरान् न कदापि हिंसाजन्य पातक सस्पृशति। तत्र कर्मणि शत्रुप्रहरणात् स्वस्य रक्षणमेव लक्ष्य मुख्य भवति न च जिघासा। श्रीकृष्णचन्द्रो यदार्जुनेन पापभयादवोचि—

"पापमेवाश्रयेदस्मान् हत्वैतानाततायिन।"

इति तदा श्रीकृष्णो मतमिदमेव स्व प्रास्तावीत्—

"अथ चेत् त्वमिम धर्म्यं सग्राम न करिष्यसि।
तत स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि॥"

श्रीभीष्मपितामहो नयविचारेण सरलतावलम्बन न युक्तम् इत्येतस्यामालोकधाराया युधिष्ठिर राजधर्ममेवमुपदिदेश—

"आर्जवं सर्वकार्येषु श्रयेथा कुरुनन्दन ।
पुनर्नयविचारेण त्रयीसंवरणेन च ॥"

राज्ञा विरोद्धा साव्य राजानमविरोद्धारं भूमिर्ग्रसते—
"द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥"

अनार्जवेनापि शत्रो पक्षस्य भेदनं नीतिरेव—
"अनार्जवैरार्जवैश्च शत्रुपक्षस्य भेदनम् ।"

यदि कापटिके कश्चिदार्जवं प्रयुनक्ति नूनं स श्रीभीष्मपितामहसम्मतो नाथ मैमाचरति । अधार्मिके धर्माचरणं नास्ति धर्मं । तदस्ति पापाचरणम् । भारवि कविमतेनापि कुटिलेष्वकुटिलाचरणं मान्यमेव तस्मात् स स्वकाव्ये किरातार्जुनीये ब्रूते—

"व्रजन्ति ते मूढधियः पराभवं
भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधा
नसंवृताङ्गान् निशिता इवेषवः ॥"

वीरो न वीरतयैव अधर्मपरं कुटिलतानिष्ठमराति परिभवितुं समर्थः । तन्निपातनाय कुटिलतानुविद्धा वीरतापेक्ष्यते । यो देश अन्यायेन कस्यचन भूभागेऽधिकारं सम्पादयति, अपहृतभूभाग देश विरोद्धुं तमपकर्तुं देशान्तराणि प्रोत्साहयति, अनृतप्रचाराश्च सहास्य सर्वत्र कुरुते, परेण केनापि आक्रम्यमाणं च दृष्ट्वा कमपि देश निष्कारणनिहितस्वद्वेषबुद्धि प्रसादति, बहूंश्च निन्दनीयान् गर्हणायाश्च विविधान् कुत्सितापूर्वकं व्यवहारान् विदधाति तस्मिन् देशेऽपि साधुताया सरलताया वा प्रदर्शनं न कदापि युक्तमिति नीतिज्ञा अपि मन्यन्ते । शास्त्रेभ्य सैनिकेभ्यो विविधाभ्यश्चान्याभ्यः सज्जाभ्यो गरीयसी नैतिकी शक्तिर्भवति । वीरेण पुरुषेण वीरेण समाजेन वीरेण च राष्ट्रेण स्वीयां वीरतामन्वर्थी कर्तुमेषा नैतिकी शक्तिनियतमेवाश्रयणीया । सा शस्त्र सैन्यादिविषयिणीं न्यूनतां नूनं पूरयिष्यति । यदस्मासु स्वराष्ट्रस्य गरिम्णो वर्धनाय अनन्त उत्साह उद्वेलति, यदस्मासु स्वदेशस्य मानं त्रातुं प्रचण्ड साहस प्रज्वलति न तदा कोऽपि विशालतरोऽपि देशोऽस्मद्देश परतन्त्रीकर्तुं समर्थः । भवतु नाम सम्प्रत्यस्मद्देशे युद्धसा-

धन-स्वल्पता पर सत्यपि तथात्वे सोऽस्ति तेजस्वी । बलं हि तेजस्वितामधिति ष्ठति । कश्चिद् विद्वान् साधु वदति—

"हस्ती स्थूलतरः स चाङ्कुशवशः किं हस्तिमात्रोऽङ्कुशो
दीपे प्रज्वलिते प्रणश्यति तमः किं दीपमात्रं तमः ।
वज्रेणापि हताः पतन्ति गिरयः किं वज्रमात्रो गिरि-
स्तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः ॥'

क्रियासिद्धिः सत्वे भवति न चोपकरणे तस्मादेव हेतोरुच्यते केनापि तत्त्वविदा—

'विजेतव्या लङ्का चरणतरणीयो जलनिधि-
र्विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः ।
तथाप्येको रामः सकलमवधीद् राक्षसकुलं
क्रियासिद्धिः सत्वे भवति महतां नोपकरणे ॥"

शूर एक एव क्षितिं सकलां भोक्तुं शक्नोति । सन् अपि एकः सविता स्वकीयेन स्फारस्फुरितेन तेजसा निखिलमपि विश्वमारकतं भृशं स्कुनीते ।

देशस्य कृते प्राभुर्येन वीरा अपेक्ष्यन्ते । विद्वांसो विद्यां रक्षन्ति परं विदुषो धीरा रक्षन्ति । धनस्यार्जनं धनिका जानन्ति परं वीरा केन प्रकारेण धनिका रक्षणीया इति विदन्ति । कला-कौशलादिकं देशस्य समृद्धिरेव मतं भवति परं तत्कलाकौशलादिकं स्वमत्ताया प्रयोजनेन कलावतोऽपेक्षते कलावन्तश्च स्वरक्षार्थं वीराणामपेक्षां कुर्वन्ति । सर्वेषामपि जीवनस्य मूलं वस्तुतो वीरतैव । कश्च श्लोकोऽध स्थित एतत्तथ्यमेव सङ्केतयति—

"वह्निं शीतयितुं हिमं ज्वलयितुं वातं निरोद्धुं पयो
मूर्तं व्योम विधातुमुन्नमयितुं नेतुं नतिं वा महीम् ।
उद्धर्तुं किल भूभृतः स्खलयितुं सिन्धुं च सम्भाव्यते
दाक्षिण्यस्य जनैः स एव नृपतिः शेषाः परं पार्थिवाः ॥'

वीरस्य मानसे अद्भुत एव उत्साहः परिस्फुरति अजस्रम् । न सन् स्वाभीप्सित लाभाय कस्यापि मुखमीक्षते । यत्रापि वसति स तत्रैव स्वप्रभुत्वं प्रतिष्ठापयति । न स कदापि चिन्तयति यत् स एकाकी वर्तते वा बन्धुविहीनः । स तु स्वप्रभावादेव सर्वमपि अभिलषितमनायासेनैव समुपार्जयति—

"को वीरस्य मनस्विनः स्वविषयः को वा विदेशस्तथा
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम् ।

यद्दष्ट्रानगलाङ्कलप्रहरणं सिंहो वनं गाहते
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥

अयं देशः स्वजननसमयादेव वीरताप्रिय आसीत्। वीरताया सततमस्य प्रीतिर्विरेजे। वीरतामयानि ओजस्वीनि कर्माणि सर्वदैव अस्मै अरोचन्त। अयमेव स देशो विद्यते यदीयं शौर्यजनितं यशः सकलं भूभुवनमभिव्याप्य विललास। अयमेव देशः ससाराय धनुर्वेदमयच्छत्। एतादृक् को भुवो भागो यत्र न देशस्यास्य प्रभुतायाश्चिह्नानि समवाप्तानि जायन्ते? जावा-सुमात्रा-मेसोपोटामिया-रूमानिया-मिश्रादिनामकानां समग्राणां देशानां भूभागाः साक्षिणः सन्ति यत्र देशः स्वकीयां विजयवैजयन्तीं सर्वत्र उदधूधुनत्। देशस्यास्य विश्वविजयिनीं वीरतां विलोक्यैव तु कवय इतिहासकाराश्च पुनः पुनस्तां प्रशंसन्तोऽपि न तृप्तिं लभमाना प्रेक्ष्यन्ते। ग्रन्थेषु या हि रणसामग्री प्राप्यते सा, किञ्च यद् रणवर्णनमवाप्यते तत् सर्वमपि देशस्यास्मदीयस्य वीरत्वमेवोद्घोषयति। दृश्यतां तावद्रणसामग्री—

योधैरेव वशीकृता कथमपि प्रोद्दामरोषान्विता
गाढध्वान्तधराधरा इव रथक्षोणीसमालम्बिता।
ईषन्मीलितघूर्णितं प्रतिदिशं प्रक्षिप्तनेत्राञ्चला
मन्दान्दोलितमौलयो मदजलैराभान्ति दन्तावला॥
आरूढक्षितिपालभालविगलत्स्वेदाम्बुसेकोद्धता
भेरीझाङ्कृतिधापटङ्कृतिचमत्कारोल्लसन्मानसाः।
क्षुभ्यत्क्षोणितलं स्फुरत्खुरपुटं चञ्चच्चलत्केशरं
मन्दभ्रान्तविलोचनं प्रतिदिशं नृत्यन्ति वाजिव्रजाः॥

साम्प्रतं धृत्वा हृदयं, सुदृढो भूत्वा धीरः प्रेक्षन्तां भयावहमाहवम्—
युष्मद्दोर्दण्डमण्डलयवनमितरणचण्डकोदण्डदण्डान्-
मुक्तेषु च्छिन्नमूर्द्धप्रतिनृपतिभुजाखण्डमुण्डावकीर्णा।
गायन्नृत्यत्प्रवल्गद्रजनिचरवधूदत्ततालैः करालै-
र्वैतालैरट्टहासप्रकटितदशनैर्युद्धभूर्भाति भीमा॥

अन्नत्यानामुद्भटानां वीरपुरुषाणां सैनिकयुवकानां पुरः शत्रुः क्षणमपि रणाङ्गणे स्थातुं समर्थो न भवति। साम्प्रतिकेऽपि युगेऽपि प्रथमद्वितीयमहारणयोः प्रदर्शित

तेषां शौर्यप्रचण्डं सर्वेऽपि शूरशिरोमणय एकस्वरेणोच्चै गायन्त्येव । न जानन्ति ते रणक्षेत्रात् पलायनम् । वैरिणस्तान् याचमाना प्राणभिक्षामेवाश्रूयन्त—

धूलीधाराभिरन्धारलदनु बधिरतामागता स्फारभेरी
भूयोझाङ्कारारावैरसृतकरकुलापीडयस्मै-यथाने ।
धावन्तो विन्ध्यभूमृद्गनघनकुहरे कण्टकाकृष्टकेशा-
स्त्रायध्व मुञ्चतेति प्रतिहतविकला वैरिण सगिरन्ते ॥

अहह देशस्यास्य प्रतापवता भूभृता प्रताप सोढुन्तु सुरा अपि न शेकु —

देव त्वद्भुजदण्डचण्डिमचमत्कारिप्रतापानल
ज्वालाजालभयादिवाभिविशति क्षीराम्बुधिं माधव ।
भर्गं स्वर्गधुनीं दधाति शिरसा त्यक्तत्रिलोकीकृति
वेधा किन्तु मुहु कमण्डलुजलैराम्मानमासिञ्चति ॥

*अन्धकासुरवैरिन् पुरारे शूलिन् महादेव ! पुन अस्मन्मातृभूमिर्भारत वीरता* तेजस्विता शत्रुसंहरणक्षमा वर्चस्विता गाढता पुनरप्यत्र सा शक्तिर्जागृयात् या दुर्दान्ताना दुष्टाना दलने ससारे सन्नीते प्रतिष्ठापने सदाचारस्य च सस्थापने सर्वथैव क्षमा भवति ।

भवत्कृपापात्रभूता एते भारतीया प्रतिभटभयङ्करा घस्मरा रणभटा अद्यपर्यन्त यत्रापि युद्धाय गतास्तत्र स्वविजयध्वजमेव समारोप्य समागता । समराजिरे ते वीरतरणतरणिशे यददमनीय शौर्यं प्रादीदृशन् किन्न तत् सकलमपि जगदाश्चर्यार्णवे न्यमज्जयत् ? वर्तमाने तु तेषां बल वस्तुत शयानमेव वर्तते। जागृते सति किं विश्व तत्तेजोमय बल वीक्षितुमपि क्षम क्षमेत । इमे भारतीया एव भासुरभूतिमन्त शक्तिमन्त सन्ति ये हि आश्चर्याकृतेन केनापि अदृष्टपूर्वण अपरिगृहीतशस्त्रास्त्रसाधनेन सामर्थ्येन अतुलबलभुजदण्डेभ्यो विधविदितकुटिल नीतिभ्य आङ्ग्लेभ्यो देशमिममुन्मोच्य सर्वथैव स्वतन्त्र विधाय पुनर्भूभुवने स्वभारतमातुर्भालमुदनीनमन् ।

अस्मदीयस्य राष्ट्रस्य वीराणां धर्मप्रियत्वात् वैदेशिकास्तेषां देशे सुखपूर्वकमेव प्रवेशमलभन्त । ते तेष्वनृतव्यवहारमकार्षुर्विप्रलम्भमयमाचरण कृतवन्त । छलेन ते तेषु यमर्ति यदा समजायन्तदा कृतद्वयनिश्चरते योद्धुमुद्यता अभूवन् । भारतीया वीरा धर्मयुद्धमेव सततमभिनन्दन्ति स्म । परं वैदेशिकानां सदृष्ट्यां धर्मयुद्ध नाम यस्तु तु विद्यमानमेव नासीत् । अधर्मेण ते भारतीयान्

वीरान् विजित्य तेषां प्रिय देशे स्व राज्यमेव प्रातिष्ठिपन् । स्वीयं शासनं देशे सर्वत्र प्रसार्य ते शनैः शनैस्तेषामभीष्टतमं देशं नाशयितुमुपाक्रमन्त । भारतात् ते शस्त्रास्त्राणि सर्वाण्यपाहरन् । भारतं शस्त्रास्त्रशून्यं चक्रुः । ते तान् सर्वानपि उपायान् अशिश्रियन् यैः कस्यचनापि देशस्य वीरताया विध्वंसनाय अपेक्ष्यन्त । एतावदेव कृत्वा न ते तृप्तिमाययुर्देशं स्वदीयं ते धनेन ज्ञानेन च विहीनं विदधुः । तावत् ते न शान्तिमगमन् यावत् पवित्राचारविचारमिमं वृद्धं देशशिरोमणिं देशं हतसर्वस्वं न चक्रुः । ते देशस्यास्य भाषां साहित्यञ्च सहसा अत्र दासताऽस्म-द्भावना प्रतिजनहृदये सन्निवेशाय मासु । देशे समग्रे तच्चारित्र्याध्ययनं परिश्रमया मासुः । शिक्षणालयेषु स्वीयां भाषां च सन्निवेश्य अत्रत्या संस्कृतभाषा ततो निर्वासयाञ्चक्रुः । इदं हि सकलं कुत्रं यः कर्तुं स तदैव सदवसरमनुकूलाञ्च स्थितिं प्राप्तुमशक्नुन् यदा ते पूर्वं देशं परामृशिताः वीरता विहीना विहितवन्तः । एतस्या-भिधानस्य प्रयोजनं केवलमिदं यदवीरता सर्वेषामपि अनर्थानां सकलानामपि सङ्कटानामखिलानामपि बाधानामास्पदं भवति । यत्रावीरता भवति तत्र सर्वा अपि विपदः सानन्दं स्वकीयमेवाधिकारं स्थापयितुं समुद्यता सञ्जायन्ते । वीरताविहीनत्वात् समुद्भूतां स्वस्य देशस्य दीनां दशां विलोक्य देशभक्तानां हृदयानि रोदितुमारभन्त । ते बुद्धिमन्तो देशानुरागिणो मेधाविनस्तदेव विधातु-मुपाक्रमन्त यत्तस्या दशाया सम्भवमासीत् । इदानीं परमेश्वरानुग्रहेण देशोऽस्माभिः स्वातन्त्र्यं श्रमितिः । तस्मात् पुनर्गमितायाः वीरतायाः आसादनार्थमनुकूलोऽस्ति समयः सर्वथैव । देशोऽयं पुनः वीरेषु देशेषु वीराग्रणीर्देशः स्याद् इत्येतदर्थमाबालस्थविरैः पूर्णतया प्रयत्नोऽनिरामं कार्यः । यावत् समग्रापि जनता न स्वकीयं योगमेतस्मिन् क्षेत्रे राज्यप्रतिश्शासनं प्रति प्रदास्यति तावन्न लक्ष्यं लब्धं भवितुमर्हति । वीरतायाः समुपलब्ध्यर्थं यद्तुलं धनं शासनेन साम्प्रतं व्ययीक्रियते तस्य सार्थकत्वं चारितार्थ्यञ्च तदैव सर्वविधतया भवेत् यदा देशस्य सर्वेऽपि जनाः सर्वेऽपि सम्प्रदायाः सर्वा अपि संस्थाः सर्वाण्यपि सङ्घ-टनानि च स्वकीयं हि हार्दिकं सक्रियं साहाय्यं शासनं प्रति प्रयच्छेयुः ।

एषा समवाप्ता स्वतन्त्रता रक्षणीयास्ति । दुष्टहृदयाः कुटिलाचाराश्छलकपट-प्रिया धूर्ता न देशस्यास्य स्वतन्त्रतां सहन्ते । तेषु देशस्यास्य निपातनाय भयङ्करः प्रचण्डो द्वेषः प्रज्वलति । ते देशमिममपकर्तुं विविधान् आनायान् वितानाना अधुना सीव्यन्त । तेभ्यो दुर्हृद्भ्यो देशस्य त्राणं तदैव स्याद् यदा

देशोऽयं वीरो भवेत्। यथा अस्वस्थं दुर्बलं वा सर्वेऽपि रोगा आक्रमन्ते तथैव दुर्बलं देशं प्रबला देशा वशीकर्तुं तत्र स्वकीयं राज्यं स्थापयितुमुत्सुका भूत्वा प्रधावन्ति। गतेषु दिनेषु दरद(चीन)नामा देशो देशमिममास्कन्दन् भूभागञ्च प्रचुरमपहरन् केन न दृष्टः? पाकिस्तानदेशः प्रत्यहं देशमिममपकुर्वन् केन न दृश्यते? देशमेतं बलहीनं प्राप्यैव तु दरद(चीन)देशस्तथैवं कृतवान्। सङ्कटग्रस्तं देशमिमं विलोक्यैव तु पाकिस्तानदेशः क्षणे क्षणे नवनवप्रत्यूहान् देशोपरि निपातयति। देशवासिना हृदये स्वकीयं देशम्प्रति प्रेम वर्तते चेद् देशवासिनः स्वकीयं देशमेताभ्य उपरि निर्दिष्टाभ्यो विपद्भ्यः पातुं कामयन्ते तदा कर्त्तव्यमिदमेव प्रथमं प्रमुखञ्च यत् सर्वेऽपि संहता भूत्वा देशं वीरं कुर्वन्तु। यस्मिन् काले देशस्यास्य एकैकस्तरुणो वीरो भवेत्; यस्मिन् काले देशे सर्वत्रापि वीरतासरित् सवेगं गम्भीरतापूर्वकं भयङ्करं निनादं कुर्वाणा प्रवहमाना सर्वैरेव देशैर्विलोकिता भवेत् तस्मिन् काले, नात्र मनागपि संशयो न कोऽपि स्वप्नेऽपि देशमिमं प्रति नैजकुदृष्टिं पातयितुं क्षमो भवेत्। वसुन्धरा सदैव वीरैरेवोपभुज्यते। वीराणामेव वशे सा तिष्ठति। वीरान् एव सा परिष्वजते। वीराणामेव पत्नी भूत्वा सावतिष्ठते। अवीरान् सा त्यजति। अत भारतीया वीरा भवन्तु वीरा भवन्तु वीरा भवन्तु।



## दिष्टं पौरुषञ्च

नीतिकाराणां गिरासु ग सत्यं क असत्यमिति न ज्ञातुं शक्यम्। ते यद्देव क्वचित् प्रशसन्त श्रूयन्ते तदेव तेऽन्यत्र निन्दन्त आकर्ण्यन्ते।

"दैवं फलति सर्वत्र न विद्या न च पौरुषम्।
पाषाणस्य कुतो विद्या येन देवत्वमागत॥
पुरुषं पौरुषं तावद् यावद् दैवं तु सम्मुखम्।
विपरीतगते दैवे पुरुषो न च पौरुषम्॥
नैवाकृतिः फलति नैव कुलं न शीलं
विद्यापि नैव न च यत्नकृतापि सेवा।
भाग्यानि पूर्वतपसा किल सञ्चितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः॥
यद् धात्रा निजभालपट्टलिखित स्तोक महद् वा धन
तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ ततो नाधिकम्।
तद् धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथा
कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्य जलम्॥"

इत्यादिका सहस्रशो दैवप्रशंसापरका दैवश्रेष्ठताप्रतिपादिका उत्तमोत्तमा उक्तयो यदाऽस्मत्कर्णगोचरतां प्रयान्ति तदा वयं 'दैव' मेव वस्तुतो बलिष्ठं न तत परं किमपि श्रेष्ठमित्येतन्निश्चिनुमः परं यदा—

'विहाय पौरुषं यो हि दैवमेवावलम्बते।
प्रासादसिंहवत् तस्य मूर्ध्नि तिष्ठन्ति वायसाः॥
उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी
र्दैवं हि दैवमिति का पुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः॥
तपसा रूपसौभाग्यं रत्नानि विविधानि च।
प्राप्यते कर्मणा सर्वं न दैवादकृतात्मना॥

न फलति विकर्मा जीवलोके न दैवं
व्यपनयति विमार्गं नास्ति दैवे प्रभुत्वम्।
गुरुमिव कृतमग्र्यं कर्म संयाति दैवं
नयति पुरुषकारः सञ्चितस्तत्र तत्र॥"

इत्यादीनि वचांसि शृणुमो नीतिकाराणां तदा पौरुषमेव बलिष्ठं न तत्र परं किमप्युत्कृष्टतममित्येवं निश्चयं गच्छाम, सन्देहे वा पताम पुनः पुनः विचारयामश्च किं पौरुषमवलम्ब्य कठोरं परिश्रमं कुर्याम किंवा धैर्यमाश्रित्य तिष्ठेम। भाग्य कृपयैव सर्वं लभ्यते, व्यर्थमेवास्ति पौरुषम्। अमुकः पुरुषः पुरुषार्थं विनैव प्रचुरां सम्पदं लब्धवान्। अमुकः सम्पदर्थं कठोरं श्रमं हि दिवानिशं कृतवान् परं न वराटिकामपि प्राप्तुमशकत्, अतः कस्माद् निरर्थकमात्मा कदर्थनीयः। नैव नैव, दैवमवलम्ब्य कदापि न अकर्मण्येन भाव्यम्, अकर्मण्यता हि महद् दुरितं, कार्याणि मनोरथैन न सिद्धानि जायन्ते तानि उद्योगमपेक्षन्ते। स पुरुषः उद्योगं भीषणं विधायैव धनिकोऽभवत्। स परमदरिद्रः आसीत्, परं स्वदारिद्र्य विनाशनाय हि स तानि तानि कष्टानि सेहे, तं तं महान्तं प्रयासमकार्षीत्, ततश्च स समवाप्तसकलमनोरथो जातः। साम्प्रतं स सुखेन समयं वहति तस्मात् पौरुषमेव वरं तस्यैवोपासना कार्या इत्येवंविधाः परस्परविरोधिनो नानाविचारा मनसि उत्पद्यन्ते। कदापि नीतिकारोक्तेषु वचःसु श्रद्धा समुत्पद्यते कदापि च घृणा।

मनुष्यस्तु कालादृष्टेश्वराधीनः। स यथामधीनतायां वर्तते तत्प्रेरित एव शुभान्यशुभानि च कर्माणि करोति। अतः पारमार्थ्येन न स शुभाशुभकर्मकर्ता। एवंस्थिते कस्मात् कर्माणि तमनिशं क्लिश्नन्ति यदैवेदृग्विचारः उत्तिष्ठति तदा मानवः पुनश्चिन्तयति-कोऽयं कालः किञ्च अदृष्टं कश्चेश्वर इति।

अज्ञानवशान्मानवो व्यर्थमेव कमपि कदापि निन्दति कमपि कदापि अपवदति। नीतिकाराणां वचनेषु न कोऽपि विरोधो विद्यते। यद् यदुद्दिश्य ते दैवं प्रशंसन्ति निन्दन्ति वा यद् यदुद्दिश्य ते पुरुषार्थमभिनन्दन्ति कुत्सयन्ति वा तत्सर्वमपि यदि दृष्टिपथे समारोप्यते विमृश्यते च तदा सत्यमेव सिद्ध्यति। इमे सर्वेऽपि अदृष्टादिविषया सन्ति गहनाः। श्रीमन्महाभारते हि एतद्विध विषयाणां स्पष्टीकरणाय गौतम्युपाख्यानं प्रदत्तमस्ति तदिह प्रस्तूयते—

गौतमी नाम कापि धर्मसंयुता स्थविरा आसीत्। तस्याः पुत्रं सर्पोऽदशत्।

स पञ्चत्वं गतः। अनेन दुष्टेन सर्पेण शान्तस्वभावायास्तपस्विन्या एकपुत्राया गौतम्याः पुत्रो दष्ट इति दृष्ट्वा अर्जुनको नाम लुब्धकः स्नायुपाशेन तं सर्पं बद्ध्वा गौतम्याः समुपनिनाय, आह च तां स—'महाभागे अनेनाधमेन पन्नगेन तव पुत्रो हतः। आदिश केन प्रकारेण इमं व्यापादयामि। किमग्नाविमं प्रक्षिपामि उत छिनद्मि खण्डशः एनम्।' लुब्धकस्य वचस्तच्छ्रुत्वा गौतमी तं तथा कर्तुं निवारयन्ती प्राह—'सर्पं हत्वा न मे सुतो जीवितो भवितुं शक्नुयात्, अतस्त्यज एनम्। अस्मिन् सर्पे जीवति सति न कोऽपि स्यादत्ययस्तस्मात् एतत्सर्पव्यापादनजनितपापमुपार्ज्य यमलोकगमनं को नु कामयेत ?' यद्यपि गौतमी पुनः पुनस्तं हन्तुं लुब्धकं निवारितवती परं स लुब्धकस्तं सर्पं विमोक्तुं बुद्धिं न व्यदधात्। ततः सर्पः परमकष्टप्रपन्नोऽब्रूत 'मम दोषो नात्र वर्तते मृत्युरेव मां तथा कर्तुमचूचुदत्। तदाज्ञयैव मया स दष्टः। अतोऽत्र किल्बिषं मृत्योरेव न मम। मया मृत्योः प्रेरणया दष्टो बालकोऽतोऽहमपि चेदपराधीति चेत्, तथात्वेऽपि मृत्योः प्रयाजककर्तृत्वात्, स एवात्र प्रथमं किल्बिषी। हवींषि जुह्वाना ऋत्विजो यथा मखजनितफलं न प्राप्नुवन्ति तत्फलं यजमान एव लभते तथैवात्रापि मृत्युरेव अपराधित्वेन वध्यो न चाहम्।' एवंविधो हि यदा विवादः सर्पलुब्धकयोर्मध्ये प्रवर्तमान आसीत् तदैव मृत्युः समागतः। उवाच च सः 'कालेन प्रेर्यमाण एव अहं त्वां सर्पं, बालं दशनाय प्रेरितवान्, अतः शिशोरस्य विनाशने कारणं न त्वं न च अहम्। यथा वायुर्मेघान् इतस्ततो विकर्षति तथैवाहमपि कालवशगः सन् सर्पमाचरितुमुपक्रमे। कालाधीनं सकलं जगत्। सर्वेऽपि जङ्गमाः स्थावराश्च कालात्मका एव। काल एव सर्वं संसारं सृजति संहरति च'—इत्येवमभिदधन्मृत्युर्व्याधं जगाद—'अयि व्याध ! आवां द्वावपि कालवशगौ तस्मादावां दोषी न च सर्प एव।' तदनन्तरं एव तत्र कालोऽप्युपस्थितो बभूव। स लुब्धकमवोचत—'नाहं न मृत्युर्न सर्पं एव अन्तुमरणेऽपराधभाग्, अयं बालकः स्वकर्मवशादेव मृत्युं गतः अतः कर्म एव किल्बिषि। व्याध, न विस्मरेदम्—

> 'यथा मृत्पिण्डतः कर्ता कुरुते यद् यदिच्छति।
> एवमात्मकृतं कर्म मानवः प्रतिपद्यते॥''

कालस्य वचः आकर्ण्य तद्, गौतमी कथितवती—'नैव कालो न सर्पो न मृत्युरिह कारणम्। बालः स्वकर्मभिरेव निधनं गतस्तस्मात् पन्नगं मुञ्च।

उपरिस्थित उपाख्याने यदि दृक्पातः क्रियते तदा ज्ञातं भवति यन्मानवं न दैवं कदर्थयति न चान्यदेव किमपि । सत्कर्मानुष्ठानेन स सुखानि लभतेऽसत्कर्माचरणेन च स दुःखानि भजते । एतस्मिन् वर्तमाने जीवने यानि कर्माणि क्रियमाणानि भवन्ति आगामिनि जन्मनि फलोन्मुखतां गतानि तान्येव गतजन्मकृतानि कर्माणि 'दैवम्' इत्येतेन नाम्ना व्यपदिश्यन्ते । मानवः स्वयमेव स्वस्य दैवस्य निर्माणकर्ता वर्तते । सत्कर्माण्यनुष्ठाय स स्वकीयं दैवं सुखदायकं कर्तुं प्रभवति किञ्च असत्कर्माणि विधाय स तद्दुःखप्रदायकञ्च विधातुं प्रभवति । दुष्कर्माणि दुर्दैवं सृजन्ति सत्कर्माणि च सद्दैवम् । दुर्दैवं मानवं दुनोति सद्दैवं हि तं धिनोति । सुखदुःखयोः कारणं कर्माण्येवेति विज्ञाय विद्वांसः सदैव कर्मस्वेवात्मानं सन्नियोजयन्ति । कुर्वन्ति च सुखसम्पदादिप्राप्तिनिमित्तेन सत्कर्माणि ते । प्रमादान्मान्द्याद् वा गते जनुषि कृतानि अशुभकर्माणि हि वर्तमाने जीवने यानि दुःखानि जनयन्ति तानि दुःखानि ते विद्वद्वीरा धैर्यपूर्वकं सहन्ते च । कर्मणां गहनतां सम्यग् ज्ञात्वैव धीरैर्दिष्टपौरुषव्याख्यानम् । मन्दधियो मानवास्तत्त्वाधिगमनासमर्थत्वाद् व्यर्थमेव 'नातिज्ञाः कदापि दैवं स्तुवन्ति कदापि च पौरुषम्, तदीये कस्मिन् वचसि श्रद्धा विधेये"ति निगद्य नीतिज्ञान् पण्डितान् परिहसन्ति ।

मतिमन्तः पुरुषाः कठोरेषु सङ्कटेष्वपि निपत्य न मुह्यन्ति न ते स्वकर्तव्यं कर्म मुञ्चन्ति । इमानि हि दुःखान्यस्मत्कर्मजनितान्येवेत्यवगम्य ते तानि सधैर्यं सहमानाः सततं कर्माणि कुर्वाणा एव दृश्यन्ते । न कदापि विपद्भिरवधूयमाना भूत्वा ते कर्मभ्यो विरमन्ति । ते भगवतः कृष्णस्य—

> "नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
> शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥
> कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।"

इत्यादीनि वाक्यानि संस्मरन्तो हृदि, दिष्टेन व्यर्थीक्रियमाणोद्योगा अपि नोद्योगमुज्झन्ति । दैवं स्वकीयं कार्यं करोति ते स्वकीयम् । यदा कृतेऽपि सर्वविधे पूर्णे उद्योगे ते निष्फला जायन्ते तदा ते न कदापि निरुत्साहा भवन्ति । अस्माभिरात्मीयं विधाय उत्साहपूर्वकं समुचितयुक्तिविधींश्चावलम्ब्य कार्यं कृतम् । कार्याचरणमस्मत्कर्तव्यमस्ति । तत्फलं नास्मदधीनमिति विमृश्य "कर्मण्येवाधिकारस्ते मा फलेषु कदाचन" इत्येतच्च गीतावाक्यादर्शमाराध्य प्रसन्नमानसा

एव भवन्तः पुनः स्वामीप्सितार्थमुद्योगे रता भवन्ति। जगति येषां जनानां गतजन्मकृतानि कर्माण्यतितरामेव दुष्टानि नितरामेव निविडपापमयानि भवन्ति वस्तुतस्त एव कतिपये जनाः कृतेऽपि कठोरतमे उद्यमे न मनोऽभिमतं फलमवाप्तुं पारयन्ति अन्यथा न्यायप्रियो दयामयो भगवान् न हि समुचितोद्योगकारिणो मानवान् निराशान् कुरुते। ईश्वरो मानवमुद्योगपरमेव द्रष्टुमिच्छति न च तं स्व-तत्परम्। जगस्तं भजतु न वा भजतु परं यदा हि स तं विधिपूर्वकं युक्तियुक्ततया समुचितेन मार्गेण परिश्रमं विदधानं प्रेक्षते तदा स तस्मिन् प्रसीदति तत्कृतानि दुष्कृतानि च परिमृज्य तन्मनोरथान् प्रपूरयति। उद्योगनिष्ठान् जनान् जगति सफलतां गच्छतो विलोक्यैव नीतिज्ञाः कथितवन्तः—

"उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः॥"

"उत्साहसम्पन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तम्।
शूरं कृतज्ञं दृढसौहृदञ्च लक्ष्मीः स्वयं याति निवासहेतोः॥"

सुधी मानवो दिष्टमाद्रियते पौरुषञ्चाद्रियते। न स कमप्येकतरमवजानाति। कृतेऽपि पूर्णे उद्योगे निष्फलतामवाप्य न विषण्णत्वं दिष्टादर इति कथ्यते किञ्च कर्तव्यधिया अनिशं कर्मानुष्ठानं पौरुषादर इति प्रोच्यते। दिष्टं पौरुषञ्च द्वयमपि आलम्बमानं विद्वांसमवलोक्यैव केनाप्युक्तमिदम्—

"नालम्बते दैष्टिकतां न निषीदति पौरुषे।
शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते॥"

अष्टशताब्दव्यापिनी दासता भारतस्य सर्वानपि गुणान् अपाहरत्। परकीया जना इह स्वशासनं संस्थाप्य न केवलं देशमिमं तेऽर्थशून्यं कृतवन्तोऽपि तु ते तदीयं नैतिकमपि बलं विनाशितवन्तः। देशे ते विविधान् बहूंश्च दोषान् उत्पादयामासुस्तं दुर्व्यसनेषु च निपातयामासु। सर्वत्रैव निर्धनतां प्रसार्य जनतां ते दीनां शोचनीयां च दशां नीतवन्तः। ते तान् सर्वान् अपि उपायान् अशिश्रियन् ये देशस्य शारीरिकं बलं मानसिकीं शक्तिमाध्यात्मिकं तेजोऽपवर्य्यन्तस्तं सन्मार्गात् भ्रंशयन्ति। या जनता हि वैदेशिकानामागमनात् प्राक् धर्मभीरुर्न्यायनिष्ठा दाक्षाख्यविभूषिता स्वस्थशरीरा धन-धान्यसम्पन्ना कलासु विद्यासु च कुशलाऽऽसीत् सैव वैदेशिकशासनानुग्रहेण अचिरादेव अवहेलितधर्मा अन्यायप्रिया सदाचाररहिता नानारोगाक्रान्तकलेवरा धन-धान्यशून्या कलाविद्याविहीना चाभवत्। एषा हि पतनावस्था भारतीयान् जनान् दैववादिनश्चकार। तस्या

दीनदुःखिताया दशाया कारणं ते प्राधान्येन अदृष्टमेव मेनिरे। अदृष्टस्य कोपोऽस्मासु वर्ततेऽत एवास्मदीयो देशो वैदेशिकशासनाधीनः सवृत्त वयञ्चेमां दरिद्रामवस्थामुपेताः। अस्माभिर्गतेषु जन्मसु दुष्कर्माणि कृतानि तस्मादेव कारणाद् इदानीं दुःखानि असह्यानि सह्यन्ते—

"ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तः सदा सङ्कटे।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे॥"

इत्येवंविधा विचारास्तेषां हृदये दृढतया स्थिता अभूवन्। तेषां यशस्य पावनचरितत्वात् सत्कृतेश्च तेषां वदान्यत्वात् ते नानासुखभोगिषु वैदेशिकेषु न रागद्वेषधियं प्रादर्शयन् तत्तद्दुःखानां गम्भीराणां प्रदातारो न तेऽपि तु भाग्यमेव दुःखप्रदमस्तीति ते मन्यमानाः —

"काश्चित् तुच्छयति प्रपूरयति वा काश्चिन्नयत्युन्नतिं
काश्चित्पातविधौ करोति च पुनः काश्चिन्नयत्याकुलान्।
अन्योऽन्यं प्रतिपक्षसंहतिमिमां लोकस्थितिं बोधयन्
नेष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो विधिः॥"

इत्येव निशश्वसुः। भाग्यवादिताया गरीयान् प्रभावस्तेषां विवेकशक्तिमाच्छादितवान्। ते यत्र भाग्यं तदपि भाग्यमेवामंसत। अन्यायानाम् अत्याचाराणां च सहनं तेषां प्रकृतेरेको गुणविशेषोऽभवत्। दुःखानां दलनार्थं यो हि प्रयत्नो विधीयते स विस्मृतोऽभूत्। या जनता भारतीया अतः प्राक् सदैव पौरुषे घोरे व्यापृता अदृश्यत सैव नितान्तमेव अकर्मण्या सञ्जाता। या जनता—

"न चोद्योगमनारुह्य नरो भद्राणि पश्यति।
उद्योगं पुनरारुह्य सुखं जीवति हृष्यति॥
निपानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः।
सोद्योगं नरमायान्ति विवशाः सर्वसम्पदः॥"

इत्यस्यां विचारधारायां भक्तिं न्यदधात् सैव लोकैः तदा दैवेन देयमिति वदन्ती अश्रूयत।

यस्मिन् देशे पुरुषार्थभावना मृता भवति, आगतानां सङ्कटानां निराकरणार्थमुत्साहपूर्वकमुद्योगो पुरस्कारो न क्रियते, अन्यायमत्याचारञ्च निरोद्धुं सततं

सधर्मो नानुष्ठीयते, निर्भयतापूर्वक न्याय्यमपि वच प्रवक्तु न प्रयासो वितन्यते स देशो न कदापि दु खेभ्यो मुक्तो भवितुमर्हति । भारत हि वैदेशिकशासन-कालेन तामेव स्थितिं नीत यामासाद्य दु खेभ्यो बन्धनेभ्यश्च निर्मुक्तिरसम्भवा जायते ।

जीवनकाले नैकान्ततो दैवमुपेक्षितु शक्य भवति न चैकान्तत पौरुषमेव । जीवनस्य रक्षणार्थं तस्य यापनार्थं तस्य चोन्नत्यर्थं कदापि दैवमपेक्षित जायते कदापि च पौरुषम् । उद्योग निरन्तरं विदधानोऽपि यदा मानव स्वकीये मनोरथे सफलो न भवति तदा स अतितरा दु खितो भवति । दु खस्य बहुलतया स कदापि तु प्राणानपि हातु सन्नद्धो जायते । चेत् एतादृश प्राणोत्स र्गकारिण मानवम् प्रति दैव महत्त्व कथित स्यादुच्चैस्तदा युक्ततरमेव स्यात् । सम्भवमि० यत् तद्विधोक्तिं निशम्य स प्राणत्यागोद्यमाद् विरमेत्, शान्तिं धैर्यञ्च लभेत । *प्रायेण बहुधा दृष्टमपि लोके यत् दैवस्य बलवत्ता श्रुत्वा बहवो* जना आत्मव्यापादनकर्मणो विरता अभूवन् । प्राण रक्षणात् पर न किमपि कार्यम् । स एव प्रयत्न कर्तव्यो येन जीवनस्य रक्षा भवेत् । यदि जीवनमस्ति तदा मनोरथाना सिद्धिरपि कदापि सम्भवास्ति । यदि तदस्त्येव न, तदा तु कदापि किमपि न सम्भवम् । गत धन जीवने सति पुन प्राप्त भवितु शक्नोति, गत स्वास्थ्य च पुन जीवने निवृत्त भवितुमर्हति, विफल मनोरथा जीवने सफलतामपि कदापि लब्धु प्रभवन्ति, अनुत्तीर्णश्छात्रो जीवने कदाप्यवश्यमु त्तीर्णोऽपि भवितुमर्हति तस्माज्जीवनस्य रक्षा सदैव कर्तव्या । जीवन रक्षणस्य ये उपाया सन्ति तेषूपायेषूत्तमा उपाया—आश्वासनकारीणि वचासि, धैर्याधाय-कानि वाक्यानि दैवमहत्त्वप्रतिपादकानि पद्यानि च सन्ति । मानवोपरि तेषा प्रभावोऽवश्यमेव निपतति । या बुद्धिरस्मिन् प्रथमे क्षणे समुत्पद्यते तस्या बुद्धे-रपरस्मिन् क्षणे तिरोधान प्रायेण दृष्ट भवति तस्मात् तद्विधदैवाख्यानात्मकाना वचनाना क्षणस्थायी प्रभावोऽपि वरम् । अतो दैवमपि कदापि जीवनमुपकरोति तस्मात् तदपि नैकान्ततस्त्याज्यमस्ति ।

पौरुषन्तु सदैव जीवनमुपकुरुते । न तद्वरण कस्यामपि दशाया हानिं जनयति । मानव प्रकृत्या दुर्बल । स सुखानि तु वाञ्छति पर तेषा कृते कष्टानि सोढु न काङ्क्षति । स धनवान् विद्वान् ऐश्वर्यवान् उच्चपदासीन स्वस्थशरीरश्च भवितुमिच्छति पर सर्वेषामपि एतादृशाना मनोरथाना कृते यादृशो यावाश्च

परिश्रमोऽभीष्टो विद्यते न स तादृशं तावन्तञ्च परिश्रमं करोति तस्मात् स न भवति तत्र तत्र सफलः। विफलतां प्राप्य स विषीदति, रोदिति, नितरां दूयते च। अत्यन्तं खिन्नतां गतः स मानवो हि स्वकीय शुभचिन्तकानां सुहृदां स्वजनानाञ्च पुरुषार्थप्रवर्तिनीं वाणीं निशम्य पुनः कठोरे पौरुषे आत्मानं प्रवर्तयति, भवति च ततः सफलमनोरथस्तस्मात् कदापि पौरुषमपि जीवनेऽपेक्ष्यते। मानवीयं जीवनं तद्द्वयमपि सततमपेक्षते मानव जीवन-निमित्तेन द्वयोरप्युपकारित्वाद् भारतीया संस्कृतिर्दैवं पौरुषं मुभयमपि आद्रियते।

महाकवि कालिदासो राष्ट्रकविरस्ति तस्य कवितायां प्रत्यक्षरं भारतीयायाः संस्कृतेर्दर्शनं भवति। शाकुन्तले नाटके योऽस्माभिरयमधः स्थितः श्लोकः पठ्यते तस्मात् पुरातनस्य भारतस्य दिष्टपौरुषनिपुणता स्फुटं ज्ञाता भवति—

अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलं चात्मन-

स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम्।

सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया

भाग्यायत्तमतः परं न खलु तद् वाच्यं वधूबन्धुभिः॥

विश्वविदितदानिनः प्रथितपराक्रमस्य कर्णस्यापि निम्नलिखिते वचने च भारतस्य पूर्वं दैवपौरुषनिष्ठा समुन्मीलन्ती घोषिता भवति—

सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम्।

दैवायत्तं कुले जन्म ममायत्तं तु पौरुषम्॥

दैवं यत् निमित्याचरन् तत्र स खेदं विन्दमानो यो नरः पौरुषमवलम्ब्य स्वकीयं जीवनमुत्थापयितुं सदैव प्रयतते स नरः भारते प्रतिष्ठामेव प्राप। श्रूयते यन्महिदास ऐतरेय शूद्रायां समुत्पन्नो जड इति मलिन इति शूद्र इति मत्वा श्रोत्रियैरवज्ञातः यज्ञशालातो बहिष्कृतश्चिरं तपस्तप्त्वा भगवद्नुग्रहा-स्पदं भूत्वा शास्त्रमर्मज्ञः प्रबुद्धः। प्रतिष्ठां महतीं गतो ततः।

ये हि जना लोके केवलं दिष्टमथवा केवलं पौरुषमाश्रित्य कार्यं कुर्वन्ति ते जना प्रायेण विषीदन्ति। तेषां जीवनं न पूर्णां सफलतां याति। दिष्टावलम्बी जनस्तु उन्नत एव न भवति। स तु यस्यां स्थित्यामुत्पद्यते तस्यामेव म्रियते परं य पौरुषमेवाश्रित्य प्रयतते तस्यापि जीवनं निष्फलपौरुषतायां प्रायेण शोच्यतां गच्छद् दृश्यते। पौरुषाश्रयी जनो यदा स्वकीयं कृतं कठोरं पौरुषं व्यर्थं पश्यति तदा स तद्व्यर्थतायां केवलमात्मानं कारणं मत्वा प्राणान् परित्यजति। "मया

समुचितो युक्तः कठोरश्चोद्योगोऽविरामः कृत' कस्माचाहं सफलतां लब्धवान्। अपि किमदृष्टस्य बलवत्तरतयाऽहं सफलमनोरथो न भवामी''त्येतद्विधं विचारं स केवलपुरुषार्थवादित्वात् कदापि न करोति तस्मात् स आत्मानं हिनस्ति। यश्च जनो दैवं पौरुषञ्चोभयमप्यालम्ब्य जीवने प्रवर्तते असौ न कदापि अकर्मण्यः प्राप्तो भवति न कदापि स आत्मव्यापादनकर्मरत एव दृष्टो जायते। स यदा स्वकीये उद्योगे आत्मानं निष्फलं पश्यति तदा सः 'अदृष्टवशान्नाहं सफलतां सम्प्रति समवाप्तोऽतः पुनः उद्योगं विधास्यामी'ति विमृश्य पुनः परिश्रमे आत्मानं नियोजयति। एवंविधा जनाः पुनः पुन. निष्फलतां लभमाना अपि न स्वं हिंसन्ति। ते वस्तुतः प्रकाशे जीवन्ति, प्रकाशे वसन्ति प्रकाशे च व्यवहरन्ति, अत एव न सुधीजनगर्हितं कुत्सितं कर्म कर्तुमुपसरन्ति। ये च जना अन्धकारे जीवन्ति, अन्धकारे वसन्ति, अन्धकारे च व्यवहरन्ति, ते सदैव गर्हणीयानि निन्दनीयानि कर्माणि कुर्वाणा प्राप्यन्ते। भगवता कृष्णेन एतादृशान् एव जनान् लक्ष्यीकृत्योक्तम्—

इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम्।
इदमस्तीदमपि मे भविष्यति पुनर्धनम्॥
असौ मया हतः शत्रुर्हनिष्ये चापरानपि।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी॥
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः॥

दुःखमिदं महद् यस्मान्नतमस्मदीयं भारतं स्वकीयायां राष्ट्रभाषायां सुरवाण्यां न जिहाति न तत् तन्नानुरज्यति तस्मात् तत् स्वीयसंस्कृतितः स्वसभ्यतातश्च पराङ्मुखं संवृत्तमस्ति। एतत् पराङ्मुखताया दुरदर्कमिदमस्ति यत् तद् आचारे विचारे चरित्रे च मलिनतां गतमस्ति। अतो विविधानि दुःखान्युपभुनक्ति। यदि तत् स्वभाषा-संस्कृत्यादिकमङ्गीकुर्यात् तदा तद्दिष्टे पौरुषे च धियं निधातुं शक्नुयात्। तस्यां स्थित्यां तत् न सुखेन न च दुःखेन पराभवितुं शक्यं स्यात्। हन्त, क वयं क चास्मदीया रामकृष्णादिपूर्वजना ये दिष्टवादिनौ पौरुषादिनौश्च स्वसंस्कृतिं सदैव सर्वथैव ररक्षुः।

—:o:—

## मानवो मानवं पातु

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे ह्यात्मार्थे पृथिवीं त्यजेत् ॥

भारतीयस्य समाजस्य आधार क आसीदित्येतस्या दिशायामुपरि स्थित-श्लोक सङ्केतं कुर्वाणोऽस्माभि स्पष्टमेव दृश्यते । अस्मत्प्राचीने भारते मूर्धनि यस्य प्रतिष्ठापनाभिमताभूत् तद् आसीदिदं जगत् । अत्र यदपि विचारितमभवद् यापि योजना प्रवर्तिताभूत् यदपि पदं पुरस्थापितमजायत तद् दृष्टेरग्रे विश्व निधायैव सर्वमाचरितम् । अत्र तत्कर्म एव सत्कर्म मतमभूत् यत्र अभेदभावना व्यराजत । भेदभावनासमस्रवादिह कथमपि केनापि असत्कर्म न प्रशंसितम् । विश्वस्य हिताय सकलमपि यदत्रानुष्ठितमभूत् तत्र मूलकारणमेषा अभेदभावनैवासीत् । अनयोदारया भावनया प्रेरितो भूत्वा जनो यत् किमप्यकरोत् तत्कुलमुत्थापयितुं व्यदधात् कुलं यदप्याचरत्, तद्ग्रामस्य नगरस्य वा कल्याणाय अन्वतिष्ठत्, ग्रामो नगरं वा यदप्यनुतस्थौ तज्जनपदोपकाराय चकार, जनपदैश्च यदपि कृतं तन्निखिलं राष्ट्रार्थमनुष्ठितम् । राष्ट्राश्च सर्वे सघटिता भूत्वा समग्रमपि आयोजनमखिलमपि कर्म विश्वस्य श्रेयसे प्रेयसे च कृतवन्त । विश्व हितकारीणि कर्माण्येव अत्र 'यज्ञ'इत्येतेन नाम्ना सादरं व्यपदिष्टान्यभूवन् । यत् कर्मात्र यज्ञत्वेन नाभियत तत्कर्म एव विद्वद्भिर्धर्मशास्त्रिभिर्बन्धनकृद् दुःखविधायक जन्ममरणादिसङ्कटप्रदायकमाम्नातम् । अत एव तु श्रीकृष्णो हि उपदिशन्निद श्रूयते—

यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धन ।
तदर्थं कर्म कौन्तेय मुक्तसङ्ग समाचर ॥
यज्ञशिष्टाशिन सन्तो मुच्यन्ते सर्वकिल्बिषै ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥

"समग्रमपि जगदस्मदीयं कुटुम्बमि"त्येतां भावना लोकं या संस्कृति सभ्यता या अपीपटत् सा संस्कृति सभ्यता या वैदिकी संस्कृतिरेव वर्तते । नान्या । भारतभूसम्भूतानां भूकुटुम्बत्वं तु तेषां संस्कृतवाङ्मयदर्शनेन स्फुटमेव

सुविदितं जायते। तदीया श्रुतयो यद् वदन्ति तदेव स्मृतयो निगदन्ति यत् स्मृतयः कथयन्ति तदेव दर्शनान्युदीरयन्ति यद् दर्शनानि शंसन्ति तदेव पुराणानि शास्त्राणि च व्यवहरन्ति यद् हि तानि भणन्ति तदेव हितोपदेशादि-सकलानि लघुलघुतरपुस्तकान्यपि भाषन्ते। सर्वेषामपि एक एव स्वरो वर्तते सकलमपि साहित्यं निखिलमपि विश्वमैक्यसूत्रेण निबध्नद् दृष्टं भवति।

नात्र व्यक्तिरुपेक्षिताभवत् कदापि। विश्वकल्याणपरमभियानं सर्वथैव तद् विकासं स्वदृष्टि-सम्मुखे निदधौ। समाजमध्ये व्यक्तेरभ्युदयः केन प्रकारेण ध्यातोऽभवदित्यत्राधः स्थितो मन्त्रः स्फुटतया प्रकाशं क्षिपति—

"अभीवर्तेन मणिना येनेन्द्रो अभिवा वृधे।
तेनास्मान् ब्रह्मणस्पतेऽभिराष्ट्राय वर्धय॥"

भावोऽयं यदनया समाजव्यवस्था व्यक्तिं ज्ञानवतीं शौर्यशालिनीं वर्चस्विनीं धन-समृद्धिमतीं द्रष्टुमैच्छत्। किञ्च सेदमपि अचीकमत यत् तदीयं सर्वस्वमपि सदा विश्वस्य कृतेऽपेक्ष्येत तदोत्कृष्टमपि स्यात्। व्यक्तेरभ्युत्थानाध्वनि योऽपि प्रत्यवायो योऽपि प्रत्यूहः समुपस्थितोऽजायत तस्य विनाशनं विधाय व्यक्तिः सर्वदैवोत्कर्षं सर्वाङ्गीणमनायि। अत एव तु शास्त्रेष्वस्मदीयेषु प्रोक्तमेतत्—

"उदसौ सूर्यो अगादुदिदं मामकं वचः।
यथाहं शत्रुहोऽस्मान्यसपत्नः सपत्नहा॥"

व्यक्तीनां समवायस्यैवापरं नाम 'समाज' इत्येतद् भवति। चेद् व्यक्तिः स्वकीयं ज्ञानं धनं बलं वैभवं सकलमपि परिच्छदं समाजस्य कृते मनुते सदा सामाजिकी व्यवस्था दिनानुदिनमुन्नमति। न तदा काप्यप्रिया घटना घटितुमपि अवसरं लभते समाजे सर्वत्र शान्तिः सुखञ्च परिलक्ष्यते। भारतीया महर्षयस्तस्मादेव कारणात् तादृशानां संस्काराणां प्रसारणमुचितं मेनिरे यादृशैः संस्कारैर्मानवस्य सङ्कीर्णतानुदारतास्वार्थपरायणतादिमलग्रन्थिनी मलिनतापनीता भवति। षोड-शानां संस्काराणां प्रयोजनमेतदेव प्राधान्येन वर्तते यन्मानव उदारमना स्यात् क्षुद्र-दुर्भावनाविहीनः स जायेत समुत्थानपरिपन्थिनो दोषाश्चोन्मूलिताः स्युः। एतेऽप्येवंविधे महाप्रयाने ते प्रयत्नान्तरमपि नोपेक्षाञ्चक्रिरे। मानवः प्राक्तनसं-स्काराणां कर्मणाञ्च नानाविधानां पारतन्त्र्यात् उपदेशमात्रेण न सत्पथे स्थितो भवति। तदर्थं दण्डभयमप्यपेक्ष्यते। विना दण्डेन न लोको बिभेति। समाज-व्यवस्थाया रक्षार्थं नूनं राज-शासनस्यापेक्षा भवति। केवलराज-शासनं न पर्याप्तं

वर्तते। शासनासनाधिष्ठितैरधिकारिभिः सदाचारिभिः कर्त्तव्यपरायणैर्न्यायनिष्ठै-र्भाव्यम्। यावत् शासनसूत्रधारिणो न भवन्ति स्वकर्त्तव्यारूढाः सदाचारवन्त-स्तावन्मानवो जनता वा न सन्मार्गं सश्रयति। अधः स्थिताः पङ्क्यो लोकस्य-समाजस्य सत्पथारूढतायां कारणं शासनाधिकारिणो नृपमन्त्रिन्यायाधीशप्रभृतय एव सन्तीत्येव ज्ञापयन्ति—

"राजा वा कालस्य कारणम्, कालो वा राज्ञः कारणम्।
*इति ते संशयो मा भूत् राजा कालस्य कारणम्॥"*

यस्मिन् राष्ट्रे शासनकर्त्तारः प्रजाहितकारिणो भवन्ति, समाजस्योन्नायका भवन्ति, समाजमध्ये धनस्य वितरणमुत्तमरीत्या कुर्वन्ति, न केनापि वर्गेण सह विषमं व्यवहारमाचरन्ति, समस्तमपि लोकं सद्रीत्या सदाचारेण न्यायेन चालङ्कर्तुं, सर्वाङ्गीणविकासकारिणीभिर्योजनाभिर्देशमुन्नमयितुं समाजं च पोषयितुं निस्वार्थ-भावेन प्रयतन्ते तद् राष्ट्रमवश्यमेव सर्वविधमभ्युदयं प्रपद्यते। एवंविधेषु सामाजिकतत्त्वपोषकेषु राष्ट्रशुभाचरणव्रतेषु राजशासनाधिकारिषु देशः स्निह्यति। स तानेव शासनासीनान् प्रेक्षितुं कामयते। *एष मन्त्रोऽधः समुपन्यस्तः प्रोक्तमेव* भावं प्रति सङ्केतं विदधानः प्राप्यते—

"त्वां विशो वृणतां राज्याय
त्वमिमा प्रदिशः पञ्चदेवीः।
वर्ष्मन् राष्ट्रस्य ककुदि श्रयस्व
ततो न उग्रो विभजा वसूनि॥"

अर्थमन्तरेण न भौतिकमभ्युत्थानं सम्भवमित्येतत् कथनं नासत्यम्। संसारे जीवनं वोढुमर्थस्य पदे पदे भवत्यपेक्षा परं यद्येतत् इदं सत्यमस्ति तदा परत एतदपि सत्यं वर्तते यद् विश्वस्य हिताय समाजस्य मङ्गलाय राष्ट्रस्य च शुभाय मानवस्य निर्माणमपि नितान्तमपेक्षितमास्ते। विना समुचितं युक्तं मानवं, नार्थस्य जीवनं निरापदं भवितुमर्हति नार्थप्रदानामुद्योगागाराणां विविधशस्त्र-निर्माणकारिणां बृहद्बृहदुद्यमनिकेतनानां विद्युत्स्थालानां विद्युत्स्थालानां यन्त्रशा-लानां वा सत्ता देशं समाजं सार्थवन्तं समृद्धं कर्तुं हि शक्नुयात्। सदाचार-भ्रष्टानां कर्त्तव्यविमुखानां वैयक्तिकहितनिहितदृष्टीनां स्वार्थपराणां जनानां यस्मिन् समाजे सत्ता भवति तस्य समाजस्य कृते कृतं किमपि उपरिनिर्दिष्टमर्थ-विषयकं कार्यमुपकारि न सिद्ध्यति। समाजमध्ये विलासितां तानि कार्याणि

"न मे स्तेनो जनपदे न कदर्यो न मद्यप ।
नानाहिताग्निर्नाऽविद्वान्न स्वैरी स्वैरिणी कुत ॥"

परं साम्प्रतिकस्यापि भारतस्य रूपं हि अध समुपस्थापिते श्लोके मानचित्रे वीक्षणीयम्—

"सर्वे स्तेनो जनपदे सर्वे परधनाहर ।
सर्वे स्वार्थकथामत्त सर्वो धर्मपराङ्मुख ॥"

यत्र मानव स्वकीय प्रेम एव वाञ्छति, यत्र मानव परं हत्वा परकीय धनमपहृत्य परं निपीड्य परमभिभूय च स्वयमेव सर्वसुखभोगाधिकारी बुभूषति किं स मानव एतद्विधां कामनामपि कदापि स्वहृदये समुत्पादयितु शक्नुयात्—

"इम जीवेभ्य परिधिं दधामि
मैषा नु गादपरो अर्थमेतम् ।
शतं जीवन्तु शरद पुरूचीर
न्तर्मृत्यु दधता पर्वतेन ॥"

मानव निर्माणकारि उपादानं नानेकविधा कलापारगततास्ति, न उच्चपदसमवासिरस्ति, न धनाढ्यतास्ति न ऐश्वर्यशालितास्ति, न सुरूपतास्ति, न उच्चकुलतास्ति, न बहुसन्तानशालितास्ति, न उत्कृष्टप्रासादस्वामित्वमस्ति, न महार्घाम्बरधारणशीलतास्ति, न भूयानमस्ति, न वायुयानानि सन्ति, न चित्रपटा सन्ति, न समाचारपत्रपठनादिकञ्च वर्तते मानव निर्माणस्योपादानानि तु सन्त्यन्यान्येव । ईशावास्योपनिषद् एतादृशमेकमुपादानं मानवनिर्माणकरं ज्ञापयति यस्मिन् सत्यन्यस्यावेश्चैव न स्यात्—

"यस्तु सर्वाणि भूतान्यात्मन्येवानु पश्यति ।
सर्वभूतेषु चात्मान ततो न विजुगुप्सते ॥" इति ।

महर्षिर्वेदव्यासो मानवनिर्माणकार्युपादान एवमीदृश मूते—

"आत्मन प्रतिकूलानि परेषा न समाचरेत्"

मानवो येन निर्मीयते तदुपादानमुद्दिश्य पुन ईशावास्योपनिषदाह—

"कुर्वन्नेवेह कर्माणि जिजीविषेच्छत७ समा "

सैवोपनिषदुपादानान्तर बोधयति—

"तेन त्यक्तेन भुञ्जीथा मा गृध कस्यस्विद् धनम्"

मानवे मानवताया सञ्चारो यैर्भवति तानि साधनानि उपादानानि वा मनुर्वेति—

क्यन्ते ज्ञायते, तद्विधाय्यासमूले कापि प्रेरणास्ति। समयभूतस्यास्य राष्ट्रधनस्यैव विनाशो वस्तुतोऽत्यन्तासह्य स्थास्ति परमेतत्त्तरदायित्वभारवहनकारिणामधिकारिणा मध्ये कस्य हृदयं तद्विषयकव्यथाप्रहाराहतमस्ति? नैतादृक् कोऽपि अन्वेषणेनापि कार्यामादितो जायते।

श्रद्धेया श्रीपण्डितवरा श्रीरामशर्माणो राष्ट्रमूलाधारभूतनवतरुणेषु मानवतामाधातुमेकां सुलभां योजनां समुपस्थापयन्तो दृश्यन्ते। तद्योजनैयमतिय मासेन—

( १ ) पुराणां तत्पार्श्ववर्तिक्षेत्राणाञ्च सांस्कृतिकीं प्रवृत्तिं दृष्टौ निधाय प्रतिनगरं ह्येकस्य वा एकाधिकसंख्याकस्याश्रमस्य प्रतिष्ठापनं राष्ट्रनिर्माणस्य मूलभूतभूमिकास्ति। अतस्तत्तन्नगरनिवासिभिः शिक्षाशास्त्रिभिः स्वशिक्षालयीयच्छात्राणां कृते आश्रमसदृशच्छात्रावासाः स्थापनीयाः।

( २ ) आश्रमस्य गतिविधयो भारतीयसंस्कृत्यनुकूलाः स्युः। येन सः ( आश्रमः ) संस्कृतिसम्बन्धिनीनां सर्वासामपि वार्तानां सक्रियप्रचारकेन्द्रस्थानमिव भवेत्।

एतदर्थमाश्रमे ह्यादौ त्रीणि कार्याणि प्रारब्धव्यानि स्युः—

( क ) संस्कृतभाषाप्रचारोद्देश्यं पुरो निधाय संस्कृतपाठशालायाः एकस्याः सञ्चालनम्। तदीयाश्छात्राः शिक्षाव्ययभारनिर्मुक्ता भवेयुर्यथासम्भवमथ च तेषां जीवनचर्याऽत्यन्तसरला सात्त्विकी च स्यात्। येऽपि नगरस्य विभिन्नशिक्षणालयीयच्छात्राः सरलसात्त्विकजीवनयापने रुचिं निदधीरन् तेऽपि आशिक्षार्जनकालमत्र सरल-सात्त्विकजीवनयापनस्याभ्यासं कुर्वाणाः संस्कृतपाठशालातश्च लाभं गृह्णाना वसेयुः।

( ख ) आश्रमे विद्यासम्पन्नानामेकान्तप्रियाणां स्वाध्यायव्यसनिनां विद्याव्रतिनां वानप्रस्थिनां सन्यासिनां च निवासार्थं समुचिता युक्ता च व्यवस्था स्यात्।

( ग ) आश्रमे गोशालाप्येका लघ्व्येव स्यात्। तस्याङ्गविशेषत्वेन सा भवेत्। गोमातऽत्येवमेव विचार्य न *गोशालायास्तस्याः स्थापनं कार्यमपि तु गोवंशस्योन्नमनसुरक्षणादिप्रयोजनेनादर्शत्वेन* तस्या लघुतराया गोशालायाः प्रतिष्ठापनं करणीयम्। जनताया गोदुग्धप्रचारसम्बन्धिन्या मनोवृत्तेरुद्दीपनमपि आश्रमस्यान्यतमकर्त्तव्यं स्यात्।

( २ ) विद्यार्थिजीवन निर्माण व्यतिरिच्य संस्कृतभाषाया प्रचार, आश्रम पद्धत्या प्राच्य प्रतीच्यग्रन्थाना स्वाध्याय गोदुग्धप्रचारश्च इत्येतास्तिस्रो हि स्युराश्रमस्य प्रमुखक्रियात्मकप्रवृत्तय । गो दुग्धस्य महत्त्व प्रायेण सम्प्रति जनतया विस्मृत तस्या महनीयता सत्त्वगुणसमुत्पादनक्षमता जनता जानीयात् पुन इत्यतदर्थं गोदुग्ध प्रचारोऽपेक्ष्यते ।

( ३ ) प्रबन्धसमितिराश्रम सञ्चालयेत् । तस्या त्यागशीलास्तपस्विनो भारतीयसस्कृतिपरिपोषका एकताभावनाप्रसारणनिष्ठा सदाचारा सेवाव्रतैक-धारिणो विद्वास विद्यानुरागिण सुधियो धनिकाश्च सदस्या स्यु ।

( ४ ) पुस्तकालय एक आश्रमे प्रतिष्ठापित स्यात् । पुस्तकालये प्राच्याना प्रतीच्यानाञ्च ख्यातनाम्ना विद्वद्वराणां प्रणीता ग्रन्था अधिकतमसख्याया निधेया स्यु । सग्रहस्तथा कृतो भवेत् यथा सर्वेषामपि विषयाणा ग्रन्था सगृह्येरन् । वेदोपनिषद्दर्शन गीतापुराणस्मृति महाभारतरामायण कोष निरुक्तादि ग्रन्थास्तदीया भाष्यग्रन्थाश्च सर्वे एव ज्यौतिषायुर्वेदविषयका किञ्च भौगोलिक खगोलिका अथ च प्राचीना अर्वाचीनाश्च विज्ञानसम्बन्धिनो ग्रन्थाश्च सग्राह्या स्यु ।

( ५ ) व्यायामशालापि आश्रमस्य प्रमुखाङ्गत्वेन मता भवेत् । अत्र भारतीयव्यायामान् प्रति महत्त्व प्रदत्त स्यात् । सर्वविधखेलानामायोजन स्यात् शस्त्रास्त्र शिक्षा च प्रदत्ता भवेत् ।

( ६ ) प्रार्थनाभजनमप्याश्रमाजिरमलङ्कुर्वीत । तत्र प्र यह प्रार्थना स ध्या वन्दनम् यज्ञाश्च कर्त्तव्या स्यु । तत्र सर्वेषामपि छात्राणामुपस्थितिरनिवार्या भवेत्, समये समये विदुषां मता महात्मनाञ्च प्रवचनानि स्यु ।

( ७ ) छात्रावासस्य वातावरणम् एतादृश विरचनीय भवेत् येन छात्राणा प्रवृत्ति सन्मार्गं प्रति स्यात् । ब्रह्मचर्यविरोधिनीषु प्रवृत्तिषु कठोर नियन्त्रण प्रतिष्ठापित भवेत् । शास्त्रीयसगीतस्य साध्वी व्यवस्था स्यात्, स्वकार्यं स्वयमव कर्त्तव्यमित्यपा भावना प्रसारिता स्यात् । सवऽपि पुरुषार्थेन स्वजीवन स्वक र्याणि कुर्यु । न सेवकाना नियुक्तिर्वाञ्छनीया भवत् ।

एतादृशानामाश्रमाणां यदि देशे सर्वत्र स्थापना क्रियत तदा विश्वासोऽस्य द्रढीयान् यदचिरयमेव नवयुवसु मानवताया समुद्भवो भवेत् । ते याथार्थ्येन

मानवतायामात्मानं परिणमयितुं प्रभवेयुः। सम्प्रति संसारस्य कृते सच्चरित्राणां विशालहृदयानामुच्चविचारविभूषितानां विश्वबन्धुत्वाचारचारूणां तरुणानामपेक्षा वर्तते येन पुनः सर्वमपि जगत् सुखेन शान्त्या च श्वासमादातुं शक्नुयात्, भारतीयता पुनरपि जागृयात्, भूयश्च भारतं स्वीयमतीतं महिमानं गरिमाणञ्च समवाप्नुयात्। भारतीयताया लाभस्तदैवास्ति यदा सा मानवीयताया अङ्गं स्यात्, विश्व-परिवारस्य निर्माणे भागं गृह्णीयात्, समग्रमपि विश्वं स्वदृष्टेर्लक्ष्यं विदध्यात्। सा न केवलं रामं कृष्णं बुद्धं महावीरं गान्धिनं जवाहरमाद्रियेत अपि तु सा मुहम्मदस्य बन्धुत्वभावनां, लेनिन-गेजिनीवाशिंगटनानां स्वातन्त्र्योपासनां, कार्लमार्क्सस्य त्यागं, टालस्टाय-सेक्सपियर-गोपासो-क्रोपाटकिनादीनां विद्योपासनां, गैलिलियो-स्टीफेन्सन-न्यूटनादीनां विज्ञानसाधनामपि पूजयेत्। विश्वस्य श्रेय ऐक्यभावनाविभाविते मानव एव निहितमस्ति नान्यत्र। तद्गुणविभूषितो मानव एव मानवं पातुमर्हेत्।



## आशा हि परमं ज्योतिः

"मया स्वविचारैरेवाहमघानिषि" इत्येषा भणितिरस्मिन् पुंसि घटते य स्वस्वान्ते निराशां निरुत्साहं वा सन्निवेशयति । निराशावान् पुमान् निर्विण्णता मिषेण प्रवृत्त्यात्मान रोगाय समर्पयति स्वमल्पायुष्कताञ्च प्रति आसादयितु- मीहते । अत्र शरीरयोर्मध्ये सान्द्र सम्बन्धो वर्तते । उभयोरेवोभयस्योपरि पतति प्रभावः ।

अनेकाब्दव्यापिना परिश्रमेण यदुरमाभि सञ्चीयते तदेकपलवर्तिन्या निरा- शया झटिति विलुप्यते । मनोऽतितरामेव क्षिप्रतया दुष्यति । अत एव श्रुतिस्तत् पवितुं प्रेरयति न पुन पुन —

"यज्जाग्रतो दूरमुदैति दैव तदु सुप्तस्य तथैवैति ।
दूरङ्गम ज्योतिषा ज्योतिरेक तन्मे मन शिवसङ्कल्पमस्तु ॥"

महीधरादवतरण सरल पर तदारोहण भवति न सरलम् ।

निराशात्मक एकैको विचारोऽस्मान् पुर उपसर्तुं रुणद्धि । स अस्मान् पृष्ठमेव गन्तु धक्कयति । निराशायामाहोस्विन्निर्विण्णताया स्वस्य पातनमस्ति महानपराध । इदतो जनस्य गर्तमृतोदन्तप्रदत्व विशुनमेव । यस्य जनस्य निराशैव सम्पत् स न कदापि सफलतयानुगृह्यते ।

नवतरणैर्नवतरणीभिश्च सतत स्वजीवनम्प्रति भाव्यमाशावतीभि । भव० यपि नवयस्कास्तथाविधा । पर स्थितेर्विपर्यासे ते सत्वरमेव भवन्त्यपि निराशा । प्रायेण वय शृणुमो यदमुको नवयुवा परीक्षाया सफलताया अनधि गततया आत्मानमहिनत् । अमुकश्च तरुणो जीविकाया अनुपलब्धतया स्वम त्रुटेत् । परीक्षोत्तरणादिकमेव न जीवनस्य ध्येयमित्येतस्य तथ्यस्याविदितत्वादेव ते आत्मान घ्नन्ति ।

अनयैव प्रक्रियया यो निरुत्साहवान्, अस्ति च योऽव्यवस्थितचित्तो न स व्यापारिकेषु कार्येषु न च सामाजिकेष्वेव सम्बन्धेषु विश्वासार्हः । न कोऽप्येना दृशो जनस्य सौहृद विशिनष्टि, तस्यश्च एव शसति "नाह तत्र विश्वसिमि" ।

स्थितिरस्त्यननुकूलेति विचिन्तयति यो वणिक् ध्रुव स स्ववाणिज्य निरु-

णद्धि। प्रायेण दृश्यते यद् बहुधार्थिकी दुःस्थितिर्भयादिरसाहाद् वा प्रारब्धा जायते। प्रथमं तु निराशा केषुचन जनेषु प्रभावं प्रतिष्ठापयति ततश्च सा वन-ग्निरिव तेषु अध्यारोपितप्रभावेषु परमतीव्रतया प्रसरति। अत्युत्साहविहीना सेना पराजिता सेनेव। सा समराजिरं गमनात् प्रागेव निहता भवति। चेद् भवत्सु विजिगीषोद्वेलति तदा विजयभागो वियताम्। स्वमित्राणां मध्ये विजेतार इव सन्तिष्ठन्ताम्। सैनिकाः सम्पराये नैपोलियनस्यागमनं माहात्म्याय समागता नवाङ्कशिनीमिवान्वभूवन्। बहुषु युद्धेषु तु स केवलं नैजप्रचण्डसाहसबलादेव विजयं हस्तगतञ्चकार। पौरुषं साहससमुत्साहमाशाञ्च न कदापि स तत्याज। वाटरलो लोर्डीप्राहीमस्य विशालां सेनां प्रेक्ष्य चेदभेष्यत् न स स्वसैनिकश्रेणी-रुत्साहयिष्यत्, चेत्स 'शत्रो सेनास्ति भूयसी बलीयसी च, न वयं जयं लप्स्यामहे, विजयः सर्वथास्त्यसम्भव, सम्प्रति तु जीवन-रक्षाया न कोऽपि मार्गं, युधि मरणमेव साम्प्रतमेकमात्रं शरणम्" इत्यवदिष्यत्, तदा किं स पानीपतयुद्धे विजयश्रियं वरीतुं क्षमोऽभविष्यत् किञ्च भारते मुगलराज्यस्याधार शिलां स्थापयितुमशक्ष्यत्। कदापि न। उत्साहविहीने सति सेनापतौ, न कदापि सेनोत्साहवती भवितुमर्हति।

विजय इव समृद्धिरपि मनस एव लभ्यते। मनुजो यदा भवति निराशो हताशो वा तदैवासावात्मयोग्यतायां सन्देग्धि। सन्देहपदं वस्तु मानवस्य दिशामेव परिवर्तयति। दिशाया परिवर्तनात् स स्वलक्ष्याद् दवीयान् सञ्जायते। अनुत्साहो हि सदैव कार्यं भनक्ति। स दारिद्र्यं जनयति। लक्ष्मीरुत्साहशून्ये नरे जुगुप्सते। सा ततो दूर एव तिष्ठासति।

वयं किमपि कार्यं परमोत्साहेन प्रारभामहे। तत्र सफलताधिगमनस्यापि महतीमाशां निबध्नीमः। परं यदैव समुदेति कापि बाधा, वयमुद्विजामहे। पुनस्कार्यमनुष्ठातुं वयं योग्याः स्मो न वेत्यपि सन्देहोऽप्यस्मासु समुत्पद्यते। यो विधिरस्माभिर्गृहीतोऽस्त्यपि स युक्तो न वेत्येष च विचारोऽस्मन्मनो व्यथयति पुनः पुनः, एतान्दौर्बल्यध्वनीन् यथा यथा वयं ध्यानपथमध्यारोपयामस्तथा तथा ते प्रचुरप्रचुरतरबलसमवाप्ते समासादयन्त्यवसरम्। अन्ततो गत्वा वयं तत्कार्यं परित्यक्तुमुद्यतामहे। हा हन्त, सदैव हि अस्मदिच्छानुकूलाया परिस्थितेरभावादेव वयमस्मादुत्साहश्लथाद् भ्रश्याम। कस्माच्च वयं विचारयाम यज्जीवन मार्गो नाऽस्त्येकान्ततो हि ऋजु। नास्ति जीवनाध्वा नसाग्रभागगामी एव।

पन्था नतोन्नतोऽपि भवति । तन्नोन्नतता विषमता च भवति । भवति च स अनेकचक्रक्रमचक्रतुरः । तत्रास्माभिः सोत्साहं ससाहसञ्च यात्रा कर्त्तव्या ।

सङ्क्रामकरोग इव निराशाया कीटाणवो भवन्ति । तेभ्योऽतिदूरं एव स्थानव्यम् । तैः सह सौहृदं नापद्‌हितं, ये जीवने न सफलतामधिगतवन्तोऽथ च न ये आत्मनि विश्वसन्ति न च स्वेतरेषु । निराशावादिना वार्तायाः श्रवणेन मस्तिष्कं निराशामयमेव स्यात् । तदुन्नतिपथं विहायावनतिपथोन्मुखं भवत् । एतादृशी हि वातावरणेऽवस्थानेन सकला अपि आशाङ्कुराः शुष्कतां गमिष्यन्ति ।

अपि भवद्भिर्न दृष्टा असफलैर्जनैः सार्धमुपविष्टा असफला जनाः, किञ्च सफलैः साकमासीनाः सफलाः । "सङ्गत्या मानवो ज्ञायते" इत्येतत्कथनमत्रापि घटते । अत समवाप्तसाफल्यैर्जनैर्मः तत्र प्रयातव्यं यत्र निष्फलतागतैः प्राणिभि स्थीयते । न दुर्बला जना आश्रयणीयाः, न च दुर्बला विचारा श्रोतव्याः न दुर्बला सङ्कल्पाः कर्त्तव्याः । सततमुच्चा विचारा निधातव्या उच्चैष्वेव स्थानेषु स्थातव्यम् । उत्साहश्चेन्मनसि राजेन सदा पौरुषार्थं प्रेरणा लब्धा भवेत् । उत्साहरहितं मनो न कदापि वरम् । तदस्मानात्मविश्वासादपि भ्रंशयति । मनसः खिन्नत्वेन स्फूर्तिरस्मान् व्यवस्थां काप्यत्र पलायते, अस्मदभिमतानि सर्वाणि च वस्तूनि न परित्यज्य प्रतिष्ठन्ते । सर्वा अपि अनभिलषिता स्थितयः चित्रमेव प्रकटी भूयास्मान् परिवष्टन्ते । मनस आशा विश्वासवत्त्वेन न केवलं जीवनं प्रसादमनुभवति प्रियप्रियतराणां पदार्थानामपि समवाप्तिर्जायते ।

अभ्यासेन आशोपचीयते । आशाया संवर्द्धनमस्मन्मानसिकबलोपरि भव त्यध्यारूढम् । मनोबलस्य कृशत्वे सा कृशतां गच्छति तस्य बलवत्त्वे सापि बलवती भवति । न मित्राणि सम्पत्समृद्धम न च धनसम्पद् एव सम्पत्समृद्धन मस्मद्धनन्तु वस्तुत आशैवास्ति । न तया वयं कदापि त्याज्याः । तस्या सद्भावेन वयं मित्राणां धनसम्पदाञ्च समूहोऽनायासेन कर्तुं पारयेम । स यदि स्वास्थ्ये नष्टे, आशा साहाय्येन जीवनं सघपसूत्रसफलतापूर्वकं वितनितुं शक्नुम । आशा जीवनपोतस्य सञ्चालिकाऽस्ति, तदभावे भवति पोतो विनष्टः । वस्तुतस्तु आशां विना जीवनं शव इव । आकृतिदर्शनमात्रेणैकस्य तस्येयं ज्ञानं कर्तुं शक्यम् । आकृतेरस्मिततया खिन्नतया च असफलता पराजयं बोधयितुमीभवति । सफलस्य मानवस्याननं तु सस्मितं प्रफुल्लञ्च दृष्टं भवति । असफलताया बोधनाय विदीर्णमलिनवाससो धारणं नापेक्ष्यते । नयनयोस्तरलतया स्कन्धयो

परिगद्धतया, मुखस्य मुद्रया च सर्वमेव विदितं भवति। मुखाकृतिः सूचना-पट इव वर्तते। तत्पठनेनैव मनसो भयोत्साहनिराशादिकानां सत्ताया ज्ञानमनायासं सञ्जायते।

निरुत्साहोऽस्मान् विप्रलभते। 'न वयं योग्या'—इत्येतं प्रत्ययं सोऽस्मासु जनयति। परं वस्तुस्थितिर्नैतादृशी भवति। असाधारणयोजना-समुत्थापनानेहसि एष (अनुत्साहः)समुत्पद्य सर्वमपि आयोजितं समूलं निरस्यति। अयं कार्यारम्भविषयिणीमिच्छामेव हिनस्ति।

कश्चित् नवतरुणो विश्वविद्यालयात् काञ्चन परीक्षामुच्चतरश्रेण्यामुदतरत्। वृत्त्यर्थं यदा स इतस्ततो भृशं यत्नं विदधानोऽपि साफल्यं न समवाप तदा स कस्मिंश्चिज्जल-पानगृहे पान-पात्रादिप्रक्षालनस्य कार्यं कर्तुमारभत। स निराशो भूत्वा दिन-यापनपरो जातः। निराशा तस्मिन् पूर्णं स्वाधिकारं प्रतिष्ठापितवती तेन न तस्मिन् कदापि स्वमलिनवस्त्रस्य प्रक्षालने अभिलाषः समुदपद्यत न तस्मिन् स्वकेश-संस्कारार्थमेवोत्साहोऽजागः। तदीया दशातितरामेव तत्प्रति घृणोत्पादिनी संवृत्ता। एकदा रात्रौ यदा स उद्याने प्रसुप्त आसीत् स्वप्ने 'आत्मनि विश्वसिहि' इत्येतदाकाशे लिखितमपठत्। ततस्तु स प्रत्यूष एव उत्तस्थौ। केशान् सञ्चस्कार, वासांसि च निर्णेजे। पुनश्च वृत्त्यर्थं प्रचक्रमे। न सम्प्रति तस्याकृतौ निराशासीत् च निर्विण्णता न च मलिनता। नासौ कार्यालयेषु दीनः निम्नश्च सन् प्रविवेश। सः यत्रापि यथावाशाविश्वासाभ्यां सह ययौ। तस्याकृतौ सर्वत्रापि प्रसन्नतोत्साहः साहसञ्च पर्यवेक्ष्यन्त। येनापि सह वार्तां कृतवान् आत्म-सम्मानमविलुम्पन्नेव वार्तां कृतवान्। एतेषां गुणानां प्रभावात् स प्रायेण विना विलम्बं वृत्तिमलब्ध। तद्रात्रिगतः स्वप्नः सदैव तस्य पथप्रदर्शको बभूव। गच्छता कालेन स लक्षाधीशश्च संवृत्तः। तदीयमुत्साहमात्मविश्वासञ्च विलोक्य 'इमं जनं निराशा कदापि ययाधे—इत्येतत्र कोऽपि मनस्यपि कल्पनामपि कर्तुं शशाक।

"आत्मानं विद्धि" इत्येतस्य दर्शनवाक्यस्यार्थ एवास्ति—आत्मनि विश्वसिहि इति।

आशा नाम मनुष्याणां काचिदाश्चर्यशृङ्खला ।
यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति पङ्गुवत् ॥

विपद आयन्ति, निर्यान्ति च । अत आपत्सु न मुह्येत् । तत्रापि न कदापि निर्विण्णः स्यात् । अज्ञानात् दुःखो जायन्ते दुःखञ्च आपदमामन्त्रयन्ति । चेदापद्भ्यो मुक्तिः स्यादित्येतदभिलष्यते तदा तस्मादज्ञानादात्मा रक्षणीयो यद्येनोऽस्माकं अज्ञाना, दुःखञ्चापदोऽजीजनन् । अनुतापो न लाभप्रदः । स तु सन्तापमेव जनयति । सन्तापेन न जातु आत्मा निपीडनीयः । 'अलं चिन्तयित्वा किमपि न चेदवशिष्यते तदेदमपि नावशिष्येत्'—इति दार्शनिको निगदति ।

अहं तु जनं जानामि योऽसफलतायां सत्यां केवलमिदं वक्ति—"न कापि चिन्ता, आगामिनि काले सर्वमपि मनोऽनुकूलमेव सम्पद्येत ।"

या वार्ता अस्मान् परिक्लामयन्ति; सन्ति च या अप्रतिकार्यास्तासां स्मृतिर्भवति परमदुःखप्रदायिनी । ता सत्यमङ्गलानां भूमयः । सर्वथैव सन्ति विस्मरणार्हास्ताः । भाविकालविनाशनपरत्वात् तासां, तासामुत्सादनमेव वरम् । 'न सिद्धिः साध्ये सम्भवे'त्येतां दुर्बलां धारणां मनसि समुत्पादयति निराशा । परमितिहासोऽत्र साक्षी । स अस्माकं पुरोऽनेकान् नरान् उदाहरणत्वेन प्रस्तौति एतादृशान्, येषां सर्वेऽपि सम्मुखा मनोरथाः खण्डानां शतकेषु पूर्णा अभूवन्, ये न केवलं प्रमादमाचरितवन्तोऽपि तु अघन्यानपराधानपि कृतवन्तः परं सौहार्दवार्धक्ये वा तेषां स्थितिरेव पर्यवर्तत । ते निन्दनीयान् संस्कारान् विहाय पुर उपस्थितवन्तो नव सफलञ्च स्वकीयं जीवनं घटितवन्तः ।

भवन्त्यापत्स्वप्याशावन्तः असफलतास्वपि च भवन्तु आशावन्तः । निराशाया अङ्गीकरणेन यदि भवन्तः कमपि लाभं न प्राप्नुवन्ति यदि तस्या अवलम्बनेन भवदीयं मस्तिष्कं न शान्तिमभ्युपैति यदि तदाश्रयणेन न भवदीयं स्वप्निलमुत्तिष्ठति तदा कस्मात् भवन्तस्तामुन्मुखयन्ति तामवलम्बन्ते तस्या उररीकरणेन भवन्तः शान्तिं सुखं प्रसन्नतामुत्साहमथवा यमेव सततमनुभविष्यन्ति । शान्त्यादिसद्भावेन भवतां प्रतिभा विवेकशक्तिश्चरोत्तरं वृद्धिं यास्यति सा निश्चिततां प्राप्स्यति । समुन्नताबुद्धिर्विचारणा प्रयाता मनीषा भवतां कृते प्रशस्तं प्रदर्शयिष्यति सा भवन्तं प्रति न मार्गं प्रदर्शयिष्यति यमाश्रित्य नूनं भवन्तः स्वान् मनोऽभिलषितान् पदार्थानधिगन्तुं प्रभविष्यन्ति । अत सदैव

आशोपासनीया। निराशया तु न कोऽपि लाभो जायते। सा तु अस्मत्सुख-शान्तिसुमत्यादीनि सर्वाणि धनानि हरति अतः सर्वविधतया सा हेयैव वर्तते।

एतावत्कालपर्यन्तं चेद् भवन्त इत्वरतायां रुचिं निहितवन्तस्तर्हि अतः परं भवन्तु सावधानाः। अतीतं विस्मारयितुं मनसा वाचा कर्मणा प्रयतन्ताम्। अपरिहार्य्येऽर्थे न स्वकीयं जीवनं विध्वंसयन्तु। अनुशयं विधाय जातासु घटनासु, न स्वकीयं दुर्लभं मानवीयं जनुः कलुषयन्तु कदापि। ये दस्यवो भवज्जीवन-धनमेतावन्तं कालममुष्णन् तांस्ततो दूरीकर्तुं किं न समायातः समयः? तस्य पुरातनस्य पत्रस्य पठनेन को लाभो यत्पठित्वा बहुला दुःखदाः स्मृतयः प्रस्फुटेयुः। शुष्कस्य क्षतस्य पुनर्हरितीकरणं न वरम्। जानाम्यहं तां प्रौढां महिलां या स्वकीयोन्मत्ततरलतारुण्यकालादेव एतादृशस्यैकस्य प्रणयिनः पत्राणि नितान्तमेव सावहिततया निगूह्य निदधाति योऽतितरामेवायोग्यः सिद्धोऽभूत् किञ्च यो हि तस्यामतिपरुषमन्यायमयञ्च व्यवहारमन्ववर्तत। सा तानि पत्राणि प्रायेण यदा तदा पठति ततश्च रोदिति चिरम्। निराशाजनिताः स्थितयोऽभिहि-तानि पत्राणीव सन्ति। ता मुधैव व्यथयन्ति नः।

आभ्यन्तरिकीं शान्तिं निराशा चूर्णयति। तस्मान्मनीषिणो न कदाप्यात्मानं तदधीनं विदधति।

"न शोचनीयं तत्"—इत्येतद् वाक्यं न विस्मरणीयम्। निवारणार्थं कृतेष्वपि समीचीनेषु प्रयासेषु, यद् घटते तद् घटताम्। वस्मात् कारणाद् वयं तत्र शोचाम क्रन्दाम च यानि सन्ति अप्रतिकार्याण्यपरिहार्य्याणि च। आघाता धैर्य्येण शौर्य्येण च सन्ति सहनीयाः। न तैर्मनः स्वकीयं क्षेतव्यम्। सेवासमितेः कार्य्यालये कस्यचनाधिकारिणः पीठिकोपरि लिखितमासीत् "सञ्जाता आहतिः केन प्रकारेण भवद्भिः सोढा" इत्येषोऽस्ति सरलः स्वस्थश्च सन्देशः। अत्र भवदीयं साहसं परीक्ष्यते। केन विधिना भवद्भिः क्षतं सह्यते? अपि किं ततो पलमा-साद्यते भवद्भिः किंवा चिरं तदाहतैर्भवद्भिः सदैन्यं क्रन्द्यते खिद्यते शप्यते च? निराशावान् पुमानेव क्षतेषु विषीदति। आशावन्तं तु बाधाः प्रताडनाश्च साहस-पूर्वकं पुरो गन्तुं प्रेरयन्ति।

आशां विना संसारोऽयं क्षणमपि जीवितुं न प्रभवति। आशां परिगृह्यैव स कठिनतमानि दुःसाध्यानि च कार्याणि कर्तुं प्रवर्तते आशामवलम्ब्यैव स तत्र सफलताश्रियमपि लभते। जगति यानि सहस्राणि अभ्रंलिहानि भवनानि

प्रेक्षितानि भवन्ति नान्याशयैव निर्मापितानि सन्ति। आशैव जनान् महत्सु व्यापारेषु योजयति। आशयैव वणिजो वाणिज्येषु प्रचुर धन राशिं प्रक्षिपन्ति। आशयैव छात्रा कठोरतमेऽध्ययनकर्मणि सन्निविशन्ते। आशयैव ते परीक्षासु प्रविशन्ति। आशयैव विज्ञान विद्याविशारदा जीवनापहारिष्वपि भयङ्करेषु प्रयोगेषु अहोनक्त धावन्ति। आशयैव माता पितरौ स्वसन्ततिं परिपालयत, पोषयत, वर्धयत, पाठयतश्च। आशयैव शासनम् उद्योगपतयश्च उद्योगागारान् विद्यालयान् सेतून् विशङ्कटान् बन्धान् बृहद्बृहत्तरान् यन्त्र तन्त्रनिचयान्, बहुवर्षसाध्यान् प्रासादान् भूधराकाराणि दुर्गाणि च निर्मापयन्ति। भावोऽय कामन्याशामेवादाय जगति प्रत्यह महामहायोजनानि भवन्त्यायोजितानि। जगन सर्वेऽपि व्यवहारा आशाधिरूढा सन्ति। उपक्रमणानि सर्वाणि आशाम पेक्षन्ते। सफला अपि सफला आशा प्रतीक्षन्ते। अपि किमितरसम्भव यदाशाम न्तरण किमपि कार्यं प्रारब्ध भवितुमर्हत्?

अस्मदीया श्रुतिस्मृतय सन्ति आशावादिन्य ता सततमाशा परिपुष्णन्ति।

"पश्येम शरद शत प्रब्रवाम शरद शत शृणुयाम शरद शतमदीना स्याम शरद शत भूयश्च शरद शतात्।"

इत्यादिकासु पावनगिरासु आशादेव्या मङ्गलमय दर्शन को न कुरुते?

अपि किम् आशाविहीनो हि कृषीवल कृषिकर्मणि प्रवृत्तो भवितुमर्हति? तस्य पुरतस्तु असख्याता प्रत्यूहा स्थिता सन्ति। अचिरेणैव वर्षा दुर्भिक्ष-तुषार हिम कीटप्रभृतिषु विघ्नेषु एकतमो हि विघ्नस्तस्य कृषिं विध्वसयितु क्षमते पर जानानोऽपि सर्वविधानत्युपद्रवान् स आशा मनसि निधायैव मधुरा, सत्र दारुणे कर्मणि रात्रिदिव प्रवृत्तो जायत एव। स शैत्य सहते, कठोरमातप सहते, वर्षाश्च भीषणा सहते पर न ततो विरमति। आशादेव्या प्रसादेन तदीय स्वेदावह कर्कश श्रम क्रमश्च मनोऽनुकूल फलमपि विन्दति। एवा आशैव विद्यते यस्या सबल पाणि गृहीत्वा सनानी सम्पराणिरे युध्यते। किम् आशा विरहितो भूस्वामी सुदर्शन आत्मानमवतारयितु समर्थ स्यात् आशा जीवने जीवन सञ्चारयति। वस्तुत आशैव जीवनम्, निराशैव मृत्यु। मनस्तावदव जीवति यावत् तत्र आशा सञ्चरते। आशाया विहीन भूत्वा मन स्थातु नार्हति, तन्म्रियते। को न वेत्ति मनसि सति निराशे सर्वमपि विलीयते सति मनसि आशावति शतमपि विनष्टमपि सर्वं समवाप्यते। मनो यदि प्रत्यूहान्

प्रत्यूहत्वेनागच्छति तदा प्रत्यूहा अवश्यमेव स्थास्यन्ति यदि तत्र तान् तथा-त्रिधान् मन्यते तर्हि तेऽविलम्बेनैव विलीयेरन्। चेत् तत् निराशायामपि आशाया पूत दर्शन कर्तुं चेष्टते तदा सकलामपि जगतीं तदाशासमुल्लसितां प्राप्स्यति। असफलतायामपि तत् सफलताया दर्शन विधास्यति। दुःखेऽपि सुखस्य छाया, तद्दृष्टिगता भविष्यति। कण्टकाकीर्ण पन्था अपि तस्य सुमनोभ्योऽपि मृदुतर प्रतिभास्यति। मार्गे स्थिता शङ्कुसमाकुला गुल्मा अपि नवकिसलयावलिरिव प्रतिलक्षिता भविष्यन्ति। तद् भयङ्करास्वपि घनघटासु घनश्यामस्य मनोज्ञां मूर्तिं द्रक्ष्यति। निदाघकालीनस्य भास्करस्य प्रचण्डरश्मि-वृन्दमपि शारत्कालीनसुधाकरस्य सुधावर्षिरश्मिनिकुरम्बमिव तदनुभविष्यति। तद् हिमान्वित समीरोऽपि हेमन्तस्य, सुखयिष्यति। वर्षर्तोर्भयावहा विभावर्यपि तस्य भीतिमपनेष्यति। उद्देशोऽयं यस्मिन् मनसि आशा नाम तरङ्गिणी प्रवहति तदेव मन सफलतामश्नुते। तदेव अविचल भवत् स्वबलनापारेण शिलामपि दलयति, तदेव भीषणमपि विशालतरमपि नानाहिंस्रसत्त्वसङ्कुलमपि कान्तारम् छिनत्ति। वस्तुतस्तु आशापरिपोषित मनस्तु अग्निं शीतयितुं हिम ज्वलयितु वात निरोद्धु, व्योम मूर्तं विधातुं, महीमुन्नमयितु, गिरीन् उद्धर्तुं, सिन्धु स्थलयितु च प्रभवति।

आशाया प्रयोगो यदि आत्मन उत्थापनाय, आत्मन कल्याणाय, आत्मनो विकासनाय क्रियते, यदि तदुपयोगो विश्वस्य मङ्गलमाचरितु, जनता समाराध यितु, श्रेय सम्पादयितु विधीयते तदा वस्तुतोऽस्ति सा मातेव परमहित-कारिणी। पर यदि अपकर्षपथोपरि प्रयातु तस्या वरण केनापि क्रियते तदा तु न सा भवति साधुजनप्रशंसिता। नास्ति तस्या परमार्थ परिपन्थिरूप शुभावहम्। क्षुद्रप्रयोजनार्थं यदि परिगृह्येत सा, तदा मानवमनुपद कदर्थयत्। तुच्छाभिलाषपरो जनश्चाटुकारिताया ता प्रयुनक्ति। एतादृशो हि क्षुद्रसङ्कीर्ण हृदयो जनस्तद्वद्धो भूत्वा अवमानना भर्त्सना च सहते सदैव धनिनामधिका रिणाञ्च।

'आशा' इत्येतत् पद ये सुधिय 'स्पृहा' किंवा तृष्णा' इत्येतस्मिन् अर्थे प्रयुञ्जन्ति ते आशामतितरा निन्दन्ति। ते वदन्ति—

"आशाया ये दासास्ते दासा सर्वलोकस्य।
आशा येषां दासी तेषा दासायते लोक॥"

सत्यमेव, आशा नितरामेव भ्रामयति मानवम्। भर्तृहरिस्तु तमेव जनं दरिद्रं मनुते यस्याशा(तृष्णा)स्ति विशाला।

"वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः
सम इह परितोषो निर्विशेषो विशेषः।
स हि भवति दरिद्रो यस्य तृष्णा विशाला
मनसि तु परितुष्टे कोऽर्थवान् को दरिद्रः॥"

धनिनस्तु आशावतो जनान् स्वक्रीडनकान् इव मन्यन्ते—

"एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः॥"

नाशावान् सुखमासादयति। उक्तं च—"आशा हि परमं दुःखं नैराश्यं परमं सुखम्।" वस्तुतो यथा लोभ-स्वार्थ-स्पृहा-रागादिदुर्गुणानां वृद्धिर्भवति न सा (आशा)महारता। सैवास्ति ग्राह्या यया जीवने वल-पौरुष-साहसोत्साहप्रगतीनां सद्गुणानां विकासो जायते। एतामेवोद्दिश्योक्तम्—"आशा हि परमं ज्योतिः।"



## सर्वेषामपि धर्माणां सदाचारः प्रशस्यते

चतुर्विधस्यापि पुरुषार्थस्य साधकत्वान्मानव जीवनस्य, तदेव सर्वेषामपी तरेषामसुभृता जीवेभ्य श्रेष्ठ मतम्। पर दु खमिद लब्ध्वापि भगवदनुक्रोशेना न्तेनास्माभि प्रायण निखिलैरपि मानवैस्तस्य विधीयते दुरुपयोग एव। येन मानवजीवनेन परममङ्गल भवितुमर्हति, यनाविनश्वर आनन्दोऽवाप्तु शक्य, येन जरामरणव्याधिप्रभृतिभ्य सकलेभ्योऽपि कष्टेभ्यो मुक्ति सम्भवा, यन जगति सर्वेऽपि मनोऽभिमता पदार्था अधिगमनीया सञ्जायन्ते, येनोच्चतममपि पद, सर्वस्पृहणीयमपि यश, सर्वविधसुखप्रदमपि धन, द्रुत सर्वेऽपि मानसिका कामाश्च साध्या भवन्ति तदेव जीवन मानवो हन्त, व्यर्थमेव सदा गमयति। परमेतेषा सर्वेषामपि प्रदाने मानवीय जीवन तदैव क्षम जायते यदा तत्सदाचा राधारशिलोपरि प्रतिष्ठापित स्यात्। सदाचारस्य श्लाघा सर्वेष्वपि शास्त्रेषु कृता दृश्यते विद्वास साधवो महात्मानो धर्मा मानवश्च सर्वे एकस्वरेण सदाचार भृश प्रशसन्त श्रूयन्ते। सदाचारस्य महिम्नि आम्नातम्—

> "सदाचारात्कुले जन्म सदाचारात्सुभाग्यभृद्वि।
> सदाचारात्सुभा विद्या सदाचारात् कलामला॥
> सदाचाराद् यशो लोके सदाचारात्सुख दिवि।
> सदाचाराद् भवेन्मोक्ष सदाचारो हि कामधुक्॥
> य सदाचारमुत्सृज्य वर्तते कामतो जन।
> श्रिय स लभता काम श्रेयस्तस्य न विद्यते॥
> सदाचारमयीं नाव समारुह्य मुमुक्षय।
> पार याता भवाम्भोधेर्भूयो भीतिं न भेजिर॥

काम कोऽपि—

> 'जातिर्यातु रसातल गुणगणस्तस्याप्यधो गच्छतु
> शील शैलतटात्पतत्वभिजन सन्दह्यता वह्निना।
> शौर्ये वैरिणि वज्रमाशु निपत त्वर्थोऽस्तु न केवल
> यनैकेन विना गुणास्तृणलवप्राया समस्ता इमे॥'

इत्याद्यभिधाय गुण शील शौर्यादिभ्योऽर्थं श्रेष्ठ प्रतिपाद्य तेनात्मानमाढ्य भुवि विदध्यात् पर जगद् यत् सम्मान सदाचारवन्तम्मति प्रददाति न तद् धनवन्त म्प्रति। नात्र ससारे विद्यावता न ऐश्वर्यशालिना न परमोच्चपदासीनाना न सुन्दराणा, नोदग्रवशसम्भवाना न कलाकोविदाना न पण्डिताना नान्येषामपि केषा तादृशी पूजोपासना प्रतिष्ठा च भवति यादृशी सच्चरित्रस्य मानवस्य। लोकोऽयमखिल सच्चरित्र एव श्रद्धत्ते, तत्रैव विश्वसिति, तत्रैव हार्दिकीं प्रीति निबध्नाति, तत्रैव नैज सर्वस्वमपि सन्निदधाति। आस्ता तावत् सच्चरित्रो गुणविहीन कुरूपो निर्धनो वा, ऐश्वर्यशून्य उच्चपदानारूढो दुर्बलो वा पर स सर्वेषामपि मानवानामादरास्पदमनुकरणीय प्रशसापात्रञ्च सञ्जायते।

श्रेय प्रेय साधक चारित्र्यमिद केन विधिना लभ्य भवतीत्यत्राहित विचार कर्त्तव्य। सदाचारस्याधिगमनार्थमाद्य श्रेष्ठ प्रशस्ततमश्चोपाय स सगति सुधीभि ममन्ततविपुलानुभवैर्वृद्धै साधुभि शास्त्रैस्तत्त्वदर्शिभिश्च प्रतिपाद्यते। वस्तुत सत्सङ्गात् परो न महीयान् ज्यायाश्चोपायोऽन्य प्रतिलक्ष्यते। सत्सङ्गतिरखिल कलाध्ययनोत्सुकाना शिक्षाशाला पुमर्थजलयाचकचातकाना प्रावृट, जनमनोर थपूरणाय कल्पवल्लरी, श्रुतिकामधेनो पय, ससार सागरस्य सुधा, कलेवरका सारस्य कादम्ब, ज्ञानेन्दोरुदयाचल, दोषाणामस्तगिरिशृङ्ग, गुण रत्नाना सागर, शोकानलोपशमनमल्लिल, सुख-समुद्रसमाकर्षण शशी, मद नाग विमर्दनकृत् केशरी, आचारचन्द्रकिरणपरिपूरयित्री पौर्णमासी, विद्या प्रणयिनी प्रणयवर्धनसु कुशलदूती किञ्च तृष्णातरङ्गचलित कामक्रोधादिमकरभयङ्कर विषय वासनामसी समाकुल मोह भ्रम भीषण लोभाम्बुपरिप्लुत ससृति समुद्रमुत्तितीर्षोर्मानवस्य नौकेति गीयते मनीषिशिरोमणिभि। सत्यमेवोक्त तामुद्दिश्य—

"मातेव रक्षति पितेव हिते नियुङ्क्ते
कान्तेव चापि रमयत्यपनीय खेदम्।
लक्ष्मीं तनोति वितनोति कलाकलाप
सत्सङ्गति कथय किन्न करोति पुसाम्॥
पापान्निवारयति योजयते हिताय
गुह्य निगूहति गुणान् प्रकटीकरोति।
आपद्गत च न जहाति ददाति काले
सत्सङ्गति कथय किन्न करोति पुसाम्॥

धर्मं प्रवर्धयति पापमपास्य दूरं
नि:स्वान् पुनः समुपसर्पयतीन् करोति ।
कामान् प्रपूरयति मोक्षमथार्पयन्ती
सत्सङ्गतिः कथय किं न करोति पुंसाम् ॥"

द्वितीय उपाय सच्चरित्रताया समुपार्जनार्थमस्ति स्वाध्याय । 'स्वाध्यायान्मा प्रमद' इत्येतच्छ्रौतीय वाक्य स्वाध्यायस्य प्रकृष्टतरतामुपादेयताञ्च स्फुटतयैव प्रकटीकुर्वाण प्रेक्षित भवति। योगसूत्रकारेण महर्षिणा पतञ्जलिना नियमेषु[1] पञ्चसु स अन्तर्भावित । चरित्र निर्माणे, मानवताया विकासने, आभ्यन्तरिकस्य बलस्य समुन्मीलने च तस्य महान् अभिनन्दनीयो योगो भवतीत्येतद्धेतो तत्र तस्य सन्निवेशनमुच्चैरुद्घोषयति। अर्जुनमुपदिशन्[2] भगवान् कृष्णो वाङ्मये तपसि त गणयति। एतेन च तस्योपकारकस्य प्रमाणीभवति वैशद्येन । स्वाध्यायाद् ज्ञान शक्तिर्वर्धते, विविधा नवनवा भूयासश्च विषया अवगम्यन्ते, विचारा परिष्क्रियन्ते, हृदयस्य सङ्कीर्णता अपह्रियते, मनसो मालिन्यमपनीयते, ज्ञानाना रक्षण जायते, विदुषा विचारा सर्वत्र प्रसरणस्य सदवसरमासादयन्ति; विद्याधनमुत्तरोत्तरमेधते, वक्तृत्वकला परिपुष्यति, साहित्यश्री परिस्फुरति । एतावानेव लाभो न स्वाध्यायादवाप्तेनालौकिकेनालोकेन मानव स्वस्य परेषा च कृते गन्तव्यमध्वान प्रष्टु दर्शयितुञ्च शक्नोति । स ऋषीणा विद्वद्वराणा च ऋणान्मुक्तो भवतीत्थ स्वाध्यायाद् असख्याता लाभा भवन्ति । तदवाप्तेन दिव्येन ज्योतिषा चरित्र तु भवत्येवोज्ज्वलतर चारुतरञ्च ।

सदाचार प्रिय समुन्नेपेऽन्यतमो हेतुरस्त्यागो मत । एष एव गुण एतादृगस्ति येन तत्तत्कालुष्यजनिता जीवनगता सर्वेऽपि दोषा प्रक्षाल्यन्ते, वस्तुतो मानव-जीवनस्य साफल्यमेवास्मिन् गुणे निहित वर्तते । एष गुणो महामन्त्र इव विद्यते तत्प्रभावादमोघात् स्वीया सकला अपि स्वार्था पर्यवस्यन्ति । भौतिक जीवनम्प्रति अन्धास्था सर्वथैवोपरमते । यस्मिन् मानवे एष महान् त्यागाख्यो गुण शोभते स दीनदु खितानामुद्धर्ता, असहायानामनाथानामवलाना रक्षिता, अन्यायस्य अपहर्ता, नैतिकतावादिन्या सभ्यताया विनाशयिता, आध्यात्मिक्या

१ शौचसन्तोषतप स्वाध्यायेश्वरप्रणिधानानि नियमा यो० सू०

२ अनुद्वेगकर वाक्य सत्य प्रियहित च यत् ।
स्वाध्यायाभ्यसन चैव वाङ्मय तप उच्यते ॥ गीता० १७, १५

भावनाया परित्राता, परेषामधिकारस्य प्रदाता च भवति। एतं गुणमन्तरेण चरित्रं जीवदपि मृतमेव। चारित्र्ये जीवनशक्ते: सञ्चारोऽनेनैव भवितुमर्हति एतस्य महत्तामुपकारकतां विलोक्यैव वैदिक महर्षिभिस्तत्संग्रहणाय जना: सर्वे इत्थमुपदिश्यन्ते—

"ईशावास्यमिदं सर्वं यत् किञ्च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृध: कस्यस्विद् धनम् ॥" ( ईशोपनिषत् )

त्यागस्यापरिहार्यकर्त्तव्यत्वं लक्ष्यीकृत्य भगवता कृष्णेनोच्यते—

"यज्ञदानतप: कर्म न त्याज्यं कार्यमेव तत्।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥" ( गी० १८, ५ )

त्याग: केनापि विद्वत्सज्जनेन साधु स्तूयते—

"त्याग एको गुण: श्लाघ्य: किमन्यैर्गुणराशिभि:।
त्यागाज्जगति पूज्यन्ते पशु पाषाण पादपा: ॥
दानेन भूतानि वशीभवन्ति दानेन वैराण्यपि यान्ति नाशम्।
परोऽपि बन्धुत्वमुपैति दानै: दानं हि सर्वव्यसनानि हन्ति ॥"

चरित्र निर्माणस्य कृते यानि साधनानि विश्वशुभचिन्तकैर्निगदितानि तेषु इन्द्रिय निग्रहस्य स्थानं मूर्धाभिमभ्यास्ते। इन्द्रियाणां निग्रहणं महत् तप:। शारीरेषु तप:सु मत तदेव श्रेष्ठम्। अत एव सूक्तम्—"न तपस्तप इत्याहुर्ब्रह्मचर्यं परं तप:।"

सर्वविधमपि उत्थानमिन्द्रिय संयममपेक्षते। नाजितेन्द्रियो भौतिकीमुन्नतिं न चामुष्मिकीमेवोन्नतिं कर्तुं प्रभवति। मान प्रतिष्ठा ज्ञान विज्ञान धन बल सांसारिकसुखापवर्गादिकानां सर्वेषामपि प्रयोजनानां सम्पादनाय समुपार्जनाय च एकमात्र इन्द्रिय संयमोऽभिलष्यते। एतत् तपोबलादस्मदीया: पूर्वजा आश्चर्य जनकमभ्युदयमुत्कर्षं च ययु:। ते अद्भुत साध्यम् सर्वं प्रापुवन्। अज्ञानतमो विध्वस्य ज्ञानालोकं सर्वत्र प्रकाशयितुमक्षमन्त। जगति सर्वेषामपि पूजनीया अजायन्त। एतस्य तपस एव सामर्थ्यात् ते विद्यासु, कलासु, गुणेषु, सम्पत्सु, विभूतिषु सर्वास्वपि शान्तिषु समस्तानपि तत्तद्देशवासिनस्त्यक्त्वा विजिग्यु:। भीष्म पितामह पवनसुत परशुरामादिवत्तावत्समस्तधाय कारणमिदमेवेन्द्रियनिग्रहाख्य तपो वर्तते। यो जन आजीवनमिदं तपश्चरति तस्य सविधे न आलस्य, न दीर्घसूत्रता, न अल्पायुष्कता, न व्याधय:, न विस्मृति, नान्ये च केऽपि

प्रत्यूहा आगन्तु पारयन्ति। यत्रेदं न तत्र चारित्र्यमपि न। एतन्महिमैव गीयते —

'ब्रह्मचर्यं वीर्यरक्षा कर्त्तव्या सर्वयत्नत।
पालिते ब्रह्मचर्ये हि प्राप्यन्ते सर्वसम्पद ॥
जातायां वीर्यरक्षायां रोगा नश्यन्ति सर्वत।
नीरोगं जीवनं दिव्यं पुरुषस्य भवेद् ध्रुवम् ॥
धर्मार्थकाममोक्षाणामारोग्यं मूलकारणम्।
आरोग्यस्य च मूलं तु वीर्यरक्षैव तत्त्वत ॥
तस्मात् सर्वप्रयत्नैस्तु सर्वैरेव च मानवै।
पालनीयं ब्रह्मचर्यं सर्वानन्दप्रदायकम् ॥
साधनं ब्रह्मसम्प्राप्ते सुखानां मूलमुत्तमम्।
ब्रह्मचर्यव्रतं पुण्यं पालनीयं प्रयत्नत ॥"

मना सङ्ग, स्वाध्याय, त्यागे, तपसि अन्यपु च सुमार्गेषु तदैव मनो रज्यति यदा भगवत कृपा भवति। यस्य मानवस्य मन उपरिनिर्दिष्टेषु सद्गुणेषु प्रवर्तते रमतेऽनुरज्यति च स मानवोऽवश्यमेव भगवत्कृपापात्रमस्तीति निश्चय चतया ज्ञेयम्। विना हरिकृपां तत्र तत्र प्रवृत्तिर्न कदापि सम्भवा। तस्मादस्म दीयं कर्त्तव्यमस्मास्वापतति यद् वयमीश्वरे निष्कपटभावेन सकलमपि दम्भं विहाय सरलहृदया भूत्वा भक्तिं निदधीमहि येन चारित्र्यस्य निर्माणकारिषु सद्गुणेषु सतत मानस रज्येत् न तत्तस्य कदापि विमुखं भूत्वावतिष्ठेत। एष ईश्वरप्रेमाभिधो गुणश्चारित्र्योद्भावयितॄणां सर्वेषामपि गुणानां जनकोऽस्ति। एतदीश्वरप्रेम एव सर्वानभ्युपरिप्रोक्तान् गुणान् जनयति प्रेरयति वर्धयति पोषयति च तस्माच्चारित्र्यनिर्माणचिकीर्षूणां मानवानां कर्त्तव्यमिदं यत् ते चरित्रं समुन्नमयितुं धवलयितुं परिपातुञ्च सदैव भगवच्चरणयो प्रीतिं निदध्यु। न भगवद्भक्तिमन्तरेण कदापि कल्याणम्। विश्वपावनो भगवान् व्यासोऽत एवाह—

"स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे।
अहैतुक्यप्रतिहता ययाऽऽत्मा सम्प्रसीदति ॥
वासुदेवे भगवति भक्तियोग प्रयोजित।
जनयत्याशु वैराग्यं ज्ञानं च यदहैतुकम् ॥
धर्म स्वनुष्ठित पुंसां विष्वक्सेनकथासु य।
नोत्पादयेद् यदि रतिं श्रम एव हि केवलम् ॥

धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते ।
नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः ॥
कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता ।
जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिः ॥
वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥"

(श्रीमद्भा०, १, २, ९–११)

सत्य-विनय-धैर्याध्यवसायोद्योगोदारता-समय-परिपालन-गुरुजन-सेवादिकाश्च गुणाः चरित्रनिर्माणार्थमतितरामपेक्ष्यन्ते । विनयस्तु मानवस्य भूषणमेव । यथा सौरभं विना न कुसुमं शोभते तथैव विनयं विना पुरुषः । विद्याया वरदानमेव विनयः । अभिमानवति जने सर्व एव जुगुप्सन्ते । समाजे सम्मानलाभाय विनयोऽत्यन्ताकाङ्क्षितः । सत्यं चारित्र्यस्य निकषोपलः । सत्यस्य पूर्णतया संरक्षणं चरित्राराधकानां धर्मो महान् । केनापि कविना सत्यं प्रशंसतोदीरितं सम्यक्—

"अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥"

मानवजीवनं सुखदुःखाभ्यां समेतं दृष्टं भवति । न सदात्र सुखमेव वसति न च दुःखमेव । द्वयोरपि स्थितिरत्र युगपदेव च दृश्यते । मानवजीवनेन सह एते द्वे अपि समुद क्रीडन्त्येव दीव्येते । मानवजीवनस्य पुरो विपदो बहुला घोरघोरतरास्तस्य साफल्यपथं संवृत्य सन्तिष्ठन्तेऽतो जीवने धैर्यस्य नितरामपेक्षास्ति । धैर्यालम्बनमन्तरेण न कदापि विपदो भवन्ति जिताः । अस्ति धैर्यमापदां तरणिः । अतः विधुरेऽपि काले न तत् त्याज्यम् । दशके धर्मलक्षणे तस्यैवाद्यं स्थानम् । धीरा एव वस्तुतो वीराः । वीराणां लक्षणमेव सुखदुःखयोः समभावः । न वीरः सुखे तुष्यति न च दुःखे खिद्यते—"उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।" दशरथनन्दनो रामोऽभिषेकोदन्तमाकर्ण्य न प्रासीदत् न च अम्लायत्—

जीवन महायुद्धक्षेत्रमिवास्ति। तत्र स एव विजयते, स एव सफलोभवति, स एव चारित्र्यपतनकारिणो वैरिणो जेतुं शक्नोति यो भवत्यध्यवसायी उद्योगी विमृश्यकारी समयादरकर्ता सान्त्विकताभावाराधयिता च। संसारे विजेता एव सर्वत्र पूज्यते तस्मात् विजयश्रीलाभाय चारित्र्ये एतेषां गुणानामुन्मेषः सर्वथैवाप्यते।

सच्चरित्रः पुरुषो न मृत्योर्बिभेति। स देशं रक्षितुं महत्यै गौरवाय स्वप्राणानपि समर्पयितुं सदा सन्नद्धो भवति। जुहोति चात्मानं वीरतापूर्वकं यदासौ तदर्थमादिश्यते। गुरुगोविन्दसिंहोऽन्याय विरोद्धुं देशनिवासिन आजुहाव, प्रार्थनानन्तरं गुरुगोविन्दसिंहो नग्नं चन्द्रहासमादाय जनवृन्दस्य पुरः आगत्य व्याजहार—"शिरोऽर्थी अहम्, कोऽपि जनो मह्यं स्वशिरः प्रदातुमुद्यतते कच्चित्? सर्वतो नीरवता समजायत। गुरुः पुनस्तदेव प्राब्रूत। लवपुरवासी दयारामो नाम क्षत्रियो युवा तदा जगाद—मदीयं शिरः श्रीमतां सेवायामभ्युपस्थितम्। गुरुर्दयारामं समीपस्थं शिविरं निनाय। मुहूर्तानन्तरं स शोणिताक्तं खड्गं धारयन् बहिराजगाम। भूयश्च तदेव न्यगदद् यदहं शिरोद्वितीयमभिलषे पुनश्च निस्तब्धता सर्वा दिशा व्यातनोत्, परं धर्मदासो नाम तरुणः उदतिष्ठत् स्वशिरोऽर्पयितुम्। एवमेव गुरुरन्यानि च त्रीणि शिरांसि ययाचे मुहक्मचन्द्र हिम्मतसिंह-साहिबचन्द्रनामधेयाः पुरुषसिंहास्त्रयो गुरोः पुर उपस्थाय सविनयं निवेदयामासुः गुरो गृह्यन्तामस्मदीयानि शिरांसि। गुरुरेकैकं शिविरं नीतवान्। यदा यदा स द्वितीयं तृतीयं वा जनं शिविरं नीत्वा बहिरायर्यौ तदा तदा बहिःस्थिता सर्वेऽपि जनास्तदीयामसिधारां शोणितशोणामवाप्नुवन्। इत्थं गुरुः पञ्च तान् वीरान् परीक्षाञ्चक्रे। परीक्षितानसौ,"गुरोः पञ्च प्रियशिष्याः" इत्यनेनोपाधिना तान् विभूषयाञ्चकार। एतादृशा एव जना जगति सदाचारवन्तः कथ्यन्ते। एषा वसुन्धरा वस्तुतः सच्चरित्रजनेष्वेवावतिष्ठते। अस्माकं भारतवसुधायां महस्रशः सदाचारवन्तः समये समये व्यालोक्यन्त। इयं भरतभूः तु संसारे स्वचारित्र्यादेव अभ्यर्चिताऽभवत्। सदाचारवत्त्वादेवैतस्या, लोकोऽस्या वसुमत्या श्रीचरणयोर्निजं मौलिं प्रणतञ्चकार।

अतीतकालेऽस्मद्देशस्यास्युज्ज्वलचरित्रचारुभिर्मानवैर्नितरामेव भासुरोऽवलोक्यते शिवि दधीचि हरिश्चन्द्र भगीरथ दिलीप रघु राम कृष्णार्जुनादिकाः अनुकरणीयचरिताः स्वकीयेन भास्वरेण चरित्रेण भारतमातुर्भालमुज्ज्वलयाञ्चक्रुः। नाधिकानि अहानि यातानि, महाराज प्रताप शिवाजि लक्ष्मीबाईप्रभृतयोऽसङ्ख्यानि

कष्टान्यसहन्त भीषणाभिरापद्भिः प्रतिक्षणं प्रापीड्यन्त; परं ते राज्य-सुखलाभादिकमपि विहाय स्वचरित्रमेव गोपायाञ्चक्रुः ।

एवं वर्तमानकालेऽपि अस्मद्देशस्य, धवलोज्ज्वलसुन्दरचारित्र्येण देदीप्यमानः केन न जगति विलोक्यते । लोकमान्यतिलकस्य पार्श्वे किमासीत् । मेधा-विद्या-सद्गुणादिकाः सर्वेऽपि तस्मिन् राजमाना आसन् । परं स तेषां सर्वेषामपि प्रयोगं स्वस्य चरित्रस्य समुत्थापन एव कृतवान् । न स स्वार्थसाधनं विपुलां विद्वत्तां विलक्षणां प्रतिभाम् अन्यदुर्लभान् गुणांश्च तांस्तान् सुखोपभोगाय प्रायुङ्क्त अपि तु तैः सः कर्तव्यं न्यायं धर्मं सदाचारं मानवताञ्च रक्षितवान् । तदीयस्य चरित्रस्य लोकोत्तरां विभां तदुक्तायां सिंह-गिरायामस्यां साधु विलोकयितुं शक्नुमः —"न्यायाधीशानां पञ्चकेन कृतेऽपि निर्णयेऽस्मिन् अहमात्मानं निरागसमेव लभे । अस्मात्संसारादपि परास्त्येका शक्तिः । तत्सङ्केतेनास्य सकलोऽपि व्यापारः सञ्चलति । मन्येऽहं मद्गृहीतं कार्यं मयि सति स्वतन्त्रे न तथाविधतया फलेत् वर्धेत च यथाविधतया कष्टेषु निपातिते मय्यात्मनि तत्" ।

क्षणभङ्गुरस्य जीवनस्योद्देश्यं मानवसेवैव वर्तते । स्वामिविवेकानन्दो नैजेन कर्मठेन तपःपूतेन चरित्रेण जीवनं तल्लक्ष्यावाप्त्यर्थमेव न्ययूयुजत् ।

पण्डितमदनमोहनमालवीयस्य लोकाभिरामं चरित्रं कं न मानवमादर्शमार्गमभि प्रयातुं प्रेरयति । स महान् आलोको जीवनस्य कठोरताभिः सन्ततं क्षुभ्यमाणः प्रचण्डासु वात्यास्वपि प्राज्वलत् ।

अस्य युगस्य महान् मानवो गान्धी स्वेन चरित्रेणैव संसारस्य समग्रस्याभवत् पूजनीयः । तच्चरित्रस्य अहिंसा-सत्य-सेवातपस्त्यागाज्योतींषि निखिलमपि भूलोकमिमं धवलयन्ति केन न वीक्ष्यन्ते । हा, तच्चरित्रप्रकाशः सर्वतोऽद्यापि विस्तृतोऽस्ति परं तन्मध्ये वयं निमील्य नेत्राणि नैजानि स्खलिष्यामहे न तं दिव्यं प्रकाशं प्रयुज्य जीवनं स्वकीयमुत्थापयाम स्वं चरित्रं च समुन्नमयामः । स महात्मा गान्धी तदाचरद् यन्मानव-जीवनस्य परमं लक्ष्यमस्ति स तच्चरित्रमदीदृशद् यच्चरित्रं सकलैरपि आत्मरक्षणाभिलाषिभिर्निधातव्यं संरक्षितव्यमेवितव्यञ्च । स आदर्शचरित्ररत्नपरस्वी भेदभावं भेत्तुं पतितानुद्धर्तुमेकतां प्रसारयितुं समतां सञ्चारयितुमन्यायं विनाशयितुं मानवतां पोषयितुं जगतीतलस्य कणे कणे बन्धुतां समुत्पादयितुं मानवस्य हृदये दया गङ्गां प्रवाहयितुं मानवोपरि तायमानान् अत्याचारान् दूरयितुं किं बहुना स्वर्गमेव

संसारेऽवतारयितुमजीवत् तदर्थमेव प्राणांश्चान्ततोऽजुहोत्। तस्य पावनस्य चरित्रस्य विशिष्टतेयमासीद् महनीया यदसौ तदेवाचरद् यन्मनस्यचिन्तयद् यत् स मनसि व्यचारयत् तदेव व्यभाषत। वस्तुतोऽस्मदीयस्य राष्ट्रस्य एव विद्यमानोऽप्यनेहा उत्तमोत्तमानि सरदारपटेल-राजेन्द्रप्रसाद-जवाहरलाल-सुभाष-चन्द्र-भगतसिंह-लालबहादुरशास्त्रिप्रभृतिमहापुरुषाणां कस्तूरबा-सरोजिनीप्रभृति-वन्दनीयनारीणां पूतान्यनुकरणीयानि चरित्राणि सन्निदधात्यस्माकं कर्तव्यं यत् तान्यनुसृत्य स्वं स्वसमाजं स्वदेशं सकलमेव संसारमुध्दमयाम।

चतुर्वर्गफलं सूते, सदाचारसुरद्रुमः।
तस्मात् कृतमतिर्लोके श्रेयसे तं समाश्रयेत्॥



( ५६ )

## कीर्तिर्यस्य स जीवति

अस्मिन् भू-भुवने क ईदृग् जनो यो यशो न कामयते। परं यशो नास्ति सुलभम्। तदस्ति नितान्तमेव दुस्साध्यम्। तन्महान्तं त्यागमपेक्षते। तत् तमेव मानवं वृणुते यस्तदर्थं सर्वस्वमपि तृणं मनुते। तस्य कृते मानवेन सर्वाण्यपि सांसारिकाणि सुखानि हातव्यानि भवन्ति। न मानाकाङ्क्षी न प्रतिष्ठाभिलाषी न ऐश्वर्यानुरागी न धनस्नेही न पदप्रेमी न पुत्र-कलत्राद्यर्थी न *भौतिकपदार्थव्यसनी न इन्द्रियचयाभिमतभोगरागी न प्राणप्रणयी एव* जनो यशोऽधिगन्तुं प्रभवति। य. कोऽपि जनस्तत्र मनोऽबध्नात् तत् तं तेभ्यः सर्वेभ्योऽपि पदार्थेभ्यो मनो दूरीकर्तुमन्वरुणत् येषु हि नैजात्मीयताधियं न्यदधात् स। तत् स्पष्टगिरया तं न्यगदत् यदि मामिच्छसि तदा सर्वाण्यपि वस्तूनि मुञ्च यानि स्वीयानि मन्यसे, चेत् तवाभिमतमेतत् तदा मां त्यज। यस्य मानवस्य यशसि सत्यं सुदृढमविचलञ्च प्रेम भवत्यसौ "संसारेऽस्मिन् यत् किमपि वस्तु विलोक्यते तन्निश्चप्रचतया सर्वमपि मायाविनतात् प्रपञ्चाद् व्यतिरिक्तं न किमपि। नैतादृक् पदार्थ. कोऽपि यः स्थास्नुरास्ते। येऽपि पदार्था अधास्मदीयया दृष्ट्या प्रेक्ष्यन्ते तेषां सर्वेषां स्थितिरस्ति क्षणिका। संसारस्य सकलान्यपि वस्तूनि गिरिनदीवेगोपमानि सन्ति,-सन्ति तानि सलिलबुद्बुदनीकाशानि; तेषां दशा सान्ध्यगगनरक्तिमेव भवति। विलोकयितुर्लोचनपथात् क्षिप्रमेव सर्वाण्यपि सांसारिकाणि वस्तूनि तिरोभवन्ति। वस्तुत एषा जगती धर्मशालेवास्ति। यथा दिग्दिगन्तरेभ्यो देशदेशान्तरेभ्यश्च जना आगम्य कानिचन दिनानि तत्र विधाय वासं पुनः स्वस्वाभिमतानि स्थानानि व्रजन्ति तथैव मानवाः स्वकर्म-फलवशादस्यां धरायां जनुर्गृहीत्वा सम्पाद्य च कर्माणि पुनर्लोकमिमं परित्यज्य प्रतिष्ठन्ते कर्मप्राहितं लोकान्तरम्। एष संसारः स्वप्न एव। यथा स्वप्ने दृश्यमानानि सर्वाणि वस्तूनि समवाप्तायां विनिद्रतायां लीयन्ते तथैव संसारस्य सर्वेऽपि पदार्था. क्षणान्तर एव नश्यन्ति" इत्येतत् सर्वं साधु विज्ञाय विचिन्त्य च यशोऽनुरागी मानवः सर्वत्रापि विरज्यति केवलं यशसि रज्यति।

यथा उपासको मानवो महान् भवति । तस्य मानस्योपवने—

"पृथिवी दह्यते यत्र मेरुश्चापि विशीर्यते ।
सुशोषं सागरजलं शरीरे तत्र का कथा ॥
गन्धर्वनगराकारः संसारः क्षणभङ्गुरः ।
मनसो वामनैवेयमुभयोर्भेदसाधनम् ॥
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥"

इत्येतादृशाः प्रकाशमया विचाराः अनारतं प्रफुल्लन्तः प्रमोदन्तश्च प्राप्यन्ते । सः सम्यगेवेदं वेद—

"चेतोहरा युवतयः स्वजनोऽनुकूलः
सद्बान्धवाः प्रणतिगर्भगिरश्च भृत्याः ।
गर्जन्ति दन्तिनिवहास्तरलास्तुरङ्गाः
सम्मीलने नयनयोर्नहि किञ्चिदस्ति ॥
मित्रं कलत्रमितरः परिवारलोको
योगैकसाधनमिमाः किल सम्पदो न ।
एकः क्षणः स तु भविष्यति यत्र भूयो
नायं न यूयमितरे न वयं न चैते ॥"

अतः स विनश्वर-पदार्थहेतोर्न कदापि अजरममरञ्च पदं परित्यजति ।

मानवो यासां सुखसम्पदां कृते दुष्कर्माण्यपि कर्तुमुपसरति स यस्याः पृथिव्याः, यस्या राजलक्ष्म्याः, यस्याः सुन्दर्याश्च निमित्तेन बन्धु पितृ-भ्रातृ-मित्रादिव्यापादनादपि न विरमति ताः सुखसम्पदः सा पृथिवी, सा राजलक्ष्मीः, सा सुन्दरी च क्षणान्तरेणैव विद्युदिवेत्र अन्तर्दधति सर्वाः । को न वेत्ति पुरा हिरण्यकशिपु रावण बाणासुरप्रभृतयोऽनेके ते महीपतयो बभूवुर्येषां सविधे विपुलमैश्वर्यमनन्तं धनमपरिमिता भौतिक्यः शक्तयः सर्वविधान्यपि दुष्प्राप्यपि सुखानि आसन्; येषां चरणेषु सकलापि धरित्री प्रणतमस्तका भूत्वा 'किं करोमि, आज्ञापयन्तु मामि'ति निवेदयन्ती सप्रश्रयं समतिष्ठत, संसारस्य सर्वेऽपि शूरवीरा येभ्यः सदा बिभ्युः; देवा अपि येभ्यः स्वस्वसेवां समर्पयन्तः स्वान् धन्यानमंसत ते समुत्पादितकालहृदयसाध्वसा अपि श्रीमन्तः क्वाद्य सन्ति ? किं सिकन्दर मुहम्मदप्रभृतयो दुर्धर्षा दुरासदा मदोन्मत्ता यवनहतकास्ते,

यत्र सन्ति ये भारतस्यार्बुदमूल्यानि रत्नानि पुष्कला अपरिमिताश्च सम्पद् उल्लुण्ठ्य स्वविषयान् अनैषु । न ताः सम्पद एव सम्प्रति तेषां पार्श्वे सन्ति न ते स्वयमेव सन्ति । कालेन सर्वाणि वस्तूनि कवलीक्रियन्ते । मानवो यानि सदसत्कर्माणि अनुतिष्ठति तज्जनितं यशोऽपयशश्चावशिष्येते । प्रथमं मानवो म्रियते ततश्च तत्सञ्चितानि धनानि परगतानि जायन्ते तन्निर्मितानि अन्यानि च प्रासाद-दुर्ग-सरोवर-बन्ध-मार्ग-सेतुप्रभृतीनि सर्वाणि वस्तून्यपि द्वित्रिसहस्राब्दानन्तरं विनश्यन्ति । सर्वेषामपि विनाशं विलोक्यैव जानन्तो विवेकशालिनः स यद्रष्टारो जनाः सर्वामपि स्वकीयां शक्तिं यशःसमुपार्जन एव प्रयुञ्जते; ते कस्माच्चिदपि न बिभ्यति केवलमपयशस एव प्रतिक्षणं त्रस्यन्ति शङ्कन्ते वेपन्ते च । सर्वेषामपि पदार्थानां नाशस्तेषां सह्यो भवति परं यशसो विनाशः कदापि न । राजलक्ष्मीर्यदि याति, यातु; प्राणेभ्योऽपि प्रियतराणां पुत्र-कलत्रादीनां विच्छेदो यदि भवति, भवतु, जीवनस्य नाशोऽपि यदि जायते जायतां परं न केनापि प्रकारेण यशो मलिनीभवेत् तत् तान् हित्वा कुत्रापि न गच्छेत् ।

चेत् स्वल्पेनापि ध्यानेन विचार्यते तदा यशस उपकारित्वमुपादेयत्वं सद्गुणत्वं सन्मित्रत्वञ्च अनायासमपूर्वकमेव विदिततामायान्ति । यशोऽस्मान् निन्द्यात् कर्मणो वर्जयति; तदस्मान् दुरितेभ्यो निवारयति, तदन्यायादस्मान् दूरीकरोति, तद् व्यभिचारादस्मान् पराङ्मुखीकरोति; तत् सर्वविधेभ्योऽप्यत्याचारेभ्योऽस्मान् पितेव गुरुरिव सुहृदिव कान्तेव पृथगेव स्थानुमुपदिशति मधुरम् ।

भौतिकतायामनुरागस्तावानेव श्रेयस्करो यावता मानवो जगत्युचिता भविष्यज्जीवनसुखतरं विधातुं स्वस्य सर्वस्यापि विश्वस्य कृते च श्रेयांसि समुपार्जयितुं जरा-व्याधिमरणादिकष्टेभ्यो दारुणेभ्य आत्मानं मोचयितुं बलमश्नुवीत । भौतिकयत्नानामप्रयोजनं भाविजीवनस्य हिताचरणमस्ति न च सद्विनाशनं किञ्च तत्पातनम् । सुधियो न कदापि भौतिकीः सम्पदो निन्दन्ति ते तु तं मानवं निन्दन्ति यो हि तासामुपयोगो नैज-भाविजीवनं विध्वंसयितुं, मानवजीवनचरमलक्ष्यभूतस्यापवर्गस्योपरि प्रहारं कर्तुं, परमात्म-प्रदत्तान् बुद्धि-मनोऽहङ्कारेन्द्रियसत्त्वादिगुणरूपानुपमोपहारान् भङ्क्तुं चूर्णयितुञ्च प्रयतते । संसारस्य विषयोपभोगेभ्यो न शास्त्राणि मानवं वर्जयन्ति तानि तु विषयोपभोगैः स्वस्य, मानव-जीवनस्य, आत्मनः, स्वकीयागामिजीवनस्य, पारमार्थिकस्य कल्याणस्य च विनाशनान्मानवं प्रत्यादिशन्ति । विषयाणामुपभोगस्तेन प्रकारेण

विघातव्यो येन तदुपभोगोऽपि यथायथं भवितुमर्हेत्। नैजं मङ्गलं, भविष्यज्जीवनं, मपवर्गश्च न निहतो भवेत्—केवलमेतच्छास्त्राणां सतां महात्मनाञ्चोपदेशस्यैवेदमर्हति एतादृशं कार्यं तदैव भवितुमर्हति यदा—

"ईशावास्यमिदं सर्वं यत् किञ्च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद् धनम्॥"

इत्यत्र पूर्णतया दृष्टिं निदधानो मानवः पापेभ्यो बिभीयात्; दुराचारेभ्यस्त्रस्येत, अन्यायेभ्यः शङ्केत दुर्व्यसनेभ्यश्च वेपेत। "चेदहं दुष्कर्मसु प्रवर्तेय मां जगत् हसिष्यति निन्दिष्यति अपवदिष्यति च। स हासः, सा निन्दा, स च अपवादो मम कीर्तिं विनाशयिष्यन्ति; मम नाम कलङ्कितं भविष्यति; अहं केन प्रकारेण कलङ्कितनामा भूत्वा स्वसुहृज्जनानामग्रे स्थातुं शक्ष्यामि; तद् दुष्कार्यं विधाय अहं केन विधिना स्वशिर उन्नतं कृत्वा तेषां पुरः संलपिष्यामि ये मां सदाचारिणं मत्वा सदैव श्लाघन्ते"—इत्यादिका विचारा येषां मानसं पुनः पुनश्छिन्दन्ति ते प्रायेण स्वकीयं चरित्रं कलिलेभ्यः पातुं क्षमाः सञ्जायन्ते; ते कीर्तिमपि स्वीयां लाञ्छनादवितुं पारयन्ति। अस्मदीयाः पूर्वजाः यशसि निवसन्ति स्म। तेषां चरित्रं लाञ्छितं स्यात्; तेषां कीर्तिर्दूषिता भवेदित्येतत्र तेऽसहन्त। गौरवं संरक्षितुं वंशस्य महिमानं पालयितुं, नैजं नाम धवलयितुं, स्वीयं व्यक्तित्वं, चरित्रञ्च जगति प्रथयितुं ते निरन्तरमयतन्त। "संभावितस्य चाकीर्तिर्मरणादतिरिच्यते" इत्येतत् ते कदापि न विसस्मरुः। एषा द्रढीयसी कीर्ति-रक्षणभावना तान् सदा दुष्कर्मभ्योऽत्रायत।

अथ एवंविधा भावना प्रायेण जनताया मानसे दृष्टैव न भवति। अस्त्यपि चेत्सा सदानितरां क्षामतो, कृशताञ्च गतास्ति। कीर्तिं स्ववंशस्य गरिमाणं स्वजातेर्महिमानं स्वकीयं महत्त्वञ्च प्रति तु कस्यापि स्वल्पमपि ध्यानं न वर्तते। न कोऽपि पित्रोः प्रतिष्ठां चिन्तयति, न गुरोर्न विद्यालयस्यैव महत्तामेव विमृशति। अपवादादुपहासाच्च न कोऽपि बिभेति। अद्यतनानां जनानां स्थितिस्तु परासैवाजनविमुखैवास्ति। निन्दा-घृणापकीर्तयो न साम्प्रतिकं मानवं दुष्कर्मपथात् भ्रंशयितुं प्रभवन्ति। पतनस्य पराकाष्ठा स्वैतावती जातास्ति यद् दुष्कर्माण्यहर्निशं विधायापि विना कामपि त्रपामनुभूय निर्भयं जना इतस्ततः शिर उन्नमयन्तो यत्रो वितन्वन्तश्च सर्वत्र समुदं विचरन्ति। निर्लज्जास्ते गुणान् दोषपदं किञ्च दोषान् गुणपदमध्यारोपयन्ति। धर्मं निन्दन्ति, सत्यमुपहसन्ति,

सच्चरित्रतां निरस्कुर्वन्ति, कृतज्ञतामवजानन्ति, वचननिष्ठां च अपवदन्ति। सज्जनानां मन्दधियः कार्यकलापं ते मन्यन्ते; त्यागौदार्य-सेवादिसद्गुणांस्ते विक्षिप्तताया भेदविशेषमवगच्छन्ति। शास्त्राणां वचनं प्रमत्तानां प्रलापं मत्वा मनागपि तत्र कर्णेन्द्रियं न प्रयुञ्जन्ति; यत्र सन्तो महात्मान उपतिष्ठन्ते तस्यां दिशि सकृदपि दृष्टिक्षेपं पापाचरणं विभावयन्ति। एतादृशाचार-विचारजुषो जना जगति प्रत्यहं समुत्पद्यन्ते म्रियन्ते च। न तेषां जन्मना कोऽपि कस्यापि लाभो जायते न च तेषां निधनेन कस्यापि हानिरेव भवति। ते कदोत्पन्ना अभूवन् कदा चोपरता इत्येतदपि न कस्यापि विदितं भवति। पशव इव ते आहार-निद्रार्थमुत्पद्यन्ते जीवन्ति म्रियन्ते च। तेषु मानव-शरीरमिदं व्यर्थमेव भवत् स्वभाग्यं निन्दति। तेषां स्थित्या वस्तुतो भूर्भारवती एव भवति। एवंविधानां भारभूतानां जीवनं कवयो विद्वांसश्च नितरामेव शोचन्तस्तेषामेव जनानां जीवनं धन्यं मन्यन्ते यैर्मानवता कृतार्थतां याति। मानवजीवनस्य तुच्छतर-मपि प्रयोजनं येषां जन्मना न सिद्ध्यति तानेव लक्ष्यीकृत्य प्रोक्तमिदं कियद् युक्तम्—

यस्मिन् जीवति जीवन्ति बहवः सोऽत्र जीवतु।
वयांसि किं न कुर्वन्ति चञ्च्वा स्वोदरपूरणम्॥

यज्जीव्यते क्षणमपि प्रथितं मनुष्यै-
विज्ञानशौर्यविभवार्यगुणैः समेतम्।
तन्नाम जीवितमिह प्रवदन्ति तज्ज्ञाः
काकोऽपि जीवति चिराय बलिं च भुङ्क्ते॥

यो नात्मना न च परेण च बन्धुवर्गे
दीने दयां न कुरुते न च मर्त्यवर्गे।
किं तस्य जीवितफलं हि मनुष्यलोके
काकोऽपि जीवति चिराय बलिं च भुङ्क्ते॥

नीतिशास्त्रस्य जन्म निरर्थकं वदन्ति येन वंशस्यापि कीर्तिर्न वृद्धिं प्रयाति। ते तं मानवं नैजमातृयौवनहारिणं मन्यन्ते—

किं तेन जातु जातेन मातुर्यौवनहारिणा।
आरोहति न यः स्वस्य वंशस्याग्रे ध्वजो यथा॥

तेषां मतेन स एव गणनार्हो भवति यस्मिन् कापि श्रीः शोभते—

"परिवर्तिनि संसारे मृतः को वा न जायते।
जातस्तु गण्यते सोऽत्र यः स्फुरेच्च श्रियाऽधिकः॥"

प्रभूतपुण्यापनीतनिखिलाधिव्याधिव्यतिकरान् समस्तसंसृतिसुखाश्रयान् दूरीकृतेतिभयान् निरस्तसकलदुष्कृतान् अनेकसमस्तजनपालनप्रतिमान् विचित्रचरित्रान् नृपवरान् कीर्तिर्वृणुते। इह यैः कर्मभिर्महनीयैः कीर्तिरधिगम्यते तेषु चेदुपदेशः कृतः स्यात् तदौचित्यं भवेत्।

सज्जनता भवति परमादर्शिनी। न तदाकर्षणं रूपे भवति न धने न भूषणे न वैदुष्ये नाभिजात्ये यद् भवति सौजन्ये। मानवस्य भूषणमेव तत्। 'सज्जन' इत्येतस्यार्थोऽस्ति स पुरुषो योऽस्ति परोपकर्ता सदाचरणपरः, उदारमानसो, दीन-दरिद्रवत्सलः, आपद्यार्तिप्रहर्तेति। दुःखे, सुखे, गेहे, प्रवासे क्वापि मानवो भवेत् परं न सौजन्यमुज्झेत्। मानव-जीवनसाफल्यं तत्रैव निहितमास्ते। न सज्जनो जातु जायते स्वजीवनेऽसफलः। संसारस्य सर्वाण्यपि वैभवसुखानि अञ्जलिं बद्ध्वा गुरोः पुरस्ताद् विनेय इव सज्जनस्याग्रे समुपतिष्ठन्ति। वस्तुतः सौजन्यं विचित्रां सकलशत्रुविनाशिनीं शक्तिं निदधाति। अतः कस्यामपि दशायां न तद्धेयम्। पश्यतां पाण्डवमहाराज्ञी कुन्ती! सा विपत्स्वपि न सज्जनतामत्यजत। नात्र संशयः, सा सौजन्यादेव सर्वा अपि दुस्तरा विपदोऽतरत्। योऽपि स्वजीवन-गगनादुदग्रां विपज्जलधरघटां दूरीकर्तुमीहेत सः कदापि न सुजनतामयं व्यवहारं जह्यात्।

भीमं विहाय अवशिष्टाश्चत्वारोऽपि बान्धवा भिक्षां चरितुं वनं प्रयाता आसन्। अकस्माद् विप्रस्य सद्मनि, यत्र कुन्ती माता स्वसुतैः पाण्डवैः सार्धमासीत्कृतवसतिश्च, क्रन्दनशब्दो महानश्रूयत। कुन्ती विलपन्तमुच्चैर्ब्राह्मणं शिरो धुन्वन्तीं, वक्षः प्रताडयन्तीमतितरां तारस्वरेण हृदयवेधकारिशब्देन क्रन्दन्तीं ब्राह्मणीं च वीक्ष्य तत्क्रन्दनस्य कारणं पप्रच्छ। दुःखहेतुजिज्ञासयाऽनुरुध्यमानोऽसौ भूसुरः कुन्त्यै सर्वमपि दुःखोदन्तं सरुद्धकण्ठोऽजस्रप्रवाहितबाष्पधारो भवन् निवेदयाञ्चकार—"मातः, अद्य ममैव सुतो राक्षसस्य सन्निधे सम्प्रेषणीयो भविता। स तं व्यापाद्य स्वोदरपूर्तिं विधास्यति इत्यतो वयं रुदिमः। अस्त्येतदस्मद्दुःखकारणम्। यद्यहं स्वयं तस्मै राक्षसायात्मानं भोजनत्वेन समुपस्थापयेयम् तदा को गृहं पालयेत्, चेत्पुत्रः प्रदीयेत तदा जीवनमेव व्यर्थम्। हा, किं करवाणि? क्व गच्छानि?" ब्राह्मणस्य तद् वचनं निशम्य तदीयं तद्विधं विलापञ्चाकर्ण्य मातुः कुन्त्याः हृदयं करुणयाक्रान्तमभूत्। सा प्रारोचयत्—"भवान् दुःखं मा कार्षीत्। सन्ति मम पुत्राः पञ्च। तेषु एकतमं राक्षसस्य भोजनार्थं प्रेषयिष्यामि।" तच्छ्रुत्वा ब्राह्मणोऽवदत्—"नैव, नाहमिदमिच्छामि। भवती भवत्पुत्राश्च सन्ति ममातिथयो नाहं स्वकुटुम्बजीवननिमित्तेन अतिथेः प्राणान् कदापि तस्मै राक्षसाय दित्सेयम्। इदं गर्हणीयं कर्म विधाय अपि किं स्यामहं स्थातुं क्षमः स्वसमाजस्य समक्षे।" "नात्राधर्मः कोऽपि। भवानस्मत्कृते प्रदत्तवान् शरणमतोऽस्माकमस्ति प्रमुखं कर्तव्यं यद्वयं भवन्तं प्रति सहायकाः स्याम" इति कुन्ती निजगाद। ब्राह्मणः मामर्थांचैनादृशी महापातकस्याभीष्टा भवेत् तस्मादतिथिप्रदानं निरयप्रदायकम्। पुनः विप्रं स्तोषयितुं एव राक्षसो मत्सुतं हन्यादिति कदापि न। तथा वदन्तं ब्राह्मणमवादीत्कुन्ती—"मम पुत्राः सन्ति प्रबलपराक्रमवन्तस्तेषु भीमस्तु भुवनविजयिनी शक्त्या राजते, मा स्म भवान् भैषीत्। राक्षस एव मत्सुतेन व्यापादितो भवेत्।" कुन्तीकृता सान्त्वनविनयमिश्रितैः धैर्यवचोभिः ब्राह्मणस्य हृदये विश्वासमिमं गुरुसमुत्पादितवती यद्भवत्यमेव सम्भवतः राक्षसविनाशनाय अलम्। अतः नगरहितमपि दृष्ट्वा सः कुन्तीवचनमनुमतवान्। कुन्ती च स्वपुत्रं भीमसेनं राक्षसस्य सन्निधौ गन्तुमादिदेश।

भीमसेनो मातुरादेशमवाप्य वनं प्रतस्थे। सति सायं समये, यदा भीमस्य भ्रातरोऽपि बान्धवाः गृहं निववृतिरे तदा मातुर्मुखात् भ्रातुर्भीमस्य सर्वं

वनगमनकारणं विज्ञाय ते परां चिन्तां प्रत्यपद्यन्त । ज्येष्ठो बन्धुर्युधिष्ठिर आह मातरं, मातः एकाकिनो भीमस्य वनप्रेषणं नोचितमासीत् । युधिष्ठिरस्य वचो निशम्य वीरमाता धर्मदर्शिनी कुन्ती युधिष्ठिरं प्राह—"अहं भीमस्य बलं सम्यगवगच्छामि । सः अवश्यमेव राक्षसं हनिष्यति । भीमो राक्षसस्य व्यापादने क्षमोऽपि न स्यात् तदापि न कापि चिन्ता । यूयं चत्वारः पुत्रास्तु मम स्थ विद्यमाना एव । कष्टे निपतितो मानवो मानवेन रक्षणीय एव । ये मानवाः दुःखेषु परेषां साहाय्यमाचरन्ति परमेश्वरस्तेषां भवति साहाय्यकृत् । दृढतयाहं विश्वसिमि—भीमसेनो भगवत्सहायतां लप्सीष्ट ।"

पुत्रान् आश्वासयन्त्यां कुन्त्यामेवं, भीमसेनो राक्षसं हत्वा काननान्निववृते । भीमं विलोक्य चत्वारोऽपि बन्धवो मात्रा सह प्रसन्नतामगुः । यदोदन्तोऽयं पुरि प्रससार तदा सर्वेऽपि पौरा हर्षेण ननृतुर्भृशम् । ते सानन्दं मातुः कुन्त्याः तत्सौजन्यं भूयो भूयः प्राशंसन् ।

अद्य मातुः कुन्त्याः नश्वरं शरीरं नास्ति परं नश्वरेण शरीरेण सा यां कीर्तिमुपार्जितवती सा अद्यापि सहस्रेष्वपि गतेषु पञ्चसहस्राब्देषु विद्यते । तया कीर्त्या कुन्ती सम्प्रत्यपि जीवति ।

अस्मद्देशेऽनेके एतादृशो महापुरुषा बभूवुर्यान् कोऽपि महतोऽपि महत्तरो लोभो न कर्तव्यपथाद् भ्रंशयितुमशकत् । गुरु-गोरक्षाहितो यदा राजा दिलीपः ।

"स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं प्रसीद ।
दिनावसानोत्सुकबालवत्सा विसृज्यतां धेनुरियं महर्षेः ॥"

इत्येवं सिंहं प्रार्थयाञ्चक्रे तदा सिंहोऽपि "एकातपत्रं जगतः प्रभुत्वम्……" "तद् रक्ष कल्याणपरम्पराणाम्…" इत्यादिकैर्बहुभिर्वचोभिर्दिलीपं गोजीवनरक्षणरूपकर्तव्यात् भ्रंशयितुं प्रायतत परं यशोधनो राजा—

"क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः ।
राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥"

× × × ×

"किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः ।
एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु ॥"

इत्यादि निवेद्य आमिषस्य पिण्डमिव स्वदेहं हरये उपानयदेव ।

अर्थिनो मनोरथं पूरयितुमन्यथा मानवाः सर्वविधमपि न्याय्यं प्रयत्नं चक्रुः। सर्वाण्यपि कष्टानि सहमाना अपि ते तस्याभिलाषं पूरयामासुः। विश्वजित्यध्वरे निःशेषविश्राणितकोषजातो रघुः कौत्सस्यानवाप्तकामं निवर्तनं न सेहे। स तस्यामपि स्वरहितायामवस्थायामिदमेव व्यचारयत्—

"गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामम्।
गतो वदान्यान्तरमित्ययं मे माभूत्परीवादनवावतारः॥"

अन्ततो गत्वा, स तं सफलमनोरथं चकारैव।

यशःशरीरं रक्षितुमेव महाराज्ञी पद्मिनी अन्याश्च तदीयाः सहचर्यो जीवन्त्य एव चितासु दग्धा अभूवन्। यशसः कृत एव गुरुगोविन्दसिंहस्योभावपि पुत्रौ कुड्यावृततया नैजं वर्ष्माजुहुताम्। स्वभारतमातुर्भालमुन्नमय्य यशो नैजं पातुमेव भगतसिंहप्रभृतयो देशभक्ताः स्वान् बलिवेद्यामहौषुः।

नात्र स्वल्पोऽपि सन्देहो यस्य यशसि रुचिः स एव धर्मात्मा सदाचारी परोपकारी आपन्नजनकष्टहारी भवितुमर्हति नान्यः। यतो हि यशःप्रियो मरणान्न बिभेति; स यशो-रक्षायां स्वनिधनं पुत्रजन्मसमं मनुते। चारुदत्तस्यान-नादिदमेव श्रूयते—

"न भीतो मरणादस्मि केवलं दूषितं यशः।
विशुद्धस्य हि मे मृत्युः पुत्रजन्मसमो भवेत्॥"



## अद्यतनं भारतम्

श्रीमद्भागवते महर्षिर्व्यासो भारतम्—

"अहो अमीषां किमकारि शोभनं
प्रसन्न एषां स्विदुत स्वयं हरिः।
यैर्जन्म लब्धं नृषु भारताजिरे
मुकुन्दसेवौपयिकं स्पृहा हि नः॥" ५, १९, २१

"कल्पायुषां स्थानजयात् पुनर्भवात्
क्षणायुषां भारतभूजयो वरम्।
क्षणेन मर्त्येन कृतं मनस्विनः
संन्यस्य संयान्त्यभयं पदं हरेः॥" ५, १९, २३

इत्येतादृशैः श्लोकैरपश्लोकयन् यदास्माभिरासाद्यते तदा मनसि विचार एष समुत्पद्यते यदिदं भारतमाधुनिकं नियतं पुरातने युगे तां श्लाघनीयां स्थितिमधिष्ठितं बभूव यां विलोक्य उत्तमसुखभाजोऽपि सर्वविधवैभववन्तोऽपि लोकोत्तरभोगान् भुञ्जाना अपि एतस्मिन् भारते स्वीयं जीवनं यापयितुमसन्दा-सुत्सुकतां बिभ्रति स्म तदानीन्तने युगेऽत्र वैकुण्ठकथासुधापगाः सर्वत्र वहन्त्यः, भागवताः साधुजना वसन्त, आयोज्यमाना यज्ञोत्सवा महोत्सवा ज्ञान-क्रियाद्युपलब्धोपमस्पृता नृणां समुदायः अपुनर्भवाय यतमानानां पण्डितानाञ्च समाजश्च शोभन्ते स्म। भारतं तदास्मदीयं साधुव्यवहाररत्नानामाकरः, श्रेयसाम् आश्रय, सम्पदामास्पदम्, धर्मस्य धाम, आर्यमर्यादोपदेशानामाचार्यभवनं भवद्भुवि त्रिविभो। पुराणपुरुषस्य लीलामन्दिरं, मन्त्रद्रष्टॄणामृषिमुनीनां ज्ञानविभूति, राजर्षीणां त्यागभूमिः, तपोधनानां तपोऽरणि, जिज्ञासासूनां धीमता-मन्वेषणमहीं, क्षत्रियाणां मानधरित्री, सर्वेषामप्यादर्शधरा, सन्तस्यापि विधस्य सदाचारशिक्षकमेतत्प्रियं भारतं कथय इत्थं गायन्तोऽभूवन्—यत्र गतधर्मक-र्मोपरञ्जनिवारितसकलाधिव्याधिव्यतिकरा पुण्यपुरन्ध्रीभिर्योऽन्यजगतीसुर-सेविभ्योऽप्यालोकिता भवन्ति सर्वप्रजास्तथा हि—"कुट्टयोगो गान्धिकापणेषु, स्फोटवादो वैयाकरणेषु, सन्धिप्रसारणमन्त्रेषु, प्रहर्षकान्तिर्योनिशास्त्रेषु, मूल-

विकारवादः सांख्येषु, पंचस्तिथिषु, गुल्मवृद्धिर्वनभूमिषु, गलग्रहो मत्स्येषु, गण्डकोत्थानं पर्वतवनभूमिषु, शूलसम्बन्धश्चण्डिकायतनेषु दृश्यते न प्रजासु। यत्र सौराज्यरञ्जितमनसः सकलसमृद्धिवर्धितमहोत्सवपरम्परारम्भनिर्भराः, सततमकुलीनं कुलीनाः, प्राप्तविमानमप्राप्तविमानभङ्गाः, कतिपयवसुविराजितमनेकवसवः, समुपहसन्ति स्वर्गवासिनं जनं जनाः।"

शास्त्रेतिहासपुराणकाव्यादिभ्योऽतीतस्य भारतस्य तदुत्थानमवलोक्याद्यतनस्य च भारतस्यैतादृशं शोचनीयं पतनञ्च वीक्ष्य क ईदृग् भारतीयो यो नानितरां दूयते। हन्त, अद्य तु अस्यां वसिष्ठ-जनक-राम-कृष्णार्जुनादीनां पवित्रायां भरतवसुधायां दाराः अपह्रियन्ते, मर्यादाः निपात्यन्ते, आचारा विलोप्यन्ते, प्रतिप्रभातं प्रतिसायं च बाष्पवारिबिन्दुसन्दोहैराननं क्षालयन्तः दग्धहृदया धमद्धमद्धमनीधावमानरुधिरधरा दुर्धर्षवदनाः, अपरिमितं सन्तापं वहमाना अनेकानेकविफलमनोरथदन्दह्यमाना सर्वत इतस्ततः सञ्चरमाणा जना अवाप्यन्ते। सम्प्रति स्वस्मिन् देशे नगरे नगरे ग्रामे ग्रामे गेहे गेहे च प्रवञ्चनपटवो दुराचरणप्रयुक्तसकलबुद्धिवैभवाः एव पुरुषाः प्राप्यन्ते। नैवंविधं किमपि स्थानं यत्र अधर्मपूर्वकं धनार्जनम्, उत्कोचग्रहणम्, अनृतभाषणम्, राष्ट्रियसम्पदपहरणञ्च न प्रवृत्तं स्यात्। सर्वत्राद्य भारते नक्तन्दिवं दस्यवो भ्रमन्तः प्राप्यन्ते। तेषां नृशंसनिर्दयदुर्व्यवहारमयैः कर्मभिः जनता निपीड्यमानास्ति भृशम्। ते बालान् निरपराधान् व्यापादयन्ति; नारीषु व्यभिचरन्ति; मनुष्यः कामं स गृहे स्याद् वा बहिः, याने स्याद् उपविष्टो वा पदातिः स्यात् न तस्य धनमस्ति सुरक्षितम्। सः सर्वत्र विप्रलभ्यते।

यद्यपि भारतं तदेव वर्तते; स एव हिमालय इह तिष्ठति; सैव गङ्गात्र प्रवहति; सैव भूमिरिह विद्यते; स एव सूर्योऽत्र प्रकाशते; स एव शशीह शोभते; तदेव नभो विभ्राजते; तान्येव नक्षत्राणि दीप्यन्ते परं न मानवेषु मानवता, न महिलासु स्वभारतीयायां संस्कृत्यां निष्ठा, न बन्धुषु बन्धुत्वम्, न मित्रेषु मित्रत्वम्, न धनवत्सु दीन-दरिद्र-भरणभावः, न शासनकर्तृषु जनवात्सल्यम्, न कर्मठत्वं कर्मचारिषु, नाचार्येषु आचार्यत्वम्, न शिक्षार्थिषु शिक्षार्थित्वम्, न गुरुषु गुरुभावेऽभिरुचिः, न देशानुरागिषु देशानुरागः, न भक्तेष्वीश्वरभक्तिः, न मातृपितृष्वपि सन्तानेऽपि हितदृष्टिः, न पत्न्यां पत्युः सत्यप्रेम न पत्यौ पत्न्याश्च अनवद्यप्रीतिः प्रायेण संलक्ष्यते। न भारतीयोऽधुना कस्मादपि दुरिताचरणाद्

विभेति सः अर्थपदावाप्तिप्रयोजनेन भगिनीं कन्यां दयिताञ्च विक्रीणन् न त्रपते; स स्वार्थेन तथा ग्रस्तोऽस्ति यत् परकृतमाक्रमणमप्युपेक्षते, सः परिगृह्य उत्कोचं देशस्य शासनस्य च सर्वाण्यपि रहस्यानि शत्रुषु उन्मीलयति। हा, सर्वथैव निन्दनीयं शोचनीयञ्च पतनं संवृत्तमस्या भारतवसुन्धरायाः।

हा विश्वम्भर, हा पुराऽसकृदुद्धृतभारत, हा गृहीतसाधुपरित्राणैकव्रत, हा दुष्कृतविध्वंसन निपुण, साम्प्रतं ये जना अस्यैव देशस्य जनाः सन्ति, ये अत्रत्यमेव सलिलं पीत्वा, अन्नं भुक्त्वा, समीरं गृहीत्वा च जीवन्ति, येऽस्यैव भारतस्य धरायां शेरते, सञ्चरन्ते, क्रीडन्ति, विहरन्ति, लपन्ति, हसन्ति, विलपन्ति, वमन्ति च त एव स्वस्यैव देशस्य भाषासु द्विषन्ति, स्वस्यैव देशस्य वेषे दुह्यन्ति; स्वस्यैव देशस्य आचारेषु जुगुप्सन्ते। स्वकीयदेशस्य भाषोत्थानका-रिणां जनानां कर्माणि ते निरुन्धन्ति; तथा प्रयतन्ते येन स्वदेशस्य भाषाणां व्यवहारो न राज्य-कार्येषु सम्पद्येत। ते वैदेशिक्या भाषाया एव इह भरतभूम्यां प्रतिष्ठापनाय सञ्चालनाय व्यवहरणाय च आप्रलयं, कृतान्दोलनाः प्राप्यन्ते. ते स्वदेशभाषायाः प्रचारार्थं प्रारब्धस्योद्योगस्य विनाशनाय सहस्रबाहवो भूत्वा देशे निन्दनीयान् मार्गान् अवलम्बमाना अधिगम्यन्ते; ते देशे स्वदेशीया भाषा न प्रवर्तेत—इत्येतद्धेतोः राज्यस्य पत्रालयान् दहन्ति, यानानि भञ्जन्ति, रथिणो ज्वालयन्ति; जनता-हितपराणि वस्तूनि विनाशयन्ति सञ्चूर्णयन्ति च। भारतस्य हितं न तेषामभिमतम्। ते संघटिता भूत्वा ऐक्यसूत्रनिबद्धा भूत्वा-न स्थातुम-भिलषन्ते; तेषामभिलाषोऽयं प्रचण्डो यद् देशो भवेत् छिन्न-भिन्नः। न देशे एकता जीवेत्। प्रतिप्रदेशवास्तव्यो जन. स्वं स्वं प्रदेशं देशस्य केन्द्रीयशक्तेः पृथग् विधातुं कामयते। दक्षिणप्रदेशः "उत्तरप्रदेशात् पृथग् भूत्वैव सुखं शान्तिञ्च लभेत" इति मनुते। वस्तुतो देशे सर्वत्र कुटिला नीतयः प्रसृताः सन्ति। विविधच्छल-कपटपूर्णानि कुत्सितानि साधनान्यालम्ब्य जनाः देशं निपा-तयितुमुद्यताः सन्ति; ते तेभ्योऽपि कुत्सायुतेभ्य आचरणेभ्यो न विरमन्ति यानि देशं परतन्त्रतां मापयितुं क्षमाणि भवन्ति, यैः शत्रूणां शक्तिः संवर्धते; यैर्देशो दुर्बलतां गच्छति। अत्रत्यानां धनिकानां श्रेष्ठिनां व्यापारिणाञ्चावस्थेयं दृश्यते यत्ते भोज्येषु पदार्थेषु अपि तानि तान्यमङ्गलतुल्यवस्तून्येव मिश्रयिष्यन्ति। कामं जनतायाः स्वास्थ्यं हीयेत, कामं सा म्रियेत; ते दीनानां जनानामपि प्राण-पयो निपीय जीवितुमिच्छन्ति, ते निर्धनस्य वराकस्य तृणकुटीमपि न सहन्ते; तेषां

बुभुक्षामकण्ठतापि तेषां जीर्णशीर्णवसनवत्तापि न क्षणमपि तेषां सह्या। ते धनमुपार्जयितुमन्नं रहसि दृढतया निगूहन्ति; ते आयकरादात्मानं पातुं नानाविधान् कुमार्गान् आश्रयन्ति, ते राष्ट्रमपकर्तुं तान् निखिलानप्युपायान् स्वीकुर्वाणा दृश्यन्ते ये सर्वथैव सन्ति अधर्मपिता अन्यायपरिपोषणकराश्च। हा, साम्प्रतिके भारते तु अग्रण्या मानवाः स्वस्य देशस्य गरिमाणं महिमानं संस्कृतिं सभ्यताञ्च समुद्रस्य अगाधे जले निमज्जयितुं त्वरमाणाः सन्ति। ते शिवेः शरणागतवत्सलताम्, दधीचेस्त्यागम्, रामस्य पित्रादेशपालनपरताम्, भरतस्य भ्रातृ-भक्तिम्, दशरथस्य वचोनिष्ठाम्, हरिश्चन्द्रस्य सत्यपरिपालनव्रतम्, दिलीपस्य यशःप्रियताम्, रघोर्दानम्, अर्जुनस्य धानुष्कताम्, कृष्णस्य गीताम्, ऋषि-मुनीनामादर्शम्, सर्वमपि नैजस्य देशस्य महनीयत्वञ्च सर्वथैव स्वस्मृतिसरणेः निपात्य सन्तिष्ठमाना वीक्ष्यन्ते।

आधुनिकीं भारतीयां दशान्तु विलोक्य एतत् प्रतिलक्षितं भवति यद् इह चातुर्वर्ण्यं कथावशेषमेव यास्यति; सनातनधर्मो विलयमेव गमिष्यति; संस्कृतभाषोपरतैव भविष्यति।

इदानीं न चिन्ता शास्त्रेषु, न हृदयन्धः काव्येषु, न रागविलसितानि गीतेषु, न व्यसनं सद्गुणेषु, न निग्रह इन्द्रियेषु, न श्रमो विद्यासु, न आत्मीयता स्वजनेषु, न कृतज्ञता उपकारिषु, न श्रद्धा वृद्धेषु, न अभिरुचिर्दानेषु, न अनुरक्तिस्तपःसु, न स्पृहा सत्कर्मसु, न बन्धुता बन्धुषु, नोन्नतिः कलासु, न जुगुप्सा हिंसासु, न घृणा दोषेषु, न मौनं ज्ञाने, न क्षमा शक्तौ, नोत्साहस्त्यागे, न भक्तिर्भगवति, न प्रीती राष्ट्रे, न शुचिता चरित्रे, न निष्ठा न्याये, न पक्षपातो धर्मे, न विमलता चित्ते, न प्रयत्नो दोष-दूरीकरणे, न समुत्थानं शिक्षायाम्, न रतिः सद्व्यवहारे, न विरतिश्च व्यभिचारे भारतीयानां विलोक्यते।

सम्प्रति अर्थानां सञ्चयनं विषय-वासनापरितोषणाय न दीन-दरिद्रार्तिप्रशमनाय, मितभाषणं स्वमहापुरुषताप्रदर्शनाय न सत्याय, विजिगीषा पर-धाम-धन-धरार्थं न कीर्त्यर्थम्, दार-परिग्रहः कामोपभोगाय न सन्तानाय, विद्याध्ययनं भृत्यतायै न कर्त्तव्यार्थम्, संन्यास-ग्रहणं भिक्षार्थं न मोक्षार्थम्, देव-मन्दिर-निर्माणं परकीयस्थान-भूम्याद्यपहरणार्थं न अपवर्गार्थम्, जप-व्रत-पूजादिकम् उदरभरणार्थं न भगवद्भक्त्यर्थम्, उपकलिका परनिन्दायां न सत्सेवायाम्, नेतृत्वं लोक-सभाराजसभादिषु सदस्यताप्राप्त्यर्थं न प्रजाकष्टनिराकरणार्थम्, शिक्षणशा-

लादीनां व्यवस्थापकताग्रङ्गीकरणं वैयक्तिकहितपूर्त्यर्थं न तदभ्युपगमनं देशारा-धनार्थम्, शिवक्तारवीकरणं समयक्षेपणार्थं न राष्ट्रनिर्माणार्थम्, शास्त्रमुपार्जनं पर-पीडनार्थं न देशत्राणार्थम्, विद्वत्तार्जनं विवादार्थं न ज्ञानार्थं किं बहुना सकलान्यपि कर्माणि स्वार्थसाधनार्थमेव विधीयन्ते न विश्वस्य न देशस्य न प्रदेशस्य न नगरस्य न ग्रामस्य न, समाजस्य न स्वजनसमुदायस्यैव कल्याणा-र्थमायोज्यन्ते ।

यदाप्रभृत्येव जगदम्बानुकम्पया भारतेन स्वातन्त्र्यं समवाप्तं तदाप्रभृत्येव देशमपक्तुं सहस्रेभ्योऽप्यधिका स्वार्थभाजा युगपदेव भारत-धरामावृण्वन्तो भारताकाशमाच्छादयन्तो भारतदिशाश्च आपूरयन्तो दृग्गोचरीभवन्ति । राष्ट्र-निर्माणार्थं राष्ट्रं धनधान्यादिसमृद्धिभिः समृद्धं कर्तुं योऽपारधन-राशिः शासनेन राज्येन वा नियतीक्रियते तस्य भूयसो भागस्य दुरुपयोग एव सञ्जायते; तस्माद्देशोऽभिमनाद्धितात् वञ्चितमेवात्मानं समुपलभते । सेतुबन्ध यन्त्रशाला-विज्ञानागारोद्योगालयशोधसंस्थान-प्रयोग-भवन-पथ-निर्माण–समर सामग्री–समु-त्पादनमन्दिर-चिकित्साविद्यालय-विद्युद्धामादिप्रयोजनेन रूप्यकाणि तु संख्यातीतानि व्ययीभवन्ति परं राष्ट्रं तावद्व्ययीभूतधनाल्लाभं नाधिगन्तुं शक्नोति । इदमेव कारणं येन राष्ट्रस्य चिप्रतयाभ्युदयो न भवितुमर्हति; राष्ट्रस्य तादृश उदयो न जायते यादृशोऽभिलष्यते । न तावच्छ्रेयस्तस्य सम्पद्यते यावत् तादृशात् व्ययीकृतात् धनात् भवितुं सम्भवम् । शासनम्प्रति साहाय्यप्रदानस्य तु वार्ता दूरे आस्तां तद्दीयां गतिं विरोद्धुं बाधाः समुपस्थाप्यन्ते । कोऽपि असहयोगं प्रारभते कोऽपि कर्तुमनशनं प्रधावति, कोऽपि आन्दोलनं विरचयति; कोऽपि षड्यन्त्रमातनोति; कोऽपि पैशुन्यमनुतिष्ठति, कोऽपि जिह्मतामाचरति । यथामावास्याया निशायामागतायां खद्योतोलूकपाटच्चरादिक्षुद्रक्षुद्रतराः प्राणिन एकस्मिन्नेव काले स्फारीभवन्ति तथैव लोकतन्त्रस्य वातावरणमवाप्य सर्वे एव स्वच्छन्दा सन्तो युगपदेव अकुतोभया भूत्वा राष्ट्रं पातयितु सर्वतः विविधेषु गर्हितेषु कृत्येषु प्रवर्तमानाः प्राप्यन्ते । शासनं यथा यथा नवनवान् विधीन् विनियोज्य राष्ट्रं समुन्नमयितु यतते तथा तथा जना विधिभ्यो रक्षितुमात्मानं नवनवोपायान् मार्गयन्ति । जनताया राजकर्मचारिणाञ्च कौटिल्याच्छद्मसमच्छा-दितं सुन्दरसुन्दरमप्यायोजनं वैयर्थ्यं प्रयाति । एकैकस्य यन्त्रस्य निष्कलत्वात् यन्त्रिणः स्थितिर्व्यर्थैव प्रतीयते । राज्यं भ्रष्टाचारं दूरीकर्तुं प्रयतते परं तद्रचतर-

पदस्थिताधिकारिकृतभ्रष्टाचारान् प्रति प्रायेण भवत्युपेक्षातितरामतस्तस्य तद्दिशायां विहितान्युपक्रमणानि निष्फलानि जायन्ते। तत्र भ्रष्टाचारपरान् उच्चतरपदारूढान् कठोरतया दण्डयति तेन साधारणेषु कार्यकारिषु जनेषु न कोऽपि समुचितः प्रभावः पतति। को न साम्प्रतं तत्तद्राजकीयेषु विभागेषु अधिकरणेषु कार्यालयेषु च भ्रष्टाचारं स्वकीयं वक्षःस्थलं वितन्वत् श्मश्रु प्रस्फोरयत् जघनं च प्रास्फालयत् प्रेक्षते। अवैधेन प्रकारेण धनस्य समुपार्जनं तस्य निगूहनं सुवर्णस्य च प्रच्छादनमन्यानि चैवंविधान्यनेकानि कार्याणि धनिकानां समाजे वीक्ष्यन्ते तानि स्पष्टमेवोद्घोषयन्ति धनवतां राष्ट्रक्षतिकारिणीं कुप्रवृत्तिम्।

साम्प्रतिके हि अनेहसि भारतं विचित्रमेव स्वरूपं बिभ्राणं भुवि विभासते। कलहसितस्थितं तत् कामिवत्, पृथुकार्तस्वरपात्रं तद् भूपतिभवनवत्, सुरानुरागं तद् बृहस्पतिवत्, नभसि दर्शितोदग्रं तत्तवजलधरवृन्दवत्, महासत्वनिवासं तत् सलिलनिधिवत्, प्रसाधितदुर्गं तत् त्र्यम्बकवत्, निरपेक्षधर्मं तद् दुर्योधनवत्, सततविर्भूतमृगतृष्णं तद् निदाघदिनवत्, मानसवेगं तद् विद्याधरवत्, दर्शितभौतिकतामानसं तत् चार्वाकवत्, दीनानाथविपन्नशरणं तद्धन्यनगरवत्, प्रियमत्यग्रतं तच्छन्तनुवत्, भुजङ्गवेष्टितं तत् चन्दनतरुवत्, प्रकटिताङ्गनोपभोगमप्यखण्डितचरित्रम्, बहुप्रकृतिकमपि स्थिरम्, स्वजनप्रियमपि निःस्वजनप्रियम्, समानमप्यसमानम्, हिंसानिवृत्तमप्यात्तदण्डम्, कृतसारमेयसंग्रहमपि फलमूलाशनम्, एकदेशस्थितमपि व्याप्तविश्वमण्डलम्, महादोषमपि सकलगुणाधिष्ठानम्, अविरतप्रवृत्तदानमपि अमदम्, अत्यन्तशुद्धस्वभावमपि दर्शितकृष्णचरितम्, अकमलापतिकमपि सकमलापतिकम्, हिंसारतमप्यहिंसारतम्, स्थिरमप्यस्थिरम्, संस्कृतभाषानिष्ठमपि असंस्कृतभाषानिष्ठम्, एकमपि अनेकधागृह्यमाणम्, एकागारमिव करुणायाः, प्रातिवेशिक इव पुरुषोत्तमस्य, वलद्दर्शनमिव वैदग्ध्यस्य, सर्वस्वकथनमिव कान्तेः, परमप्रमाणमिव सौभाग्यस्य प्रतिभाति। अथास्मत्प्रियभारतं—

( १ ) न किञ्चदपि राष्ट्रं राष्ट्रान्तरस्याभ्यन्तरेषु विषयेषु कीदृशमपि हस्तक्षेपं विदध्यात्।

( २ ) प्रादेशिकीमखण्डतां किञ्च प्रभुत्वसत्ताम्प्रति परस्परतया प्रतिराष्ट्रं श्रद्धामयीं भावनां परिपुष्णीयात्।

( ३ ) सर्वाणि राष्ट्राणि सर्वेष्वपि राष्ट्रेषु समानतां व्यवहरेयुः सर्वाणि अन्योऽन्यं मित्रचक्षुषा प्रेक्षेरन् ।

( ४ ) न किमपि राष्ट्रं कस्यापि राष्ट्रस्योपर्याक्रमणं कुर्वीत ।

( ५ ) अन्योऽन्यं प्रति प्रतिराष्ट्रस्य शान्तिमयः सद्भावो व्यवहारे आहतः स्यात् ।

इत्येतान् पञ्चसिद्धान्तान् स्वदृष्टेः पुरतो निधाय तान् आलम्ब्य उन्नतिं स्वकीयां कर्तुमुपक्रान्तं दृश्यते । तेन स्वीया वैदेशिकी नीतिरपि एतेष्वेव पञ्चसु सिद्धान्तेषु प्रतिष्ठापितास्ति; तन्मनुते यदेतेषां सिद्धान्तानामुद्देश्यमेवेदं यद् वर्तमानयुगस्य कूटनीतेश्छलपूर्णायाः स्वार्थसंवर्द्धनपराया राजनीतेः समूलमुन्मूलनं भवेत् । तदेतां कुटिलां मानवताविनाशिनीं राजनीतिं निहत्य स्वकीयमार्थिकं सांस्कृतिकञ्च कल्याणमनुष्ठातुमुद्यतते । तदीय एव प्रयासो मानवता-पथप्रशस्तीकरणार्थमेव विद्यते । तस्येदं प्रियं यदेतैः पञ्चभिः सिद्धान्तैस्तदीयं स्वातन्त्र्यं मनुष्यमात्रं पारतन्त्र्यान्मुक्तं विदधानं मङ्गल-मार्गं नेनिज्यात् ।

भारतस्य ग्रामप्रधानत्वात् तस्योत्थानार्थं भारतीयं शासनं ग्रामाणां सर्वाङ्गीणविकासाय सामुदायिकविकासयोजनां समायोजयद्य विलोक्यते । योजनाया अस्या मुख्यमुद्देश्यं खाद्यस्य-कृषेः-उत्पादनं तदितरं वर्धनमस्ति । स्त्री-पुरुषशिशूनां पुर आदर्शोपस्थापनं, जीवनाधिकारप्रदानं भोजनसमस्यासमाधानञ्च योजनैषा कामयते । एतावदेव न, साभिलषते ग्रामेषु शिक्षाया विकासः, स्वास्थ्यस्य सुस्थितिः नूतन-शिल्प-व्यवसायाश्च दरीदृश्येरन् । सामुदायिकविकासयोजनासु अधोलिखिताः कार्यक्रमा निहिताः सन्तिः—१. कृषिः, २. शिक्षा, ३. यातायातसाधनानि, ४. प्रशिक्षणम्, ५. स्वास्थ्यम्, ६. आजीविका, ७. गृहनिर्माणम्, ८. सामाजिककल्याणञ्च ।

एकतस्तु भारतं ग्रामोत्थाने संलग्नमद्य दृश्यतेऽपरतस्तत् स्वोत्परभुव ऊषरतां दूरीकर्तुमीतिजनितभयञ्चापनेतुं यतमानमाप्यते । शासनेनेह देशस्य सरिन्मातृकत्वबलं संवर्धयितुञ्च योजना कृतास्ति । नदी-घाटी-योजनाया उद्देश्यमस्ति—सेचनव्यवस्थायाः प्रसारणम्, अतिवृष्टिजनितविघ्न-निरोधनम्, जल-विद्युच्छक्तेः समुत्पादनञ्च । अद्य अस्मदीयो देश एतद्विधयोजनाहेतोरेव भाकरावन्धादिभिर्विभूष्यमाणो जगति विलोक्यते । देशस्यार्थिकजीवनमग्रसरयितामां योजनानां महदुपादेयत्वमस्ति । रेलमार्गविकासार्थञ्च देशे महान् प्रयत्नः प्रचलितो दीपयते ।

इञ्जनोत्पादनार्थं चित्तरञ्जनशिल्पिशाला स्थापितास्ति। रेलोन्नयनार्थं द्वितीयपाञ्चवर्षिकयोजनावसरे पञ्चविंशतिकोट्यधिकैकादशार्बुदमितानि रूप्यकाणि सन्ति स्वीकृतानि। कृषि शिक्षाहेतो सम्प्रति बहव कृषिविद्यालयाश्च सञ्चाल्यन्ते, कृषिविभागस्य प्राविधिकाधिकारिण कर्मचारिणश्च देशान्तरेषु प्रशिक्षण-ग्रहणप्रयोजनेन सम्प्रेष्यन्ते, कृषेर्विविधनवनवयन्त्राणि च प्रयोगे आनीयन्ते, कुटीरोद्योगा समुत्थाप्यन्ते, सहकारिण्य समितय सस्थाप्यन्ते, कार्पासांशुकसमुत्पादनाय यन्त्र शालाना सख्या दिनानुदिन वर्ध्यन्ते, कर्पासोत्पादनदृष्ट्याधुना देश वासिन सर्वथा स्वावलम्बिनो विलोक्यन्ते, तन्तुवायोद्योगा उन्नीयन्ते, विद्युदुत्पादनशक्ति सवर्धयितुमनेके प्रकृष्टतमा उद्योगा आलम्ब्यन्ते, लौहादिपदार्थविकासनाय विशङ्कटा योजना आरभ्यन्ते, परिवहण सञ्चारोद्देश्येन भूयास प्रयासा अङ्गीक्रियन्ते, जनजीवनमाराधयितु विविधा सुन्दरसुन्दरतरा नितान्तसुखविश्रामप्रदायका उपयोगिन पदार्था यन्त्रोपयन्त्रनिकाया ससृज्यन्ते विरच्यन्ते निर्मीयन्ते आद्रियन्ते च। यत्र स्वातन्त्र्यात् प्राक् ऊपर आसीत् तत्राद्योपवनानि राजन्ते, यत्र निर्जनता दृष्टाभवत् तत्राद्य जना एव जना वीक्ष्यन्ते, अद्य ग्रामा नगरेषु परिणता किञ्च नगराणि महानगरेषु परिवर्तितानि सन्ति, यत्र शब्दोऽपि न मानवस्य अश्रूयत तत्राद्य गीतीना मधुरा ध्वनयो वीणामृदङ्गादीना क्वणनानि, भूषणाना शिञ्जितानि, शिशूनां कलरव शुक सारिकादीना सरावा श्रुतिगोचरा जायन्ते, सर्वत सर्वत्र च ग्रामे ग्रामे गृहे गृहे विद्युत्प्रकाशो नयनानि हृदयानि च नन्दयन् परिस्पन्दते, समग्रस्यापि देशस्य स्वरूपमेव अद्भुत नवीन पेशलतरमुज्ज्वलतरमुद्भतावह प्रकर्षमासादयदीक्ष्यते। परमिदानीं प्राच्यता विषीदन्ती प्रतीच्यता च हृष्यन्तीह वीक्ष्यते, विज्ञानस्योन्नतौ तु सर्वेषामभिरुचिर्बलीयसीह दृश्यता भवति परमाध्यात्मिकताया उत्थान नैतिकचारित्र्यस्य च विकासम्प्रति न ध्यान वर्तते, ऐहिकता त्वत्र सम्प्रति सर्वत्र मनसा वाचा कर्मणा चाभिनन्द्यते परमामुष्मिकता तिरस्क्रियते सधिक्कारम्। यद्यपि पुरातन आडम्बरो निन्द्यतेऽधुना पर नूतन आडम्बर पूज्यते, यद्यपि प्राक्तनो दम्भो न्यक्क्रियते पर नवीनो दम्भ आराध्यते सस्नेहम्। तादृशे प्रयत्ने वस्तुत प्रमाद एवेदानीमुपलभ्यते यादृशेन प्रयत्नेन व्यास वाल्मीकि कालिदासादिकविकोविदानामभिमता भारतीयता सुष्ठुतरमुचिततरं समीचीनतरञ्च पोषण लब्धुमर्हेद्। तस्मात सनतमौलि स्तूयते परमेश्वरः—

या रेवा-जह्नुकन्याप्रभृतिबहुधुनी: पुण्यतोया बिभर्ति
या रम्या नालिकेरैर्मधुफलकदलीनागरङ्गै रसालैः ।
या भव्या नानावल्लीकुरबकुटजैर्नीपजात्यादिपुष्पैः
सास्माकं भारताम्बा भवतु विजयिनी श्रेयसे सर्वपुंसाम् ॥

मन्यन्ते यां पुमांसो निजहृदि वरदां देवतां भारतेऽस्मिन्
वन्दन्ते मित्रराष्ट्राण्यमितनवनवैः प्राभृतैर्यामजस्रम् ।
प्रेक्षन्ते या सपत्ना विदलितहृदया द्वेषवन्तो भवन्तो
भूयात् सा मामकानां मम जनन-मही सर्वथा त्राणयोग्या ॥

सुपूतं या लोकं सपदि कुरुते वेदवचसा
अघं हिंसाया या झटिति हरते बौद्धगिरया ।
जगच्चित्तं सम्यग् रमयति च या गान्धिचरितै-
स्ततो भूयाद् धर्मो निखिलभुवने ह्युन्नततर. ॥

यस्याः श्रीचरणं जलेन जलधिः समार्ष्टि नक्तन्दिवं
या द्रव्यैर्बहुभि. सदैव विपुलैर्गौरीगुरु· सेवते ।
गन्धेनार्चति यां मुदैव मलयक्षोणीधरः प्रत्यहं
सा मे जन्मधरावनौ विजयतां सर्वोदयाकाङ्क्षिणी ॥

विद्यास्रोतोभृगुमनुनिभान् या प्रसूते स्म सिद्धान्
या चासूत प्रथितयशसो व्यासवाल्मीकिविज्ञान् ।
सीतागार्गीप्रभृतिललनायाऽसविष्टात्र देशे
भूय. सूतां मम जनिमही सच्चरित्रान् नरान् सा ॥

या मे माता सकलसुखदं रामराज्यं ह्यभुङ्क्त
या मे माता सुकृतसुभगं धर्मराज्यं ददर्श ।
या मे माता ह्यधिगतवती सत्यनीत्या स्वराज्यं
सा भूयान्मे विमलचरिता जन्मभूमिर्जगत्याम् ॥

राष्ट्रं राष्ट्रमणि क्षितौ विजयतां राष्ट्रं स्वकीयं भजे
राष्ट्रेण विघ्नता कृतं सुरगिरा राष्ट्राय तस्मै नमः ।
राष्ट्रादस्ति परं न किञ्चिदपि मे राष्ट्रस्य दासोऽस्म्यहं
राष्ट्रे मे रमतां मनः प्रतिपलं भो राष्ट्र गोपाय माम् ॥

## आत्मविश्वासः परं बलम्

आत्मविश्वाससम्पन्नो मानवोऽधियाति साफल्यम् । अवश्यमेवाहं सफलता-श्रियमवाप्स्यामीत्येतस्य दृढविश्वासस्यावस्थितिर्मनस्यपेक्ष्यतेऽनिशम् । स एव सुकृती एवंविधं द्रढीयांसं विश्वासं मनसि प्रतिष्ठापयितुं प्रभवति यः सत्यं शुश्रूषते सततम् । यत्र जगदध्यात्मभावयोः सामञ्जस्यं परिपूर्णं जायते तत्रैव परिभाषापि सत्यस्य भवति पूर्णा । सत्यञ्चेदं यदात्मजीवनयात्राया भवत्यवलम्बस्तदैव वयं जगतस्तत्प्रेरकशक्तेश्च परिचयमवाप्य कृतार्था भवामः । अतएव सत्यमेव जीवनस्य सर्वस्वम् । 'सत्यमस्मदीयजीवनस्य नियम' इत्येतत्सत्यमधिकृत्य महात्मनो गान्धिनोऽभिधानम् । महर्षिर्व्यासः सत्यमेव मूर्धन्यं धर्मं मनुते । सत्यतत्त्वम-भिज्ञायैवर्षयो देवयानाध्वना परमात्मानं प्रपेदिरे । महात्मा गान्धी तु एतावदपि वक्ति यत् सृष्टौ सत्यस्यैव सत्तास्ति । न सत्यात् परं किमपि । सत्यं स्वयं परमेश्वरस्याभिव्यक्तिरस्ति । सत्यदर्शी विश्वामित्रः सत्यं श्लाघमानः प्राह—

"सत्येनार्कः प्रतपति सत्ये तिष्ठति मेदिनी ।
सत्यं चोक्तं परो धर्मं स्वर्गं सत्ये प्रतिष्ठितः ॥"

कश्चिच्छास्त्रकारश्चेदमेव प्रतिपादयन् ब्रूते—

"सत्येन धार्यते पृथ्वी सत्येन तपते रविः ।
सत्येन वाति वायुश्च सर्वं सत्ये प्रतिष्ठितम् ॥"

आध्यात्मिकं जगदेव सत्यस्याश्रयस्थलमिति स्मरणीयमस्ति पूर्वापरता यथात्रतिष्ठत एकस्मिन्नखण्डक्षितिजे तथैव जगदध्यात्मभावश्च एकस्मिन्नेव सत्ये प्रतिष्ठितं वर्तते । द्वे अपि ते सत्यस्यैकस्यैव पक्षद्वयम् । तयोरेकतरस्याप्युपेक्षणं सत्यस्य पुरोऽपराधाचरणं स्मृतम् । यदा हि वयं संसारस्य समस्ता घटना केवलं बाह्यघटनात्वेनावगच्छामस्तदा न ताभ्यः कमप्यानन्दं प्राप्नुमः । ता घटनाः अस्मज्जीवनञ्च नीरस-यन्त्रप्रक्रियावत् प्रतीयन्ते । यथाऽयोपथे धावद्यानं घण्टापथे नानाविधाः शाकटिकाः, पाषाणखण्डेषु नद्या धारा प्रवहन्ति तथैवास्म-न्मनोग्रावणि जगद्धारा प्रवहमाना भवति । न येनापि तत्प्रभावो निपतति, सर्वमपि निर्जीवनीरसारचिकारकव्यापार इव परिलक्ष्यते, विविधकृत्रिमोपायान-

वयमस्यात्मानमाह्लादयितुं प्रयतेमहि कामं, परं तथा कृते सत्यपि जीवन-यात्रा भार इव प्रतिभाति ।

जीवनयात्रैव वा जगतो घटनाश्च सर्वा: जीवनं नाप्याययन्ति न तात्तत्रोत्साहं न च स्फूर्तिमयीं प्रेरणाञ्च सञ्चारयन्ति । कियत्कालं यावत् ता मन इन्द्रियाणि चावर्जयन्ति परं चिप्रमेव तत्र घृणोत्पद्यते ततश्च स्वभाववशात् पदार्थान्तरे जीवन-रसमन्वेष्टुमुपक्रियते परं कालान्तरेण ततोऽपि चित्तं निवर्तते । तात्पर्यमिदमेव यत् पदार्थात् पदार्थान्तरं वस्तुतो वस्त्वन्तरं, घटनातो घटनान्तरं धावति मनः परं न कुतोऽपि चेतना स्फूर्तिमधिगच्छति ।

भौतिकतापरकदृष्टित्वात् न सूर्यस्योदये, न नद्याः कलकलशब्दे, न वयसां विरावे, नानोकहानां पुष्पिततायां फलिततायाञ्च वयं कामपि प्रेरणां लब्धुं पारयामः । तस्माच्च चेतना तृप्यति न सा प्रसीदति । वस्तुतस्तत्सत्यस्य च्छायायां क्व सुखं क्व च शान्तिः । असत्यत्वात् तेषां सर्वेषां पदार्थानां, तेऽस्मान् दुन्वन्त्येव क्लिश्नन्त्येव पीडयन्त्येव च ।

एकाङ्गिनी जातास्त्यस्मद्दृष्टिः । सा तद् जगदुपेक्ष्याध्यात्मिकी तु भूपति यदास्त्वा सत्यस्य दर्शनं सम्भवं भवति । द्वयोरेकतरस्याश्रयणहेतोरेवास्मदीयाः सत्यदर्शननिमित्तेन कृताः प्रयासा निष्फला भवन्ति । आध्यात्मिकता तु तदैव सार्थकं स्यात् यदा जगदपि तया सहानुस्यूतं भवेत् ।

तदेवमसत्याचरणमस्मदसफलतायाः कारणं जायते । जगदन्यत् जगत्कर्ता चान्य इत्येषा दृष्टिरेव नः सत्याद् दूरं नयति । सत्यस्य साधनायै सत्यस्य दर्शनाय च संसारोऽध्यात्मभावश्च, सृष्टिः सृष्टिकर्ता च, पदार्थः पदार्थप्रकाशनकारिणी चेतना च न पृथक्पृथक्त्वेनावधारणीया । यः संसारः स एवाध्यात्मभाव, या सृष्टिः सैव सृष्टिकर्ता, यः पदार्थः स एव पदार्थप्रकाशनपरकचेतना च इत्येतदेव विश्वसनीयम् । यदा सत्यमिदमात्मसात् स्यात् तदा चेतनास्माकं परितृप्येत् । सत्यस्यास्याश्रयो येन गृहीतः सोऽवश्यमेव परमार्थसाधनायां क्षमः । विना सत्यावाप्तिं पारमार्थिकता न, पारमार्थिकतां विना जीवनस्य सफलता न । जीवन-ग्रहणस्य प्रयोजनमस्ति पारमार्थिकता । जीवनमेव तदस्ति यदस्ति पारमार्थिकम् । महर्षिव्यासो जीवन-सफलताया रहस्यं प्रकटीकुर्वाणः प्राह—"जीवितं सफलं तस्य यः परार्थोद्यतः सदा ।" प्रतीच्यः प्रधीविक्टर-ह्यूगो निगदति—"परोपकारेण यावदेव वयं विप्रलभ्यामहे तावदेवास्मदुदयेन

सुखमनुभूयते। परमार्थसाधनया मानवीया चेतना विशेषतो विकासं याति। परमार्थलीनमानवस्य न दुर्लभं किमपि संसारे। वस्तुतः सज्जन एव सः यो मनसा वाचा कर्मणोपकारे निलीयते। परमार्थो मानवजातेः सुखायाः समुत्थानस्य शान्तेश्च साधनमस्ति। सैव जनता सुख-शान्ति-विकासपथेऽध्या-रूढा भवितुमर्हति यस्याः प्रतिव्यक्तिः सेवापरायणा साहाय्यव्यापारसंलग्नास्ति। तस्थित्यां न व्यक्तिं स्वार्थपरताभिभवितुं शक्नोति। समष्टिविषयिणी भावनो-देति तदा। 'अहम्' इत्येष भावस्तिरोधत्ते 'वयम्' इत्येष च भावः प्रादुर्भवति। सर्वेऽपि जनाः परस्परं प्रेम्णा व्यवहरन्ति सुख-दुःखयोः साहाय्यकारिणश्च जायन्ते। परमार्थवादिनि समाजे न कापि व्यक्तिः स्वकीयां सत्तां पृथक्त्वेन मन्यते सा आत्मानं समाजस्य शक्तिमत्प्रधानाङ्गमिव मत्वा सततं कार्यपरा दृश्यते। एतया पारमार्थिक्या भावनया समाजस्य जीवने गतेः सञ्चारो भवति व्यक्तिश्च सुरक्षिता पूर्णतया भवति। सा स्वजीवनं सार्थकं मत्वा स्वकर्तव्यमतिशयप्रस-न्नतया पालयति। तदेवं परमार्थवादो व्यक्तिं समाजं चोभयमेव समुन्मीलयति वर्धयति पोषयति प्रीणाति च नितराम्।

उपदेशः प्रचारो वा न परमार्थः। स तु व्यावहारिकसीमातो बहिर्न कदापि सन्निष्ठते। चेदुपदेशेन वचनेन च परमार्थस्य विशदा व्याख्या क्रियते परं तस्य व्यवहारो न क्रियते; स व्यवहारे नानीयते तदा तद्विधः परमार्थस्तु दम्भ एव अनृतमेव मतो भवेत्। परमार्थस्याभिव्यक्तिः वाण्यां न भवत्यपि तु व्यवहार एव भवति।

परोपकारार्थं यत् कर्म क्रियेत तेन विवेकप्रेरितेन भाव्यम्। विवेक-निर्णीतं कर्म एव सत्फलं जनयति। यत् कर्म मोहेन द्वेषेणान्धविश्वासेन आसक्त्या च क्रियते तद् हानिमुत्पादयति। सर्वेषामेव विदितमेतद् यद् यौ माता-पितरौ स्वशिशोरनुचितां प्रार्थनां पूरयतो मोहवशात् तौ तत्रासत्प्रवृत्तिमुत्पाद्य तस्याहि-तमेवाचरतः।

सर्वेषां सेवाकारित्वात् सर्वेषां हिताधायकत्वात् सर्वेषाञ्च शुभविधायकत्वात् परमार्थोऽतितरां सार्वजनीनं पावनमनुष्ठानमस्ति। सज्जना महात्मानश्चात एव परमार्थं मानवजीवनस्य मुख्यधर्मं मन्यन्ते। ज्ञानहीना बुद्धिविहीनाः स्वार्थं स्वलाभं मन्यन्ते। ते स्वोदरपूर्त्यर्थमेव सततमीहन्ते। स्वार्थ-निमित्तेन ते सर्व-विधमपि दुष्कर्म कर्तुं प्रवर्तन्ते न पापेभ्यो विरमन्ति स्वार्थान्धा भूत्वा। ते

नावगच्छन्ति यत् तेषां तादृशं स्वार्थमयं कर्म सर्वामपि सामाजिकीं व्यवस्थां विध्वंसयति। एकमात्रं पारमार्थिककर्म एवेदृशमस्ति येन जन-जीवनं रच्यते समाजस्य सर्वाण्यङ्गानि पोष्यन्ते तेषु प्राणशक्तिः सञ्चार्यते तानि दृढीक्रियन्ते। येषां मानवानां चित्तवृत्तिः परमार्थे रमते परमार्थाय प्रयतते निरन्तरमाचरणञ्च विदधति यदीयं पारमार्थिकं भवति ते स्वजीवने स्वकीयप्रयासे न कदापि विफल-मनोरथा भवन्ति।

कीदृशमपि कर्म लघु-गुरु कृतं स्यात् तत्कृते उद्योगस्यापेक्षा भवति। पारमार्थिकं कर्म तु परमकठिनमस्ति तन्नितान्तमेव गुरु भवति। तत्तु परमकठोर-मुद्योगमपेक्षते। ये जनाः कठोरात् परिश्रमाद् बिभ्यति, ये विघ्न-बाधानां पुरो नतभालाः सञ्जायन्ते न मनसि दृढं सङ्कल्पं धारयन्ति ते न कदापि सफल-मनोरथा भवन्ति। दृढसङ्कल्पविहीनत्वात् ते मध्य एव कर्म मुञ्चन्ति। भगीरथो नाम राजा प्रियपरमार्थो दृढसङ्कल्पवान् सत्यनिष्ठो महीप आसीत्। पुराणानि ज्ञापयन्ति यद् भगीरथस्य पूर्वजाः शापेन अदह्यन्त। मरणान्तरमपि ते न सद्गतिमवापुः। तेषामुद्धारार्थमेष उपायो निर्दिष्टोऽभवद् यच्चेद् गङ्गा पृथिवी-मागच्छेत् सा च तस्मिन् स्थाने प्रवहेत् यत्र ते शापेन दग्धा अजायन्त, तदा तत्पूर्वजाः पितरः सद्गतिमवाप्तुं पारयेयुर्नान्यथा।

राजकुमारो भगीरथो राजवंशे समुत्पन्नो भूत्वापि न विलासप्रियराजकुमार इव आसीत्। न स तेषु राजकुमारेष्वासीत् ये स्वकीयं विकासोन्मुखं तारुण्यं सुरा-सुन्दरी-निषेवणाग्नौ हातुमुत्सुका भवन्ति। यद्यपि दुःसङ्गोऽपि दुर्भाग्यमि-वोच्चवंशोद्भवान् अनुयाति परं मनस्वी भगीरथ उदग्रसंस्कारशुभ्रमना आसीत् न तदीयं मनो विचलितमभूत्। तदीया विवेकशक्तिस्तं जीवन-समस्याः समाधातु-मनुनुदत्।

पूर्वजानां कृते तदीयं किंकर्तव्यमित्यत्र स चिन्तयितुमारेभे। शापेन न केवलं तदीयाः पितरोऽदाह्यिषत अपि तु तदीयस्य वंशस्य महिमापि अस्तं गमितः। गतस्य गौरवस्य समवाप्त्यर्थं स कमप्यादर्शपथं दिवानिशं व्यचिन्तयत्। दुष्कर्म स्वयमेव शापोऽस्ति। दुष्कर्मकारी दुष्कर्मणैव विनाश्यते। यथा शापो दहति मानवं तथैव दुष्कर्मापि तं हिनस्ति। अपयशश्च सर्वत्र दुष्कर्मणा प्रसरति।

भगीरथस्य पूर्वजैः प्रमादस्तु कृत एव तैस्तुटिरप्याचरितैव। सम्प्रति कृतामनवधानतां परिमार्ष्टुमादर्शसत्कर्माचरणं सदभिमतमार्गावलम्बनमेवावशिष्ट-

मासीत्। चेत् दुष्कर्मणो फलं निरयोऽस्ति सदा, सत्कर्मणः फलं स्वर्गोऽपि भवितुमर्हति। भूयां गङ्गाया अवतरणाज्जातं पुण्यं न केवलं तमपि तु तस्य पूर्वजानपि उद्धरिष्यति। तस्मात् कथन्न तद्विधे पुण्ये कर्मणि मनः प्रवर्त्येत। भगीरथोऽनारतमिदमेव दध्यौ।

दुर्बलहृदया पुरुषा विचारयन्ति बहुतरं परमाचरन्ति न किमपि। तेषां प्रकृतिरेवेदृशी भवति परं मनस्विनो मानवा यदुचितं युक्तञ्चावगच्छन्ति तदनुसर्तुं भवन्ति सोत्साहं सन्नद्धाः साहसस्याग्रे वराक्यो बाधाः कियत्कालं स्थातुं शक्नुवन्ति ? ता विवशा भूत्वा मार्गं त्यजन्ति। गमनार्थं गमनकारिणं प्रति तत्त्वगमवसरं प्रयच्छन्ति।

भगीरथो यदा स्वर्गाद् गङ्गायाः पृथिव्यामवतारणमुद्दिश्य स्वकीयं ध्रुवं निश्चयं स्वजनान् प्रति अश्रावयत् तदा ते निःस्तब्धतामगुः। एतावन्महद् गुरु कार्यमीदृशो लघुयुवा कर्तुं शक्नुयादित्यत्र न ते श्रद्धधति स्म। आदौ सर्वेऽप्येक-स्वरेण स्वसम्मतिं न प्रादीदृशन्। मार्गे ह्यागमिष्यमाणान् प्रत्यूहान् बोधयन्तस्ते तं निरुत्साहं कर्तुमारेभिरे। परं यथा चिराद् दृश्यते तथैवात्रापि दृष्टमभूत्। दृढनिश्चयस्य पुरतः सर्वे नतमस्तका भवन्ति समर्थनञ्चान्ततः संलभ्यते साहाय्यञ्च। भगीरथो राजभवनमत्यजत्, आसाद्य च हिमालयं तत्र तपश्चरितुमारभत। हिमनग प्रभुशङ्करस्य हृदयं बभूव नितान्तमार्द्रम्। सः स्वमूर्धस्थितां गङ्गां महीतलेऽवतारयितुं स्वीकृतिं प्रददौ। राजा भगीरथो यदियेष तत्प्राप। गङ्गावतारणनिमित्तेन स चिरं भूरि शतं वर्षाणि कठोरं तपश्चकार तपोवनसम्बन्धीनि सर्वाण्यपि कष्टानि च सेहे। तपश्चरणात् नानाकष्टसहनाच्च तस्य शरीर-मतितरां कृशं क्षीणञ्चाभवत्। परं भवतु नाम तत्सर्वमपि। मानव-शरीरस्य सार्थकता न चिरकालव्यापिनि जीवने वर्तते न च सुखसम्पत्समुल्लसितेषु भोगोपभोगेष्वेव विद्यते तस्य सार्थकता तु धवलयशस्करे कर्मणि राजते। गङ्गावतारणार्थं युवावस्थां नियोज्य न भगीरथः किमपि व्यलोपयत् न स कस्मादपि सम्प्रशंसितात् पदार्थादेव वञ्चितो जातः। स तु वस्तुतः प्राप्यं प्राप। शापप्रपीडिताः पूर्वजाः सद्गतिं लब्धवन्तः सः स्वयं स्पृहणीयममरं यशः भासवान्। एताभ्यामपि द्वाभ्यां परं चेदमभूत् यत् तदनुष्ठितेन गरिष्ठेन महत्त्वमयेन प्रशंसनीयेन कार्येण तेन गंगा भूलोकमन्वगृह्णात् समग्रमपि प्राणभृतां जगत् सुधा-

आत्मविश्वासे सा शक्तिः सन्निष्ठते या सहस्रशो विपदोऽपि पराभूय विज-
यिनी भवति। आत्मविश्वास एव मनुष्यस्य परमार्थतो मित्रमस्ति स एव मनुष्यस्य
सञ्चितधनराशिरस्ति। सर्वविदितमिदं यत् साधनहीना अपि जना आत्मवि-
श्वासबलेन जगति विलक्षणानि दिव्यानि विस्मयावहानि कार्याणि कृतवन्तो,
यदा हि सर्वसाधन-सम्पन्ना अपि मानवा आत्मविश्वासाभावात् शोचनीयाम-
सफलतामभजन्। यदि वयं दृढतया विश्वसिमो—यद् वयं गुरुगुरुतरकार्याणि
कर्तुं योग्याः स्मः संसारे प्रलयसमपायं परिवर्तनं विधातुं क्षमाः स्म; यदि वयं
विश्वसिमो—यद् अस्मासु महद् दैवं तत्त्वं सन्निहितमस्ति, पूर्णतास्मासु राजते,
अनन्तशक्ति-सागरो ह्युच्छलोऽस्मासु गर्जति, तदा निःसंशयं लोके वयं महाम-
हाकार्याणि अनुष्ठातुं प्रभवामः। रामः आत्मविश्वाससामर्थ्यादेव साधनसम्पन्न-
मपि लङ्केश्वरं स्वयं साधनविहीनोऽपि अजयत्। अत एव तु कोऽपि कविरत-
नेवं स्तवीति—

अस्मन्मानमिव्य शक्तोऽस्मदीयमात्मविश्वासमपेक्षन्ते। आत्मविश्वासस्य दौर्बल्यात् कार्यसम्पादनशक्त्यामपि नैर्बल्यमुत्पद्यते। यदपि कार्यं हस्तगतं करिष्यामि तदवश्यं सफलताधियाऽत्कृत्तं भविष्यति, सर्वमपि साम्प्रतं परमेव सम्पत्स्यते इत्येवविधा भावना न हितकरी सिद्ध्यति। विश्वासोऽस्यात्मनो ध्वनि। अस्ति स आध्यात्मिककार्यशक्ति। केनापि महापुरुषेणोक्तं प्रथमं वयं ज्ञातुमिदं प्रयतेमहि यद् वयं के? किमर्थं जगति समागता स्म? किमस्मदीयं कार्यमस्ति? इत्यत्रैव मानवस्य सर्वस्वं निहितमस्ति। यदि स उक्तान् विचारान् विदधानः स्वकीयं उद्दिष्टेऽध्वनि दृढविश्वासेन सह अकुतोभयो भूत्वोपसरेत् तदा साफल्याधिगमने सन्देह एव नास्ति। दृढविश्वासस्य सफलताजनकत्वात्। कृष्णे दृढविश्वास एव सततं व्यराजत अतएव तु सोऽर्जुनं निःसन्दिग्धभावेनो-च्चैर्जगाद—

"मच्चित्तः सर्वदुर्गाणि मत्प्रसादात् तरिष्यसि।
अथ चेत् त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि॥"

अस्माकं प्रमुखं कर्तव्यमिदं इदं यदात्मविश्वासमात्मन्युत्पादयितुं न दिनानु-दिनं वर्धयितुं नितरामेकाग्रचित्ता भूत्वा प्रयतेमहि। तत्रैव मानवमात्रस्य शिवं मङ्गलञ्च सन्निहितमिति दिक्।



## स्वर्गीयः प्रधानमन्त्री पं० जवाहरलालनेहरूः

स यत्र अगमत् तत्र सम्प्रत्युद्गन्तुं जनममुद उत्तरलोऽभरत्; स यदा अभाषत तदा तद्भाषणं श्रोतुं सकलोऽपि संसारः सस्वरमधावत्; स यदा अगर्जत् तदाखिलापि मही विचलितुमारभत; स यदा व्यद्योतत तदा विद्युतोऽपि आत्मानमपाह्लोपत; स यत्र उपाविशत् समग्रमपि भू-भुवनं तत्र उपविशति स्म; यत्र स प्रातिष्ठत तत्र तदपि प्रतिष्ठते स्म; विस्तारे गगनं न तं जेतुमशक्नत्; क्षमा च क्षमायामात्मानं न ततोऽधिकाममंस्त; विश्वस्य महापुरुषास्तदीयां स्थितिं विश्वस्य कृते हि मङ्गलममन्यन्त; निखिलापि जनता तस्येङ्गितेऽनृत्यत्, धरित्र्याः सर्वेऽपि देशास्तत्र श्रद्दधते स्म; वस्तुतः सः सर्वमासीत् सर्वं च तस्मिन् माति स्म, मेदिनीमण्डलस्य स शान्तिसुधावर्षी सुधाकर आसीत्; जगत्यां ज्वलन्तं समरज्वलनं निर्वापयितुं स घनघटा आसीत्; निःसंशयं तस्य जीवनगाथाया एकैकं पदं विलक्षणमेव भवत् क्षितिमभ्यतिष्ठत्; तं शान्तिदूतमवाप्य पण्डितो मोतीलालनेहरूः स्वपितृत्वं माता च स्वरूपरानी स्वकीयं मातृत्वं धन्यममंसाताम्। नवाशीत्यधिकाष्टादशशततमेशवीयसंवत्सरे नवम्बरे मासे दिनाङ्के च चतुर्दशे प्रयागे प्रादुर्भूतः सः प्रकाशः पृथिव्यां 'जवाहरलाल' इत्येतयाभिधया सर्वत्र अप्रथत।

मातृपितृमनःप्रमोदवर्धनपरः संसारसारो जवाहरलालो विश्वविजयिनश्चक्रवर्तिनः क्षितिधारिणो राजसूनुरिव नैजं शैशवमानन्दभवने सानन्दमनयत्। उपमातरो गौराङ्गनारस्तं नक्तन्दिवं ससान्द्रस्नेहमलालयन्त, गौराङ्गाश्च विद्याविदस्तदर्थमाद्यां शिक्षां व्यतरन्। बाल्य एव स तुरङ्गारोहण-तरणादिकलासु कुशलतामगात्। उच्चतमविद्यार्जनाय स हरियर्षम्-इङ्गलैण्डम्—अगात्। तत्र स कैम्ब्रिजविश्वविद्यालयस्य ट्रिनिटीकालेजे शिक्षामधिगम्य बी० एस सी०, एम० ए० च भूत्वा द्वादशाधिकैकोनविंशतिशततमेशवीयेऽब्दे विधिवक्ता च—बैरिस्टर—संवृत्तः।

प्रतीच्येषु देशेषु विचरन् जवाहरलालः सर्वत्रापि नवमेव जीवनं समुल्लसितं सर्वविधमपि स्वातन्त्र्यमगाधाञ्च जनताया मातृभूमिभक्तिमवलोकयति स्म यदा, तदा तन्मनः स्वदेशस्य दरिद्रां दीनां पराधीनाञ्च दशां स्मारं स्मारं भृशमदूयत।

तदीये मानसे परमैश्वर्यपरिपालितं स्वकीयं जीवनमपि प्रति नितरां जुगुप्सा समुत्पन्नाऽभवत्। कस्मात् कारणात् पाश्चात्यदेशाः अतुलसमृद्धिशालिनः कस्माच्च कारणात् तदीयदेशभारतं शोचनीयतमामवस्थां प्रपन्नमित्यत्र यदा स गम्भीरतया व्यचिन्तयत् तदा सः स्वकीयमातृभुवो दरिद्रतायाः कारणमेकमात्रं पारतन्त्र्यमपश्यत्। सः स्वीये छात्र-जीवन एव ततः स्वकीयं प्रियं देशं पारतन्त्र्य—पाशान्मोक्तुं प्रत्याश्रुतवान्।

अगाढं देश-प्रेम हृदये निधाय जवाहरलालो हि शिक्षां समाप्य स्वं देशं प्रत्यावृत्तः। यद्यपि पितुराज्ञया प्रयागस्य प्रधानन्यायाधिकरणे सः प्राड्विवाकत्वे आत्मानं न्ययोजयत् परं न तत्र चेतोऽरज्यत्। षोडशोत्तरैकोनविंशतिशततमे खैष्टेऽब्दे तस्य जीवने महत्त्वमहनीये द्वे घटने अघटताम्। तत्रैकासीत् कमलया सह परिणयोऽपरा च महात्मनो गान्धिनो दर्शनम्। राष्ट्रचिन्ताचिन्तितमानसं जवाहरं स प्राड्विवाकता न च प्रभूतवैभववतः स्वस्य भवनस्य राजसुखान्येव निरोद्धुमशकन् न च निन्दितसुरसुन्दरीसौन्दर्यं कमलायाः सौन्दर्यं किञ्च न स्तन्धयायाः सुताया इन्दिराया वात्सल्यतापि तं राष्ट्र-सेवापथात् संयमितुं प्राभवत्। स यथा सिद्धार्थो लोकं दुःखेभ्यो विमोक्तुं पर्यव्राजीत्, तथैव स्वां जन्मभूमिं भारतं स्वाधीनं विधातुं पर्णगृहवासिनां दीन-निरीहाणां निरन्नानां कृषीवलानामश्रुधारां परिमार्ष्टुञ्च समस्तमपि सर्वविधमपि सम्पद्राशिं तृणाय मत्वा देश-सेवायामात्मानं न्ययूयुजत्।

स्वातन्त्र्य-समर-सेनातरुणामणीर्वीरजवाहरलालः प्रथमं चतुर्दशाधिकैकोनविंशतिशततमे खैष्टीये वत्सरे दक्षिणाफ्रीकाभूभागे प्रवासिभारतीयानामधिकारगोपनार्थं प्रारब्धे सत्याग्रहे पञ्चसहस्ररूप्यकाणि संगृह्य महात्मानं गान्धिनम्प्रति सम्प्रेषितवान्। १९१८ तमेऽब्दे भारतीयस्वशासनसंस्थायाः—इण्डियनहोमरूल-लीगस्य—मन्त्रिपदमधिष्ठाय तत्कार्यं साधु सः सम्पादितवान्; राष्ट्रियमहासभायां—कांग्रेसे—प्रविश्य च स रौलटविधानं विरोद्धुं सम्प्रवृत्ते हयान्दोलने प्रबलोत्साहपुरस्सरं सत्याग्रहपूर्वकं निर्भयमना भवन् सत्यनिष्ठया कर्त्तव्यमपालयत्।

आंग्लीयशासनस्य नृशंसानि कार्याणि तदीयञ्च कठोरं दमनं जवाहरलालस्याग्रेसमक्षारे पर्यवर्तयन्। कर्मठः सः स्वकीयैर्वीरतापूर्णैः कार्यैः देशभक्तिपूर्णैरोजस्विभिर्भाषणैस्तत्समयवर्तिनः सर्वान् अपि देशनेतॄन् चकितचकितान् अकरोत्। पराधीनताम्प्रति जनताया मानसे जुगुप्सामुत्पादयितुं देशञ्च प्रति तस्याः अन्तः-

करणे स्थिरां सुदृढाञ्च प्रीतिं जनयितुं स तथा प्रायतत यद् आंग्ला आंग्लानाञ्च शासनं समग्रं नितरामेव भीतिमगमन्। वैदेशिकशासनस्य कुदृष्टिस्तं निग्रहीतुं व्यचिन्तयत्। पितुर्वात्सल्यमयं हृदयं प्रियं सुतं जवाहरं हि आगामिनीभ्यो महा-महाभ्यः कठोरतराभ्य आपद्भ्यो वारयितुमभवदाकुलम्। परं जवाहरलालः—

'निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम्।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः॥'

इत्येतमादर्शं पुरो न्यदधात् अतः पितुर्निवारणा तु न तं स्वपथाच्च्युतं कर्तुमशकत्। सः अवश्यमेव स्वपितरमपि स्वातन्त्र्यार्थं समारब्धे संयुगे समवतारयत्। सुतस्नेहेन देशप्रेम्णा वा अतुलवैभवशाली परमयशस्वी पं० मोतीलालस्त्यागमूर्तिरभवत्। अयं जवाहरलाल एव आसीत् यस्य प्रेरणया सर्वमेव तत्कुलमाबालवनितावृद्धं देशाराधनायां न्यलीयत।

जवाहरलाल एकोनविंशाधिकैकोनविंशतिशततमाब्दादेकविंशत्यधिकैकोनविंशतिशततमाब्दं यावदुत्तरप्रदेशीयकृषकान्दोलनेऽद्भुतं पराक्रमं प्रादीदृशत्। आनन्दभवनस्य स राजकुमारः कृषीवलैः सार्धं कृषीवल एव भूत्वा जीवनमनैषीत्। आन्दोलने कारा-यात्रायां सैनिकशस्त्रप्रहारसहने च सः सततं देशवासिभिः सहैव समतिष्ठत। १९२१ तमेऽब्दे स प्रथमं कारावासदण्डेन अदण्ड्यत। षण्मासान् काराकष्टमसहत। पुनश्च स १९२२ तमेऽब्दे वैदेशिकवस्त्रापणानां पुरो हि वैदेशिकाम्बरविरोधं कुर्वाणो न्यगृह्यत।' गते सत्यवसानमसहयोगे स प्रयागीयनगरसभायां प्रधानो भूत्वा प्रशंसनीयेन विधिना कार्याणि सम्पादयामास। प्रयागीयजनता तदीयेन त्यागेन तदीयया परमोत्कृष्टया अवदातया योग्यतया नितरामावर्जिताऽभवत्। तत्कृतेन प्रयत्नेन प्रयागनगरं यामुन्नतिं याञ्च समृद्धिमगच्छत् तदर्थं तत् सम्प्रति नतभालमभूत्। १९२१ तमे संवत्सरे नागपुरे पताकारोहण-सत्याग्रहं समीचीनतया संयोजितवान् सः, अथ च तस्मिन्नेवावसरे सः प्रथमवारं राष्ट्रियमहासभाया प्रधानमन्त्रिपदे प्रतिष्ठापितोऽभवत्। कोकोनाडाकांग्रेसाधिवेशनं तं प्रधानमन्त्रिपदे सुशोभितं विलोक्य परामेव प्रीतिमवाप। तदाप्रभृति तु स देश-सेवायां सर्वथैव निमग्नमकरोदात्मानमविरामकठोरकर्मसु सदैव रतः स दृष्टोऽभूत्। यत् कार्यं योगिनामप्यगम्यं तत्रैव सः

अद्भुतां सफलतामधिगच्छन् अवालोकि। देशकार्यमेव तद्दृष्टिसमक्षे स्थितम-भवत्। न स स्वचिन्तां मनागपि व्यदधात्। देशस्तं कर्मयोगिनमवाप्य धन्योऽभवत्।

जवाहरलालः षड्विंशत्यधिकैकोनविंशतिशततमेशवीये वर्षे पुनः पाश्चात्यान् देशान् प्रातिष्ठत। तत्र स तदा साम्राज्यविरोधिनीं सभामेकां सम्भावयामास, सभायाः कार्यमेकस्मिन् दिने तु तदाध्यक्षय एव सम्पन्नतामगात्। 'रूस'इत्येतदभिधे देशे प्रसृता तत्रत्या साम्यवादिविचारधारा तस्मिन् प्रभावमारोपितवती स्वकम्। स ततः प्रत्याधृत्य स्वकीये देशेऽपि साम्यवादसम्बन्धिनो विचारान् प्रसारयितुं प्रायतत। किञ्चाष्टविंशत्यधिकैकोन विंशतिशततमे वर्षे स्वेनाविरामप्रयत्नेन भारतीयस्वाधीनतासङ्घं—इण्डियन इन्डिपेण्डेण्ट्स लीगम्—प्रातिष्ठिपत्। ततश्च १९२९ तमेशवीयेऽब्देऽसावखिलभारतीयश्रमकारिसंघस्य—'ऑल इण्डिया ट्रेड यूनियन कांग्रेसस्य'—अध्यक्षपदमलंकृतवान्। एतस्मिन्नेवाब्दे हि लवपुरे—लाहौरे राष्ट्रं तं तरुणहृदयवल्लभं राष्ट्रपतिपदेऽधिष्ठितमकुरुत। नेतृत्वे च तस्य लवपुरे पूर्णस्वाधीनताविषयकः प्रस्तावः स्वीकृतोऽभूत्। त्रिंशदधिकैकोनविंशति-शततमेशवीये संवत्सरे जनवरीमासे षड्विंशे दिनाङ्के सर्वत्रापि देशे प्रथमः स्वतन्त्रता-दिवसः सातिशयोत्साहमायोजितोऽभवत्। देशो दिनानुदिनं वीरस्य तस्य नेतृत्वे प्रगतिं कुर्वाणो व्यालोक्यत। तस्य महता प्रयत्नेन सर्वत्रापि स्वदेशभक्तिगङ्गा सवेगं प्रवहमाना दृष्टाऽभवत्। सर्वत्रापि 'जयतु जयतु जवाहरलालः' इत्येव घोषो गगनभेदी श्रुतोऽभूत्। यदा हि पूर्णस्वातन्त्र्यं नाङ्गीकृतमांग्लशासनेन असकृत् कृतास्वपि प्रार्थनासु तदा पुनरयं असहयोगान्दोलनं महात्मना गान्धिना समारब्धं तस्मिन् स भूयो बन्दीकृतः। षण्मासान् यावत् कारा-कष्टानि भोक्तुं कारागारे च क्षिप्तोऽभवत्। यदा हि गान्धि-इरविनसन्धिपरामर्शः प्रवृत्तस्तदा स श्रीमहात्मना गान्धिना समं विचार-विनिमयनिमित्तेन यरवदा-कारागृहं नीतोऽजायत यतः स तदानीन्तनेऽब्दसि राष्ट्रिय-सभाध्यक्ष आसीत्, तदनुमतिं विना सन्धिर्न सुशक आसीत्।।

जवाहरलालनेहरूः महान्ति महान्ति कार्याणि कृतवान्। सः जनताया अन्वर्थतया हृदयसम्राट् आसीत्। राजनीतिज्ञेषु तदीयः प्रभावो निविडतया विततोऽभवत्। स स्वकीयैः स्पृहणीयैः गुणैः सर्वेषामपि प्रियो जातः। देशस्य समग्रमपि पण्डितवृन्दं तम्प्रति नतमस्तकं सञ्जातम्। स सन्धिविच्छेदे जाते

पुनः पीडितकर्षकसमाजस्य सेवायां निरतोऽभवत्। न क्षणमपि विश्राममगृ-ह्णात्। शासनं तस्मात् कर्मकुशलाद् भीतमासीत् पुनश्च वर्षद्वयमोग्येन कारावासदण्डेन दण्डितो जातः। परं मानू रुग्णत्वात् पूर्वमेवोदमुच्यत।

१९३२तमेशवीयाब्दात् १९३८तमेशवीयाब्दं यावत् जवाहरलालमभी-क्ष्णमनेकदारुणविपदः परिवारसम्बन्धिभ्यो नितरामेवाक्रिमन् पत्न्याः असहनीयो वियोगोऽभवत्; पितापि स्वर्गं प्रस्थितः, पत्नी पिता तु प्रियं जवाहरमत्यजदेव मातापि हा, तं विहाय नाकमगच्छत्। अयं जवाहरलाल एव धीरमानस आसीत् य एवंविधानि स्वजनविरहजनितानि असह्यानि हृदयमर्मविदलन-कारीणि कष्टानि सहमानोऽपि मातृभूमिसेवातो न मनागपि विमुखो जातः। यदा हि कठोरमना विधाता निरन्तरं तत्तद्विपत्पातने संलग्न आसीत् तदापि सः १९३४तमक्रैस्ताब्दे घटितेन विहारभूकम्पेन प्रपीडितां जनतां कदापि सेवमानः, कदापि च "राष्ट्रियमन्त्रिमण्डलं संस्थापितं भवेच्छासनाभ्यन्तरे" इत्येतं हि राष्ट्रिय-महासभाया निश्चयं सफलीकर्तुं सर्वत्रापि देशे दिवानिशं विश्रामं विहाय धावन् दृष्टोऽभवत्। तस्यैवोरकष्टस्य परिश्रमस्य फलमासीत् यत् तदाष्टसु प्रदेशेषु राष्ट्रिय-महासभा स्वकीयानां मन्त्रिणां शासने समावेशने सफलतामलभत।

मानवः संसारे निःस्वार्थभावेन क्रियमाणया लोकसेवयैव लोकप्रियतां विन्दति। जवाहरलालं देशोऽसकृत् परीक्षते स्म। सः सदैव पावनचरित्र एव सिद्धोऽभवत्। देशो यदा यदा समाहूतवान् तदा तदा सः सेवक इव तं निषेवितुं समुपस्थितो दृष्टोऽभवत्। वस्तुतस्तस्य जीवनं देशार्थमासीत्। मानवतायाः परि-रक्षणायैव स भुवि समवतीर्णोऽभूत्। भारतीयजनता, अत एव तं मानवतोपासकं महामानवं प्रि कृत्वो राष्ट्रपतिपदे प्रतिष्ठापितवती। प्रथमं स १९२९तमे वर्षे लवपुरे ततः १९३५तमे वर्षे लखनऊनगरे ततश्च १९३६तमे वर्षे फैजपुरे राष्ट्रपतिः संवृत्तः। श्रीजवाहरलालस्य जनप्रियत्वस्यातः परं किं ज्वलन्त् प्रमाणं स्यात्। यदा यदा लोकसभाया राजसभायाश्च निर्वाचनानि अभवंस्तदा तदा तस्यैव दले अभ्यर्थिनो जनमतमवाप्तुमशक्नुवन्।

अष्टत्रिंशदधिकैकोनविंशतिशततमेशवीये वर्षे पण्डितजवाहरलालनेहरूः पुनर्लोक-मतं भारतानुकूलं कर्तुं प्रतीच्येषु देशेषु व्यचरत्। तदानीं स्पेनदेशो गृहयुद्धग्रस्त आसीत् स तत्रापि अगच्छत्। चीनदेशञ्च स ययौ। ततः प्रत्या-गतं तं भारतभक्तं वैदेशिकं शासनं न द्रष्टुं प्राभवत्; एकोनचत्वारिंशदधिकैकोन-

विंशतिशततमेऽब्दे वर्षचतुष्टयमोग्येन कारावासदण्डेन अदण्डयत सः। तस्मिन् एव वर्षे द्वितीयविश्वमहाहवस्य प्रारम्भोऽभवत्। भारतस्य जनतया तद्विधमेव साहाय्यं ब्रिटेनदेशम्प्रति दातव्यं यद् ब्रिटेनदेशोऽभिलपते—इत्येतं विषयमधिकृत्य महात्मना गान्धिना निवेदितं यद् राष्ट्रियमहासभाया अहिंसासिद्धान्तनिष्ठत्वात् सङ्ग्रामे सा साहाय्यं प्रदातुं नात्मानं समर्थां पश्यति। सा वाञ्छति यदेतस्मिन् विषये भारतराष्ट्रस्य जनो निर्बाधतया स्वकीयं विचारं प्रकटीकर्तुं सदवसरमासादयेत्। वायसरायो नैतत् स्वीचकार। तद्विरोधे श्रीमहात्मना वैयक्तिकसत्याग्रहः समारब्धः। पण्डितजवाहरलालनेहरूस्तस्मिन्नवसरे कारागाराद्दुन्मुक्तः कृतः शासनेन।

भारतं तदानीं क्रिप्सयोजनयापि शासनेन विकलीकृतमासीत्। एकतस्तु देशस्तेन विश्वयुद्धाग्निना दह्यमानोऽभवदपरतः क्रिप्सयोजना तं विप्रलब्धुं मुखं व्यादाय सन्तिष्ठमानासीत्। भारतीया नेतारस्तदा 'भारतं त्यजत' इत्येतं प्रस्तावं समुपस्थापितवन्तः। वैदेशिकाः शास्तारस्तत्क्षणमगस्तमासे नवमे दिनाङ्के द्विचत्वारिंशदधिकैकोनविंशतिशततमे वर्षे गान्धिमहात्मप्रभृतिनेतृवृन्देन समं पुनरपि जवाहरलालं निगृहीतवन्तः। कारागारात् सः १९४५तमे ख्रैस्ते वर्षे जूनमासे उन्मुक्तिमलब्ध वैवल-प्रस्ताव-विचारणायै।

पण्डितजवाहरलालनेहरूर्देशं भाविस्वातन्त्र्ययुद्धाय सज्जीकर्तुं पुनस्तदा आक्रमत। तदा स इदमेव कार्यं नाकरोदपि तु सुभाषचन्द्रसमायोजितायाः स्वतन्त्रभारतसेनायाः सेनानायकेषु योऽभियोगः समारोपितः शासनकारिभिस्तस्मात् स्वतन्त्रभारतसेनानायकान् उन्मोक्तुं तेषां जीवनं रक्षितुं सः पूर्णशक्तिपूर्वकं प्रायतिष्ट। स तस्मिन् अभिनन्दनीये प्रयासे साफल्यमपि प्राप्तवान्।

ब्रिटेनदेशनिवासिनः शास्तारो भारतमपकर्तुं तत्सञ्चालितं स्वातन्त्र्यायोधनं निर्बलीकर्तुं सन्ततं साम्प्रदायिकतानलमदीपयन्, किञ्च देशं पातयितुं भारतीयान् भूपान् अधिकारिणश्च भृशमनुनुदन्, जवाहरलालः साम्प्रदायिकताभेदभावविपयिणीं कुत्सितां नीतिं घेत्तुमिदमुचितममंस्त यद् साधारणजनसम्पर्कयोजना सञ्चालिता स्यात्। "साम्प्रदायिकतया साधारणा एव जनाः धन-हानिं जीवनहानिञ्च गच्छन्ति न तत्प्रभावस्सदितरेषु निपतति" इत्येतद् विमृश्य स तथा प्रायतत् येन सामान्यजनवर्गः शासनस्य समाजनेतृवृन्दस्य च तां नीतिं जानाति स्म या समये समये तम्प्रति क्षतिकारिणी असिद्धयत्। देशीयराज्या-

धिकारिणां सहायतया आंग्लशासनं स्वाभीप्सितं साधयितुं न प्रभवेदित्येतदर्थञ्च स देशीयराज्यजनतया सह सम्बन्धं स्थापितवान् अखिलभारतीयराज्यजनसभाञ्चाकारितवान् तस्याः सभायाः साभापत्यमङ्गीकृत्य जनतां जागरयति स्म राजभ्यः स्वाधिकाराधिगमनाय च तां प्रेरयति स्म ।

जवाहरलाल उद्योगप्रसारवादी आसीत्। स स्वातन्त्र्य-समवाप्तेः प्रागपि तदर्थं भृशं प्रायतत सः अचीकमत यद् देशो महोद्योगशाली स्यात्। तत्र विविधानां प्रचुराणाञ्च पदार्थानां निष्पादनं भवेत्। तत्र सर्वविधा उद्योगागाराः स्थिताः स्युर्येन देशोऽर्थवान् जायेत न स तत्तद्वस्तूनां कृते देशान्तरमपेक्षी भवेत्। यदैव देशः स्वतन्त्रो जातः स एतदर्थमेव सुदृढं पदमुत्थापितवान्। अद्य देशे ये हि अनेके महान्त उद्योगागारा विलोक्यन्ते या हि विशालविशालतरा विद्युच्छालाः प्राप्यन्ते ये च विविधयन्त्रनिर्माणकारिणः कार्यागारा वीक्ष्यन्ते याश्च महत्यो विज्ञानशालाः सम्प्रति अवालोक्यन्ते ये च महार्घ्यकारिणो देशे विशिष्टतरा बन्धाश्च शोभन्ते ते सर्वे एव तस्यैव महापुरुषस्य उद्योगस्य मधुराणि फलानि सन्ति। स्वकीयं देशमर्थवन्तं विधातुं समाजस्य जीवनं समृद्धं कर्तुं जनमात्रस्य दारिद्र्यमपहर्तुं च तन्मानसे या महत्त्वाकाङ्क्षा सवेगं सञ्चरन्ति स्म ता एव तत्तदुद्योगागारादिरूपाणि बिभ्राणाः सर्वत्र देशे विजृम्भमाणाः प्राप्यन्ते स यथा बृहत्तरोद्योगानां प्रसारणे रुचिं न्यधात् तथैव सः कुटीरोद्योगादिलघुलघुकार्यकलापेष्वपि प्रीतिमपुष्णात्। तदर्थं च सदैव यत्नं व्यदधात्। देशस्य जनसंख्याया अधिकतमो भागो ग्रामेषु वसति। ग्रामीणजनतायाः सविधे केवलं कृषिकार्यं भवति। तत् कार्यं न वर्षव्यापि भवति। कृषकाणां भूयान् कालो व्यर्थमेव व्यत्येति। तेषां जीवन-समयं सार्थकं कर्तुं तेषां कार्याभावात् जीविकाया राहित्याच्च समुत्पन्नां दरिद्रतां दूरीकर्तुं लघुलघूद्योगानां महत्यपेक्षा वर्तते। धनाभावात् कर्षकाणां कृते कुटीरोद्योगाः सन्ति परमोपकारिण इत्येतत् सः साधु अजानात् अतस्तद्विधानामप्युद्योगानां निमित्तेन स्वातन्त्र्यात् प्राक् अर्वाक् च अनारतं प्रभूतं कार्यं कृतवान् पुष्कलधनराशेश्च तत्र विनियोगं कारितवान्। तद्धारणस्य प्रयोजनमेव तस्येदमभवद् यद् धनविहीनजनतायाः सविधे धनं गतं भवेत्।

न जवाहरलालं कदापि साम्राज्यवादोऽधिनायकवादश्च अप्रीणात्। तस्य तदेवाभिलषितमभवद् येन मानवस्य सर्वाङ्गीणो विकासो भवितुमर्हति।

मानवताविघातकतत्त्वेषु तस्य नितान्तमेव घृणासीत्। स आजीवनं तथा प्रायतत येन संसारस्य सर्वेऽपि मानवाः परस्परं सौहार्दभावमाचरन्तः स्थातुं शक्नुयुः। यत्र यत्र संसारभागे युद्धं प्रास्फुटत् स तदुपशमनाय एव अचेष्टत सः स्वकीये एतस्मिन् प्रयासे बहुत्र सफलतामपि लब्धवान्। यदि तृतीयविश्वयुद्धात् संसारं कोऽपि अद्यपर्यन्तं गोपायितुं क्षमो जातस्तदा सः अयमेव शान्तिदूतो महान् मानवतापक्षपाती जवाहर आसीत्। स जनतन्त्रे श्रद्धां न्यदधादतः स्वातन्त्र्यप्राप्त्यनन्तरं स्वकीये देशे जनतन्त्रशासनमेव प्रातिष्ठिपत्। चिरकालात् समागता परतन्त्रता यदा देशं सप्तचत्वारिंशदधिकैकोनविंशतिशततमेशवीयाब्दे मुक्तवती, तदा देशस्य स्थितिर्नैतादृशी अवर्तत यत्र जनतन्त्रशासनं संस्थापितं स्यात् परं जानश्चपीदमुत्कृष्टतमसंस्कृतिमतः पुरातनतमस्य पावनेतिहासशालिनो विश्वस्पृहणीयगौरवधारिणः स्वस्य देशस्य सम्मानवृद्धिमसौ जनतन्त्रशासनप्रतिष्ठायामेव अन्वपश्यत। अविरामेण श्रमेण पौरुषेण च कठिनतममपि कार्यं साधयितुं शक्यं भवतीति विचार्य स मनस्वी महतीमुज्ज्वलां बलवतीञ्च आशां हृदि निधाय प्रधानमन्त्रित्वपदग्रहणकालात् स्वान्तिमश्वासं यावत् जनतन्त्रशासनं परमधीरतापूर्वकं परिपोषयन् एव दृष्टोऽभवत्।

जवाहरलालो धर्मे आदरधियं सदैव न्यधत्त। परं न स आडम्बरं दम्भं परधर्मासहिष्णुतां वा धर्मममंस्त। स महान् मानवः—

"सर्वेऽपि सुखिनः सन्तु सर्वे सन्तु निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत्॥"

इत्येतदर्थं जन्म अगृह्णात्। सः स्वकीयोपर्युक्तादर्शरक्षार्थमेव कार्यं कृतवान्। तदर्थमेव सः अजीवत्। एतस्मादेव हेतोः स तद्राज्यं स्वकीये देशे स्थापितवान् यत्र सर्वेऽपि धर्मावलम्बिनः स्थातुं शक्नुयुः, यत्र सर्वेऽपि मानवाः सुखेन स्वकीयं जीवनं वोढुं क्षमाः स्युः, यत्र सर्वेऽपि नैजं सर्वाङ्गीणं विकासं कर्तुं प्रभवेयुः। 'अयं जनः श्वपचोऽतः स्पर्शयोग्योऽपि न, अयं जनः शूद्रजातीयोऽतस्तत्स्थानयोग्यो न, अयं जनो यवनो म्लेच्छो वा अत इह स्थातुं योग्यो न' इत्येवंविधान् क्षुद्रान् विचारान् सः सदैव न्यक्कृतवान्।

जवाहरलालो यथा स्वस्य देशस्योन्नतिमकामयत तथैव सः विश्वस्य सर्वेषामपि देशानामुदयं विकासञ्चाकाङ्क्षति स्म। सः समस्तेऽपि जगति समदृष्टिं न्यदधात्। न कमपि देशं सः शत्रुमवागच्छत्। सर्वेष्वपि मित्रवदाचरणं तस्येष्टमासीदत एव

सः विश्वम्प्रति सहस्थितानीतिमपाक्रमयत्। सः स्वकीयायामस्यां नीत्यां सफलता-मपि संलब्धवान्। अनिच्छोऽपि संसारस्य प्रधानानि अमेरिका रूसप्रभृतिराष्ट्राणि तदी-यामेतां नीतिं हृदयेन प्रशंसन्ति। "किञ्चिदपि राष्ट्रं कस्याप्यपरस्य राष्ट्रस्याभ्य-न्तरिकेषु विषयेषु न कीदृशमपि हस्तक्षेपं कुर्यात्"; "सर्वाण्यपि राष्ट्राणि अन्योऽन्यस्य प्रादेशिकीमखण्डताम्प्रति किञ्च प्रभुत्वसत्ताम्प्रति परस्परं श्रद्धाभावं निदध्युः"; "प्रतिराष्ट्रं परस्परं समानतात्मकं व्यवहारमाचरेत्"; "किमपि राष्ट्रं न राष्ट्रा-न्तरोपर्याक्रमणं विदध्यात्"; "प्रतिराष्ट्रं परराष्ट्रस्य जीवने स्वजीवनं मन्यमानं स्वकीयया शान्तिप्रियया सत्तया समग्रमपि संसारमाश्वासयेत्"—इत्येतेषु सिद्धान्तेषु तस्य हि सुदृढीयसी आस्था निष्ठा च अवर्तत अत एव स चीनकृतमा-स्कन्दनं नितान्तमनुचितं मन्यमानस्तदीये तादृशे निन्द्ये कर्मणि घृणामदीदृशत्। तस्य नीतेश्चरमलक्ष्यमासीत् संसारे सौहार्दसंस्थापने समाजवादस्योन्मेषणमथ च शोषणकारिभ्यो मानवतायाः परित्राणम्।

श्रीजवाहरलालो महान् अध्ययनशीलः सुप्रसिद्धलेखक आसीत्। सः "विश्वे-तिहासस्य प्रकाशः", "भारतवर्षस्य समस्याः" "आत्मकथा" "पितुः पत्राणि पुत्रीम्प्रति" इत्यादिकान् बहून् ग्रन्थान् अजग्रन्थत्। तस्य लेखनविधौ हि आक्सफोर्डीयविश्रुतसमालोचकः श्री एडवर्डटामसनः श्रीगुन्थरश्च भृशं प्राशंसताम्।

वर्तमाने जगति यादृशं सम्मानं जवाहरलालः समलभत न तादृशं कोऽपि जनः साम्प्रतिके युगे लब्धुमपारयत्। यस्मिन् अपि देशे सः अगात् तत्र तत्रत्याः सर्वेऽपि आबालवृद्धाः तस्मिन् स्वहृदय-सुमनांसि सादरं सप्रेम च अवर्षयन्। स वस्तुत एशियाख्यस्य द्वीपस्य तु प्रबोधनकृत् प्रखरः सवितासीत्। तस्मात् सर्वेऽपि दुर्बला निपीडिताश्च देशा बलमलभन्त। सः असहायानां सहाय आसीत्। महात्मना गान्धिना तस्मिन् यो हि दुर्वहो भारो निक्षिप्तः स भारस्तेन सम्यगेव ऊढः। स नवभारतस्य निर्माणकृन्नेहरूः केन प्रकारेण स्तूयेत। कवय-स्तस्य काव्यार्थमितिहासकाराश्च तस्येतिहासार्थं तादृशानां समुचितानां शब्दानां मार्गणे पराः सन्ति यैस्तदनुरूपं काव्यमितिहासश्च विरचितः स्यात्।

अयि वीर जवाहर! अद्य त्वां विना विश्वं निराश्रया जातास्ति, शान्तिः सर्वत्र विलपन्तीतस्ततो धावति न क्वापि शरणमासादयति उत्साहो विगताश्रयो भूत्वोच्चैः क्रन्दति विश्वशान्तिरनाथा जातास्मि। अयि शिशुवत्सल, त्वमिमान् शिशून् विहाय क्व गतः। त्वम् इमान् बालान् विलोक्य प्रासीदः। इमे बालाश्च

त्वां दृष्ट्वा अनन्दन् । त्वन्तु एतेषु परमदयालुरासीत् । इमान् अपि त्वमत्यजः । नारीणां समुत्थानार्थं त्वं यं यं प्रयासं कृतवान् तं तं स्मारं स्मारं सकलमपि नारीजगदद्य उच्चैः रोदिति । अयि प्रिय जवाहर ! चेतनानां तु वार्तैव का अचेतना अपि त्वामन्तरेण दूयन्ते—

> गङ्गा रोदिति यमुना रोदिति रोदिति भारतधरित्री हा
>
> चन्द्रो रोदिति सविता रोदिति रोदिति हिमनग उच्चैर्हा ।
>
> विन्ध्यो रोदिति जलधी रोदिति रोदित्युडुगणलोको हा
>
> वृक्षो रोदिति लतिका रोदिति रोदिति निखिलमरण्यं हा ॥

नमस्तस्मै ज्योतिषे यज्ज्योतिः सप्तविंशे दिनाङ्के मईमासे चतुष्षष्ट्यधिकैको-नविंशतिशततमेशवीयेऽब्देऽन्तर्हितमभवत् ।



( ६३ )

# साम्यवादिनी विचारधारा

मार्क्सवादो मानवकल्याणश्च—

यो हि साम्यवादः कार्लमार्क्सेण परिपोषितः प्रसारितश्च स एव 'मार्क्सवाद' इत्यनेन नाम्नापि विश्रुत आस्ते । मार्क्सात् प्रागपि केचन विचारवन्तः साम्यवादमधिकृत्य स्व विचारमभिव्याजिह्नुः परं नववैज्ञानिकरूपप्रदानकारित्वान्मार्क्सस्य सा विचारधारा तन्नाम्नैव प्रसिद्धिमगमत् । विश्वस्य सकलामपि श्रमजीविजनतामेकीकर्तुं संसारात् सम्पदधिनायकताञ्च समूलमुच्छेत्तुं मार्क्सो नूतनं हि महापरिवर्तनकारिणं सन्देशं जनसमुदायं प्रति प्रयच्छन् निजगाद—'अयि संसारस्य श्रमजीविनो मानवाः, समाच्छध्वं सन्नद्धध्वञ्च यूयम्, सं च संघटिताः । भिन्ध्व ता शृङ्खला याभिर्यूयं निबद्धाः स्थ । सर्वोऽपि लोको युष्माकं जेतव्योऽस्ति । मानवसमाजस्येतिहासावलोकनेन ज्ञातं भवति यद् यस्मात् कालात् सृष्टिरारब्धा जाता तस्मादेव कालाद् मानवसमाजः समृद्धिशालिना धनपतीनां वर्गेण सदैव शोषमेव नीतः । सर्वविधमपि सामाजिकं शोषणम्प्रति धनपतय एव सन्ति सर्वथैवोत्तरदातारः' । ते हि समाजं द्वयोर्विरोधिवर्गयोर्विभक्तं कृतवन्त —शोषके शोषिते च । सम्पदधिनायकतावादस्येतिहासः शोषकवर्गकृतशोषणस्येतिहासोऽस्ति । सम्पदधिनायकतावाद एव साम्राज्यवादिनीं भावनामुत्पाद्य समाजस्य रक्तमपिबत् कृतवांश्च तं सर्वविधतया जर्जरम् । सम्पदधिनायकतावाद एव मानवता शोषयितुं सदीयां प्रगतिमपि न्यरौत्सीत् । अतः मानवताया उन्नमनार्थं शोषिताया जनतायाश्चाभ्यीकरणार्थमथ च विश्वस्य कल्याणार्थं हि राशिवादस्य—सम्पदधिनायकतावादस्य विनाशनमपेक्ष्यते ।

शोषणचक्रं न भवति कदापि निरुद्धगतिकं नवनवोत्पादनानां साधनानाञ्च मार्गेणैव सह शोषणवर्गाणामपि सत्वरा भवत्येधमाना । फलतश्च तस्य जायते इदं यच्छोषितवर्गं द्विगुणं त्रिगुणं शोषणं स्वशरण्यतां प्रापयति । अस्य शोषणचक्रस्य निरोधनार्थमेक एवोपायोऽस्ति । अस्ति च स–अनेकवर्गाणां सत्ताया उन्मूलनं वर्गहीनसमाजस्य च प्रतिष्ठापनम् । तत्र मानवमात्रस्य विकासाय सुखाय सम्पन्नतायै च सर्वविधा अपि अनुकूलता दत्ता स्युः । इत्थं समग्रस्यापि

शोषणस्य अन्तः कृतः स्यात् । इदानीं प्रश्न एष उपतिष्ठते यदेवंविधो वर्गहीनः समाजः केन प्रकारेण स्थाप्येत ? एतादृशो वर्गहीनस्य समाजस्य स्थापना साम्यवादेन सम्भवा । साम्यवादाङ्क एव वर्गहीनः समाजः पुष्पितः फलितः पल्लवितश्च भवितुमर्हति ।

वर्तमानेऽनेहसि संसारस्य समग्रोऽपि समाजो विषमता-पेषण्या पिष्यमाणो दृश्यते । कोटिशो मानवाः अन्न-कणद्वयार्थं दीनवदना भूत्वा इतस्ततो विचरन्तो विलोक्यन्ते; क्षुधा तालुद्वेजयन्ती तेषामसून् हर्तुं प्रक्रमते । एकस्यां दिशायान्तु ईदृशी हृदयवेधिनी अवस्थाऽस्ति अपरस्यां दिशि श्रेष्ठिनां सारमेयाः संयावमपूपञ्च सानन्दमदन्तो वीक्ष्यन्ते । केचन मानवास्तु श्रमेण श्रान्ताः क्लान्ताश्च सन्ति ते कठोरं श्रमं विधायापि अनवाप्तभोजनाः सन्ति परमितरे केचन सन्त्येवंविधा यत् ते श्रमं मनागपि न विदधति परमुत्तमोत्तमभोजनमहन्यसकृत् कुर्वाणाः उन्माद्यन्ति ।

एकतस्तु श्रमजीविनां कर्षकाणाञ्च अर्भकाः क्षुधिता नग्नाश्च सन्तः क्रन्दन्ति; न ते तावदप्यन्नं लभन्ते यावतोदरगर्तः पूर्यते दुग्धस्य तु वार्तैव दूर आस्ते; अपरतः शोषकवर्गः स्वकीयं मनो रमयितुं निर्धनानां गाढस्वेदमर्जितं निर्दयतया विध्वंसयन्ति । लक्षशो रूप्यकाणि ते मद्यादिपानदुर्व्यसनेषु विनाशयन्ति । चित्रपटेषु सहभोजेषु विहारेषु गोष्ठीषु अन्येषु च बहुविधेषु विलासेषु ते तदतुलं धनराशिं प्रयुञ्जते यं तेऽविरामकठोरश्रमकारिभ्यः श्रमजीविभ्यः प्रसभं हरन्ति ।

एवंविधां सामाजिकीं विषमतां दूरीकर्तुं मार्क्सः साम्यवादं प्रवर्तयामास । मार्क्सस्य साम्यवादसम्बन्धिनो विचाराः अतिसमासेनेमे सन्ति—

१. वर्गसंघर्षस्य विश्वव्यापिनीं सत्तां समूलमुन्मूल्य वर्गहीनस्य समाजस्य प्रतिष्ठापनम् ।

२. वर्गसंघर्ष-संवृत्य वर्गहीनं च समाजं प्रतिष्ठाप्य तस्य च सहायतया असमानताया अपनयनम् ।

३. प्रतिजनस्य तत्त्वमतानुकूले कार्ये नियोजनं तदपेक्षितापेक्षणीयजीवनोपयोगिपदार्थानां प्रस्तुतीकरणम् ।

४. उत्पादेषु साधनेषु एकस्या व्यक्तेः किं वा वर्गविशेषस्य स्वत्वमपसार्य तत्र सामाजिकस्याहोस्विद् राजकीयस्याधिकारस्य समुपस्थापनम् ।

५. सर्वहरस्य श्रमजीविवर्गस्य स्वामित्वम् ।

६. धर्म-साम्यप्रभृतिक्षतिप्रदप्रवृत्तिभ्यो मानवतायाः संगोपनम्। येन मानवतायाः पन्थाः स्यान्निष्कण्टकः।

७. अकर्मण्याय पुरुषार्थरहिताय जनाय न भोजनं दत्तं स्यात् अपि तु कर्मण्यं पुरुषार्थपरमेव जनं प्रति भोजनाद्यपेक्षितपरिच्छदः प्रदत्तो भवेत्।

८. साम्यवादस्य लक्ष्यं न कश्चिद् देशविशेषो भूभागो वा भवेदपि तु सकलः संसार एव स्यात्।

९. मानवता-भक्षकं राक्षसवादं विनाश्य सर्वविधा अपि अत्याचाराः निःशेषोऽपि शोषण-प्रकारो विध्वस्येरन्; एकस्या नवाया एव मानवतायाः सृष्टिं विधाय नव एव संसारः सृष्टः स्यात्।

मार्क्सवादो नाम विशालः प्रासादो हि मानव-कल्याण-भूद्रह एवोत्पादितोऽस्ति। यद्योत्पादन-साधनेषु व्यक्तेर्वर्गविशेषस्य वा स्वत्वमपहृतं भवेत्, भवेच्च तत्र राज्यस्याधिकारस्तदा व्यक्त्या व्यक्तेर्वर्गस्य वर्गेण शोषणं सम्भवमेव न कदापि भवेत्।

एतादृश्यां स्थित्यां यत् किमपि समुत्पन्नं स्यात् तस्मिन् सर्वेषामपि मानवानां समानमेव स्वत्वं स्यात्। न कस्यापि न्यूनोऽधिकारो दृश्येत न चाधिक एव। ये जनाः कार्यं करिष्यन्ति तेषां कृते भोजनादिनिखिलजीवनसमुन्नमनसम्बन्धिनी सामग्री विश्राणिता भवेत्। एतादृशेन शुभेनोपक्रमणेन युगयुगव्यापिनः कालात् क्षुधानिपीडिताः श्रमकारिणः सुखं धारयन्ति अकर्मण्यश्च सामन्तवर्गः सुख-वञ्चित: कृतः स्यात्। एतया हि पद्धत्या न धनस्य दुरुपयोगो भवेत्।

अत्र केवलमिदमेव वक्तव्यमस्ति यन्मार्क्सनिर्दिष्टां युगान्तरकारितां प्रति सावहितं जागरूकतापूर्वकञ्च बुद्धिमत्त्वेन कार्यं कर्तव्यं स्यात्। हिंसात्मकस्य परिवर्तनस्य मानव-हितपरिपन्थित्वात्। मार्क्सोक्ता विचारा विवेकपूर्वकञ्चेद् गृहीता अभविष्यंस्तदावश्यमेव मानवहिताबहास्ते सिद्धा अभविष्यन्। संसारस्य अर्धादप्यधिका मानवजातिर्मार्क्सवादिनः सिद्धान्तान् स्वीकृत्य ससुखं दिनानि नयन्ती वीक्ष्यते। आशास्यतेऽवशिष्टापि मानवता मार्क्सवादमुचिततयानुसृत्य सुखमयसमृद्धिविपुल-जीवनयापने प्रभविष्णुः स्यात्।

साम्यवादो भारतञ्च—

कस्यचन विषयस्य राजनीतिक-स्वतन्त्रता सत्य विषयस्य (देशस्य)

स्वात्रलम्बी स्यात् । स्वं जीवयितुं न स राष्ट्रान्तरस्य मुखं पश्येत् । स्वावलम्बनार्थं देशेन सामाजिके आर्थिके च क्षेत्रे कठोरं कर्त्तव्यं पालनीयं भवेत् येन विश्वस्य पुरतः स्वकीयं शिर उच्चैर्विधाय "सर्वथैवाहमस्मि स्वतन्त्रो देशः" इति वक्तुं प्रभूयेत ।

भारतमस्मदीयं राजनीतिकदृष्ट्या तु पूर्णं स्वतन्त्रमस्ति परं क्षेत्रान्तरेषु अस्ति तत् राष्ट्रान्तरावलम्बि । सामाजिकस्यार्थिकस्य च विकासस्य कृते तत् अन्यानि राष्ट्राणि प्रति पराधीनमेव । तस्य पुरतः समस्याः समाधानुमुपस्थिताः सन्ति । तत् ताभ्यः समस्याभ्य उन्मुक्तीभवितुमनारतं यतमानञ्च प्राप्यते । तेन तु तथाविधं परिवर्तनं करणीयत्वेन अपेक्ष्यते यथाविधं हि तत् परम्पराऽऽगतं संघटनं नव एव संघटनान्तरे परिणतं स्यात् किञ्च तद् ( भारतम् ) पूर्णसर्वविधस्वतन्त्रस्य राष्ट्रत्वस्य पदं ग्रहीतुमर्हेत् । अत्याचारपूर्णं शोषणशीलं वर्गयुक्तं समाजं विनाश्य तेन तु तादृशस्य समाजस्य स्थापना करणीयास्ति तद्विधस्य समाजस्य निर्माणं कर्त्तव्यमस्ति, यत्र वर्गभेदो भवेदेव न । सर्वेऽपि स्युः समानाधिकारिणः सर्वेऽपि जीवनार्थं—जीवनस्य विकासार्थं—समवाप्ताधिकारा भवेयुः । अनया दृष्ट्या यदा विचारयितुं वयं सन्नद्धाः स्याम तदा अस्माकमग्रे युगस्य सर्वप्रमुखा मार्क्सवादिनी विचारधारा सा समुपस्थिता जायते यस्या ध्येयं साम्यवादि वर्तते, या भुवि सर्वत्र साम्यवादं प्रसारयितुं विजृम्भते । संसारे सन्ति बहुलानि राष्ट्राणि ईदृशानि यानि इमां विचारधारां सश्रित्य स्वकीयं सामाजिकमार्थिकं राजनीतिकञ्चोत्थानं कृत्वा विश्वस्याग्रे उन्नतभालानि भूत्वा सगर्वं स्थितानि सन्ति । अन्यानि च कतिपयानि राष्ट्राणि सम्प्रत्येतद्विचारधारानुसरणोत्सुकानि । तान्यपि पुरः पदं निधातुं कृतसङ्कल्पानि इव प्रतीयन्ते । तेषामपि विश्वासोऽयं यदेतयैव विचारधारया तेषां भाविकाल उज्ज्वलो भवेत् ।

सम्प्रति भारतस्यापि पुरः प्रश्नोऽयं स्थितोऽस्ति यत् तदपि किं विचारधारामिमामङ्गीकुर्यात् ? तदीयसांस्कृतिकविचारधारां प्रति एष वादो बाधकस्तु न सिद्ध्येत ? किमेतद्विधया, विचारधारया भारतसदृशो देशो राष्ट्रिय-समुन्नतिं कर्तुं समेत ? इतो भारतं ततश्च मार्क्सवादिनी विचारधारा च वर्तते । रोगिणः समक्षे ओषधिर्निर्दिष्टास्ति । रोगी रोगान्मुक्तो भवितुमभिलषते परं निश्चयं न कर्तुं शक्नोति । ओषधिः सुपथ्या स्यान्नवेति संशये स निपतितोऽस्ति । "औषधेनोपकृतो न भूत्वा यदि अपकृत एव जातस्तदा तु महति सङ्कट एव निमग्नः स्याम्"—

प्रयतम् साम्यमं पुनः पुनरमं भावयति । इत्थाय कर्त्तव्यमिदमस्ति यद्रोगी भेषजस्य गुण-दोषयोर्विषये ज्ञानमधिगम्यैव स्वकीयां शारीरिकीं च स्थितिं सम्यगभ्यस्येत् । समस्तस्य भेषजस्य सेवने रतो भवेत् । भावावेशात् एवं कार्यं न युक्तम् । यदि हि पूर्णनैपुण्येन प्रयोगे रोगनिवृत्तिः स्यादिति चेत्सिद्धिर्नौषधिः प्रयुक्ता स्यात् तदा तत्फलमपि विपर्यस्तं भवितुमर्हति । एतया दृष्ट्या चेद् मार्क्स-वादिविचारधारौषधेः वैज्ञानिकं विश्लेषणं क्रियते ततः प्राधान्येनाधः लिखिताः सप्त प्रश्नाः विचारणीयत्वेन सन्निष्ठमानाः संजायन्ते—

१. अपि किं साम्यवादो वर्गसंघर्षं दूरीकर्तुं क्षमते ?

२. अपि किं वस्तुतस्तद्दृष्ट्या व्यक्तेः समाजो गरीयान् महीयांश्च ?

३. अपि किं स उत्पादनेषु राष्ट्रस्याधिकारमाकाङ्क्षति ?

४. प्रतिव्यक्तिर्धनार्जनावसरं समानभावेन लभेत-इत्येतस्मिन् पक्षे स आस्थावान्-ऽस्ति ? यो न करिष्यति कार्यं स जीवनस्याप्यधिकारं न निधारयति किम् ?

५. किं स्पर्धा राष्ट्रियक्षेत्राद् निवारिता भवितुमर्हति ?

६. किं जातिवाद आमूलमुन्मूलनं गच्छेत् ?

७. अपि किं स भाग्यान्धविश्वासादिघातकविचारेभ्यः समाजं पातुं प्रभवेत ?

इदं हि मार्क्सवादिन्या विचारधाराया स्थूलं विश्लेषणमस्ति । स्पष्टमिद-मस्ति यद् रुग्णस्य भारतस्य कृते औषधिरेषोचिता कियत्यस्ति ।

चेद् भारतस्य राजनीतिकार्थिकसामाजिकसांस्कृतिकसमस्यासु दृक्पातः क्रियते ततः स्पष्टं भवति यद् भारतमपि तज्जटिलग्रन्थिग्रह-गृहीतमस्ति यं निहन्तुं मार्क्सवादिन्या विचारधारया जनुरुपलब्धं भुवि । मार्क्सः कस्यापि देशविशेषस्य भवेत् परं तस्य विचारधारा विश्वव्यापिनी विद्यते । तदीयं लक्ष्यं नास्ति कश्चिद् भूभागोऽपि तु समग्रमपि जगदेव सा स्वं शरण्यं मन्यते । एतस्या विचारधारायाः समस्याः खलु मानवस्य समस्याः सन्ति । एतया दृष्ट्या प्रतिदे-शस्याधिकारोऽस्ति यत् सः अनया विचारधारया स्वकीयं मार्गं प्रकाशयन्तं विदध्यात् । सङ्कीर्णविचारवशात् चेत् कोऽपि देशोऽस्या विचारधारायाः आश्रयणे वेपते बिभेति वा, किं वा स तस्यां विविधान् आरोपान् आरोपयतीत्येषा वार्ता स्वन्यैव । अद्यतनं भारतं न तदस्ति यददः प्राचीने काल आसीत् । परिव-र्तितेन समयेन विचारधारास्वपि घोरपरिवर्तनमारोपितमस्ति । अद्यतने विज्ञान-प्रधाने युगे स्थितेऽपि चेदस्माभिः प्राचीनतायाः स्वप्नेषु दृष्टिः प्रतिष्ठाप्येत

ततस्ते स्वप्ना अस्मदीयां गतिं निरुन्धीरन्। राम-राज्यमद्यापि स्थापितं भवितु-महंति परं रामराज्यस्य तत्स्वरूपं नागन्तुं प्रभवेत् यद् रामस्य समयेऽवर्तत किं वा यस्य चित्रणं मानसे तुलसीदासेन कृतम्। स्वस्वयुगस्य विचारधाराः पृथक् पृथग् भवन्ति। न तस्य युगस्य विचारधारासैव सम्भवा या रामयुगसमयवर्तिनी आसीत्। विचारधाराः समयानुसारिण्यो भवन्ति। तस्मिन् भारते वर्गशोषणं नासीत्, नासीत् तदा वर्गयुक्तः समाजः; जातिप्रथाया अपि जाटिल्यं नादृश्यत। सर्वेऽपि समानाधिकारा आसन्। परमद्यतने भारते तु वर्गशोषणमस्ति; वर्गयुक्तः समाजः सन्तिष्ठते; जात्युपजातिभेदसहस्राणि वर्तन्ते; सङ्कीर्णताः सर्वत्र विचरन्ति; अन्धविश्वासा भ्रमन्तीतस्ततः; रूढि-कुरूढयश्च सगर्वं माद्यन्ति च। एते सर्वेऽपि विकाराः प्रथमं सन्त्यपनयनीयाः। न केवलं प्राचीनताह्वानेन कोऽपि लाभो भवेत्। सम्प्रति सर्वथैव प्रथममपेक्षितमिदमस्ति यद् समाजे परिवर्तनं जायेत; नव-समाजस्य निर्माणं भवेत्; सर्वेऽपि जीवनस्याधिकारं लभेरन्। एतदर्थं भारतेन साम्यवादस्यावलम्बनं ग्राह्यम्। मार्क्सवादिनीं विचारधारां परिगृह्य स्वोद्धारः कर्त्तव्यः। तयैव विचारधारयोपरिनिर्दिष्टविकारेभ्य उन्मुक्तिः सम्भवा। समाधानं तु समस्यायाः निराकरणं तु दोषाणां तयैव विचारधारया सम्भवं प्रतिभाति। कामं तस्याः किमपि रूपं परिगृहीतं स्यात् किं वा स्वाभीप्सितता-निमित्तेन सा विचारधारा प्रथमं प्राप्तितरूपान्तरा कृता भवेत् ततश्च आश्रयणीया स्यात्, भारतस्य नेतारो विद्वांसश्च भारते साम्यवादं प्रत्युद्गन्तुकामा दृश्यन्ते। परं कतिपयभ्रान्तयस्तस्य साम्यवादस्य परिग्रहणाय तान् वर्जयन्ति। अतस्ते तमुपादातुमुद्विजन्ते शङ्कन्ते च। अन्यथा ते सन्ति सततं स्वीकर्तुं तम्। इदं तु सत्यं यत् मार्क्सवादे विद्रोहात्मकः स्वरः श्रूयते। सः राष्ट्रस्य कलेवरं नवं विधातुमभिलषते नवविधतयैव। इदं च कामयते सः यत् सर्वेष्वपि क्षेत्रेषु एतावान् भयङ्करो विद्रोहः प्रचण्डवात्येवोत्तिष्ठेत् यद् तद्गता सर्वापि कलुषता-तिरोदध्यात् ततश्च समागते नवीने तस्मिन् स्वच्छे स्वरूपे नवं निर्माणं सम्भवं भवेत्। परिवर्तनस्य स्वरूपमिदं भारतं नैवाभ्युपगन्तुं शक्नोति। तदभ्युपगमन-मुचितमपि न। परिवर्तनमभिलष्यते परं विद्रोहेण न। शनैः शनैर्भारतीयेषु शिक्षादिसाधनेन चेतनायाः सञ्चारणं तथा कार्यं यथा ते स्वयमेव परिवर्तनार्थं पराभेवोत्कण्ठा विसृयुः। तदर्थं तेषां मानसमत्याकुलं जायेत स्वयञ्च यत्नवत्या प्रेरणया प्रेर्यमाणा भूत्वा क्रियात्मकं कार्यमारभेरन्। इत्थं समाजस्य रूपमपि

भौतिकतापराङ्मुखं दृष्टमभूत्। तत्कालवर्तिन्या अपि शिक्षायाः प्रमुखं ध्येयमपीदमासीद् यन्मानवस्य सर्वाङ्गीणो विकासः स्यात्। तत्र भौतिकताध्यात्मिकतयोरुभयोरपि समावेशो विद्यते।

इत्थं निश्चितभावेनेदं समासेन वक्तुं शक्यं भवति यन्मार्क्सस्य साम्यवादिनी विचारधारा स्वरूपपरिवर्तनपूर्वकं ग्राह्यास्ति।

भारतीयसाम्यवादः—भारतं हि स्वसभ्यताया जन्मकालादेव समतायां श्रद्धत्ते। तत्केनापि सह कदापि विषमतामयं व्यवहारं नाचरदित्यत्र तस्य पुरातनेतिहासरामायणमहाभारतादिग्रन्थाः देदीप्यमानानि प्रमाणानि सन्ति। अत्र पुरा यान्यपि युद्धान्यजनिषत साम्यवि धर्मयुद्धान्यजायन्त। नात्र शत्रुषु शत्रुताभवत् परं तद्गृहीतान्यायदुराचाराधार्मिकतादिदोषेष्वेव शात्रवं निहितमभूत्। भारतन्तु वस्तुतः प्रकृत्यैवाजातशत्रुमेव दृग्गोचरतामगात्। एतद्वैशिष्ट्यादेव तु तद् जगति गुरुत्वेन मतमादरञ्च बभूव। भारतस्य वेदशास्त्र-दर्शनादीनि सर्वाणि मानवतापरिपोषकाणि वर्तन्ते। तानि सन्ति शान्तिप्रियाणि। तेषां मतेन कस्याप्यपीडनमेव धर्मः—

> श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्।
> आत्मनः प्रतिकूलानि परेषां न समाचरेत्॥

अस्मदीयानि सर्वाण्यपि शास्त्राणि सर्वेऽप्याचार्याः अहिंसामेव परमं धर्मं मन्यन्ते—एवं स्थिते भारतं कथं साम्यवादाद् विपरीतमिति वक्तुं शक्यते। भारतं हि साम्यवादस्य आद्यं पुरातनतमं महत् रक्षकमस्ति भूमण्डले। अस्मद्देशस्य सन्ति वेदाः पूज्यतमाः ग्रन्थाः। सर्वाणि शास्त्राणि सर्वा अपि स्मृतयस्तमेवानुगच्छन्ति। तेष्वपि साम्यवादविषयिणी विचारधारा प्रवहन्ती दृश्यते। दृश्यताम्—

( क ) "मा गृधः कस्यस्विद् धनम्।"

( ख ) "केवलाघो भवति केवलादी।"

( ग ) "समानीव आकूतिः समा हृदयानि वः समानमस्तु वो मनः।"

( घ ) "मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्।"

एतादृशानि सहस्रशो वाक्यानि श्रुतिषु राजमानानि सन्ति यैः श्रुतीनां साम्यवादित्वं विदितं भवति। विश्वहिता श्रीमद्भगवद्गीतापि साम्ये धियं निदधाति—

( क ) "भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्।"

( ग ) "इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।"
साम्यवादमधिकृत्य सम्प्रति भारतीयैतिहासिकशिरोमणेर्दार्शनिकमूर्धन्यस्य महामेनुर्व्यासस्य वचनं श्रूयताम्—

"यावद् भ्रियेत जठरं तावत्स्वत्वं हि देहिनाम् ।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति ॥"

अहह पुरातनं भारतमिव जगति को देशः साम्यवादपक्षपातिसाम्यवादप्रचारणरतो भवितुमर्हति यस्योद्घोषोऽयम्—

"सर्वे च सुखिनः सन्तु सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखमाग्भवेत् ॥"

भारतवर्षीय-साम्यवादस्याङ्गीकरणार्थं न मनागपि हिंसाया अपेक्षा भवति; न तदर्थं विप्लोत्पादनमपि अपेक्ष्यते, न तस्य कृते धनिनामुत्सादनमपि आकाङ्क्षितं जायते । भारतीयः साम्यवादो वदति धनपतीन् यत् ते त्यागार्थं सम्भृतार्थाः स्युः । तस्य कथनमिदं पावनं यत् कोटिपतिरपि यदि कश्चिदस्ति, तस्याप्यधिकारः केवलं जठरपूरणम् । भावोऽयं यत् सर्वसामान्यनिवासभोजनपानादिमानवमात्रोपयोगिवस्तुमात्रं निधातुं स प्रभवति न ततोऽधिकम् । तदुपयोगाद् व्यतिरिक्तमखिलमपि तस्य धनं निर्धनानामेवास्ति । अतो धनवन्तः स्वधनं राष्ट्रहितसाधनायां समस्ताया अपि जनतायाः हितकारकेषु कार्येषु सततं प्रयुञ्जीरन् । परार्थं प्रयुक्तेन धनेन लाभोऽयं स्यात् यत् निर्धना अपि स्वजीवनोपयोगिसकलसाधनानि समन्तात् क्षमा भवेयुः । सर्वेऽपि समुन्नत्यर्थं समवसरं लभेरन् सर्वे च आमोदप्रमोदपूर्णं जीवनं यापयितुं समर्था स्युः ।

भारतीयसाम्यवादस्त्यागभावनावसुन्धरासीन आस्ते । त्यागभावनायामासक्तायां सत्यां न तेषामुपायानामवलम्बनस्यापेक्षा जायेत ये ह्युपायाः साम्प्रतिकेनाभारतीयेन साम्यवादेन प्रतिपाद्यन्ते । अस्मदीयं भारतमद्यापि त्यागे दाने च महत् श्रद्धां निदधाति । अत्र साम्यवादस्य प्रचारणं न कठिनम् । सर्वभारतीयधनिकानां त्यागनिष्ठत्वे सति भारतमपि सद्विपसकलगुणसम्पन्नं भवितुं क्षमं यद्विधगुणसम्पन्नता साम्यवादिन्या विचारधारया काम्यते ।

रजनीपामदत्तेन 'फासिज्म एन्ड एनालिसिस' इत्येतस्मिन् स्वकीये ग्रन्थे फासिस्टवाद सम्यग् व्याख्यातः। स तत्र लिखति—"वस्तुतः फासिस्टवाद समाजविरोधी विलक्षण विधिरस्वतन्त्र सिद्धान्तो न। आधुनिकाय्यतावाद्सम्बन्धिनीनां प्रवृत्तीनां पूर्णतमा सगतिरद्धाभिव्यक्तिरस्ति फासिस्टवाद।" मुसोलिनी स्वकीयान् विचारान् प्रकटीकुर्वन् एकस्मिन् स्थले वदति—"अस्मासु फासिस्टेषु परम्परागतराजनीतिकसिद्धान्तवादिनां मान्यताया उच्छेदनस्य शक्तिरस्ति, वयं कुलीनास्तन्त्रवादिनः सन्तोऽपि लोकतन्त्रवादिनश्च स्म, वयं क्रान्तिकारिणः स्म प्रतिक्रियावादिनश्च। श्रमिकोपजीव्या सन्तोऽपि श्रमिकविरोधिनोऽपि वर्तामहे। वयं शान्तिपरिपोषका सन्तोऽपि शान्तिहन्तारश्च स्म। वयं स्थिरदृष्टिनिन्दुगन्त स्म इत्येतदेवास्मद्विषये वेद्यम्। न राष्ट्र किंचान्यत् किमपि प्रधानम्।" मुसोलिन्या एता परिभाषामवलोक्येदमेव सिद्ध्यति यत् फासिस्टवादस्य कापि निश्चिता परिभाषास्ति, अस्ति स सिद्धान्तविहीनो वादः। राजनीते प्रख्यात प्रश्नो सैबाइनो नेमं वाद सिद्धान्तवन्त लब्धवान्। स एतं वादमुद्दिश्य यदाह तच्छ्रूयताम्—"फासिस्टो नेता, विशेषत, परानये दम्भी एव व्यलोक्यत। फासिस्टदर्शनञ्च, निश्चप्रचतया अशिष्टव्ययचित्रादधिकं न किमप्यभ्यत्। परं व्ययचित्रान्तराणीव तदियत याथार्थ्यमवादि प्रतिभासते। अस्तु नाम तत्किमपि, राजनीतिकविचारविशिष्टत्वात् तस्य, स वादो दर्शनेष्वन्तर्भूतो भवितुं शक्य।

फासिस्टशासनात् प्राग् इटल्या ससदात्मकप्रजातन्त्र व्यवहारे आहृतमासीत्। पर शासकानामयोग्यत्वात् शासन दिनानुदिन पतनमगच्छत्। स्वार्थभावना तथा तन्मानसेषु बलीयस्कतामियाय यद् देशहितभावना तया समूलमुन्मूलितैव। जनताया अधिकारेषु कुठाराघात शासनसूत्रधारिण कर्तुमारेभिरे। समाजोद्धायकेषु तेऽजुगुप्सन्त। शासनम्प्रति जनतायामनास्था समुदपद्यत। एतानि कारणानि तत्र फासिस्टवाद जनयितुमुपक्रान्तान्यभूवन्।

इटल्यामेतद्विधान्दोलनस्योत्पत्तिम्प्रति ऐतिहासिकानि मनोविज्ञानविषयकाणि च कारणान्यासन्। या इटली प्रथमविश्वमहायुद्धे मित्रराष्ट्राणि प्रति प्रददौ स्व साहाय्य तामेव इटलीं वर्साईसन्धिकाले राष्ट्रान्तराणि विप्रालभन्त। युद्धे इटल्या जन धनहानिरत्यर्थमभूत्। तस्मात् तस्या आर्थिकदशा दिनानुदिन शोचनीयतामेवागमत्। फासिस्टवादमेपापि चिन्तनीयावस्था प्रादीपयत्। अवसरवादित्वात् फासिस्टवादिनां, ते जनताया साहाय्यमपि लब्धु प्राभवन्। ते प्रायतन्त

यशोक-संग्रहकारितायां सफलतां तेऽधिगच्छेयुः । ते जनतां प्राबोधयन् यत् ते कर्मयोगिनः सन्ति न च सिद्धान्तवेत्तारः । ते नवयूनः 'विश्वसित, आज्ञां पालयत, युध्यध्वं च' इत्येतेनोद्घोषेण विनयन्ति स्म च । इत्थं ते स्वं वादं स्वदेशे प्रसारितवन्तः । परं नात्र सन्देहो यत् फासिस्टवादे बुद्धितत्त्वस्याभावो-ऽदृश्यते । सैबाइनस्तमुद्दिश्य सत्यमेवाह—"एतदीय. स्वरः प्रमादपूर्णो वर्तते······ संगतिहीनतापरिपोषकोऽयं वादः ।"

फासिस्टवादस्योद्देश्यमासीत् इटल्या मानवसमाजस्य नेतृत्वापादनम् । सर्वत्रैव इटल्याः शक्तेः प्रतिष्ठापनम्; इटलीराष्ट्रस्योत्थापनं संवर्द्धनञ्च विश्वोपरि तस्याः शासनमपि ।

एकोनविंशत्यधिकैकोनविंशतितमे ख्रीष्टाब्दे मुसोलिनी स्वकीयान् उद्देश्यान् योजनानि च नैजानि प्रकटीकुर्वन् वाचमिमामवोचत् :—

स्वेषामन्येषाञ्च प्रतिपक्षेऽस्माभिर्ज्ञानसिद्धान्त एव सर्वविधो विध्वस्ततां नीतोऽस्ति; यातांश्चान्धविश्वासोऽस्ति साक्षात् सर्व एव ध्वस्तः । येऽपि सन्ति स्वर्गास्तेऽप्यनित्या· न्यक्कृता·, सर्वेऽपि चाटुकारा धिक्कृता· कामं ते वर्णेन गौराः वा श्यामा वा रक्ता· स्युः । यतो हि ते मानवजातिं धीगरिमाश्चर्यजनकेष्व[illegible] श्रद्धधते । न वयं प्रथायां न वैरतायां न च मायायां विश्वसिमः । अतोऽस्मदीयाम् विश्वासं प्रमत्तमायां गुर्वीं प्रभ्याधुतायाञ्च इटल्यां निदध्म । अस्मदीया· सर्वेऽपि विचारा स्वतो सन्ति केन्द्रिताः । व्यक्तिस्थितिपमुत्प्रमनं वयं परिपुष्णीम । तदेव वयं कुर्मो येन सा सुखं एभेन स्वातन्त्र्यं विन्देत, विस्तृतं जीवनञ्चासादयेत । वयं तां प्रतिभारं विरत्सो यो व्यक्तिस्वतन्त्रतां हिनस्ति, व्यक्तिमपहरति । अत्र स्वामी राज्यञ्च धर्मोऽस्मत्कृते संसारस्य चोपरि अधिकारं विधातुं युज्यते । द्वे सत्ते सम्प्रति स्वविचारप्रचारणे रते स्त· । मयैरा रोमनगरा च मास्कोऽधिति-ष्ठति । न वयं द्वयोरपि धर्मयोः भक्ता निष्ठन्त ।

होस्विद् राज्यस्य कल्याणं तस्य कल्याणमस्ति। जनतायामीदृशी विचारधारा ईदृशी भावनास्तथा कार्यक्रमं सञ्चारणीया यतो राष्ट्रं शुभं मद्रञ्च यजेत्। पत्र पत्रिका मुद्रणालयाकाशवाणीचलच्चित्रशालानां विनियोगो राष्ट्रार्थं कार्य्यं। राष्ट्रमेवोन्नतमभिप्रेतं तदेव सर्वतः पातितं स्यात्।

( आ ) फासिस्टवादस्य द्वितीया विशिष्टतास्ति—राज्यस्य सर्वश्रेष्ठत्वेनाभ्युपगतिः फासिस्टानामभिधानमस्ति यद्राज्यं भवति निरङ्कुशं प्रभुतामग्यञ्च। न तन्मतेन राज्यात् परं किमपि। सर्वमपि राज्यान्तर्गतमस्ति न राज्याद् बहिः किमपि वस्तु। न च राज्याद्विरुद्धमपि किमपि।

मुसोलिन्या कथनमस्ति यद् राज्यं साध्यमस्ति व्यक्तिश्च साधनम्। स अग्रे प्राह—"राज्यं व्यक्तिं वाह्येभ्य आभ्यन्तरेभ्यश्चारातिभ्यस्त्रायते। तत्र सकलनागरिकभावनानामिच्छानां च सुरक्षार्थं पूर्णतया व्यवस्था भवति। एतावदेव न भाषा प्रथाविधारहेतोः परस्परं सम्बद्धानां येषां विभिन्नानां वर्गाणां शताब्दीव्यतीतास्तेषां हितस्यापि सुरक्षा पूर्णतया राज्येन क्रियते।"

फासिस्टानां मतेन तु राज्यं नैतिकतायाः आध्यात्मिकतायाश्च संस्थास्ति। न राज्यं केवलं वर्तमानजीवनस्य तथ्यमपि तु अतीतो भावी च सम्बन्धस्तत्र तथैव वर्तते यथा पटे तन्तवः। राज्यं नागरान् नागरिकतां पाठयति, तान् ऐक्येन निबध्नाति, तज्जीवनलक्ष्यं निर्धारयति। नैतावदेव तन्मानवं तद्भाविनीं सन्ततिं च एकतां सुपेतं कृत्वा धर्मं मानवताममरतां प्रापयति। तद्राजभक्तानां तेषां नामानि अमराणि कर्तुमीहते ये राज्यार्थमात्मानमपि जुहुवुः।

( इ ) एकस्यैव दलस्य समर्थनं फासिस्टवादस्य तृतीयं वैशिष्ट्यं कथ्यते। दलस्यानुशासने आदेशपालने च नागरिकेण स्वीयरुचिर्निधेयेति फासिस्टानां मतम्, दलस्य नेता च समाजरक्षकत्वेन। तस्मिन् ( नेतरि ) अन्धविश्वासो निधातव्य इति फासिस्टवादस्य प्रमुखं समयं। दलस्य सदस्येन वक्ष्यमाणस्य शपथपत्रस्य परिपूर्तिः कर्तव्या भवति—

"ईश्वरम् इटलीञ्च साक्षित्वेन मत्वा शपामि यदहं स्वनेतुराज्ञां वाद विवादं विना तेषां पालयिष्यामि स्वकीयपूर्णशक्त्या सह अपेक्षाया मया स्वशोणितमपि समर्प्य फासिस्टक्रान्तिं जीवयितुं सञ्चालयितुञ्च प्रयतिष्ये।"

फासिस्टवादो मुद्रणालयस्य स्वातन्त्र्ये, लेखने भाषणयोश्च स्वाच्छन्द्ये न विश्वासं निदधाति। मुद्रणालयं चलच्चित्रप्रेक्षागृहं सङ्गीतकलासु च राज्यस्य सर्वथैव नियन्त्रणं भवति। राष्ट्रविरोधी नेतृविरोधी दलविरोधी च जनो न

कुत्रापि स्थानं समवाप्तुं शक्नोति । स्वतन्त्रविचारकारिणमेवाविप्लवकमपि फासिस्ट-वादः कारायां पातयति वा तस्य प्राणान् हरति वा तं देशात् निर्वासयति ।

( ई ) फासिस्टवादस्य चतुर्थी विशिष्टतेयम् अस्ति यत् सा जनतन्त्रं विरुणद्धि । न फासिस्टवाद औदार्यवादं सहते न च जनतन्त्रम् । प्रजातन्त्रं हि मन्दानां राज्यमिति स मन्यते । संसदात्मकं शासनं भवति मन्थरगतिकं भवति च न तद्योग्यं व्यवहारार्हमिति च तदीयो विश्वासः । न शासनस्य कार्यं सर्व एव जनाः सम्पादयितुमर्हन्ति सर्वत्र समानगुणानामसद्भावादिति च तदीयास्ति मान्यता अतस्तत्र शासनकार्योत्तरदायित्वं कतिपयेषु जनविशेषेष्वेव संस्थाप्यते ।

परिष्कृतम्। सर्वविधैरपि संघटनैः राष्ट्रप्रति उत्तरदायित्वमिर्भवितव्यमित्येतदत्रित-रामपेक्ष्यते।

( ल ) फासिस्टवादस्याष्टमी विशिष्टता बुद्धिविरोधाभास इति कथ्यते। फासिस्टा न बुद्धौ—विवेके—आस्थां निदधति। भावनायां वर्तन्ते तेषामास्था। ते वदन्ति यन्मानवाः सर्वे एव भावना-विभाविता भूत्वा प्रतिकार्यमनुतिष्ठन्ति। अस्मिन् बुद्धिविरोधवादे धियं निबध्नन्तस्ते कमपि सिद्धान्तं शाश्वतं न मन्यन्ते। तेषां मतमस्ति यत् सिद्धान्ताः समय-परिस्थित्योर्वशात् परि-वर्तन्ते।

मुसोलिनी सत्ताधिगमनानन्तरं यूनां युवतीनाञ्च मनांसि परिवर्तयितुं शिक्षां नैनेक्तिस्म। स तत्रात्मत्यागोत्तरदायित्वसङ्कल्पदृढ्वादैर्विकासञ्चकार। बौद्धिक-विकासाच्छारीरिकविकासं फासिस्टा वरतरमवगच्छन्ति।

( ए ) फासिस्टवादस्य नवमी विशिष्टतास्ति—ईश्वरार्चामन्दिरे आस्था। प्रारम्भे फासिस्टवादिनस्तत्राजुगुप्सन्त। १९२१ तमेशवीयाब्दानन्तरं तेषां धारणा पर्यवर्तत। फासिस्टा हि सन्ति वस्तुतोऽवसरवादिनः। ईश्वरार्चाधिष्ठाने चेत् सौहृदं निहितं स्यात् तदा नूनं साहाय्यमासादितं स्यादिति विचिन्त्य ते तत्र धियं बबन्धुः। १९२९ तमेशवीयाब्दे मुसोलिनी ईश्वरार्चास्थानमधिकृत्य सन्धानं कृतवान्; धर्माचार्यः ( पोपः ) इटल्युपरि फासिस्टानामधिनायकताम-मानयत्। मुसोलिन्यपि धर्माचार्यं वैटिकननगरे सर्वशक्तिशालित्वेन स्वीचक्रे। धर्माचार्योऽपि धर्मपुरोहितानादिशत् यत् ते राजनीत्यां न गृह्णन्तु भागम्। इत्थं फासिस्टवादिनोऽर्चामन्दिरे चद्धसौहृदाः सञ्जाताः।

फासिस्टवादस्य जन्म इटल्यामभूत्। इटल्यामेव सः स्वसफलतायाः प्रथमं दर्शनमलब्ध। १९२४ तमेशवीयाब्दे यदा सत्ताया उपरि फासिस्टवादिना-मधिकारः सञ्जातस्तदा तस्य प्रचारोऽतिद्रुततया भवितुमारभत। समयमवाप्य फासिस्टवाद इटलीतो निर्गम्य देशान्तरेषु प्रासरत्। १९२९ तमेशवीयाब्दानन्तर-मित्येव फासिस्टवादस्य देशो नादृश्यत अपि तु संसारस्य अन्ये चानेके देशाः फासिस्टवादिनो व्यालोक्यन्त। १९३६ तमेशवीयाब्दं यावत् फासिस्टवादो बल्गेरियां, यूनानं, पोलैण्डम्, आस्ट्रियां, रूमानियां, हंगरीं चाभिव्याप्योत्तस्थौ। क्वापि शासनेन क्वापि च जनतया सः पर्यगृह्यत। १९३६ तमेशवीयाब्दे सः स्पेनेऽपि प्रवृत्तो जातः। जर्मन्यामपि स उन्नतो भवन् पर्यलक्ष्यत। जापानदे-

शोऽपि फासिस्टवादिशासनं प्रातिष्ठिपत्। न तत्र प्रतीच्यराष्ट्राणां प्रभाव स्वीयमङ्कुशं स्थापयितुं तदा प्राभवत्। स फासिस्टवादो यूरेशियातः पुरः उपसृत्य दक्षिणामेरिकायामपि पैतृस्यमगमत्। ब्राजीलेऽन्येषु च लैटिनराज्येषु तस्य जयभेरी श्रुताभवत्।

फासिस्टवादिदेशा लोकतन्त्रवाद विरोद्धुं सगर्विता भूत्वा उदतिष्ठन्। जर्मनीटलीजापानदेशा ग्रन्थिबन्धनपूर्वकं मैत्रीं चक्रुः। बर्लिन रोम टोकियोदेशानां त्रितय संसारे सर्वशक्तियुतं सङ्घटनं भूत्वा व्यजृम्भत। इमे देशा समरे सति परस्परं साहाय्यमपि प्रदातुं दत्तवचना अभूवन्। १९३९ तमेशवीयाब्दे द्वितीय विश्वयुद्ध फासिस्टवाद विरोद्धुमेव प्रास्फुटत्। लोकतन्त्र परान्तु फासिस्टवादिनः साम्यवादिनश्च एकीभूय स्थिता अभूवन्। युद्धारम्भे सति फासिस्टवादिनामेव विजयघोषः सर्वतोऽश्रूयत। यत्र यत्र फासिस्टवादिनो विजयमलभन्त तत्र तत्र फासिस्टवादः प्राभवत्। १९४० तमेशवीयाब्दे फ्रांसदेशोपरि जर्मन्या स्वत्वं स्थापितमजायत। फासिस्टवादिशासनं च तत्र स्थापनामगात्। स्तोकसमया-भ्यन्तर एव यूरोपस्य मध्ये उत्तरपश्चिमयूरोपीयेषु देशेषु फासिस्टवादस्यैव ध्वजा उद्धूनाना समराप्यत। इदं सर्वं जनमानसे एतां प्रतीतिमजनयत् यद् फासिस्टवाद एव संसारे सर्वत्र प्रभुत्वं करिष्यति। १९४४ तमेशवीयवर्षपर्यन्तं फासिस्टवादस्योन्नतिश्चरमसीमामगच्छत्।

फासिस्टवादः कस्मादेतादृशीमुन्नतिमवाप–इत्यत्र विचारः करणीयोऽस्ति। न विना कारणमुन्नतिः सम्भवा। जनतन्त्रस्य सफलतायाः कृते उच्चशिक्षा, उच्चचरित्रम्, उच्चराजनीतिकी चेतना शुद्धश्चोदारदृष्टिकोणमपेक्ष्यन्ते। एतेषां सद्भावो वस्तुतो न शक्यः सरलतया। अधिनायकवादे तु जनता नेतारमग्रवर्त्यं पर्याप्तं लाभं लभते तस्मादेव हेतोः फासिस्टवादः एतावत्या क्षिप्रतया सफलतामयात्। राष्ट्रियभावनापि फासिस्टवादस्योन्नति वरदानमेवासिद्धयत्। यावद् राष्ट्रियता नो प्रणाशमगच्छत् फासिस्टवादस्यापि पतनं न जातमपि तु दिनानुदिनं वृद्धिमगमत्। राष्ट्रियगौरवाधिगमनानुरागः अगण्युत्थानसम्मानलाभनिष्ठा स्वश्रेष्ठत्वप्रदर्शनाभि-निवेशा भावनापि फासिस्टवादस्य साफल्ये कारणतां समपद्यत।

मित्रराष्ट्राणि १९१९ तमेशवीयवत्सरे शान्तिसन्धिकाले हि अन्याय जर्मन्युपरि किञ्च नवोदयराष्ट्रादरि कुर्वन्ति स्म इटलीं च पश्यन्ति स्म–इत्येतानि सर्वाणि कारणानि जर्मनीप्रभृतिदेशेषु सकलेषु निर्वाचनवैषम्यं प्रारभेरन् तत्र पतन्ति स्म। फासिस्टवादस्य संवर्द्धने साम्राज्यसाम्राज्यवादनाशनकारी विचारो

वीरपूजासिद्धान्तोऽन्ये च भाविनि विलोकयिष्यमाणाः सुवर्णस्वप्नाः साहाय्यकारिणो भूत्वा प्रादुरभवन्।

१९११तमेशवीयवर्षात् १९४४ तमेशवीयाब्दं यावत् फासिस्टवादो यां सफलतामवाप्तवान् तत्कारणात् फासिस्टदर्शनं प्रति सर्वेषामपि दृष्टिः सोत्कण्ठा अधावत्। अद्य संसारे फासिस्टवादो न प्राप्यते, परं तदीया बहवः सिद्धान्ताः संसारमधुनापि परितोषयन्तो लभ्यन्ते। राष्ट्रवादिनी विचारधारापि संसारस्य प्राणभूतेव दृग्गोचरीभवति। मैक्सी शंसति—"एष वादः नवामपरिष्कृताञ्च शान्तिं रहस्यवादिनादर्शगामिना मधुरेण लेपेनालिम्पत्। सः हिंसामौचित्यगतनीतिरनेन प्रत्यपादयत्। स देशभक्तिभावनाया लाभं पूर्णतयोपायुङ्क्त। स सूक्ष्मरूपेणाल्पसंख्यकं शासनं विवेकसम्मतमकल्पयत्। व्यापकलोकतन्त्रं, पदभावविषयिकां नीतिं, साम्यवादजनितं भयञ्च प्रति समुत्पन्नादसन्तोषात् सः सर्वथैव लाभमविन्दत्। स सर्वेषामपि पुरो नवमाराध्यदेवमाराधयितुं नवीनमेव साधनं न्यदधादिति।" इत्थं संसारस्य उच्चेषु दर्शनेषु फासिस्टवादोऽपि महत्त्वपूर्णं स्थानमासादयत्।

फासिस्टैर्यद्यपि इटली साफल्यसिंहासने प्रतिष्ठापिता, गौरवं तदर्थमर्जितमनुशासनदृष्ट्या राष्ट्रे नवीना शक्तिः सञ्चारिता, इटल्या नवनिर्माणञ्च कृतं परं सारवत्स्वेतेषु तथ्येषु फासिस्टवादे मन्यन्तेऽके दोषाः—

( १ ) हीगलस्य राष्ट्रवादः, अफलातूनस्य कुलीनं तन्त्रं, वर्गसनस्यानुद्धिवाद इह सम्पृक्तोऽस्ति तस्मादेव फासिस्टवादोऽस्पष्टो विरोधाभाससमाकीर्णश्च वर्तते—इति सैबाइनस्य कथनमस्ति।

( २ ) जनतन्त्रोदारवादयोर्घृणाप्रदर्शनकारित्वादेष वादः समयानुकूलो न।

( ३ ) एष वादो व्यक्तिस्वातन्त्र्यापहारी वर्तते। एष चात्र महान् दोषः।

( ४ ) शान्तिमुपहसति; युद्धोद्यममपि उद्दीपयति च तत्; तदेव ( युद्धमेव ) राष्ट्रोन्नतिविधायकमिति च वदति सः। गतयोर्महायुद्धयोर्या जनानां सम्पदाञ्च हानिः समजायत तां स्मृत्वापि जनताया मानसं वेपते अतः सा फासिस्टवादं दूरत एव प्रणमति।

( ५ ) साम्यवाद इव फासिस्टवादोऽपि अधिनायकीयं शासनं परिपोषयति। नाधिनायकतायां जनता सुखं शान्तिञ्च लब्धुं पारयति। तदीया कार्यप्रणाली

जनताया जीवनमेव कदर्थनाया गहनाया निपातयति । जनता वस्तुतो न साम्यवादसम्बन्धिनीमधिनायकतामिच्छति न च फासिस्टवादविषयिकामेव

( ६ ) यत्नवान् सन् अपि स सफलतां भुवि न लब्धवान्—इत्येष च स्वयं तत्र महान् दोषः ।

फासिस्टवादः तदीयोग्रराष्ट्रभक्तिरेवाध्वंसयत् । स मानवमात्रं प्रति समुचितां दृष्टिं न न्यदधात् इत्येषा च कुभावना तमपातयत् । उन्नतिं स गच्छति यो न मानवे वैषम्यमाचरति । शक्त्यहङ्कारस्तं तां पराकाष्ठामनयत् यां गत्वा न कोऽपि बाद स्थातुं शक्नोति । आसीत् फासिस्टवादोऽधिनायकतानिष्ठः । अधिनायकः प्रलोभनैर्जनतां वशीकरोति । परं प्रलोभनरहस्ये विवृते सति अधिनायकता धराशायिनी भवति । विशिष्टां परिस्थितिं प्राप्य वस्तुतो फासिस्टवाद उद्यम यासीत् परं न तत्र तानि तत्त्वान्यासन् यैः स स्थायिनीं सफलतामधिगन्तु शक्नुयात् । वस्तुतोऽन्ततो गत्वा जगति वैदिकविचारधारैव विजयिनी भविष्यति तस्याः सत्यसिद्धान्तनिष्ठत्वात् सर्वसुखाभिलाषित्वात् समदर्शित्वान्न्यायशीलत्वाच्च सैव जगति स्थायिनीं सफलतामधिगच्छेत् ससारञ्च समग्रमुन्नमयेत् ।



## लोकतन्त्रशासनपद्धतिस्तस्याः सफलता च

लोकराज्याभिधा शासनपद्धतिर्न कापि नवीना पद्धतिः, नैषमेतादृश्यपि पद्धतिर्यास्मद्देशेन देशान्तराद् गृहीता स्यात्। पुरातनसंस्कृतवाङ्मयावलोकनेन ज्ञातं भवति यदस्मदीये भारतेऽनेकविधानां शासनप्रणालीनामासीत्प्रचलनम्। ऐतरेयब्राह्मणे[1] उल्लेख एष प्राप्यते यल्लोकतन्त्रात्मकशासनपद्धतिर्यादवेष्वासीत् प्रचलिता। महाभारताद् ज्ञायते यद्यादवानाम् अन्धक-वृष्णिनामभेदः संघ आसीत्। कतिपयेभ्यः शिलालेखेभ्यश्च[2] गणराज्यानां सद्भावस्य परिपुष्टिर्जायते। वैदिकग्रन्थेषु एवंविधं वर्णनं दृक्पथेऽवतरति यद्देशस्यास्मदीयस्य नानाविधशासनपद्धतिमत्त्वं ज्ञापयति। वेदाध्येतॄणां विदितचरमेव कृत्स्नतया यत् वैदिकेऽनेहसि गणतन्त्रात्मकं राजतन्त्रात्मकञ्च शासनमिह व्यद्युतत्। तत्र गणतन्त्रात्मकस्य राज्यस्य

यद्वुपाट्ये यतेमहि स्वराज्ये ( ऋग्० ५, ६६, ६ )

त्वाम् इमाः प्रदिश पञ्चदेवीः ( अथर्व०, ३, ४, २ )

इत्यादि श्रुतिवाक्येषु मधुरां कल्पनां विलोकयितुं शक्नुमः। परमाधुनिके काले लोकराज्यस्य ( गणतन्त्रात्मकस्य ) स्वरूपं तस्मात् लोकराज्यसम्बन्धिनः स्वरूपात् सर्वविधभावेन न साम्यं भजते। प्राचीने भारते भारतीया यां सामाजिकीं भावनामजनयन् सा कार्याणां वर्गीकरणे द्रढीयसीमास्थां निदधौ। कस्यचन वर्गविशेषस्य श्रेष्ठत्वं किं वा अश्रेष्ठत्वं तदीयं कार्यमेव प्रेक्ष्य अङ्गीकृतमभूत्। राजा स्वकीये मूले रूपे जनताया एव व्यक्तिरासीद् भिन्नो नासीत्। सः स्वगुण-योग्यता समरीयसामर्थ्यादिवशाद् विशिष्टं पदमवाप्तुमपारयत् स्वकर्तव्यपालनहेतोः प्रतिष्ठाया जीवनयापनस्य चोद्देश्येन तस्मै केचन अधिकारविशेषाश्च प्रदत्ता अभूवन्। न तस्मै प्रजोत्पादनात् स्वकीयात् भागं प्रददावपि तु राज्यस्य क्रियाकलापसञ्चालननिमित्तेन निर्धारितं किमपि बलित्वेन प्रायच्छन्। सैव स्थितिः, या राजत्वाधिगतेः प्राक् सामान्यसदस्येषु मताऽभवत्

१. ऐतरेय ब्रा० ३९. १. १४।

२ गिरिनार शिलालेखः ६, य च किंचि·· आराधयितुम्।

राजत्वलब्ध्यनन्तरं सदस्यानां सामान्यानां मध्ये सर्वश्रेष्ठोऽगण्यत । आदर्श-राज्याद् शासकाच्चैषाशा कृताभूयत् तदुभयं न केवलं प्रजानां सुख-समृद्ध्यर्थ-मपि तु नैतिकोत्कर्षार्थं च क्रियमाणेषु प्रयासेषु सक्रियं भागं ग्रहीष्यति । प्राचीनतरभारतप्रति यदा दृष्टिः क्षिप्यते तदा स्पष्टमेवेदं ज्ञातं जायते यद् राजतन्त्रपद्धतिः प्रजातन्त्रपद्धतिश्च–द्वे अपि–लोकराज्यस्य स्थापनां स्वकीयमा-दर्शममंसाताम् ।

अर्थशास्त्रं धर्मशास्त्रञ्च राजतन्त्रं श्रेष्ठसाधनपद्धतिं मत्वा राज्ञः कर्त्तव्यानि वर्गयोर्द्वयोर्विभजेते स्म प्रथमे वर्गे निहितानि कर्त्तव्यानि अनिवार्याणि प्राथमि-कानि च मतान्यभूवन् । तद्विधि स्वल्पादपि कृतात् प्रमादात् आलस्याच्च राज्यस्य सत्ता नाशोन्मुखी अपि भवती समवाप्यत । एतान्यनिवार्याणि कर्त्तव्यानि 'प्रजापालनम्' इत्येतया संज्ञया व्यपदिष्टान्यभवन् । प्रजापालनार्थं कर्त्तव्यानीमा-न्यासन्—शत्रुराष्ट्रेभ्य आक्रमणेभ्यश्च प्रजाया रक्षणम्, चौर्यादिसामाजिकीनां प्रवृत्तीनां दमनं, सामाजिकानामत्याचाराणां निरोधः । एतद्विधकार्यार्थं सैन्य-न्यायालयाङ्गानि महत्तां स्वकीयां भिदधुः । एतत्कर्त्तव्यानन्तरं प्रजारञ्जन-विषयकाणि कर्त्तव्यानि प्रति ध्यानं प्रदत्तमभूत् । एतत्प्रयोजनेन लोकोपयोगिनः कल्याणकारिणो राज्यस्य स्थापनापेक्षिताभूत् । राज्यमाधारभूता नीतीः संस्थाप्य सामाजिकीश्च संस्थाः सञ्चाल्य शिक्षां कला-कलापञ्च परिपर्ध्य सुशासनस्य स्थापनामनुतस्थौ । एवैव भावना शतपथब्राह्मणेन पुष्टि-क्षेमशब्दद्वारेण प्रकटी-कृतास्ति । बृहस्पतिर्हि यां 'राजसत्तम' भावनामुद्भावयाम्बभूव तत्र लोकरा-ज्यस्य स्फुटतरैवाभिव्यक्तिः प्रतिष्ठापिता भवति । बृहस्पतिराह-यद् यस्य राज्ञो राज्ये प्रजा निर्भया भूत्वा पितृगृहनिवासकारिणी सन्ततिरिव सानन्दं विचरति स राजा 'राजसत्तम' इत्युच्यते । चन्द्रगुप्तमौर्यस्य सम्राजः अशोकस्य च शासनं राजतन्त्रात्मकं शासनं सदपि लोकराज्यात्मकमेव शासनं भूत्वा वस्तुतो भुवि रेजे । अशोकेन धर्मव्यवस्था प्रजाहिते विनियोज्य जनानां जनपदानाञ्च पारमार्थिकीं स्थितिमुन्नयितुं यः प्रयत्नआचरित आसीत् किञ्च अनुधर्मयानाख्या यात्राः आयोज्य या चेष्टानुष्ठितासीत् तस्या उद्देश्यं 'राजसत्तम' स्थितेरधिगमनमेव बभूव ।

लोकराज्यकल्पनायां द्वितीयोऽपि पक्ष आसीत् । प्रजायाः शासनप्रति भक्तिमत्त्वं सुचिरं शान्तिनीतिश्च । प्रजायां द्वयोरपि गुणयोर्विद्यमानत्वमावश्यकत्वेन मतमभूत् । कौटल्यो जनपदस्य वैशिष्ट्यं प्रतिपादयन् ब्रूते यद् भक्तः शुचिश्च

मानवो जनपद-सम्पदिति। भक्तिः प्रशासनम्प्रति प्रजा-निष्ठायाः प्रतीकः किञ्च शुचिना राज्यम्प्रति अविच्छिन्नाया भक्तेर्निष्ठायाश्च रूपमासीत्। कौटल्यो भक्त-शुचिमनुष्यैः परिपूर्णं राज्यमेव 'पृथिवी'ति किञ्च 'अर्थ' इति मेने। एषा जनता पृथिव्यासीत् राजा च तस्या आसीद् वरदः पुत्रः[1]। अभिषेकानन्तरं राजा 'मातः पृथिवि, नाहं त्वयि द्वेक्ष्यामि न च त्वं ममोन्मूलनकारिणी च स्याः' इत्येतच्छ-पथं परिगृह्णन् दृष्टो बभूव[2]। पृथिवीतो नृपो यामाज्ञामग्रहीत् सा नृपस्य जनतां किञ्च राज्यम्प्रति निष्ठाभावनायाः प्रकाशयित्री आसीत्। गृहीतशपथे सति तस्मिन्, सः शासक-पदमलङ्कर्तुमादिष्टोऽभवत्। न ततः प्राक्। शासकाय च तस्मै सुशासन-सूत्रं, प्रशासनार्थञ्च राज्यं प्रदत्तमभूत्। समग्राया अपि कर्मका-ण्डीयपद्धतेः पृष्ठभूमौ जनता शक्तेस्तदधिकाराणां चाधारत्वेन समतिष्ठत। अथर्ववेदकालं यावत् सा राजानं सर्वसम्मत्या अवाचिनोत् प्रशासनस्य चाधिकारं तस्मै समर्पयति स्म। नैतिककर्तव्यात्स्वकीयात् विमुखो राजा येन इव इह न्यगृह्यत। इतिहासविश्रुतम्चेदं तथ्यं यज्जनताया रक्षणेऽसमर्थो बृहद्रथः सेनाप-तिना पुष्यमित्रेण अघानि।

स्मृतिपरम्परायां राजा प्रजायाः सेवको मतः। स्वकर्त्तव्यानि पालयितुं जीवनं च निर्वोढुं सः पारिश्रमिकभाक् कृत आसीत्। जागरूको हि शास्ता यं प्रशास-नसिद्धान्तमनुसरति स्म वस्तुतस्तु, सः प्रजाहितपरं कल्याणकरं लोकराज्य-मजनयत। उदात्तभावनावलम्बितस्य राज्यस्य शासकत्वात् पृथ्वीपुत्रः पृथ्वीप-तित्वं भेजे। सः स्वकीयराजनीतिवादर्शात्मकप्रयत्नेषु विजिगीषुरित्यकथ्यत; सकलाश्च राज्यप्रकृतयस्तदधीना भवन्त्योऽतिष्ठन्। शासको यदा प्रजायै कर्त-व्यानि पालयन् तदर्थञ्च स्वीयां निष्ठां निदधाति स्म तदा लोकराज्य-स्थापनायां सर्वथैव सः प्रभविष्णुरभवत्। एवंविधो हि राजा राज्याद् भिन्नो न दृष्टो बभूव। सर्वे राज्ञि राज्यमपश्यन् राज्ये च राजानम्। न राज्यं राज्ञः पृथक्त्वं ययौ न च राजैव राज्यात्। प्राचीनं भारतं वस्तुतः, नैतिकताया राजनीतेश्च समन्वयतामेव 'लोकराज्यम्' इत्यमन्यत। तदेतां स्थितिमेव लोकराज्यत्वाय अकल्पयत्।

साम्प्रतं सौभाग्यादस्मद्देशे लोकराज्यविषयिणी शासनपद्धतिः प्रतिष्ठापि-

१. महाभारतम्, शा प.;

२. पृथिवीमातर्मा हिंसीर्मा अहं त्वाम्। शतपथ ब्रा० ५, ४, ३, २०.

तासीत्। एषा शासनपद्धतिरस्मदीयदेशस्य नेतॄणां मस्तिष्केषु तदैव समुत्पन्ना-जायत यदा ते-नेतारः-देशस्य स्वातन्त्र्याय युद्धे रता आसन् तैः अयं शिवसङ्कल्पः कृत आसीद् यत् सति स्वतन्त्रे देशे, वयं तत्र लोकतन्त्रात्मिकां शासनपद्धतिं प्रवर्त्स्यामहे। तेषामेतादृश उदात्तः पुनीतश्च सद्भावः सर्वेष्वपि साधारणेषु जनेषु इमामुद्भावनां सञ्चारितवान् यद् देशे स्वाधीने सति सर्वेऽपि भारतीयाः स्वकीये देशे स्निह्येयुः; सर्वे समवेता भूत्वा संगठिताश्च भूत्वा पवित्रया निष्ठया सह देशं सच्चरित्रतया श्रिया, ज्ञानज्योतिषा, सम्पदां सुषमया, सर्वविधसाधनसम्पदा च समृद्धं सम्पन्नं च विधास्यन्ति, सर्वेऽपि च जना देशाद् गुरुतरं न किमपि अवगमिष्यन्ति। ते जातेः सम्प्रदायात् प्रादेशिकत्वात् व्यक्तित्वाच्च गरीयांसं नैजं देशमेव विभावयिष्यन्ति। सर्वे जना भेदभावं विस्मृत्य देशस्योत्थाने स्वकीयमुत्थानं देशस्य पतने स्वकीयं पतनं वेत्स्यन्ति। एतासां सर्वासां भावनानामालम्बनमधिगम्य मन एतं निश्चयं गतमासीद् यल्लोकराज्यात्मकशासनप्रणालीयं निश्चप्रचतया सफलतां यास्यति परं यदैव भारतवसुन्धरां पवित्रयितुं स्वतन्त्रता माता अवातरत् पण्डितजवाहरलालनेहरू सरदारवल्लभभाईपटेलप्रभृतयो देशमर्थसमृद्धं विधातुं विविधा योजनाः प्रवर्तितवन्तोऽथ च देशे विद्यमानानि तानि सर्वाणि राज्यानि देशेऽन्तर्भावयितुं घोरे कठोरे च प्रयासे रता अजायन्त तदैव मन्त्रिमण्डले समवाप्तस्थाना अनेके मन्त्रिणः, लोकसभायाः राज्यसभायाश्च सदस्याः राजकीयासनासीना बहवोऽधिकारिणो धनाधीशाश्च प्रचुराः आत्मानमाढ्यतरं समृद्धतरं च कर्तुं बहुविधानसत्प्रयत्नान् आतिष्ठिपन्। यदा साधारणाः कर्मचारिणः जनसमुदायाश्च तान् वैयक्तिकहितेषु निलीनान् प्रैक्षिषत तदा तेऽपि धर्मविरुद्धान्मार्गात् अर्थमुपार्जयितुं निर्भया भूत्वा सन्नद्धा अभूवन्। सत्यमेवेदम्—'यद् यदाचरति श्रेष्ठस्तत् तदेवानुवर्तते'। अत अस्मिन् लोकतन्त्रात्मके शासने सर्वत्र सर्वेष्वपि राजविभागेषु जनतायाः प्रतिवर्गेऽधर्मतोऽध्यायनश्च धनस्यार्जनं खाद्यपदार्थानां संग्रहणं निगूहनञ्च विक्रेयपदार्थेषु हानिजनकपदार्थानां मेलनं, मन्त्र्यादिपदप्राप्त्यर्थं हिंसादिदुष्कर्मणामाचरणं घटमानं दृग्गोचरं भवति। देशोऽयं नितान्तनिन्दनीयेऽध्वनि चलन्नवाप्यते। एषा तु स्थितिर्देशस्य समस्तां स्वतन्त्रतां सङ्कटे निपातयन्ती प्रतिभाति। सर्वेषामपि राज्यानां मन्त्रिमण्डलं स्वस्वपदस्य चिन्तायामास्ति। देशस्य चिन्ता न कस्मिन्नपि विलोकिता भवति। एतस्मात् कारणात् सर्वत्र स्वच्छन्दता प्रभुत्वमिव वापि भाषा विवाद उत्पाद्यते,

यापि च प्रादेशिकतावादः प्रसार्यते। मत-संग्रहणार्थं सर्वतो जातिवादस्य सम्प्रदायवादस्य च स्वरमुँचै: कुर्वाणास्त एव जनाः प्रेक्ष्यन्ते ये सन्ति शास्तारः। शासनसूत्रधर्तॄणां चरित्रे दुर्बलताया आगमनस्येदं कुफलं संवृत्तमस्ति यत् सर्वत्र भ्रष्टाचारो भृशं व्याप्तो वीक्ष्यते तन्निरोधार्थं यथा यथा प्रयत्नो विधीयते तथा तथा स उग्रतर एव भवति। वस्तुतो यदा न्यायकर्तारः शासनसूत्रधर्तारो विधिनिर्मातारश्च मलीमसां पद्धतिमाददते, तदा कदापि न सम्भाव्यमेतज्जायते यत् पापानि विनष्टानि स्युः; उत्कोच उपमर्दनः स्यात्, भ्रष्टाचारो निवारितो भवेत्, असत्पदार्थानां च मिश्रणं निरुद्धं जायेत। हा देशम्प्रति शुभेच्छा तु दूरे तिष्ठतु देशस्यैव निवासिषु बहवस्तत् तद् दुष्कर्म कुर्वाणा विलोक्यन्ते येन देशः पराधीनतायां निपतितो भवेत्। ते देशान्तरेभ्यो धनं ग्राहं ग्राहं देशं सर्वथैवापर्युन्नतः प्राप्यन्ते। पुरा तु देशे एक एव जयचन्द्र आसीत् परमधुना तु सहस्रशः सन्ति जयचन्द्राः। एताभिर्भीषणाभिरापद्भिरस्तु देशो ग्रस्तोऽस्त्येव एताभ्यश्च व्यतिरिक्ता कश्मीरसमस्या, पाकिस्तानस्य अहैतुकी दारुणा दुर्जनता, चीनस्य च भयङ्करी लिप्सा तमहोरात्रं दुन्वन्ती नितरां दैन्यं नेदयते।

लोकराज्यस्य रक्षार्थं लोकस्य यत्कर्तव्यं भवति तदत्रत्यो लोकोऽनुसरत्येव न। देशस्याधिकतमा जना सम्प्रत्यपि सन्ति शिक्षाशून्याः। तेषां शिक्षा-शून्यत्वादस्य लोकतन्त्रात्मिकेयं शासनप्रणाली अतितरां विषीदति। स्वार्थपराः शासकाः शिक्षाम्प्रति सर्वथैव उपेक्षाधियं निदधाना अवलोक्यन्ते। न तद्दिशि तेषां ध्यानं मनागपि। ते शिक्षाया उपादेयतां महनीयताञ्च जानन्तोऽपि तां सततमवजानन्ति। शिक्षकसमुदायस्तदर्थं यदि तान् प्रेरयति तदा ते हा हन्त, निगृहीता एव क्रियन्ते। इयमस्ति ईदृशी चास्ति लोकतन्त्रस्याद्य दुरवस्था। वस्तुतो लोकतन्त्रस्य प्रतिष्ठापनं न तावत् कठिनं, यावत् तस्य रक्षणं भवति कठिनमतस्तस्य सफलतापूर्वकं सञ्चालनार्थमथ च तस्य अखण्डताया अक्षुण्णतायाश्च कृते यानि तथ्यानि सन्त्यपेक्षितानि तानीह निधीयन्ते—

१. राज्ये विभिन्नानां राजनीतिकदलानामुपस्थितिः प्रतिदलम्प्रति स्वस्वसंघटननिमित्तेन प्रचारस्य च प्रयोजनेन स्वातन्त्र्य-प्रदानम्।

२. कमपि भेदभावं कामपि च भीतिं विहाय जनताम्प्रति स्वकीयप्रतिनिधिनिर्वाचनाधिकारस्य दानम्। एतदर्थमिदमपेक्ष्यते यन्निर्वाचनावसरे मत-दानं नितान्तप्रच्छन्नतया स्यात्। को नागरः कस्मै मतं प्रदत्तवान्—इत्येतत् कोऽपि न

शातुं शक्नुयात्। चेदिदं न स्यात् तदा मतदानं स्वतन्त्रतया-निर्भीकरूपेण न भवितुमर्हेत् लोकमतञ्च न तत्र प्रकटीभवेत्।

विरोधिदले सति सबले शासकवर्गो मानधान एव सन्तिष्ठते। विरोधिपक्षो न शाम्यते यदा, शासनसूत्रं स्वहस्तायत्तं कर्तुं क्षमो भवितुं शक्नुयात् इत्येव शासकोऽनिशं शासकदले साधते। इङ्गलैण्डे यन्त्रतो विरोधिदलस्य सत्तायुपादेयता भवति अतस्तत्र विरोधिदलस्य नेतापि शासनाल्लभते वेतनम्। विरोधिदलनायकेनापि प्रतिपक्षमस्य गम्भीरतयावेक्षितव्या भवति। तस्यापि कर्तव्यं भवति यदसौ शासनं सततं सावधानम्। लोकतन्त्रस्य रक्षार्थं निन्दकस्य प्रयासवत्ता सर्वैवाभिमता भवति। यस्यानेव विरोधी शासनकर्तृषु स्व प्रभावं स्थापयितुं प्रभवति तस्मात् तस्यापेक्षा निरन्तरमाकाङ्क्ष्यते। भारते विरोधिदले शक्तिमत्तायाः अभावात् शासकवर्गो निरङ्कुशो भवितुमवसरमश्नुते। चेद् विरोधिनां समवाया बहवो भवन्ति तदा विभक्ताः ते भवन्ति निर्बलाः। एतादृशा भिन्ना शासनसूत्रधर्तारस्तेभ्यो भयविरहिता एव भूत्वावतिष्ठन्ते।

५. निर्वाचने यः समुदायो बहुमतो जायते स एव शासनाधिकारं लब्धुं प्रभवेत्। बहुमतसमवायेरर्थोऽयमेव भवति यज्जनता तस्मिन्नेव प्राप्तबहुमतके समुदाये विश्वसिति। न कापि शक्तिरधिगतबहुमतकं शासनमुन्मूलयितुं विध्वंसयितुं वा क्षमते काम सा शक्तिः कीदृश्यपि स्यात्। इटल्याः मुसोलिनी रूसस्य फासिस्टवर्गस्य शक्तिमतुला प्रदर्श्य सत्तां हस्तसात्कर्तुं समर्थः सञ्जातः।

६. लोकतन्त्रे विधेः सर्जनस्य, नीतेर्निर्धारणस्य, आयव्ययकस्य च पारणस्य स्वत्वं जनतावचिता प्रतिनिधय एव निदधति। मन्त्रिमण्डलं प्रतिनिधीनां सम्मतिमन्तरेण न कामपि नीतिं निर्धारयितुं शक्नोति न च नवं राजस्वमेवारोपयितुमीष्टे। जनतायाः प्रतिनिधीनां पुरस्तात् मन्त्रिमण्डलमुत्तरदायित्वमानहदेव समवतिष्ठते। यावन्मन्त्रिमण्डलं जनप्रतिनिधीनां विश्वासं निदधाति तावदेव तत् स्वपदमधिष्ठातुं पारयति। जनप्रतिनिधयो मन्त्रिमण्डलोपरि अविश्वासप्रस्तावं पारीकृत्य किं वा शासकसमुदायस्य कमपि प्रस्तावमनङ्गीकृत्य मन्त्रिमण्डलं तत्पदात् विचलितमपि कर्तुमर्हन्ति। आयव्ययके कृतो व्यकल्पनात्मकः प्रस्तावोऽपि तदेव महत्त्वं बिभर्ति यदविश्वासात्मकः प्रस्तावः।

७. लोकतन्त्रस्य सफलताया निमित्तेन महनीयतमं तत्त्वमस्ति जनतायाः शिक्षणं तस्याश्च जागरूकत्वम्। मतदातृणां शिक्षितत्वमेतावत्तु नितरामपेक्ष्यते यत् ते देशस्य सामाजिकान् आर्थिकान् राजनीतिकांश्च प्रश्नान् अवगन्तुं प्रभवेयुः

मनो मस्तिष्कञ्च विमलं विशदमुदात्तमवदातं च दृश्यते। वस्तुतो यावद् यथार्थतया शिक्षायाः प्रसारो न कृतः स्यात्, यावद् शिक्षां प्रति शिक्षकञ्च प्रति उच्चतमं स्थानं न दत्तं स्यात् तावत् लोकतन्त्रपद्धतिर्वन्ध्यैव सिद्ध्येत्।

महाभारते लोकतन्त्रस्य साफल्यमुद्दिश्य या चर्चा कृतास्ति तत्राभिहितमिदं यल्लोकराज्ये नागरिकेषु सदाचारिता सुशिक्षितता स्वसम्पन्नता शूरता शस्त्रशास्त्राभिज्ञतापेक्ष्यते—

> द्रव्यवन्तश्च शूराश्च शस्त्रज्ञाः शास्त्रपारगाः।
> कृच्छ्रास्वापत्सु संमूढान् गणाः सन्तारयन्ति ये॥

तत्रोक्तं यत्सङ्घराज्यस्य यदि जना द्वैधीभावे, परशोषणे, निग्रहणे हिंसायाञ्च मनो निबध्नन्ति तदा न सङ्घराज्यमस्त्यापद्रहितम्—

> क्रोधो भेदो भयं दण्डः कर्षणं निग्रहो वधः।
> नयत्यरिवशं सद्यो गणान् भारतसत्तम॥

सङ्घराज्यार्थं ज्ञानवृद्धानां निःस्वार्थसेवापरायणानां, परवञ्चनादुर्भावनाविहीनानामगाधसुदृढगम्भीरराष्ट्रभावनाविभावितानां मानवानामपेक्षा भवति।

अस्मद्देशस्येतिहासो वदति यदेष देशो न वैदेशिकैः पराक्रमेण स्वायत्तीकृतः। ते द्वैधीभावेनैव जेतुमिममशक्नन् किञ्चात्रशासितुमपि क्षमा अजायन्त। हन्ताद्यापि नैव द्वैधीभाव-पिशिताशनादस्मात् देश उन्मुक्तो दृश्यते। युधिष्ठिर आह—"भेदमूलो विनाशो हि गणानामुपलक्षये"।

समासेन वक्तव्यमिदं भवति यल्लोकराज्यं तत्रैव सफलतां गन्तुं शक्नोति यत्र सदाचारः, सुशिक्षा, सामाजिकसाम्यम्, आर्थिकवैषम्याभावः, राष्ट्रियभावनावत्या मानवतायाः सर्वस्मिन्नपि वेगवान् प्रवाहः, सामाजिककल्याणव्रतवर्ती जनता, भृत्तिविहीनताया अभावः, लेखलेखनार्थं विचाराणां प्रकाशनार्थं च स्वातन्त्र्यं, नारीजातिंप्रति गौरवभावना, स्वायत्तशासनप्रणालीप्रयोजनेन स्वस्थं वातावरणं, स्वस्यैव देशस्य भाषाया लोके राज्ये च व्यवहारश्च दृश्यन्ते।

देशं शत्रोः पातुं देशे सुखानि शान्तिञ्च स्रष्टुं देशे आध्यात्मिकताधिभौतिकताधिदैविकोत्थानं द्रष्टुं सर्वेषामपि विदुषां धर्मात्मनां महात्मनाञ्चापि कर्तव्यं यत्ते लोकतन्त्रात्मकं शासनं सफलीकर्तुं सुदृढप्रतिज्ञाः स्युः।

—०—

( ६६ )

## समाजो व्यक्तिश्च

'समाज' इत्येतत् पदमस्मिन् नितान्तव्यापकमर्थं निधाय पद-जगति-मंशोभते। सर्व एव मानवीयाः सम्बन्धाः संस्थाश्च 'समाज' इत्येतेन नामधेयेन व्यवह्रियन्ते। न मनुष्योऽस्ति प्रकृत्यैव स्वतन्त्रतानुरागी। सः स्वजीवनं गोपायितुं स्वभावनावलिं तोषयितुं स्वव्यक्तित्वञ्च संवर्द्धयितुं समाजमध्यास्ते। जनुरारभ्यो-परामपर्यन्तं स्वकीयं प्रत्येकमभिलाषं पूरयितुं परमालम्बते सः। स्तनन्धयः पित्रो-र्वात्सल्यमयं संरक्षणं, बन्धु-भगिनीनां मधुरं स्नेहं सवयसां च मोदप्रदं सान्निध्यं विना न जीवितुमर्हति। गच्छताऽनेहसा विद्याध्ययनाय च प्रयाति पाठशालाम्। तदनु जीवनस्य कृते यदार्थार्जनमपेक्षितं सञ्जायते तदा प्रतिपदं तेन परेषां साहाय्यमपेक्ष्यते। तदेवं पारस्परिकी सहायता मानव-जीवनस्यास्ति महती विशिष्टता। पर-साहचर्य-तत्तद्व्यवसायाचरणसमये मानवो नैजाभिप्रेत-कृत्य-सम्पादनमनसाऽनेकसंस्थाः सृजति। अध्ययनार्थं विद्यालयानां, आमोदादि-कृते गोष्ठीनां, चित्रशालानां, नाट्यगृहाणां, संगीतालयानां, कौतुकागाराणां चापेक्षातितरां भवति तस्य। अथ व्यापारप्रयोजनेन भृत्यतावाणिज्योद्योगादिकानि साधनानि जायन्तेऽभिलषितानि। आर्थिकाधिकाररक्षणार्थं संघसंस्थापनञ्च भवत्या-काङ्क्षितम्। जीवन-क्षेपणाय सृष्टानामेतासां सर्वासां संस्थानां समष्टिरेव 'समाज' इति प्रणिगद्यते।

नैतदिह विस्मरणीयं यत् न एव मानव-समवाय 'समाज'इत्येतां संज्ञां भजते यत्र सौहृदमय-शान्ति-शुचिजीवन-यापनानुरागो जागर्ति। न चाकस्मा-देव सञ्जातो जन-संमर्दः कदापि समाज इत्यभिधीयते। समाजस्योद्भवस्तु तदा जायते यदा चिराय जननिवहे पारस्परिकसहयोगपूर्वकजीवन-यापनकामना-संघर्षशून्यप्रेमपूर्णजीवनदिदृक्षा समोदं समुन्मिषिता भवति। (मनुष्यस्य प्रकृतिरेवा-स्तीदृशी यत् सा शान्तिं मृगयते, आनन्दमन्विच्छति, न सा एकाकिन्येव रमते; न तस्यै विविक्तता रोचते) अतः पारस्परिकस्नेह-सहानुभूतिमयसंजीवनोत्सुक-जनसमुदाय एव 'समाज' शब्दस्य भाति वाच्योऽर्थः। डोरटमेनमते—"मानवानां

मित्रतान्वितशान्तिसन्धानयुतनीवनमेव समाज[1] 'इति मनुते। मैकाइवर समाज परिभाषमाणो लिखति—"समाज समावेशयत्यात्मनि मानवानुरागपरकव्यापार सम्बन्धम्[2]"।

एतेन ज्ञायते यत् समाजेऽत्र स्थिताानि तत्त्वान्यधस्तन्त —

१ विशालो जनसमुदाय।

२ जनवृन्दे शान्तिपरिपूर्ण सहयोगमयजुम्भितजीवननयनाभिमता नैसर्गिकी वाञ्छा।

३ सकलश्रेय प्रेय पावनजीवनयापनार्थं निश्चय नीता सामाजिकी योजना व्यवस्था च।

सामाजिकस्याकारस्य विकास शनै शनै एव सञ्जात। मानवस्य स्वभावएव समाजस्य सन्निविष्टत्वात् समाजस्तावन्नैव पुरातनो यावन्मानवस्य जीवनम्। यस्मादौ समाजस्थाकार आसीत्तथैवाद्य। आदौ मानव परिवारे न्यवात्सीत्, परिवारोऽस्ति जातीना जनक जातयो ग्राम प्रतिष्ठापयामासु, ततश्च गच्छता समयेन महामहाराष्ट्राणि प्रादुरभवन्। अद्यतन निखिलमपि जगत् पारस्परिकप्रीतिपूर्वक वस्तुमीष्टे तस्मात् सकलोऽपि ससार समाजस्य अङ्गमिव सञ्जातोऽस्ति। सामाजिक सगठनाय न कापि राजनीतिकी वा राजकीया व्यवस्था काड्क्ष्यते। सर्वेऽपि जना यदा सहयोगेन स्वकीया आभ्यन्तरिकया नैतिकया भावनया च पारस्परिक सम्बन्ध प्रयुञ्जन्ति तदा स माजिक सगठन भवति कार्यशीलात्मकम्। समाज शरीरमिव प्रतीयते। यथा शरीरे वर्तन्ते विभिन्ना अवयवा तथैव समाजे विभिन्ना समुदाया तत्स्थाश्च भवन्ति। समाजशरीरहिताचरण समुदायादीनां भवत्युद्देश्यम्।

मानवस्याधिसमाजमधिवास कस्मादिष्यते—इत्येष प्रश्न उत्तिष्ठति। समाजाधिवासो मनुष्य बहुविधासु चिन्तासु आपत्सु च निमज्जयति। अपि किं वयमेताभ्यश्चिन्ताभ्य आपद्भ्यश्चात्मान विमोच्य समाजात् दूरे कृत्वा च न यस्मिंश्चित् कान्तारे स्व जीवन गमयितु प्रभवाम? अपि किं नैतत् सम्भव यदसौ (मानव) उत्तरदायित्वेभ्यो बहुविधेभ्यो दु खेभ्योऽसफलताभ्यो बाधाभ्यश्च स्व निर्मुक्त विधाय वहति स्थातु शक्नुयात्?

१ दी टर्म सोसायटी मीन्स हारमोनियस एण्डरीस्ट पीसफुल रिलेशनशिप।

२ सोसायटी इन्क्ल्यूड्स एव्री विल्ड रिलेशनशिप ऑफ मैन टू मैन।

स्वबन्धूनां स्वज्ञातीनां स्वजनानां च कदनात् त्रस्तो भूत्वाऽर्जुनोऽपि कुरुक्षेत्रे कृष्णमेवमेवापृच्छत्—योगेश्वर, एतादृशाद् दुःखास्पदाज्जीवनात् किं विपिन निवासो न वरम् ? तदानीं हृषीकेशः श्रीकृष्णोऽर्जुनमुपादिशत्—'अर्जुन, युद्धभूमौ स्वकर्त्तव्यस्यापालनं कापुरुषत्वमस्ति; सांसारिकेभ्यो दुःखेभ्यः प्रपञ्चेभ्यश्च क्लान्ति व्याकुलतां च प्राप्य तत पलायनं मान्द्यम्। समाजे स्थित्वैव निष्कामकर्माचरणं वरम्। तथा कृत्वैवास्माकं समाजस्य च भद्रं भवितुमर्हति।

परित्यक्तसमाजं जीवनं जीवनं न। योगिनः संन्यासिनश्च समाजं न परित्यजन्ति। ते स्वतपसा, स्वाध्यायेन, निःस्पृहतया, भगवद्भजनेन च समाजमुपकुर्वन्ति भृशम्। ते पारिवारिकं सामाजिकं च बन्धनं मुञ्चन्ति, सामाजिकं जीवनं न। समाज-परित्यागेन अहितं भवति महत्। तथाकरणं वस्तुतस्तु सम्भवमपि न। समाजेनैव मानवचरित्रस्य भवति निर्माणम्। मानवस्तेन न केवलं स्वचरित्रं संस्कर्तुं मार्ष्टुं च शक्नोति तेन स आत्मोन्नतिमपि कर्तुमर्हति। स स्वार्थपरतां विहाय स्वकीयेऽन्तःकरणे समन्वयात्मिकां भावनां सञ्चारयितुं क्षमते। स स्वजीवनं रक्षन् नैजसभ्यतां संस्कृतिं चोन्मीलयितुं प्रभवति। भावोऽयं मानव-जीवन रक्षार्थं समाजस्य सत्ता सर्वथैवापेक्ष्यते। विना सामाजिकं साहाय्यं मानवो न जीवितुं शक्नोति। अत्र सन्त्यधःस्थितानि कारणानि :—

१. शरीरमिदं यत्प्रथममपेक्षते तदस्ति अशनं वसनञ्च। भोज्यपदार्थेन मानवीयस्य शरीरस्य जीवनरक्षा भवति, वसनैश्च तच्छरीरं स्वकीय शीतादितः पाति। भोज्यं द्रव्यं वस्त्रञ्च मानवः पर-साहाय्यमन्तरेण न लब्धुमर्हति। अन्नोत्पादनाय वसन-निर्माणाय च अनेकेषां मनुष्याणां सहायता भवत्यपेक्षिता। एतेन स्पष्टतया ज्ञायते यज्जीवनकृते मानवः समाजापेक्षी वर्तते।

ख्यायते निकेतनम्। निकेतनं मानवोऽन्येषां मानवानां सहयोगेनैव निर्मातुमर्हति। इत्थमिहापि समाजं विना मानवस्य जीवनं नात्मानं वोढुं क्षमते।

४. नानाधिव्याधयो मानव-जीवनमभीक्ष्णमनुधावन्ति। ते यदा तदा जीवनमाक्रमन्तेऽभिभवन्ति निपीडयन्ति अपकुर्वन्ति च तेषां निवारणाय दूरीकरणाय विनाशनाय च औषधानां-चिकित्सायाः-अपेक्षा भवति। इमान्यौषधानि चिकित्सा च मानवेन सामाजिकसहकारेणैव लभ्यन्ते। अत्रापि मानवः समाजश्रितः समवाप्यते। न तं विना सः स्थातुं पारयति।

इत्थं वयं पश्यामो यन्मानवस्य कृते समाजस्यापेक्षा पदे पदे जरीजृम्भ्यते। मानवस्य जीवनं समाजं विना न स्थातुं शक्नोतीत्येतस्मादेव कारणात् मानवः समाजं नाश्रयतेऽपि तु सः स्वभावनाराशिमिच्छापुञ्जञ्च पूरयितुमपि तमाश्रयति। आधुनिकस्य मनोविज्ञानस्य साधिकारं वक्तव्यमिदं यन्मानवः काश्चन नैसर्गिकी: प्रवृत्तीर्निदधाति। स ताः स्वाभाविकीः—ईश्वरप्रदत्ताः भावनाः—कदापि नैकान्तिके जीवने प्रकटीकर्तुं क्षमः। तासामभिव्यक्त्यर्थमन्ये प्राणिनोऽपेक्ष्यन्ते। तथाहि—पैतृक-प्रवृत्ति संतृप्तिकृते पुरुषो वा नारीष्यते। एवमेव संग्रहशीलायाः आत्मरक्षाविषयिकायाः, क्षुधानिवारणकारिण्याः प्रेम-जुगुप्सा-संरम्भात्मिकायाः स्वप्रभावप्रतिष्ठापनसम्बन्धिन्याः कीर्तिसमवाप्तिनिष्ठाया उपचिकीर्षायाः परेषामुपरि नैजशासनसञ्चालनपरायाः धनाडम्बर-प्रसारणौत्सुक्यायाः अन्यान्यविषयस्थितायाश्च प्रवृत्तेः पूर्तिः समाजमध्य एव भवितुं शक्यासित। अतएवापि न मानवः स्वं कस्मिन्नपि काले कस्मिन्नपि स्थाने समाजात् पृथक् कर्तुं क्षमः। वस्तुतः समाजराहित्यं मानवजीवनं नितान्तमेव दयनीयतां गमयति। मानवजीवनमात्मानं यदापहृतसमाजसान्निध्यमीक्षते तदा नितरां दूयते। दार्शनिकोऽरस्तु सत्यमेवाचचक्षे—"मनुष्योऽस्ति प्रकृत्या सामाजिकः प्राणी।

समाजसम्पर्कीयः साधनं यतो मानवो ज्ञानोपार्जनस्य सांस्कृतिकस्य च विकासस्य सदवसरमश्नुते। अनेकानेकयुगव्यापिज्ञानं समाजे सञ्चितं भवति तस्मात् सः विशालकोश इव वर्तते। समाजे उषित्वैव मानवस्ततोऽनन्तं सञ्चितं ज्ञानं लभते। ततस्तस्य बौद्धिकी शक्तिरेधते। जीवनं समाजादेव सभ्यतां सञ्चिनुते। तस्य सभ्यतासम्बन्धिनी समुन्नतिश्च जायते। वस्तुतस्तु समाजोऽस्त्येको महान् विश्वविद्यालय इव। मानवस्तत्र निवासं विधाय विविधयन्त्र-पोत-भेषजप्रभृतिनानापदार्थानां निर्माणस्य योग्यतामवाप्नोति। एतद्विधतया

सभ्यता प्रकर्षं मानवीयं जीवनं च सुखं विन्दते। किं नाम सुन्दरं किं सत्यं भवतीत्येतच्च समाजाद् विदितं जायते। सर्वासामपि चित्रकला नृत्यकला संगीतकलादीनामपि समुद्भवः समाज एव भवति। एतावदेव न भाषाया प्रादुर्भावोऽपि तत्रैव घटते। न मानवो विपिनेऽधिवास कृत्वा भाषा शिक्षते न च तदीया भाषा तत्र विकसिता भवितुमर्हति। एतेन सिद्धमिदं यत् समाजः संस्कृतिकस्य विकासस्य मूलं स्रोतो वा। आर्थिकमुत्थानमपि समाजश्रितम्। नैकाकी भूत्वा मानवस्य अर्थविषयको मनोरथश्च फलति। समाज-सन्निधानादेव स अर्थस्यार्जनमर्थस्य वृद्धिञ्च विधातु प्रभवति। राज्यस्य व्यवस्था सामाजिकं संघटनमध्यारोहति। इयं सामाजिकी भावनैव वर्तते यद्वशाद् मानवो राज्यस्य नियमान् सहर्षं स्वेच्छया परिपालयति। अत समाजो नि सन्दिग्धतया 'व्यक्तिः मातेव पितेव गुरुरिवोपकुरुतेऽहर्निशम्।

सम्प्रति प्रश्नोऽयमुत्तिष्ठति समाजे व्यक्ते किं स्थानम्? अपि किं व्यक्तिः समाजाद् गरीयसी? आहोस्वित् समाजो व्यक्तेर्गरीयान्? समाजो व्यक्त्यर्थमस्ति किं वा व्यक्ति. समाजार्थम्?

समाज विचारकर्तृभिरस्मिन् सम्बन्धे विभिन्नानि मतानि व्यक्तीकृतानि सन्ति। केषाञ्चन विचारवतां विचारोऽयं यत् समाजोऽस्ति व्यक्तेर्महीयान्। व्यक्तेर्धर्मो भवति यत् स समाजार्थं समाजस्य प्रतिष्ठार्थं च कार्यं कुर्वीत। समाजोऽस्त्यन्तिमं साध्यम्। व्यक्तिर्वर्तते साधनमात्रम्। परमन्ये विचारकाः किमप्यन्यदेवोदीरयन्ति। तेषामभिधानमिदमस्य। व्यक्तीनां समष्टयैव समाजस्य भवति निर्माणम्, न समाजस्यास्ति नैजं स्वतन्त्र स्वत्वम्। मानवः स्वाभिलाषपरिपूरणप्रयोजनेन समाज जनयति। तस्मात् समाजस्यान्त्यं ध्येयं व्यक्तिरेव; न व्यक्तेर्ध्येयं समाज। समाजस्य धर्मोऽयं यदसौ तत् कार्यमनुतिष्ठेत् येन व्यक्ति रूपन्नियेत समुत्थाप्येत च। तद्विपरीताचरणार्थं नास्ति स आदिष्टः।

येषां दृष्टौ समाज एव प्रधान, स एव साध्य, स एवान्यतल्लक्ष्यत्वेन सन्तिष्ठते तेषां व्याहरणमेतत्—व्यक्ति शरीरस्य नेत्र प्राण हस्त पादादयङ्गवद्वर्तते, समाजश्च प्राणप्रदा शक्तिरिव विद्यते। यथा नेत्र प्राणाद्यङ्गानि प्राणप्रदशक्त्युपलब्धिमन्तरेण न स्वस्वक्रियायां व्यापृतानि भवितु प्रभवन्ति तथैव समाज विना लोके न स्व-विकासं कर्तुमर्हति व्यक्तिः कदापि। ईदृग्विचारः प्लेटो-सिसरोमार्सीलिओ हाब्स-हेगलादीनामधेयानां विद्वद्वरेण्यानामस्ति। व्यक्ति प्रति समाजो

जीवन-बलम्। स तत्र जीवनं सञ्चारयति। अतो मनुष्यस्य कर्तव्यमिदं यद्सौ समाजमुपरन्तुं तमुन्नमयितुं तं वर्धयितुं तं सेवितुम्च सततं यतेत। नैजं सर्वस्वं तदर्थं जुहुयात्। समाजोपरि चेद्रापदापतेत् तदा सर्वमपि विहाय समाजं सः त्रायेत। समाजार्थं सः तनुं वसुं मानसञ्च समर्पयेदित्येतत्ते विद्वांसो भणन्ति। अस्मदीया श्रुतिरपि 'समानीव आकूतिः'''संगच्छध्वं संवदध्वम्''' इत्यादिना सामाजिकीं सेवाम्प्रति प्रेरयति व्यक्तिम्। "त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेदि"त्येतच्च वाक्यं तदेवोपदिशति।

उपरिनिहितं मतमालोचयन् हरबर्टस्पेंसरः ब्रूयते। सोऽभिदधाति यच्छरीराङ्गैः सह व्यक्तेस्तुलना न युक्ततरा। द्वयोरपि मध्ये विशिष्टभिन्नत्वदर्शनात्। मनुष्यस्य समाजस्य च रचनायां प्रमुखौ द्वौ भेदावाप्येते: अधिमानव-शरीरं चेतनायाः स्थितिर्दृश्यते। तयैव शरीरं प्राणिमत्। तदभावे न शरीरस्यास्तित्वम्। तदपि नश्यति। परं समाजे चेतनाया अधिष्ठानानि तावन्त्येव भवन्ति यावत्यः सन्ति व्यक्तयः। एकैक-व्यक्तिः पृथक् पृथग् विचारयति, कार्यमाचरति; जायते म्रियते च नैकसमये। व्यक्त्यामुपरतायां न समाज-गतिर्गच्छति निरुद्धा। आत्मनि निर्गते सति वपुषो, अवयवजातानि व्यर्थानि। अपरञ्च, शरीरस्य ते ते भागाः न स्वतन्त्रमभिलाषं नैजं निदधति। न तेषां काप्यभीप्सितता। परं समाजस्य तु एकैकः सदस्यः पृथक् पृथगिच्छां निदधाति; तस्य स्वस्वाभीप्सितताऽपि विद्यते। अत एतत् साम्यं यच्छरीराङ्गेन सार्धं कृतं न संगतम्। अस्तु, अङ्गवादोऽपि न सर्वथा असत्यः। तत्रापि महत् सत्यमन्तर्हितमस्ति।

"समाजं मानवः स्वेच्छयाजनयत्; सः केषाञ्चन समानोद्देश्यानां पूर्त्यै समाजमरचयत्; तस्य संघटनं व्यदधात्। मानवस्य निषेवणं तच्छक्ति-विकासनं समाजस्यैवमात्रं लक्ष्यम्" इत्येतद् वदन्ति ये, तेऽनुबन्धसिद्धान्तवादिनोऽभिधीयन्ते। अस्मिन् वादे समाजः साधनत्वेन व्यक्तिश्च साध्यत्वेन मतमित्येतस्मात् कारणात् केचन वादमेतमपि अवमन्यन्ते। अवमन्यन्तां ते। परं वादोऽयं मानवम्प्रति स्वकर्तव्यं पालयितु समाजं सनिर्बन्धमनुरुन्द्धि; तस्मात् न सर्वथोपेक्षणीय एषोऽपि।

वस्तुतस्तु समाजे उभयमपि विद्यते साधनत्वं साध्यत्वञ्च। सः साधनमप्यस्ति साध्यमपि। न व्यक्ति-समाजयोर्हितेषु पारस्परिको विरोधः। समाजो व्यक्तिं प्रति पूरको व्यक्तिश्च समाजम्प्रति। व्यक्तेर्धर्मोऽयं यत्सा समाजस्य मानं

प्रतिष्ठां च वर्धयेत्; समाजीयान् नियमान् रक्षेत्, सामाजिकस्य हितस्य पुरो वैयक्तिकं हितं हेयं मन्येत, समाजमुत्थापयेत्, तस्य गरिमाणमेधयेच्च। समाजोऽपि व्यक्तेर्हिताय प्रवर्तेत, तस्या विकासनाय सुन्दरसुन्दरतरयोजना सञ्चालयेत्, तस्याधिकारान् गोपायेत्। तत्प्रगति-पथे समागतान् प्रत्यूहांश्च विनिवारयेत्। आतोऽयं समाजो व्यक्तयर्थं जीवेत् व्यक्तिश्च समाजार्थम्। न समाज साहाय्यं विना तस्य विकास कदापि सम्भव इति विचार्य व्यक्ति समाज सदा सेवेत, समाजस्यापि कर्त्तव्यं यत् स मानव (व्यक्ति) हितनिमित्तेनोपयुक्त वातावरण सृजेत्। समाजस्य व्यक्तेश्च कल्याण तदैव सम्भवं यदा समाजो व्यक्तिश्च परस्परं सहन्य स्व स्व कर्त्तव्यं रक्षेत्।

समाजस्योत्पत्तौ कारण केचन ईश्वर, तदितरे मानवं, तदपरे मानवीया भावना, तदन्ये विकासवादिन सिद्धान्त मन्यन्ते।

'समाजमीश्वरश्चकार' इत्यस्य सिद्धान्तस्यावैज्ञानिकत्वाज्जनास्तत्र न श्रद्दधते। 'मानव समाजमसृजदि'त्येतस्मिन्नपि मते विवेकिनो विप्रतिपत्तिमुपस्थापयन्ति। ते वदन्ति यदेतन्मत मानवेतिहासे सामाजिकयुगादपि प्राग् युगान्तरस्य सत्तां स्वीकुरुते। एषा हि मान्यता मनुष्य प्रकृतेरैतिहासिकात् सत्यादपि विपरीता अत नैतन्मतमुचितम्। नृतत्त्वशास्त्रजीवशास्त्राच्छरीरविज्ञानाच्च ज्ञायते यन्मानव स्वपूर्वजेभ्य पशुभ्य सामाजिकं गुणं गृहीतवान्। पशु-समाजस्यापि दर्शनात्। एतद्व्यतिरिच्य समाज विना जीवन न सम्भवम् अतो मानव समाज न ससर्ज, स तु मानव प्रकृति सिद्धोऽस्ति।

समाजप्रति कारण भावना इत्येतस्मिन् सिद्धान्ते सत्यस्यांश प्रतिष्ठते समाजस्य मानवीयभावनाजन्यत्वात्। परमिदमप्यत्रास्ति स्मरणीय यद् भावनार्थमेव न, समाजस्य तु अपेक्षा मानवीयाभिलाषार्थं सांस्कृतिकोद्देश्यार्थमपि वर्तते।

समाजस्योद्भवमधिकृत्य एते उपरिनिर्दिष्टा सिद्धान्ता वस्तुतो मानवं तावन् न परितर्पयन्ति यावद् विकासवादी सिद्धान्त। विकासवादी सिद्धान्त 'समाजस्य स्पत्तिर्न, विकासो जात' इति बोधयति। समाजस्य जन्म अमुककाले जातमिति न स मनुते। तस्य तु विश्वासोऽयं यत् समाजस्तु शाश्वतिक। स तु मानव जीवन नियद्धोऽस्ति। आदौ सामाजिक जीवन परमसाधारणमासीत् शनै शनैस्तस्य विकासोऽभूत्। नानाविधा विघ्नबाधा समाजस्य वृद्धौ विकासे प्रादुर्भवे च

महाशिका अभूवन् । अस्मिन् विकासवादिनि सिद्धान्ते मानस श्रद्धत्ते । यथा यथा मानवस्य स्वभावो बुद्धिर्विचाराश्च विकासमगुस्तथा तथा समाजोऽपि स्व परिष्करणस्य स्वनिर्माणस्य च सदवसरमासमादेति यदुच्यते तत्सत्यमेव ।

अद्यतना विद्वांस सामाजिकविकासेतिहास चतुर्षु भागेषु विभजन्ते ते भागा इमे—१. मृगयावस्था, २. गोपावस्था, ३ कृषीवलावस्था, ४. औद्योगिकावस्था ।

समाज स्वीय शैशव मृगयायुगेऽयापयत् । अस्मिन् युगे पशुव्यापादनात् पशुपालनं वरमित्येतज्ज्ञानमलब्ध समाज । गोपयुगे सामाजिक जीवनं समुन्नत बभूव । मानव सभ्यताया प्रथमसधना जगाम । कृषियुगे तु समाजस्यातितरां समुत्थान सञ्जात बहुषु क्षेत्रेषु समाज प्रगति प्रादर्शयत् । अस्मिन्नेव युगे समाजो ग्राम नगरादिकाना सृष्टि चकार । समाजे पुरोहित कलाकार सैनिकादिकानामाविर्भावोऽभूत् । नानाविधाना सघटनाना प्रादुर्भाव सञ्जात । नृप सामन्तप्रभृतयो जन्म जगृहु । इत्थ समाजस्येय चतुर्थी दशा विपुल स्वीय स्वरूप वितन्वन्ती जगति समुपातिष्ठत् ।

भारते वर्तमानेऽनेहसि समाज प्रभूत सघटनानि विभागो लोचनगोचरीभवति । स्वसत्तां दृढीकर्तुं, सत्कर्तुं, सर्वाङ्गीणतया च समुन्नेतु तेन बहूनि बहुविधानि च सघटनानि स्वीकृतानि सन्ति । तत्रायानेकेषां सधानाञ्च दर्शनं भवति । ज्ञातिसमुदायश्च तत्र विद्यमान परिदृश्यते । भारतीय सामाजिकेजीवन जात्युपजातिभिरनेकानि महान्ति कार्याणि कृतानि सन्ति । तद् विवेचनमथ इत्थं कर्तुं पार्यते—

( १ ) द्वैधीभाव —जात्युपजातिवशाद् भारतीयसमाजो लघु-लघुतरसमूहेषु विभक्तोऽस्ति । समूहेषु चैतेषु मिथ ईर्ष्या प्रणासम्बन्धिनो भावा प्रबला भूत्वा सर्वतो विसृता सन्ति । एतद्वैरोराद्य भारतीय समाजो महात्सार्गपर मग्नोऽस्ति । न तत्रैक्यस्य बिन्दुरपि क्वापि लक्ष्यते । द्वैधीभावेन समाजस्तावस्तस्य भागेषु विभक्तीकृतोऽस्ति यावन्त समाजे सन्ति जना । एतस्मात् कारणादस्माकमनुमीयते यदिद देशे कदापि नैक्य प्रतिष्ठापित स्यात् ।

( २ ) अस्पृश्यता—जात्युपजातीनां भिन्नतया बहुत्वतया च भारतीय समाजे अस्पृश्यतारूपो दोष प्रसारितोऽस्ति । ब्राह्मण जातय स्वसत्ता मूर्च्छां गत्वा परा जाती अवमन्यन्ते, निम्नजातीनां स्पर्शमपि ता सोढुं न

दावनुवन्ति । समाजे सन्ति कोटिशो जना एतादृशा येऽस्पृश्या इत्युच्यन्ते । चेत् तेषां स्पर्शो जायते तदा श्रेष्ठम्मन्या नराः सचेलं स्नान्ति । सङ्कीर्णता—'अहं श्रेष्ठः स नीचः, अहमुत्तमजात्यां जातोऽस्मि स नीचजात्याम्"—इत्यादिकाः कुविचाराः समाजस्य मध्ये परमवेगेन सञ्चरमाणा इदानीमपि दृश्यन्ते । जातिवादेन अस्पृश्यतावादेन च सर्वेषामपि मानवानां मानसेषु सङ्कीर्णतानुदारता जुगुप्सा च समुत्पादितास्ति । एतद्दोषवशात् सम्प्रत्यपि समाजो भारतीय क्लीबतां गतोऽस्ति । न स कस्मिंश्चिदपि साहसपूर्णे कार्ये प्रवृत्तो भवितुं क्षमतां निदधाति—

( ३ ) दासताजनितदोषः—प्रायेण सहस्रतमवर्षव्यापिन्या परतन्त्रतया ग्रस्तत्वाद् भारतीयसमाजे दासताजनिता अनेकानेकदोषाः समागताः सन्ति । न साम्प्रतं तत्र स्वसंस्कृतिं स्वसभ्यतां च प्रति गौरवधीः समवलोक्यते । न स सम्प्रति स्वभाषायां स्वमातृभूमौ स्वेषु आचारविचारेषु च सम्मानभावनां बिभर्ति ।

( ४ ) नारीणामवज्ञा—नगरेषु तु जनानां ध्यानं स्त्रीसम्मानं प्रति गतं दृश्यते परं ग्रामेषु सम्प्रत्यपि ग्रामीणजनता स्त्रीसम्मानात् प्रायेण पराङ्मुखी एव दृश्यते । अस्मिन्नपि उन्नते युगे भारतीये समाजे नार्यो नानात्याचारैः पीड्यमाना प्राप्यन्ते । या कापि स्वल्पतरा शिक्षा प्राप्यते नारीजगति, सा केवलं नगरनिवासिनीषु स्त्रीषु एव विद्यते । ग्रामवासिन्यो नार्यस्तु सम्प्रत्यपि सर्वाः सन्ति अशिक्षिताः । भारतीयसमाजस्यावनतेर्मूलकारणमत्र यन्नाः नारीणामशिक्षितत्वं तासु कृतं बहुविधं दमनञ्च वर्तते ।

उपरि निर्दिष्टा एते, अन्ये च आलस्यानुत्साहदम्भप्रभृतयो बहवो दोषा अद्यतने समाजे निवसन्ति । तेन समाजो नोन्नतिं गन्तुं शक्नोति । साम्प्रतिका भारततरुणानां प्रमुखोऽयं धर्मो यत् ते स्वसमाजे विद्यमानान् दोषान् दूरीकृत्य तमुत्थापयितुं तस्य महिमानं वर्धयितुं च पूर्णतया प्रयतेरन् । धनवतां धनस्य, विद्यावतां विद्यायाः, प्रभुत्वसम्पन्नानां प्रभुतायाः, कवीनां कवितायाः, यूनां यौवनस्य, साधूनां साधुतायाश्च सार्थक्यं तदैव भवेत् यदा ते तत्सर्वं सवर्गिता भूत्वा एव समानमनसा वाचा कर्मणा च उन्नतिं दिशारम्भयारोपयेयुः ।

—❧—

# भारतीयसमाजवादिन्यर्थव्यवस्था, प्रमुखसमस्याश्च भारतीयसमाजस्य

सा शासनव्यवस्था 'समाजवाद' इत्येतेन नाम्ना प्रथते यत्र देशस्य सर्वेषा-मपि जनानां सुखं सौविध्यञ्च प्रति ध्यानं प्रदीयते। न तत्र कोऽपि मनुष्यः कस्यापि मनुष्यस्य शोषणं कर्तुमर्हति। तस्मात् समाजवादिनी शासनव्यवस्था साम्राज्यवादिन्या शासनव्यवस्थाया अरातिरेव।

सैद्धान्तिकदृष्ट्या समाजवादो द्वयोर्भागयोर्विभज्यते—

१ क्रान्तिकारी समाजवाद, २ वैधानिक समाजवाद। यत्र समाजवादिन विधिमङ्गीकर्तुं क्रान्तिकारीणि परिवर्तनानि अभिलष्यन्ते स 'क्रान्तिकारी समाजवाद' इति कथ्यते।

२ यत्र शान्तिमयेन प्रकारेण वैधानिकान् नियमान् अवलम्ब्य शनैः शनैः समाजवाद प्रतिष्ठाप्यते स "वैधानिक समाजवाद" इत्युच्यते। तत्र तत्साधनं माश्रीयते येन राज्यं सुव्यवस्थितं भवितुमर्हेत्।

यदा स्वकीयं भारतं लक्ष्यीकृत्य विचिन्त्यते तदा निश्चितमिदं सञ्जायते यदस्मदीयो देशो वैधानिकं समाजवादं प्रतिष्ठापयितुमभिलषते। यतो हि अस्मदीयं वर्तमानं शासनं शान्तिमयैर्वैधानिकैः साधनैरेव विद्यमानामर्थव्यवस्था परिवर्तितां कर्तुमिच्छति। तत् तदर्थं प्रतीच्यदेशैराह्रियमाणं क्रान्तिकारिणं समाजवादमङ्गीकर्तुं नाकाङ्क्षति। तादृशे समाजवादे हिंसा युद्धं धनक्षति भयङ्कर-रक्तपातादिकार्याणि घटितानि भवन्ति तेन न तत्त्द्विधस्य समाजवादस्य स्वीकरणं वरं मन्यते। देशोत्थानार्थमस्मद्देशे वैधानिकसमाजवादिन्या व्यवस्थाया स्थापनैव नितान्तं मङ्गलमयी श्रेयस्करी च वर्तते। श्रीजवाहरलालनेहरू राष्ट्रियमहासभाया कांग्रेसस्य उद्देश्यमधिकृत्यैकदोक्तवान्—"सयुतसहकारिराज्य प्रतिष्ठापनमेव समाजवादिन समाजस्यावतारणत्वेन वेद्यम्। एष अस्मदिष्ट समाजवादस्तामर्थव्यवस्थां निर्दिशति यत्र—(क) उत्पादनस्य सम वितरणं स्यात्, (ख) राष्ट्रियसम्पदामधिकतया वृद्धिर्भवेत्, (ग) सर्वेऽपि जना समानमधिकारं लभेरन्। नेदमत्र विचारणीयं यदेतया व्यवस्थया व्यक्तिगतस्य स्वामित्वस्यो

न्मूलनमिष्टमस्ति। वैयष्टिकस्य क्षेत्रस्य समुद्भवाय सन्ति सम्प्रति पर्याप्ताः सम्भावनाः; तद्विषयकं क्षेत्रमस्ति विस्तृतम्। देशस्य मौलिकोद्योगानां सञ्चालनं तेषां रक्षणञ्च राज्येन विहितं भवेदित्येतदितरामपेक्षितमस्ति।"

भारते समाजवादिविधाया व्यवस्थाया अपेक्षा—

अस्मद्वर्तमानशासनस्याभिमतमिदमस्ति यद् देशे सर्वकल्याणकारिणो राज्यस्य स्थापना स्यात्। अस्मद्देशे धनवान् धनवत्तरतां निर्धनश्च निर्धनतरतां गच्छन् दृश्यते। आर्थिके सामाजिके च क्षेत्रे परस्परं महती प्रतिस्पर्धा सर्वेषां समुत्थिता भवन्ती प्रतिलक्ष्यते। धनवन्तः सन्त्यत्र प्रमुखं मूलकारणम्। ते स्वल्पसंख्यका धनवन्तः सम्पूर्णमपि देशं शोषयन्ति। तच्छोषणस्य विनाशनाय समाजवादिनी व्यवस्था सर्वथैवापेक्ष्यते। पञ्चपञ्चाशदधिकैकोनविंशतिशततमे-वर्षीये वत्सरे राष्ट्रियमहासभया नैजे आवडीप्रस्तावे समाजवादिविधव्यवस्था-स्थापनाया अपेक्षाम्प्रति अधोनिर्दिष्टानि कारणानि प्रतिपादितानि सन्ति—

१. भारते आयस्य वितरणमतितरां विषमं वर्तते। देशस्य हि प्रायेणैकप्रतिशतजनसंख्या समस्ताया अपि उत्पादितायाः सम्पदो दशप्रतिशतभागं गृह्णाति परं सम्पूर्णस्यापि राष्ट्रियस्यायस्य [illegible] भागं [illegible] जनताधिकुरुते। इत्थं धनिक-निर्धनयोरायै महान् अन्तरो दृश्यते यावानन्यत्र आपानशापानाख्ययोर्मध्ये दृग्गोचरी-भवति। आयस्य एवंविधाया विषमताया निराकरणाय समाजवादिविधाया अर्थव्यवस्थाया अपेक्षास्ति।

पतति; अतः संसारस्य राष्ट्रान्तरैः सार्धमस्माभिरपि समाजवादिनीं व्यवस्थामाश्रित्य पुर उपसरणीयम्।

५. देशेऽकार्यता समस्या मुखं व्यादाय सन्तिष्ठमानास्ति। एकोनसप्ततिमिता प्रतिशतं जनसंख्या कृषिमिहावलम्बते। कृषिकार्यधितेयं जनसंख्यावृहत्तरता देशेऽतिशयतरामकार्यतां वितनोति। वृत्तेर्दोषपूर्णं वितरणमेवमेतामकार्यतांप्रति वर्तत उत्तरदातृ। दोषोऽयं समाजवादिन्या व्यवस्थयैव सरलतया दूरीकर्तुं शक्यः। नास्ति तद्दूरीकरणाय कोऽप्यन्य उपायः।

६. मनुष्यो मनुष्यं न शोषयेदित्यत्रैव देशस्य हितं लोकस्य कल्याणं न्यायश्च ज्ञेयः। इदं तदैव सम्भवं स्याद् यदा वैयष्टिकसम्पत्ति कठोरतापूर्वकं शासितं भवेत् सर्वेषाञ्च कृते समानतयोन्नतेर्विकासस्य चावसरः प्रदीयेत। एतत्सर्वमपि समाजवादिन्यामर्थव्यवस्थायामेव घटितुं शक्नोति। तस्मात् समाजवादिन्या अर्थव्यवस्थायाः सत्तावस्तु अस्मद्देशस्य कृतेऽनेकदृष्टिभिरपेक्ष्यते।

समाजवादो भारतं च—

नास्ति भारतं प्रति समाजवादिनी व्यवस्था कापि नवीना घटना। त्रिंशदधिकाष्टादशशततमेशवीयेऽब्दे सरचाल्र्समेटकाफ' प्राचीनभारतीयार्थव्यवस्थामुद्दिश्य लिखति—

ग्राम-समुदायो वस्तुतस्तु लघुलघुगणतन्त्रं वर्तते, तत्र तदपेक्ष्यमाणानि सर्वाण्यपि सन्ति वस्तूनि। अस्ति च तत् तन्त्रं वैदेशिकसम्बन्धेभ्यः सर्वथा स्वतन्त्रम्। तस्य सत्तास्ति स्थायिनी यदा हि तदितरस्य सर्वस्यापि सत्ता नाविचला। ग्रामसमुदायस्यास्मिन् संघे प्रतिग्रामः स्वयमेकं स्वाधीनराज्यमिव विद्यते—तदीयैवंविधा स्थितिः, अतः स. स्वतन्त्रतायाः प्रसन्नतायाश्च महान् प्रेरयितास्ति। स्वातन्त्र्यात् प्रागपि समाजवादिनीं व्यवस्थामधिकृत्य सततं विचार-विमर्शः प्रवर्तमानोऽभवत्। अष्टचत्वारिंशदधिकैकोनविंशतिशततमेशवीये वर्षे सप्तदशे दिनाङ्के फरवरीमासे घटितेनाथ स्थितेन प्रस्तावेन भारतस्य समाजवादिन्या व्यवस्थाया स्वरूपं प्रकाशंप्रति नीतं भवति—

"अस्या सभाया मतमिदं यद् देशस्य आर्थिक आकार. समाजवादिनी आर्थिकता भवेत्। प्रमुखोद्योगानां राष्ट्रियकरण्याय औद्योगिकी सामूहिकी च कृषि निश्च देशीयभौतिकसाधनानां सामाजीकरण्यायाङ्गीकृता. सिद्धान्तास्तदीयो मूल आधारः स्यात्। भारतशासनमिमां नीतिं सत्वरमालम्बेत।"

समाजवादिव्यवस्थाया मूलसिद्धान्ताः—

समाजवादाभिमताया अर्थव्यवस्थाया उद्देश्यं सर्वतः प्रथमं राष्ट्रियमहासभाया आवडीप्रस्ताव' प्रकाशयति स्म । प्रस्तावे स्पष्टया राज्यस्य नियोजनस्य चोद्देश्यमिदं स्याद्—समाजवादादृताया आर्थिकव्यवस्थाया घटनं तेन विधिना निष्पादनीयं येनोत्पादनविषयकेषु साधनेषु जनताप्रतिनिधिभूतस्य राज्यस्य शासनमवतिष्ठेत क्रियोत्पादितस्य धनस्य समानरूपेण वितरणं भवितुमर्हेत् । यथाऽवडीप्रस्तावं समाजवादिन्या व्यवस्थायाः समासेन मूलसिद्धान्ता अधोलिखिताः सन्ति—

१. पूर्णा जीवनवृत्तिः कार्यप्राप्तेश्चाधिकारः, २. राष्ट्रियस्य धनस्य अधिकतमसमुत्पादनम्, ३. अधिकतमं राष्ट्रियमात्मनिर्भरत्वम्, ४. सामाजिकं आर्थिकञ्च न्याय', ५. अहिंसात्मकशान्तिपूर्णजनतन्त्रात्मकविधिप्रयोग', ६. सहकारिणीनां समितीनां ग्रामपञ्चायतनानाञ्च संस्थापना, ७. जनमात्रस्य निर्धनताया अपनयनार्थं तन्न्यूनताः प्रति उत्तमसमावसरताप्रदानम् ।

सामाजिकया शक्त्यैमहद् योगदानं भवति। मानवसमुदायस्य सघटिता शक्तिरेव 'समाज' इत्युच्यते। इमे एव गुरुममाजा एव कस्यापि विषयस्य भाविन्या उन्नतेराधारस्तम्भा भवन्ति। यस्य देशस्य जना वा नागरिका यावन्मात्र सच्चरित्रा कर्मठा उदात्तविचारशीला भवन्ति तस्य देशस्य समाजोऽपि तावन्मात्र प्रमुखतो गरिष्ठो दृढश्च भवति। समाजस्य भ्रष्टत्वे पतितत्वे अकर्मण्यत्वे अलसत्वे च देशोऽपि दलिताया पतिताया निकृष्टायाञ्च अवस्थाया दृष्टिगोचरो भवति। अत देशस्य सुखसमृद्धिरुन्नतिश्च सामाजिकीं समृद्धिमुन्नतिञ्च अपेक्षते।

प्राचीनकालादेव अस्मदीया सस्कृति सभ्यता च निखिलेऽपि ससारे गौरवयुक्त स्थानमध्यासीना वीक्ष्यते। अस्मदीय प्राक्तन भारतीयजीवन सुखेन वैभवेन च समन्वितमासीत्। सकलापि जनता समुद चिपन्ती जीवनमदर्शयत। भारतीय साहित्य कला चोत्कर्षस्य चरमबिन्दुमध्यारूढाऽवालोक्यत। सर्वास्वपि आशासु भारतीया पताका दोधूयमाना समवाप्यत। भारतीया भवन निर्माणादिसम्बन्धि न्य कला वाणिज्यञ्च दिव्यामिव श्रियमबिभरु। भारत सर्वस्मिन्नपि जगति 'हैमवय' इत्यगीयत। तञ्च भारतस्य स्वर्णपक्षिण व्यापादयितु यवन श्येना आचक्रमिरे। वेदा आगतदुर्दिनोऽभवत्। बभूव च स परतन्त्र। कठोरात्याचारपटहस्योद्घोष एव सर्वतोऽश्रूयत। तस्माद् भारतीयसमाज परिवृत्तिमियाय। तत्र निर्दयरूढिवादिता सचिविवेश, बभूव च स कर्कशपन्थतनिबद्ध। देशस्य सभ्यताया सस्कृतेश्च मानचित्रमेवामूलचूल पर्यवर्तत। समाजस्य बन्धनानि दिने दिने कठोरतामगु। तत्र नानाविधाना विकृतीना प्रवेश सञ्जात। देश स्वकीय व्रणमिम चीरेण बद्धमपि कर्तुं नाशकत् स, एतस्मिन्नेवान्तरे, आत्मानम् आङ्ग्लाक्रमणाक्रान्तमपश्यत्। एषा दुर्घटना तु तस्य यापि शक्तिरवशिष्टा तामपि अपजहार। आङ्ग्लाना शोषणनीतिरस्मत्समाज जर्जरतरा दुर्बलतराञ्च अकरोत्। समाजस्य दशा अकर्मण्यता भ्रष्टचरित्रतामलसता विलासिताञ्च नीताभवत्। समग्रस्यापि समाजस्य रूपमेवान्यदेव सवृत्तम्। सर्वेऽपि अस्मान् अस्मत्समाज अस्मद्देश च जुगुप्सया घृणया च विलोकयितुमारभन्त। दुर्नियतिवशेनाद्यापि भारतीयसमाजोऽस्मदीयो हीनामेवावस्था भजते। सर्वतस्तत्र कुत्सा मचित्रा उपस्तम्य सम्प्रति प्रेक्ष्यन्ते। भारतस्य सामाजिकदुर्दशा हा अद्य क न देश भक्त दुनोतितराम् ? साश्रुधाराप्रवाहमद्यापि तदेव वक्तु वय सर्वे बाधिता स्मो यद् भारतेन्दु स्वकाले क्रन्दन् व्याहरत्—

"रोवहु सब मिलिकै, आवहु भारत भाई।
हा! हा! समाज दुर्दशा न देखी जाई॥"

अस्मात्मद्देशस्य सर्वासामपि व्यक्तीनां पवित्रं कर्तव्यमिदमस्ति यत् सर्वेऽपि जना शीघ्र कठोरवैषम्यनिगडोद्ग्रथितं समाजं मोचयेयुः। सर्वेषामपि मानवानां करणीयमिदं यत् ते सामाजिकीषु कुरीतिषु दुर्बलतासु दुर्गुणावलिषु दृष्टिं क्षिपेयु, सर्वाश्च ता समूलमुन्मूलयेयु एतादृश्या चिन्तनीयायां स्थित्यामवधानपूर्वकं कार्याणां सम्पादनमुचितं स्यात्। नेत्रे निमील्य चेत् किमपि कृतं स्यात् तदा हानिरेव भवेत्। धैर्यमपेक्ष्यते न च त्वरा। या प्रथा शुद्धिमपेक्षते तस्याः शोधनं कर्तव्यं, यस्मिन् नियमे यावती परिवृत्तिराकाङ्क्ष्यते तस्मिन् तावत्येव परिवृत्तिः कर्त्तव्या। यस्य च बहिष्कारोऽपेक्ष्यते तस्य सर्वथैव समूलमुच्छेद एव विधेयः संशोधनात्मिका बहिष्कारात्मिकाञ्च नीतिमवलम्ब्य वयं समाजं निर्दोषं पवित्रञ्च कर्तुं प्रभवेम। एतस्मिन् शुभे महनीये च कार्येऽस्माभिरनिच्छयानुदारतया सह न अपि तु वदान्यतयोत्साहेन च प्रगाढेन सह प्रवृत्तिः कार्या। अस्मत्समाजस्य इदानीन्तन्य प्रमुखा समस्या इमा सन्ति—

वर्णाश्रमधर्मस्य कठोरताजातिबन्धनजनिता च रूढिवादिता—

अस्मत्समाजस्य सर्वप्रधानासमस्या वर्णाश्रमधर्मस्य कठोरता, किञ्च तदीया-रूढिवादितास्ति। इदमत्र न विस्मरणीयं यत् सामाजिका नियमा परिवर्तनार्हा भवन्ति ते युगविशेषस्य परिस्थित्यनुरूपा भवन्ति। नियमनतरश्चिद् समयस्थितिञ्च विलोक्य तान् परिवर्तयन्ति। पुरातने युगे वर्णाश्रमधर्मस्य परमापेक्षासीत् तस्मात् कारणात् तत्कालवर्तिनो मनीषिण समग्रमपि समाजं चतुर्षु भागेषु विभजन्ते स्म। विभक्ति गतोऽपि समाज एव केवलं तत् तत् कर्मणि तु पृथक् अभवत् परमन्तत एक एवासीत्। तत् तत् कर्मपरायणेषु वर्णेषु पारस्परिकमैत्र्यमवर्तत, न कोऽपि वर्णो वर्णान्तरं घृणया ददर्श। प्राधान्येन मस्तिष्कस्य कार्यं यो वर्णश्चकार स 'ब्राह्मण' इत्यस्यधीयत। तस्य कार्यस्य श्रेष्ठत्वात् ब्राह्मणो हि समाजे उच्चतमास्थानमलभत, यस्य कार्यं समाजस्य रक्षणमासीत् स 'क्षत्रिय' इत्यगद्यत, क्षत्रियस्य कार्यं प्राधान्येन शारीरिकशक्तिविषयकमासीत्। ज्ञानाद् बल न न्यायस्तस्मात् स समाजे प्रतिष्ठायां द्वितीयं स्थानमध्यगच्छत्। अन्नेन धनेन च समाजस्य परिपोषणं यश्च कर्तुमशक्नत् स 'वैश्य' इत्यकथ्यत। वैश्यस्य प्राधान्येन कार्यं धनेन समाजस्य संवर्धनमासीत्। यदि हि ज्ञानं बलं धनेषु

विचारो विधीयते तदा महनीयतायामुपादेयतायामुच्चतमकल्याणकारितायां ज्ञानमेव ज्ञातं भवति। तस्मात् समाजः प्राक्तनः ज्ञानमेव मूर्धन्यत्वेन मेने तदेव प्रति सः अधिकतमं सम्मानं प्रादर्शयत्। धनं स्वरक्षामपेक्षते रक्षणं बलेन भवति तस्माद् धनाद् बलं गरीयो मतमभूत्। इत्थं विमर्शनेन धनं क्रमे तृतीयम-सिद्ध्यत। तेन समाजे वैश्यस्तृतीयं पदमगृह्णात्। यो हि प्रामुख्येन सेवा-कर्मणा समाजं सेवितुं क्षमोऽभवत् स मानव-समुदाय इह समाजे 'शूद्र' इत्येतेन नामधेयेन सम्मानितोऽभूत्। सेवाकार्यमपि स्वकीयं महत्त्वं निदधाति। सेवाका-रिणोऽन्तरेण न समाजरथः सम्यक् चलितुं शक्नोति तस्मात् समाजे सेवाकारी च चतुर्थं पदमवापि। सर्वेऽपि वर्णाः स्व-स्व कर्तव्यं दत्तचित्ततया विदधुस्तस्मात् समाजः सुखी सन् जीवनं निनाय परं कालान्तरेण वर्णव्यवस्थायां हि उच्चावचता-या भावाः सन्निविष्टा अभवन्। 'अहम् उच्चः स नीचः सः अस्पृश्यस्त्वं वैश्योऽहं क्षत्रिय' इत्येवंविधाः सङ्कीर्णाः क्षुद्रा विचाराः प्राविशन्। नानाजातीनां जन्म सञ्जातम्। जातिष्वप्युपजातय उद्भूताः शूद्रा हेयत्वेन मता अजायन्त। वैवाहिकानि बन्धनानि नितरामेव कठोरतां नीतान्यभवन्। जात्यन्तरे विवाहो वर्जितो जातः। अस्पृश्यता नितान्तमेव भयावहा भूत्वा सर्वतः प्रसृताभूत्। मानव एव मानवस्य हृत्याममानवो जातः। मानवो मानव एव घृणामयं निन्दायुतमत्याचारपूर्णं व्यवहारं कर्तुमारभत। एवंविधाः विकृतयः सर्वथैव वर्णव्यवस्थां मर्दामस्यामकुर्वन्। साम्प्रतिकी वर्णव्यवस्था अनेकदोषदूषि-तत्वात् तत्र शोधनमपेक्ष्यते। तत्र समागता विकृतयो हि अपसारणीयाः सन्ति सत्वरम्। तासां निराकरणं यावन्न कृतं भवेत् तावत् समाज उन्नतो न भवितु-मर्हेत्। अज्ञानस्य प्राबल्यात् धर्मव्याजाः रूढिवादिनः समाजस्याभ्यन्तरे प्रवेशं निषेधं कुर्वाणा दृश्यन्ते। तारतम्योन्नतिपथगामितायां प्रतिपदं प्रत्यूहं समुप-स्थापयन्ति तस्मात् तासु सत्सु विघ्नानामु न समाज पुर उपगन्तुं शक्नोति तासां विनाशनं ह्यपेक्ष्यते।

शिक्षा-विधिः—

भारतीयसमाजस्य द्विविधा प्रमुखसमस्यास्ति शिक्षा-विधिः। प्रतीच्या शिक्षापद्धतिर्भारतसमाजस्य विशृङ्खलतां निवारयितुं क्षमास्ति। अद्य यद्यपि नवनव-शिक्षालया स्थापिताः स्थाप्यमाना दृश्यन्ते, आधुनिकं गेहे महाल्लक सर्वविधं साहाय्यमपि प्रदत्तं दृश्यते परं सम्यगु शिक्षा न तादृशी तावती च व्याव-

हारिकता समागतास्ति यादृशी यावती च साऽपेक्ष्यते । दारिद्र्याद् दैन्याच्च ग्रामाणां भूयिष्ठो भाग शिक्षाशून्य एव वर्तते । प्रौढशिक्षाया न कोऽपि समुचित प्रबन्ध साम्प्रतमपि दृष्टिपथमुपैति । शिक्षाक्षेत्रे स्त्रीशिक्षायास्तु महान् अभाव एव लोचनगोचरीभवति । अस्मत्समाजे ¼ अपि स्त्रियो न शिक्षिता प्राप्यन्ते । शिशूनां प्रथमा शिक्षिका मातैव भवति परमस्मत्समाजे न मातर सन्ति प्राप्तशिक्षास्तस्मात् कारणात् अस्मत्समाजस्य शिशवोऽज्ञानध्वान्ते निपतिता सन्ति । अविलम्बेनैव अतिशीघ्रतयैव शिक्षाविधावुचितसंशोधनमतोऽपेक्ष्यते किञ्च तत्र परिवर्द्धनमनिवार्यतयाकाङ्क्ष्यते ।

३ नारीजात्युपेक्षा—

अस्मद्भारतस्य प्राचीनतरो मूलमन्त्र "यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवता" इत्येव अवर्तत । परं स साम्प्रतं 'नार्युपेक्षायां' परिवर्तितोऽस्ति । अस्मदीयसमाजस्यास्तीयं प्रमुखा तृतीया समस्या किं वा कलङ्क । अद्य भारतीय नारीजगत् पुरुषाणामत्याचारैरतितरां सञ्चूर्ण्यमानमस्ति । नास्ति समाजे नारीजातेः सम्मानमुचितम् । पुरुषो बहून् विवाहान् कर्तुं शक्नोति । स स्थविरतायामपि नवयुवतिमुद्वोढुमर्हति परमेका विधवा स्त्री नवयुवतिर्भवन्त्यपि न द्वितीय विवाहस्याधिकारिणी । दूषितेन पतितेन समाजेन उन्नतिद्वारमेव स्त्रीणां कृते छारूत कृतमस्ति सुदृढतापूर्वकम् । यावद् नारीणां समाजे सम्मानं न तावत् समाजस्य समुत्थानं सम्भवम् । समाजश्चेदिच्छति स्वकीयाभ्युदयं तदा तस्य कर्तव्यमस्ति यदसौ स्त्रियं सुशिक्षितां विदध्यात् । तासां सम्मानं कुर्यात् । तासु उच्चामादरधियं निदध्यात् । स्त्रीसमाजस्य मूलमस्ति । अपि किं कोऽपि वृक्षो मूले सति शुष्के विनष्टे वा स्थातुं शक्नोति ?

४ अन्धविश्वास —

अस्मत्समाज इदानीमन्धविश्वासानामधिष्ठानमस्ति । एवं प्रतीयते यद् अन्धविश्वासो भारतीयसमाजस्य व्यक्तित्वाभ्यन्तरे तन्मयीभूय वर्तते सन्तिष्ठमान । एषको गुरव सर्वं एव यन्त्रे तन्त्रे शास्त्रयोमेवविधायामेवमन्यस्या क्रियया विश्वसिति भूतम्, भूत प्रेतपलाशादिकानां सर्वत्र पूजा भवन्ती विलोक्यते । नास्त्येतादृक कोऽपि रोगो यो नानेन रोगेण ग्रस्त स्यात् । स्वार्थस्य सर्वोपरकस्यात् क्षुद्रतायाः परमप्रचण्डत्वात् मिथ्याचारो भ्रष्टाचारो दुराचार उत्कोचश्च सर्वत्र निरन्तरमुच्चैर्निर्भयं नर्तन्त दृश्यन्ते । उत्कोचमाश्रित्य जना न्याय गत

गृहीत्वा व्यापादयन्तोऽन्यायञ्च परिपोषयन्त पदे पदे निरीक्षिता भवन्ति । तदेवं समग्रोऽपि समाज शोचनीयामवस्थां प्रति यतमानो दृश्यते । समाजे यावन्तो यादृशा ये च दोषा समागता सन्ति वस्तुतस्तावता तादृशा तेषाञ्च दोषाणा वर्णन सर्वथैवासम्भव जातमस्ति । तदर्थं चेत् प्रभूततम समय प्रभूततमञ्च स्थान प्रदत्त भवेत् तथापि सर्वेषामपि तेषा दोषाणा वास्तव्यं प्रदर्शन सम्भव नास्ति । वस्तुतो दोषाणा दुर्व्यसनानाञ्च अनया दारुणया स्थित्या भारतस्य भाविकालोऽन्धकारावृतो भयाकुलो विपद्घनाच्छन्नश्च कृतोऽस्ति ।

इदानीं सर्वप्रथम यदपेक्ष्यते तदस्ति समाजस्य सम्मार्जन मशोधन सस्कारीकरणञ्च । इद हि गुरुतम दुरुहतम कठिनतमञ्च कार्यं केचन पावनचरिता स्वार्थशून्या देशसेवैकव्रता एव महात्मानोऽथवा नवा युवान एव कर्तुं क्षमन्ते । समाजस्य हि भाविन कर्णधारा अद्यतनास्तरुणजना एव वर्तन्ते । तस्मादाशेय यत् ते खलु एतस्मिन् महति महनीये च कार्यविशेषे शासन प्रति स्व सक्रिय सहयोग प्रदाय प्रत्यासन्ने हि भवि यति काले द्रुतमेव स्वस्य समाजस्य स्थिति सस्कर्तुं समुद्यता भविष्यन्ति ।

कदापि अस्माद् देशाद् भूमण्डलस्य सर्वेऽपि देशाश्चरित्रस्य शिक्षामगृह्णन् अद्य स एव देशोऽय महान् भ्रष्टाचार सवृत्तोऽस्ति, कदाप्यस्मिन् देशे क्वापि स्वैरा स्वैरिणी च दृष्टा नाभवत् परमद्य तु नास्त्यतादृशी स्थिति । साम्प्रत तु सर्वत्र स्वेच्छाचारिताया एव उज्जृम्भण दृग्गोचर भवति । स्वराज्य स्वातन्त्र्ये समवाप्ते सति चेतस्येषा आशालतिका प्रारोहत् यत् समाजस्य प्रतिजन शासनसूत्रधारिण सर्वेऽपि अधिकारिण, देशस्य मन्त्रिमण्डल सकलमेव राज्यकर्मचारिण स्व राष्ट्र स्व समाज समुन्नमयितु यतमाना भविष्यन्ति, सर्वे नि स्वार्थभावन राष्ट्रस्य समाजस्य च समृद्ध्यर्थं हि अविराम परिश्रम करिष्यन्ति, समाज हिताचरणमेव सर्वेषा जीवन लक्ष्य भवत्, सर्वे सत्यभावन निष्कपटभावेन शुद्धेन व्यवहारेण च स्वकीय स्वकीय कर्तव्य रक्षिष्यन्ति पर दृष्टम् तु इद जात यज्जनता शासनकर्तारश्च सर्वेऽपि समाजप्रति कर्तव्यविमुखा सन्ति । हन्त, को मामुद्धरिष्यतीत्येतत् साक्रोशमुच्चैरभिरुदन् समाज श्रूयते ।

## पञ्चशीलसिद्धान्ता भारतस्य तटस्थतानीतिश्च

'पञ्चशील' मित्येतत्पदं 'शिष्टाचारविषयका सिद्धान्ता' इत्येतस्मिन् अर्थे पर्यवस्यति। महात्मा गौतमबुद्ध एतान् पञ्चापि सिद्धान्तान् स्वशिष्यान् शासितस्म। सोऽप्येतान् पञ्चापि सिद्धान्तान् 'पञ्चशील' मित्यनेन नाम्ना व्याहरत्। तस्मान्नैष शब्द आधुनिकोऽपि तु शब्दस्यैतस्य प्रादुर्भूतस्य शतपञ्चकाधिकसहस्रद्वयसमा अतिक्रान्ता। इमे पञ्चापि सिद्धान्ता क्रमेणैव सन्ति—१ अहिंसा, २ सत्यम्, ३ अस्तेयम्, ४ अप्रमाद, ५ ब्रह्मचर्यम्।

एतान् पञ्चापि नियमान् पालयितुं भिक्षवो बुद्धदेवेनादिष्टा आसन्। तस्मिन् काले पञ्चशीलमिति पदं केवलं धार्मिकाध्यात्मिकक्षेत्रगामि आसीत्। परमिदानीन्तने युगे न तत् पदं तावत्या सीमया परिबद्धमस्ति। सम्प्रति तद्व्यापकत्वं गतमस्ति। राजनीतिकक्षेत्रेऽपि तेन पदार्पणं कृतमस्ति। यत्पञ्चशीलं बौद्धकाले व्यक्तिजीवनमेवाभिव्याप्य समतिष्ठत तदेवाद्य राष्ट्रजीवनमप्याक्रम्य प्रसृतं वर्तते।

चीनभारतयोर्या मैत्री चतुष्पञ्चाशदधिकैकोनविंशतिशततमेशवीयेऽब्दे समभवत सा पञ्चशीलं नैजमाधारं विधायैव सन्तिष्ठते। भारतचीनयोर्बौद्धधर्मनिष्ठत्वाद् द्वावपि देशौ परस्परमतिगाढसम्बन्धं चिरं निहितवन्तौ। अस्मादेव कारणात् द्वयोरपि उपवर्तनयोः प्रधानमन्त्रिणौ पण्डितजवाहरलालनेहरू महोदय चाऊएनलाई च विश्वशान्त्युद्देश्येन पञ्चशीलं प्रति राजनीतिकञ्च महत्त्वं प्रदत्तवन्तौ। उपर्युल्लिखितनियमपञ्चकं पञ्चशीलं राजनीतिनिर्देशेनैव संस्कारेण संस्कृतवता। तेनैते पञ्चापि सिद्धान्ता संसारस्य विभिन्नराष्ट्राणां मध्येऽखण्डमभङ्गं सौहृदबीजं वपन्ति।

साम्प्रतिकं 'पञ्चशीलं' तेषां हि राजनीतिकानां नियमानामुल्लेखो भवति ते सन्त्येवम्—

१ किमपि राष्ट्रं कस्यचन राष्ट्रान्तरस्य आभ्यन्तरिकेषु विषयेषु न कीदृशमपि हस्तक्षेपं करिष्यति।

२. प्रतिराष्ट्रं राष्ट्रान्तरस्य प्रादेशिकीमखण्डतां प्रभुत्वसत्तां च प्रति पारस्परिकीं श्रद्धाभावनां निधास्यति ।

३. प्रतिराष्ट्रं मिथः समानतां व्यवहरिष्यति ।

४. किमपि राष्ट्रमपरं राष्ट्रं नाक्रमिष्यति ।

५. सर्वाण्यपि राष्ट्राणि मिथः स्वां स्वां शान्तिमयीं सत्तां रक्षितुं प्रयतिष्यन्ते ।

एतन्नियमपञ्चकोपर्येव चीन-भारतयोर्मैत्री सञ्जाता । इमे द्वे अपि राष्ट्रे विश्वस्यान्यान्यपि राष्ट्राणि प्रेरितवती सिद्धान्तमेतान् परिग्रहीतुं किल । तस्माच्छान्तिकाङ्क्षीणि बहूनि राष्ट्राणि तानङ्गीकृत्य परराष्ट्रैः सार्धं मित्रतां कुर्वन्तितराम् ।

पञ्चपञ्चाशदधिकैकोनविंशतिशततमेशवीयेऽब्दे जूनमासे द्वाविंशतितिदिनाङ्के पञ्चशीलस्य रूपं स्तोकमात्रं परिवर्तनं परिवर्द्धनं च गमितम् । भारतं रूसश्च पञ्चशीलसिद्धान्तं सहर्षं स्वकुर्वाते स्म, अकुरुतां च मिथः प्रत्याश्रवणमिदम्—

"किमपि राष्ट्रं कीदृशेनापि राजनीतिकेन किं वा आर्थिकेन यद्वा सैद्धान्तिकेन कारणेन पारस्परिकेष्वाभ्यन्तरिकेषु विषयेषु न हि कामपि आपत्तिमुत्थापयिष्यति ।"

एतस्मिन्नेव सिद्धान्ताधारे इंगलेण्ड-युगोस्लावियादिदेशैः समं भारतं शान्तिमयीं सहसत्तां स्फुटतया ह्यजूघुषत् ।

अद्यतनस्य पञ्चशीलस्य परिधिर्बौद्धयुगवर्तिनः पञ्चशीलस्य परिधेर्ज्यायान् । व्यक्तिगता अहिंसा न सम्प्रति व्यक्तिमेवाभिव्याप्य वरीवर्ति परं तद्विस्तरो राष्ट्रमपि संस्पृशति, तेन न किञ्चिद् राष्ट्रं राष्ट्रान्तरम्प्रति न शारीरिकेण न च मानसिकेनैव कष्टेन व्यथयेत् । अस्तेयाख्यसिद्धान्तस्याधुनैषोऽर्थो गृह्यते—राष्ट्रेण राष्ट्रान्तरस्य सम्पदोऽनपहरणम् । 'न गुप्तरूपेण राष्ट्रान्तरे स्व प्रतिनिधिभिरन्तरकरतया वा प्रवञ्चनायाः प्रोत्साहनं' मित्येतस्मिन्नर्थे सत्यस्येदानीं प्रयोगः क्रियतेऽस्ति । अप्रमादश्चैवमेव वर्तमानेऽस्मिन् शान्तिमयसहसत्ता द्रुतमर्थमभिव्यनक्ति । 'ब्रह्मचर्यञ्च' इत्येतस्य च पदस्य सङ्केतग्रहः 'पवित्राचरणम्' इत्यत्र कृतो वर्तते । एतेन समस्तेषु देशेषु पारस्परिक-समानताभिरताया भावनायाः समुत्पादनाय प्रयासो विधीयते ।

इत्थं यद्यपि पुरातनाः अहिंसासत्यास्तेयादिनियमाः एतस्मिन् युगे साम्प्रतिके

त्रिविष्टपरिभाषासु पर्यवसिताः सन्ति नाधुना तेषामर्थास्तादृश एव यादृशाः पुरा कदापि गृहीता अभूवन् ।

पञ्चपञ्चाशदधिकैकोनविंशतिशततमे शकीयेऽब्दे अप्रैल मासे सञ्जातं बाण्डुंग-सम्मेलनं यावत् चीन-भारतयोर्मध्ये दिनानुदिनं सान्निध्याभिवृद्धि पर्यपुष्यत् । एतेन चीनस्य महत्या उदारतया, बुद्धिमत्तायाश्च संस्तवः समवायो भवति । चीनदेशः प्रमुखस्य राष्ट्रान्तरीयस्य सङ्घस्य महत् शक्तिसम्पन्नं राष्ट्रं सदपि एशियाद्वीपीयमैक्यं संघटनञ्च सुदृढं कर्तुं भारतप्रति सख्यतापूर्णं व्यवहारमन्ववर्तत दर्शयेत्तस्मात् कारणात् चीनदेशो वस्तुतोऽभिनन्द्य एव । परं दुर्नियतेः साम्राज्यवादिन्या स्वार्थान्धतया त्रिविष्टपस्य तिब्बतस्य दशा विषमा शोचनीया च विहिता । फलमिदं संवृत्तं यत् द्वयोरपि राष्ट्रयोर्मध्ये मनोमलिनता समुदपद्यत । परं मन्यपि तथात्वे देशावुभौ विवेकपूर्वकं कार्यं कृतवन्तौ, न सीमास्थितं राज्यम्प्रति भयावहं पदमुपसारितमभूत् ।

षट्पञ्चाशदधिकैकोनविंशतिशततमेशकीये वर्षे जूनमासे सप्तविंशे दिनाङ्के पेकिङ्गराजधान्यां पञ्चशीलस्य प्रथमवर्षग्रन्थिसमारोहः परमोत्साह-पुरस्सर-माचोत्तितोऽभूत् । एतावन्तं समयं यावत् भारत-चीन बर्मा-रूस-पोलैण्ड-यूगो-स्लाविया-इण्डोनेशियादिदेशैस्तदीयमुपादेयत्वं महत्त्वञ्चोररीकृतमासीत् । अस्मादेव हेतोरेतस्य वर्षस्याभ्यन्तरे एव सिद्धान्त एष एशियाभिधे यूरोपाभिधे च द्वीपे समानभावेन शान्ति पारस्परिकीं मैत्रीञ्च प्रतिष्ठापयितुमलमभूत् । पञ्चशीलस्य व्यापकं प्रचारं प्रेक्ष्यैव साम्प्रतं हि एशियाद्वीपस्य जागरूका देशा विश्वशान्तिसम्बन्धिषु प्रयत्नेषु नैजं क्रियात्मकं सहयोगं प्रददतः संलक्ष्यन्ते । भारतस्य वैदेशिकनीति-प्रासादः एव पञ्चशीलभुवि स्थितोऽस्ति । पञ्चशीलमेव तन्महद् बलमस्ति यद् विश्वव्यापकं संघर्षानलमुपशमयत् चतुरस्रं प्रेम श्रद्धाशीलमवपत् ।

राष्ट्रपिता महात्मा गान्धी भारतीयाया स्वाधीनतायाश्चिरं प्रागव्रवीत—

"भारतीया स्वतन्त्रता न स्वयं नैजैनात्मना साध्यत्वेन विद्यते, सा तु वस्तुतो मानवीया स्वतन्त्रता विश्वशान्तिसंरक्षणप्रयत्नस्य साधनभूता भूत्वा-वतरेत्" इति ।

निश्चप्रचतया सत्यमिदं यद् भारतस्य स्वतन्त्रता मनुष्यमात्रस्य स्वाधीन-

त्वेन लोकहितभावनात्वेन च समुज्जृम्भते। केचन जनाः शङ्कन्ते यत् पञ्चशीलं राजनीतिकार्थिकहितोद्भूतसमास्फालनं नापनेतुं शक्नोति। परं तेषामियमाशङ्का निर्मूलास्ति। ते वस्तुस्थितिं नावगच्छन्ति। पञ्चशीलस्य सृष्टिर्वर्तमानानेहसः कूटनीत्यां छलयुक्तायां च स्वार्थवर्द्धिन्यां राजनीत्यां वज्रं प्रहर्तुं सञ्जातास्ति। तत् ( पञ्चशीलम् ) तस्या विनाशनं विधाय लोकस्यार्थिकं सांस्कृतिकञ्च कल्याणं कर्तुं सततं चेष्टमानमस्ति। तद् विश्वस्य मानवताया वा पन्थानं प्रमार्ज्य तदर्थं मङ्गलमुपायनीकर्तुमीहते।

पञ्चशीलस्य लक्ष्याणि सन्ति परमपावनानि श्रेयःसम्पादकानि च। तदुद्देश्याधारशिलाद्वेषभावनामुपर्युपरि वर्तते सा तु विशुद्धनिःस्वार्थमानवताभव्यभुवस्तले निहिता विद्यते। तस्य प्रमुखं ध्येयमिदमास्ते यद् भारतीया स्वतन्त्रता मनुष्यमात्रं पारतन्त्र्यान्मोचयेत् तदर्थञ्च भद्रपथं विरचयेत्। निःसंशयभावेन सा घटी शुभघटी भवेत् तद्दिनञ्च शिवं स्यात् यदा विश्वस्य सर्वाणि राष्ट्राणि पञ्चशीलसिद्धान्तान् आचरणे परिणमयन्ति पारस्परिकसौहृदसूत्रेण निबद्धानि भविष्यन्ति। तथा सति तु विश्वशान्ति-स्वप्नः सत्यतामेव गतोऽवलोकितः स्यात्।

भारतस्य तटस्थनीतिः—

सर्वत्रापि समबुद्धिं निधाय सर्वेष्वपि मित्रभावस्याचरणं सर्वेषामपि समुत्थाने प्रसन्नताया अनुभवनं न कस्यापि मनागप्यधिकाराणामपहरणे मतिं संस्थाप्य स्वकीयविकासार्थं प्रयतनं च खलु तटस्थनीतिरित्युच्यते। भारतीयजनसंघस्य सुविदितो नेता अटलविहारी वाजपेयी 'तटस्थ' मित्येतत् पदमेवं सविशदं व्याचष्टे—"तटस्थम्" इत्येतस्य पदस्यार्थोऽस्ति तटे आसीनता। तटे कः स्थातुं शक्नोति? स न यद्यपि तटे स्थातुं प्रभवति यस्यास्मिस्तुङ्गतरङ्गस्यैकेनैवाघातेन मज्जितो जायते यश्च प्रतिधारासा आरोहावरोहाभ्यां सह स्वयमपि आरोहमवरोहञ्चानुभवति न स तटस्थो जन इति वक्तुं शक्यः। न, च स एव जनो, यो ह्यागामिन· संवर्तस्य पुरः तिरो नमयति, तटस्थो भवितुमर्हति। प्रतिद्वन्द्विताभ्यासस्य सम्हॊर्मिजालाघातप्रत्याघातानां मध्ये स्वस्मात् निष्कम्पभावेन संस्थापयन् यः स्वस्थाने सुदृढतया स्थितो भयस्यमावेन तटस्थ इति निगद्यते। तस्मात् तटस्थेन शक्तिमता भवितव्यम्।"

राष्ट्राणां मध्ये प्रगतिशीलं प्रवृत्तिं पीदय भारतं स्वातन्त्र्यसमवाप्यनन्तरं

तटस्थताया आश्रयणमेव युक्तममंस्त । तद् विश्वस्य रूसामेरिकयोर्विशालविरोधिशक्तिभूतयोर्मध्ये एकतरस्याः अपि अवलम्बनं नोचितमवागमत् । एतेन न तात्पर्यमिदं यद् भारतं नैतयोर्महतोर्देशयोर्मित्रतामिच्छति । तत्तु न केवलमेतयोः सख्यमाकाङ्क्षत्यपितु विश्वस्यापि लघुलघुतरदेशेष्वपि मित्रतां निधातुमभिलषते । काममेतानि लघुगुरूणि राष्ट्राणि तदुपरस्तु प्रभवेयुरथवा न प्रभवेयुः । भारतं विश्वस्य मित्रमस्ति तद् विश्वस्यापि सकलस्य बन्धुरस्ति । इदमेव तस्य मुख्यं वैशिष्ट्यमस्ति । तस्य सर्वेषामपि हिताकाङ्क्षित्वात् न कस्याप्यहितकारित्वाच्च । अस्मादेव कारणात् सत् सर्वेषामपि परस्परविरोधकारिणामपि राष्ट्राणां मित्रं वर्तते । यदि अमेरिका भारतं स्वकीयं सन्मित्रं वेत्ति तर्हि रूसोऽपि तन्मैत्रं पारमार्थ्येन सुहृदमवगच्छति । तत्र मूलकारणमिदमेव विद्यते यद् भारतमेतद्देशद्वयमपि स्वमित्रं मन्यते । तयोरपि तस्य मित्रताचरणमस्ति । इत्थं भारतं परस्परविरोधिनोरपि महतोः राष्ट्रयोर्विश्वासभाजनं वर्तते । वस्तुतोऽस्मत्तटस्थनीतेरेव एष महान् विजयो वेद्यः ।

स्वकीयानामेतासां विशिष्टानां बलादेव नवोदितमस्मत्स्वतन्त्रं यदपि भारतमनेकक्लिष्टसमस्यानामुन्मोचने विभिन्नानां देशानां स्खलितानि दूरीकर्तुं परमसहयोगं प्रददत् सर्वेषामपि जनानां हृदयमेव । यद्यपि वैज्ञानिकया किञ्च सैनिकशक्त्याभिवृद्ध्या दृष्ट्वा भारतमुन्नतेषु देशेषु नास्ति । परं नैतिकाचारहेतोर्देशान्तरेषु अस्य प्रभावविशेषो वर्तते । भारतमधिकृत्य परस्परविरोधकारिषु देशेषु या सम्मानभावना जागृता दृश्यते तेन द्वौ महान्तौ लाभौ घटितौ स्तः । प्रथमोऽयं यद् राष्ट्रान्तरीयमतभेदेषु भारतं यन्मतं प्रकटीकरोति तत्र सर्वाण्यपि राष्ट्राणि ध्यानपूर्वकं विमर्शनं विदधति । एतस्मात् कारणात् समुचितपक्षनिर्धारणे युद्धनिर्णयप्रदाने च सहायता एतया जायते । द्वितीयमिदं सञ्जायते यत् युद्धारोपणानामाक्रमणानां च सम्भावना न्यूनतां याति पारस्परिकस्य विश्वासस्य च मात्रा प्रसारिता भवति ।

देशान् यदा तदा गच्छन्ति; तेषामपि देशानां नेतारोऽस्मद्देशं यदा तदा आगच्छन्ति। एतेन आयागमनेन आदानेन प्रदानेन च भारतस्य मैत्री सुदृढतां गतास्ति सद्भावनाश्च पारस्परिकः पर्याप्तं प्रोत्साहनमासादिता दृष्टा भवन्ति। सर्वेऽपि वैदेशिका नेतारोऽस्मद्देशस्य तटस्थतानीतिमग्नः प्रशंसन्ति नितराम्।

शिखरपरिषदोऽसफलत्वात् तृतीयमहायुद्धस्य सम्भावना समुद्भूताऽभवत् परमेवंविधं जन्यं सर्वेषामपि राष्ट्राणामभ्युन्नतौ बाधकत्वेनैव तिष्ठेत् अतएवास्मत्-प्रधानमन्त्री पं० नेहरू महोदयः प्रोक्तवान् यत् महाशक्तिशालिभिः सर्वैरपि राष्ट्रैः परस्परमैक्यमनैर्भाव्यम्। यद्यपि साम्प्रतं न किमपि राष्ट्रं युद्धाभिलाषि परं देशास्तु सर्वे तस्मात् शङ्कमाना अवश्यं सन्तिष्ठन्ते। "सम्भवमिदमस्ति यद् द्वितीयस्य गणस्य किमपि राष्ट्रम् आकस्मिकमाक्रमणं कर्तुमुपक्रमेत"—इत्येषा चिन्ता सदा सर्वाण्यपि राष्ट्राणि व्यथयति। एतस्मादेव संतापात् शस्त्रास्त्रनिर्माणविषयिणी स्पर्धा सर्वेष्वपि देशेषु सवेगं चलन्ती प्रेक्ष्यते। भारतं निःशस्त्रीकरण-योजनां परिपोषयति। परं यावद् जगति युद्धभीतिर्न समाप्तिं धारयति तावन् निःशस्त्रीकरणयोजनाः किं वा एवंविधा अन्या अपि योजनाः न कार्यान्विता भवितुमर्हन्ति।

अस्मद्देशस्य एषा तटस्थतासम्बन्धिनी नीतिर्नास्माकमकर्मण्यतां वा निष्क्रियतां सूचयति (एषा तु नीतिर्वस्तुतः संसारे विश्वशान्तेः पारस्परिकसद्भावनायाश्च स्थापना-निमित्तेन ससारपदस्य न्यासोऽस्ति। तस्मान्नास्ति अस्मदीया शान्तिप्रियता भयजन्या परमस्ति सोद्देश्यजन्या। भारतेन राष्ट्रान्तरीयराज-नीत्यां गान्धिवादः प्रयुज्यते। परमस्मदीया अहिंसा कापुरुषाणां निर्बलानाञ्च अहिंसा नास्ति अपि तु सा दृढेच्छाशक्तियुक्तानामहिंसास्ति। विभिन्नानां देशानां सामाजिकोत्थानप्रयोजनेन तेषां स्वकीया एव आर्थिक्यो राजनीतिपद्धतय उपकारिण्यः सिद्ध्यन्तीत्यस्माकं भारतनिवासिनां विश्वासोऽस्ति। अतः कस्यचन देशस्य शासनपद्धतेः प्रयोगश्चेद् देशान्तरे क्रियते तदा तादृशाचरणं न केवलं समुचितमपि तु हानिकरमपि वर्तते। विभिन्नदेशानां कृते ता एव शासनपद्धतयोऽनुकूला सिद्ध्यन्ति या भवन्ति तत्-तद्-देशीयपरिस्थितिसदृश्यः।

चतुष्पञ्चाशदधिकैकोनविंशतिशततमेशवीयेऽब्दे प्रधानमन्त्री पण्डितनेहरूमहोदयो व्याहरति स्म राष्ट्रियमहासभाया एकोनषष्टितमाधिवेशनावसरे यद् अस्माभिस्तट-स्थताया नीतिर्न केवलमेतन्निमित्तेनाङ्गीकृता येन संसारे शान्तिरुपस्थिता स्यात्

अपि तु एतदर्थमपि स्वीकृतास्ति येनास्मदीया पार्श्वभूमिर्न विस्मृता भवेत् । अद्य-पर्यन्तं यानि तत्त्वानि चिरात् कालादस्माभिरङ्गीक्रियन्ते न कदापि तानि तत्त्वानि संत्यक्तुं वाञ्छन्ते । निश्चप्रमिमो वयं अद्यतनसमस्याः शान्तिपूर्वकं समाहिता भवितुं योग्याः सन्ति ।......युद्धाप्रवर्तनमेव शान्तिर्न । शान्तिस्तु मानसिकी-स्थितिरस्ति । न सा साम्प्रतिके शीतयुद्धे संसारे समवाप्ता स्यात् । सत्यपि आरब्धे युद्धे न वयं तत्र सम्मिलिता भवितुमिच्छामः । अस्तीदमस्मद्घोषणम् । वयन्तु शान्ति-क्षेत्रं वितनितुमभिलषामहे ।"

भारतं शान्तिमाकाङ्क्षत्येव न अपि तु तत् तदर्थं कृत्स्नतया क्रियाशीलमपि वर्तते । एतस्मिन् शुभे सुन्दरे च कार्येऽधिकतया राष्ट्राणि स्वकीयं सहयोगमपि अस्मद्देशाय प्रायच्छन् । भारतं न केवलं शान्तिधारायाः प्रसारमकरोदपितु तत् लघु-गुरुराष्ट्राणि शान्तियज्ञमाचरितुं प्रेरितवच्च ।

अस्मद्देशे साधनसम्पन्ने केनापि देशेन किं वयं तटस्था एव भूत्वा स्थिताः स्याम-इत्येव विचारणीयः प्रश्नोऽस्ति । एष प्रश्नोऽस्ति समाधेय एव । अद्यासन्ने-भविष्यत्समये न कस्यापि वैदेशिकस्याक्रमणस्य सम्भावनोत्तिष्ठति । यद्यपि अस्मद्देशस्य सैनिकशक्तिर्नास्ति बहुशक्तिशालिनी तथापि सुरक्षार्थं पर्याप्तास्ति । आत्मविश्वासः कर्तव्यः । आत्मविश्वासं निदधानाः तटस्थताया नीतिञ्च अवलम्बमाना वयं स्वकीयां रक्षां कर्तुं शक्नुमः । तटस्थतां परित्यज्य यदि वयं कमपि संघातं प्रविष्टुमुद्यताः स्याम ततो नास्माकं शक्तिर्वर्धमाना भवेत् परावलम्बनपरा अवश्यं वयं जायेमहि । सा स्थितिरस्मदीयां स्वाधीनतां सङ्कट-निमग्नां विधातुमपि सम्भवति । अतः आत्मावलम्बनविषयिणी नीतिरेव श्रेयस्करी प्रतिभाति । सैनिकसंघाते सम्मिलितत्वात् वैदेशिकी नीतिः परावलम्बिनी जायते इति नास्त्यत्र संशयः ।

भारत-चीन-सीमा विवादमुद्दिश्य पण्डितो नेहरूमहोदय आह—"वयं चीनसमस्यां शान्तिपूर्णपद्धत्या समाधातुकामाः स्म । एतेनैवेदं नैव यद् वयं युद्धाद् बिभीमः (वयमिदं साधु जानीमो यद् युद्धस्याभ्यन्तरेऽस्माकं परस्परमपि पराजयोऽपि न कदापि युद्धमुपकारकं सिद्ध्यति । युद्धात् समस्यानां समाधानं तु भवति न ताः द्विगुणतामवस्थामुपयान्ति ।")

अधिकतमानि राष्ट्राणि भारतस्य तटस्थनीतिमनुसरन्ति मन्यन्ते । एतेन

एतस्या नीतेः सफलता स्पष्टतयैव सिद्धिं गता प्रमाणिता भवति । अरबाफ्रीकेशि-
यावर्तिदेशैरेतन्नीत्यनुसरणमारब्धमेव ।

सम्प्रति वयं तेषां देशानां स्थितिंप्रति दृष्टिं क्षिपामो ये भवन्तोऽपि
स्वतन्त्राः सन्ति कस्मिंश्चिदपि संघाते सम्मिलिताः । पाकिस्तानजापानदेशौ
स्तोऽस्मत्समक्षे । द्वावपि देशौ प्रतीच्यसंघातेन अमरीकाभिधेन सह सम्बद्धौ
स्तः । अमरीका तयोः कृते शस्त्रास्त्राणि अन्यां च समरसामग्रीं प्रयच्छति । तत्
फलमिदं यत् पाकिस्तानदेशः षष्टिः प्रतिशतं धनं सैन्यनिमित्तेन व्ययीकर्तुं बाधि-
तोऽस्ति । जापानदेशोऽपि सैन्येऽत्यधिकधनव्ययं कर्तुं परवान् । एतावदेव न, अन-
योर्देशयोः प्रयोगोऽपि युद्धात्मकक्षेत्रत्वेन क्रियते । एतयोर्वायुयानीयाश्रयत्वेनापि
दुरभिसन्ध्यर्थं प्रयोगः क्रियते वस्तुस्थितिरियं यत् ते देशास्तेषां देशानां कुचक्र-
विधायकाङ्गानीव सञ्जायन्ते ते ( गृहीताश्रया अमेरिकादिदेशाः ) तेषां ( पाकि-
स्तानादीनाम्) स्वीकृतिमन्तरेणैव युद्धमपि प्रारब्धं विधातुमर्हन्ति । सैनिकसन्धि-
स्वीकरणस्य संघाताश्रयणस्य च ईदृशान्येव दुष्फलानि भवन्ति । अस्मद्भारतं
संघातात् पृथक् अस्ति । अस्ति स तटस्थदेशः । एतस्मात् कारणात् अस्मद्धरि-
त्र्युपरि न कोऽपि देशो युद्धात्मकवायुयानाड्डान् प्रतिष्ठापयितुं हि कीदृशीमपि
नततामेव क्षेप्तुं शक्नोति किञ्च नानुकूलतामेव कीदृशीं याचितुं प्रभवति ।
अस्माकं देशे नास्त्येकोऽपि समरीयोऽड्डः । कोऽपि देशोऽस्मद्देशेभ्य उचितमुत्तरं
व्यतिरिच्य न कस्याप्यन्यस्योद्देश्यस्य पूर्तिमपि कर्तुं क्षमते निःसंशयं कस्य च
नापि देशस्य मध्ये वैदेशिकसमरीयवायुयानाड्डास्तस्य देशस्य सार्वभौमभावोपरि
प्रहार इव भवन्ति ।

प्रतीच्यसंघाते सम्मिलितत्वादेव पाकिस्तानदेशो निर्धारितधर्मधनराशे-
रधिकतमांशव्ययीकरणे बाध्यमानोऽस्ति । एतस्मात् कारणात् जनताया
मनागपि पोषणं न भवितुमर्हति । तस्मादन्ततो वयं स्थान् एतमेव निश्चय-
मापादितान् प्राप्स्यामो यत् तटस्थतानामकनीतिर्यामस्मद्देशोऽनुसरति, सर्वो-
त्तमा श्रेष्ठा च नीतिरस्ति ।

तटस्थतानीतिस्तदैव साफल्यं गच्छति यदा तत्र यथार्थतायाः सन्निवेशो
भवति । साम्प्रतमियं निर्बलतायाः प्रतीकत्वेन मन्यते । भावनावादस्य
भूयस्त्वा देशं क्षिणोति । तटस्थताया अयं एव भावो यत् तटस्था देशाः परस्प-

रमपि धरायां सान्निध्यं सम्बन्धं वा न संस्थापयेयुः। सन्निकृष्टता तु वर्धनीयैव।

(वैज्ञानिकोत्थानात् शस्त्रास्त्रवर्तिन्या द्वेषजुष्टायाः स्पर्धायाश्च वशात् अद्यतना आहवाः अतितरामेव भयानककाण्डकारिणः गहनचिन्तागम्भीरप्रश्नपर्वणो मानवतायातिभूताः सन्ति। तज्जनिततत्तद्दुःस्थितिभ्यस्त्रातुं तटस्थतानीतेः स्वलम्बनं सर्वथैवोचितं वर्तते। अन्यच्च ययोर्द्वयोः सम्यतयोः सिद्धान्तयोश्च संघर्षो भवेत् तयोः संघर्षकारिणोर्मध्ये एकतरस्मिन्नप्यात्मनः समावेशनं न देशप्रति कथमपि हिताय स्यात्। तटस्थदेशानां नीतिर्नूनं निर्बला दृष्टाऽभवत् परं सत्यपि तथात्वे तेषां संख्या दिने दिने वृद्धिमेव गतवती।)

भारतस्य तटस्थताया नीतिर्देशस्य स्वतन्त्रतायाः सार्वभौमताया विश्वशान्तेश्च दृढीकरणाय सारपूर्णा गुर्वी नीतिरस्ति। एषा नीतिर्न तां नीतिमाद्रियते या नैजे भूभागे वैदेशिकसम्परायस्थल निर्माणस्य पक्षे वर्तते किञ्च सैनिक-सङ्घाते अन्तर्भावसमुचितमनागच्छति। अनया नीत्या भारतेन उभयविधयोरपि राजनीतिकार्थिकयोः स्वतन्त्रतयोः कृते अनुकूलं वातावरणं सफलतापूर्वकं निर्मितमस्ति। इदमेव कारणमस्ति येन भारतस्येयं नीतिस्तदीयसर्वोच्चराष्ट्रियहिताय न भवति। नीतिरेषाद्यपर्यन्तं सफला एव सिद्धा चेद् भाविनि काले दृढतापूर्वकमस्या निर्वहणं कृतं, तदा प्रतिदिनमवश्यमेवाधिकतरां सफलतामाप्स्यति।

भारतं साम्प्रतं यथा तटस्थतानीतिवशाद् भूमण्डले महतीं प्रतिष्ठां लभते तथैव तत्पञ्चशीलसिद्धान्तानामनुसरणकारित्वादपि तत्र सम्मानदृष्ट्या दृश्यते। चेदेवंविधे महति प्रयत्ने भारतं साफल्यमध्यगमिष्यत्, तदा शीघ्रमेव स्वसञ्चालितासु पञ्चवर्षीययोजनास्वपि सफलतामधिगम्य समृद्धया समृद्धं सम्पदि सम्पन्नञ्च भवितुमर्हति। (एतदर्थं संसारे सर्वथैव शान्तिरपेक्ष्यते। शान्तिं विना न कुत्रापि कीदृश्यपि प्रगतिर्भवति सम्भवा। योजनानामन्वर्थनाया राष्ट्रियस्य आयस्य वृद्धिः सञ्जायेत। जनताया जीवन-स्थितिरुच्चिता भवेत्। कस्यापि देशस्य जीवनं तथैव सुखितं जायते यथोत्पादनं प्रचुरं स्यात्, कृषेर्विकासः स्यात्, उद्योग-व्यवसायादिकसाधनानि सर्वत्र प्रसृतानि भवेयुः। भारतस्वातन्त्र्यसमवाप्तिसमयादेव सर्वदाऽस्या स्वयोजनासाफल्ये संलग्नमस्ति

| पृ० | पं० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७९ | १५ | पदार्थाः | पदार्थाः ] |
| ८३ | ११ | सदुसद् | सदसत् |
| ८७ | १३ | अवस्थिति | अवस्थितं |
| ८८ | २३ | यल्म्वेत | मवलम्वेत |
| ८९ | १८ | मन्तरोन्नति | मन्तरेणोन्नति |
| ८९ | २८ | योगासूत्र | योगसूत्र |
| ९५ | १० | जय्यो | जय्यो |
| ९९ | १ | ज्ञान | ज्ञात |
| १०३ | १२ | सिद्धान्तराणां | सिद्धान्तरान्तराणां |
| १०७ | ३ | निर | निर् |
| ११० | १२ | ज्ञानस्थ | ज्ञानस्य |
| ११४ | १९ | उत्पादयितुं | उत्पादयितुं |
| ११५ | २२ | प्रमाकर | प्रभाकर |
| ११५ | २० | इन्द्रियतीत | इन्द्रियातीत |
| १२७ | ६ | खिपिटक | त्रिपिटक |
| १२९ | ७ | मस्ति | स्ति |
| १२९ | २४ | सम्भना | सम्भवा |
| १३२ | ९ | भति | भवति |
| १३६ | ५ | सञ्जानः | सञ्जातः |
| १४१ | २५ | ह्ये | हि |
| १४२ | १४ | अपचेतुं | अवचेतुं |
| १४६ | १४ | मध्यम | मध्यम |
| १४७ | १७ | श्रीनि | त्रीणि |
| १४८ | ३ | वेदनोयं | वेदनीयं |
| १५१ | २ | इममेव | इयमेव |
| १५८ | ४ | आचार्ये | आचार्यो |
| १५८ | १५ | विधासं | विश्वासः |
| १६९ | शीर्षके | प्रदर्शनं | प्रतीत्यं दर्शनम् |
| २०९ | १ | प्रतीतां | प्रतीतमार्थं |
| २०९ | १९ | विश्वविश्वसीत | विश्वस्यात् |
| २११ | ९ | दाश्या | दाश्यं |
| २१८ | २८ | व्याकरणं | व्याकरण |

| पृ० | प० | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २२३ | २५ | नामाभिः | नामभिः |
| २२५ | ८ | रुद्रांटाः | रुद्रटाः |
| २३१ | २५ | यथार्वा | यथार्था |
| २३२ | १७ | अनुतिष्ठति | अनुष्ठीयते |
| २४६ | १० | अन्तरैव | अन्तरेणैव |
| २५० | २७ | पत्राणि | पात्राणि |
| २५१ | ५ | निर्गदिता | निगदिता |
| २७० | २९ | वयस्का | वयस्या |
| २९७ | २२ | अपतीत् | अपसत् |
| ३०४ | ३ | एवा | एव |
| ३१५ | १८ | भीमो | भीमं |
| ३२१ | १५ | वर्णवन्ति | वर्णनवन्ति |
| ३४६ | २२ | काव्यत्वधायक | काव्यत्वाधायक |
| ३५७ | २० | श्रियाम् | श्रियम् |
| ३६७ | ७ | द्योवन्ति | द्योतन्ति |
| ४५४ | ३ | धरेयाः | धौरेयाः |
| ४९५ | २ | सरागपत्त एव | सरागपक्ष एव |
| ५२० | ९ | तयाः | तस्याः |
| ५४९ | ७ | समथा | समया |
| ५९१ | ८ | शुणा | शुभाः |
| ६१२ | २ | रम्या | रम्या |
| ६२९ | २ | सौहार्दं | सुहृद् |
| ६३० | ११ | सौहार्दं | सौहृद् |
| ६४० | २४ | महत | महती |
| ६४१ | १० | अर्थे | अर्थो |
| ६४२ | १ | दत्तेन | दृत: |
| ६४८ | २८ | लब्ध | लब्धं |
| ६५१ | १५ | उपयोग | उपयोगिनः |
| ६७७ | टीपर्के | सिद्धान्ता | सिद्धान्ता |
| ६८२ | २२ | आर्यिक्यो | आर्यिक्यो |